p. 22, l. 11, पारतन्त्र्येण ; l. 14, जिन° .

p. 23, l. 20, सप्रयोग° ; l. 22, समता भव° .

p. 27, l. 13-14, N reads जनवत् .

p. 28, l. 5, but N much better श्रुतचिन्ता ; l. 13, प्रज्ञा .

p. 29, l. 3, read भगवताऽऽमन्त्रण ; l. 10, read with N विस्तरतः ; l. 18, गन्तुकामस्य...... पण्डितैः is a śloka ; l. 23, °ह्यार्थोऽथ .

p. 30, l. 14, read with N and Tib. : सूत्रम् । तत्र .

p. 31, l. 11, but N regularly °तद्रात्व° ; l. 14, read आश्रय .

p. 32, l. 2, read च्चेपेण नि ; l. 21, धर्मोद्दान

p. 34, l. 22, read युक्तमुक्ता°.

p. 38, l. 20, read with N °मितयोस्तथा° ; l. 23, तायां न .

p. 40, l. 11, देशना भावना .

p. 41, l. 14, so even N, but it must be परामर्शनात् .

p. 42, l. 15, एकैक ; l. 23 and 24 निर्वायी ; l. 24, प्राप्तावुपपद्यपरि°.

p. 43, l. 1 and 2 निर्वायी .

p. 44, l. 16, प्ररिपश्चि .

p. 46, l. 18, daṇḍa must be taken away after प्रज्ञप्तिरपि .

p. 47, l. 2, कल्प्यन्ते .

p. 52, l. 12, श्रुगत° ; l. 22, रूपणाल° .

p. 53, l. 18, °मेवंविधो .

p. 68, l. 8, read ग्राहकविकल्प .

p. 72, l. 7, तद्विच्छन्द°.

p. 75, l. 20, °मर्थानु°.

p. 78, l. 20, so mss. but it must evidently be सत्कायः.

p. 80, l. 24, °त्तिर्देश°.

p. 81, l. 13, ज्ञताद्यमर्णा° .

p. 83, l. 9, ज्ञताप्र°.

p. 84, l. 2, दया दा° ; l. 19, निर्वापण .

p. 86, l. 22, °नभिनिर्वृ .

p. 87, l. 1, °ज्ञतागग°.

p. 90, l. 7, but Tib. reads : विकल्पाप्रहा° which is the right reading ; l. 21, °मध्यपर्यवसानान्तैः° .

p. 92, l. 11, after ālambate a must be understood.

p. 94, l. 6, rightly N दृष्टिदृष्टिप° .

p. 96, l. 5, the daṇḍa is to be placed after कृता kārikā 55, d. ऽनवलीनानपेक्षते.

p. 97, l. 4, विबन्ध; l. 11. °जयन्.

p. 99, l. 17, hyphen must be taken away: l. 20, °भिक्षाक्रीड°.

p. 100, l. 11, read नैष्क्रम्यबोधिवृक्षाणां गुणपूरेष्व सम्पदः.

p. 102, l. 2, read तावेतौ.

p. 106, l. 15, read °त्राभिनि°.

p. 107, l. 6, read नन्वेक; l. 16, भावनास°.

p. 108, l. 12, चर्या विरू°.

p. 109, l. 17, वैधुर्य.

p. 112, l. 19, read °धुर्येण; l. 21, °धीष्ट.

p. 117, l. 14, °पादितबोधि.

p. 118, l. 20, but better according to Tib. यथोक्ताविं°

p. 120, l. 17, संभृत्य

p. 121, l. 2, after ददासि full stop; l. 8, श्रिताऽनिय°

p. 125, l. 3, निर्विदा°.

p. 128, l. 23, प्रति नि°.

p. 131, l. 2, but according to Tib. it must be कारण-प्रकर्षाप्रकर्षाभ्यां.

p. 132, l. 13, °वश्यंतया.

p. 134, l. 20, read युक्तयाग.

p. 135, l. 16, भावे ना°.

p. 142, l. 8, ज्ञानं स्व°; l. 11, no hyphen after °बुद्धा.

p. 143, l. 1, so A but it must be °त्त्विकं; N has here a lacuna.

p. 149, l. 7, °र्थमध्या°.

p. 150, l. 3, काङ्का.

p. 151, l. 23, साक्षात्.

p. 154, l. 6, रूपादि त°.

p. 157, l. 9, वा हे°.

p. 158, l. 4, °दुष्टत्वादादि°.

p. 160, l. 2, मनोमौने°.

p. 162, l. 15, °त्रार्ष.

p. 165, l. 2, °स्याप्र°.

p. 167, l. 13, स्वभावाया; l. 19, after *iti* a *daṇḍa* is necessary.

p. 170, l. 24, जापरस°.

p. 174, l. 23, read with N and Tib. धिमात्राधिमात्र.

p. 176, l. 11, र्थ्यनान्तरा.

p. 177, l. 13, वस्तु प.

p. 179, l. 21, read with Tib. यथाधिमो°.

p. 198, l. 19, °निर्याति.

p. 205, l. 24, तस्यावि°.

p. 209, l. 4, read त्पत्तिं प्रति.

p. 210, l. 21, परीक्षा°.

p. 215, l. 5, but the following suggests प्रथमां.

p. 227, l. 12, सर्वा.

p. 231, l. 22, read रागादिर्वि.

p. 233, l. 13, वस्तु सर्व.

p. 241, l. 8, double comma after: °*upālambha*.

p. 243, l. 7, read त्वयाभा.

p. 254, l. 20, read दूरीकरणा.

p. 265, l. 6, त्राधिमा.

p. 270, l. 14, °श्यार्थिमि°.

p. 272, l. 9, read प्रकृतिर्यदुताप्रकृतिर्वि ति; l. 15 and 21 काङ्क्षा.

p. 276, l. 18, दुष्करतास°; l. 22, °प्राप्या—

p. 278, l. 15, divide रूपादि प°, नौम्नादि नि°.

p. 279, l. 4, after pāramitā hyphen.

p. 281, l. 10, read नुपलि.

p. 283, l. 20, °क्षिला प्र°.

p. 285, l. 19, तास्वभा°.

p. 287, l. 17, प्रतिपश्याक्रा°.

p. 289, l. 15, समुदयश्चि°; l. 18, °निकान्यपलनों.

p. 290, l. 9, °दनतुगमो.

p. 294, l. 17, भव लोको; l. 20, दश बुद्ध.

p. 298, l. 10, मूलानां.

p. 339, l. 10, काङ्क्षा.

p. 411, ūṣmamūrdhasu.

p. 456, l. 1, मराधिकारेन.

p. 475, l. 5, धिष्ठिता, मारपाक्षिका मा°.

p. 477, l. 10, विकल्पो नवधेति.

p. 478, l. 7, वभा°.

p. 479, l. 17, नियत गोत्रे.

p. 480, l. 2, °पादनेन; l. 5, स्यालम्ब.

p. 483, l. 21, sic. MSS. but it is evident that we must read: ग्राहक°.

p. 520, last line, °स्त्रवा मल°.

# अभिसमयालङ्कारालोकः।

ॐ नमः सर्वज्ञाय।

या सर्वज्ञतया नयत्युपशमं शान्त्यैषिणः श्रावकान्।
या मार्गज्ञतया जगद्धितकृतां लोकार्थसंपादिका॥
सर्वाकारमिदं वदन्ति मुनयो विश्वं यया सङ्गताः।
तस्मै श्रावकबोधिसत्त्वगणिणो बुद्धस्य मात्रे नमः॥ १॥
मायारूपसमानभावविदुषां मुक्तिं परां योगिनाम्।
संसारोदरवर्तिदोषनिचये संमुर्च्छितान् देहिनः॥
मैत्रेयेण दयावता भगवता नेतुं स्वयं सर्वथा।
प्रज्ञापारमितानये स्फुटतरा टीका कृता कारिका॥ २॥
भाष्यं तत्त्वविनिश्चये रचितवान् प्रज्ञावतामग्रणी।
आर्यासङ्ग इति प्रभास्वरयशास्तत्कर्तृसामर्थ्यतः॥
भावाभावविभागपक्षनिपुणज्ञानाभिमानोन्नतः।
आचार्यो वसुबन्धुरर्थकथने प्राप्तास्पदः पद्धतौ॥ ३॥
योगाभ्यासपदार्थतत्त्वमथनाल्लोकोत्तरज्ञानिनो।
जातस्त्वार्यविमुक्तिसेनसुधियो यत्नो महान् वृत्तितः॥
एकान्तोत्थविपक्षदृष्टिशमने शास्त्राम्बुधौ बुद्धवान्।
यो लोके स विमुक्तिसेनवचसा ख्यातोऽपरो वार्त्तिके॥ ४॥
वक्तुं तत्र न मद्विधाः क्षतधियोऽपूर्वं कथंचित्क्षमाः।
संक्षुण्णो हि बुधोत्तमैरहरहः कोऽसौ न वस्तुक्रमः॥

ज्ञानावाहकधर्मतत्त्वविषये जाताभिलाषा वयम् ।
व्याख्यां तेन परां सदर्थविषयां कर्तुं समभ्युद्यताः ॥ ५ ॥

एवमित्यादि (p. 3, 12) । सर्वत्रैव ह्यर्थसंशयेन सर्वेषां सम्बन्धाभिधेयप्रयोजनप्रयोजनावसायपूर्विका प्रवृत्तिरिति सम्बन्धादीनि प्रज्ञापारमितायां वाच्यानि । तथा हि यदि सम्बन्धाभिधेयमस्या न कथ्येत, तदोन्मत्तादिवाक्यवद-सम्बन्धमनर्थकञ्चेत्याशङ्कया न कश्चित्प्रवर्तेतापि श्रोतुमिति सम्बन्धाभिधेयमस्यामवश्यं वचनीयम् । तथा सत्यपि सम्बन्धाभिधेये निष्पादितक्रिये कर्मण्यविशेषाभिधायि साधनमित्यादि-साधनन्यायमतिपततीति न्यायात्सूत्रा-न्तरासङ्गृहीतविशिष्टप्रवृत्त्यङ्गप्रयोजनरहितं प्रज्ञापार-मितासूत्ररत्नं श्रद्धानुसारिणोऽपि श्रोतुमपि नाद्रियन्त इत्यादावसाधारणं क्रियाफलं सूत्रे प्रवृत्तिकामानां प्रवृत्तये तद्गतमेव प्रयोजनं वाच्यं नान्यगतमन्यथा ह्यसङ्गताभि-धानं स्यात् । सूत्रे हि परं प्रवर्तयितुं सूत्रादौ प्रयोजन-मभिधीयते न व्यसनितया । कथञ्च पुनः प्रयोजनवाक्यो-पदेशात्सूत्रे प्रवर्तितो भवति । यदि तद्गतमेव प्रयोजन-मभिधीयते नान्यगतम् । न ह्यन्यदीयप्रयोजनाभिधाना-दन्यत्र कस्यचित् प्रवृत्तिर्भवेत् । सूत्रं च विशिष्टार्थप्रतिपाद-नपरं वचनमुच्यते नाभिधेयमात्रं नापि शब्दमात्रमर्थप्रति-पादनसामर्थ्यशून्यमतो नाभिधेयादिगतमभिधानीयम् ।

न तु क्रियारूपं प्रयोजनम् । तथा हि सर्ववाक्यानां स्वार्थाभिधेयप्रतिपादनलक्षणक्रिया साधारणा । सा चाति-प्रतीततया प्रयोजनत्वेन नोपादानमर्हति । तस्यां शास्त्रस्य

व्यभिचाराभावात्। अनभिधेयत्वाशङ्काव्युदासार्थमुपदर्शनीयेति चेत्। न, अभिधेयकथनादेव तदाशङ्काया व्युदस्तत्वात्। नाप्यभिधेयविशेषप्रतिपिपादयिषया तदुपादानम्। अभिधेयविशेषप्रतिपादनादेव तस्याः प्रतिपादितत्वात्।

तस्य च क्रियाफलस्य फलं प्रयोजनमुपदर्शनीयम्। तेन विना क्रियाफलमात्रेण सूत्रे प्रवृत्त्यसंभवात्। तथा ह्यभिमतप्रधानफलार्थी प्रेक्षावांस्तदुपाये प्रवर्तेत, कारणमन्तरेण कार्यस्यायोगात्। अविकलारोग्यसाधनानुष्ठानेनारोग्यप्राप्तिवदुपायो ज्ञातोऽभ्यस्यमानः स्वोपेयफलदायक इत्युपायावगमाय सूत्रे प्रवृत्तिस्तस्मात्प्रवृत्त्यङ्गप्राधान्येन प्रयोजनमेवावश्यं दर्शनीयम्। तच्चोपायभूतसम्बन्धादिशून्येन ग्रन्थेनाशक्यं दर्शयितुमिति सूत्रस्य प्रयोजनप्रयोजनोपायतासंदर्शनार्थं सम्बन्धादिकथनम्। तच्च।

प्रयोजनप्रयोजनम् ॥

सम्बन्धानुगुणोपायं पुरुषार्थाभिधायकम्।
परीक्षाधिकृतं वाक्यमतोऽनधिकृतं परम् ॥

इति न्यायात् संबन्धानुगुणोपायमुपदर्शनीयम्। न पुनरशक्यं तत्साधनानुष्ठानमन्यथा ज्वरहरतक्षकचूडारत्नालङ्कारार्थमिव न प्रवर्तेत कश्चित्।

अनवस्थापि नैवम्। तथाह्यभिमतार्थपरिसमाप्त्या पुरुषस्याकाङ्क्षाविच्छेदादतो नापरमूर्ध्वं प्रयोजनं मृग्यमिति कोऽस्य संबन्धादिः। तच्चोच्यते। संबन्धस्तावन्न प्रयोजनात्पृथगुपदर्शनीयः। निष्फलत्वात्। स हि नाम पृथगुपा-

दानमर्हति यो यस्मिन्नभिहितेऽपि न गम्यते । यथाभिधेयाद्यन्यतराभिधाने नेतरावगतिर्भवति। न च सम्भवोऽस्ति प्रयोजनेऽभिहिते, संबन्धो नाभिहित इति। तथा हि संप्रदर्श्यमानः शास्त्रप्रयोजनयोः साध्यसाधनभावलक्षण उपदर्शनीयो, नान्यो गुरुपर्वक्रियादिलक्षणस्तस्यार्थिप्रवृत्तेरनङ्गत्वात् । स च साध्यसाधनभावः प्रयोजनाभिधानादेव दर्शितः ॥

तथा हीदमस्य प्रयोजनमिति दर्शयता दर्शितं भवतीदमस्य साधनमिति। न हि यो यन्न साधयति तत्तस्य प्रयोजनं भवत्यतिप्रसङ्गादिति सामर्थ्यलभ्यत्वेन नासौ प्रयोजनाभिधानात्पृथगभिधानीयः। धर्मप्रविचयार्थं सर्ववस्तुसङ्ग्रहोऽभिधेय इत्येकः। विपक्षप्रहाणाय समस्तप्रतिपक्षो निर्देश्य इत्यपरः। निरवशेषज्ञेयपरिज्ञानायाशेषाकारः कथनीय इत्यन्यः। तदेतत्त्रयमसत् । तथा हि प्रथमे पक्षे, समस्तवस्तुसङ्ग्रहे, न हि तदस्तीह प्रज्ञापारमितायामपूर्वं वस्तुजातं यन्न स्कन्धधात्वायतननिर्देशेनाभिधर्मपिटकादौ सङ्गृहीतमिति पुनरुक्ततादोषः ॥

द्वितीये सर्वप्रतिपक्षसङ्ग्रह एव, कस्यचिद्विपक्षवस्तुनोऽसङ्ग्रहात्प्रतिपक्षतया श्रावकमार्गादयो भावयितव्या इत्यभिधानेऽपि न ज्ञायते कस्य प्रतिपक्षेणेति प्रतिनियतविपक्षप्रतिपक्षप्रतिपत्तेरभावादप्रतिपत्तिदोषः। तृतीयेऽप्यशेषाकारसङ्ग्रहे विकल्पद्वयं, किं वस्तुनोऽव्यतिरिक्त आकार उत व्यतिरिक्त इति। यद्याद्यो विकल्पस्तदा वस्त्वेवाकारव्याजेन सङ्गृहीतमिति वस्तुसङ्ग्रहभावी दोषः समापतति। अथ द्वितीयस्तदा विकल्पनिर्मितनिर्वस्तुकाकारमात्रस्य

सङ्ग्रहात्पारम्पर्येणापि क्वचिद्वस्तुन्यप्रवृत्तेर्भाव्यमानोऽप्यसावाकारो न पुरुषार्थे युज्यत इति पुरुषार्थोपयुज्यमानार्थानभिधानादकथनदोषः ।

तस्माद्यथोक्तार्थचितयसङ्ग्रहेण प्रत्येकपक्षभाविदोषानुपपत्त्या श्रावकप्रत्येकबुद्धबोधिसत्त्वतथागताधिगमसङ्गृहीतोऽविपरीतः सर्वाकारज्ञताद्यष्टाभिसमयक्रमोऽभ्युदयनैःश्रेयसधर्मावाहकः समस्तो मार्गो विविधैः प्रातिहार्यैः सकलजनानुशासकेन भगवता महाकरुणामयेन प्रज्ञापारमितायां देशित इत्यभिधेयः । यथोक्तमभिधेयमार्यशतसाहस्रिकाप्रज्ञापारमितादिसूत्रार्थं बोधिचित्ताववादादिप्रतिपत्तिरूपमष्टावस्थाभेदभिन्नं सर्वं संक्षिप्तरुचयः सत्त्वाः सुखेन संक्षेपतः प्रतिपद्यन्तामित्यष्टसाहस्रिकां भगवतीं भगवान् देशितवान् । अतः प्रतिपाद्य सन्तानगतः संक्षेपतः समस्तार्थसुखावबोधोऽसाधारणमिति क्रियाफलं प्रयोजनम् । यथोक्तमभिधेयं सर्वाकारज्ञतादिमार्गमनादिभवभाविभावाभिनिवेशविषदूषिताशयैरनभ्यस्तसमस्तभावनैरात्म्यभावनैर्हरिहरहिरण्यगर्भादिभिरनधिगतं प्रज्ञापारमिताश्रवणात् सुखेन श्रोत्रेण ज्ञानेनावधार्य, पटुतरानुभवाहितवासनाप्रभवस्मरणप्रत्यये समारोप्य, चिन्तामयेन निश्चित्य, भावनामयेन भावयन् ।

तस्माद्भूतमभूतं वा यद्यदेवाभिभाव्यते ।
भावनापरिनिष्पत्तौ तत्स्फुटाऽकल्पधीफलम् ॥

इति न्यायात् संवृतिपरमार्थसत्याश्रयेण दानादिशुभसञ्चयवान् स्वापरार्थसंपत्सम्पादनाहितमिति निर्वेधभागीयाद्यधिगमक्रमेण सर्वप्राकारं साक्षात्कुर्यादित्यनु-

गुणोपायं क्रियाफलस्य फलं प्रयोजनम् । तथाचोक्तमभिसमयालङ्कारे ।

सर्वाकारज्ञतामार्गः शासिता योऽत्र देशितः ।
धीमन्तो वीक्षिषीरंस्तमनालीढं परैरिति ॥ २ ॥
स्मृतौ चाधाय सूत्रार्थं धर्मचर्याम् दशात्मिकाम् ।
सुखेन प्रतिपत्सीरन्नित्यारंभप्रयोजनम् ॥ ३ ॥ इति

तथागतगुह्यनिर्देशाधिकारेण सर्वथा भाद्रकल्पिकसर्वतथागतानां रूपकायसद्धर्मकायरक्षायां कृताधिकारत्वाद्वज्रपाण्यभिषेकादौ प्रत्यर्पितशासनत्वाच्चान्येषां विशेषवचनाभावादडकवतीनिवासी दशभूमीश्वरो महावज्रधरः सर्वलोकानुग्रहाय प्रज्ञापारमितासूत्ररत्नसङ्गीतिं प्रत्यधीष्टवन्तमार्यमैत्रेयादिमहाबोधिसत्त्वगणमेवमित्याद्याहेति पूर्वाचार्याः । अन्ये त्वत्रैव परीन्दनापरिवर्ते यथेयं जम्बुद्वीपे प्रज्ञापारमिता प्रचरिष्यतीत्यादिना (p. 529, 1) प्रत्यर्पितप्रज्ञापारमितात्वादार्यानन्दः सङ्गीतिकार इति मन्यन्ते । तत्रैवमिति (p. 3, 12) निश्चयार्थाभिधायिना स्वानुरूपज्ञानावधारितनिखिलसूत्रार्थस्योपदर्शनपरेणैवमेतदित्यविपरीतत्वमाह । मयेत्यात्मवचनेन भगवतः सकाशात्साक्षाच्छ्रवणं श्रुतमिति श्रोतविज्ञानेनानुभववचसा च तथागताद्दतेऽन्यस्यैवंभूतसमस्तधर्माधिगमसामर्थ्यवैकल्याद्धिगमाभावः । एतच्च पदत्रयं भगवद्वचनादेव सूत्रारम्भे निर्दिष्टम् । तथा हि भगवति परिनिर्वृत्ते नानार्थाधिमुक्तिप्रभावितत्वाद्दुरनुबोधबुद्धत्वावाङ्कसौगतवचनप्रसरस्यार्थाधिगमाभावे कथं कैश्चित्सङ्गीतिः क्रियत इति विनेयजनसंदेहापनयनकारिभिस्तथागताधिष्ठाना-

धिष्ठितैः श्रावकादिभिः कथं भगवन्ननागते काले धर्मः सङ्गीतव्य इति पृष्टेन भगवता कृताविपरीतसाक्षाच्छ्रवणेनानधिगतार्थेनापि धर्मसङ्गीतौ क्रियमाणायान्न दोष इत्यभिप्रायेणोक्तं धर्मसङ्गीतिसूत्रे। "एवं मया श्रुतमिति कृत्वा भिक्षवो मम धर्मः सङ्गीतव्य तथा संबन्धानुपूर्वीं प्रतिपाद्येत्यादि"। अतोऽपि वचनाद्देशकालादिवचनम्। तथा शक्रो देवानामिन्द्रो भगवन्तमेतदवोचदित्यादिवचनं च भगवदनुज्ञयैव सङ्गीतकर्तृभिः कृतमिति नाबुद्धवचनत्वप्रसङ्गस्तथा च बुद्धवचनेनाबुद्धवचनं प्रक्षेप्तव्यमित्ययमपि दोषो दूरत एव कृतानवकाशो ऽतश्च यथैव श्रुतं तथैव सङ्गीतमित्युपपन्नम्। एवं च कृत्वा यत्कैश्चिदेवं मम देशितमिति वक्तव्ये, कस्मादेवं मया श्रुतमित्यभिहितमिति चोद्यं कृत्वा भगवद्देशनानुपपत्तेरित्यादियुक्त्यन्तरं वर्णितं तन्नितरां न राजत इति प्रतिपादितम्। नन्वाचार्यानन्देनोक्तं "प्रदेशान्तरे सन्ति भगवता सूत्राणि मत्समक्षं भाषितानि। सन्ति देवलोके भाषितानि। सन्ति परम्पराभ्यागतानि यानि मयैवंश्रुतिकयोद्गृहीतानी"ति। तानि च सर्वाण्यधिकृत्य "ब्रूहि त्वं, महाप्रज्ञ, ब्रूहि त्वं, सुगतात्मज, धर्मचक्रप्रवर्तनसूत्रं भगवता कुत्र भाषितमि"ति महाकाश्यपवचनावसाने बुद्धगुणानुस्मरणद्रवीकृतचित्तसन्तानः साश्रुदुर्दिनवदनो व्यापिना स्वरेणार्यानन्द "एवं मया श्रुतमि"त्याह। तत्कथं मयेत्यात्मवाचकेन साक्षाच्छ्रवणमिति?। नैष दोषो, यतस्तथागताधिष्ठानदेशनायां तद्देशनावत्तत्सामर्थ्येनान्यतः श्रवणेऽपि भगवत एव सकाशाच्छ्रवणम्। अन्यतो वा श्रुत्वा धर्मधराग्रत्वादर्थनिर्णयं

प्रति भगवांस्तेन पृष्टोऽतोऽर्थनिर्णयवशाद्भगवत एव सकाशा-च्छ्रुतिरिति कृत्वा मयेत्याह। यत्तूक्तं यन्वहं सर्वमेवं-श्रुतिकयोर्हि शेयमिति तद्ग्रन्थमधिकृत्येति न दोषः। एव-मुपोद्घातं कृत्वेदानीं कदा कुतः कुत्र कैः सहैवं सूत्ररत्नं त्वया श्रुतमिति प्रश्नानात्मप्रामाण्यप्रतिपादनाय विस-र्जयन्। देशकालपर्षद्देशकसामग्री हि देशनयाः कारण-मिति निदानमाह। एकस्मिन् समये श्रुतमेकस्मिन् काल इति पूर्वेण सम्बन्धः। एतेन सर्वकालमेवंविधचिन्तारत्न-राजसमसूत्रोपलम्भाभावात्कदाचित्कत्त्वापदर्शनेन दुर्ल-भत्वमस्याख्यातम्। यद्वैकस्मिन् काले मयेदं सूत्ररत्नं श्रुतमन्यदाऽन्यदिति वक्रोक्त्या स्वगतं बाहुश्रुत्यं सत्त्वार्थं प्रतिकारुणिकवैद्यराजन्यायेनाह सङ्गीतिकारः। अथवै-कस्मिन् क्षणे सर्वं श्रुतमित्यर्थः। स्वप्ने देवताद्याधिपत्या-दल्पीयसापि कालेन वर्षशताद्युपलम्भवद्भगवदाधिपत्या-न्निखिलसूत्रार्थावभासिनः समनन्तरप्रत्ययमनोविज्ञान-प्रभवश्रोतविज्ञानस्यैकस्मिन् क्षणे समुद्भवात्। अनेनात्मनः प्रमाणपुरुषतामाह। यत्किञ्चिन्मम श्रोतव्यं तत्सर्वमेकस्मिन् क्षणे मया श्रूयते ऽचिन्त्यविमोक्षमुखलाभित्वान्न च विस्मर्यत इति। अत एव सङ्गीतिकारस्य पश्चात्क्रमेण प्रवृत्तायां देशनायामन्यविनेयजनवर्गानुग्रहार्थमन्तरा सदा समा-धानासम्भवेन कथञ्चिद्व्याकृतस्य विषयान्तरावलम्बिन-श्चेतसः सम्भवेऽपि नाविकले सूत्रे सङ्गीतिरुत्तरकालं विरुध्यते। तथागताधिपत्येन सम्पूर्णनिर्भासवतः प्रत्यय-स्यादावेवोपजातत्वात्। पुनस्त्वसौ शृणोत्यतृप्ततया धर्म-श्रवणामृतरसेन। परिशिष्टस्यापि विनेयराशेः किमेवम्

भवतीति चेत् । भवत्येव सागरनागराजपरिपृच्छानुसारेण परिशुद्धबोधिसत्त्वगणस्य न तु सर्वेषां विशिष्टभव्यतावैकल्येन तथाविधधारणशक्त्यभावात् । कथं पुनरयमेकत्र देशनायां विभाग इति चेत् । देशना ह्ययं संवृत्या वर्णपदनिर्भासिज्ञानात्मिकैव । सा यथावलं सकृत्क्रमेण वा जायत इति न दोषः । अथवा

देशान्तरविनेयार्थं तत्स्थानां तर्पणाय च ।
श्रावकानेकवासार्थमनासक्तिं च दर्शयेत् ॥
देशानां चैत्यभावार्थं पुण्यार्थञ्चैव देहिनाम् ।
इत्यादिज्ञापनार्थञ्च बुद्धश्चरति चारिकाम् ॥ इति ॥

परहितप्रवणमतित्वेनैकस्मिन् समये गृध्रकूटे विहरति स्मेत्युत्तरेण पदेन संबध्यते ऽन्यदान्यत्र विहरणात् ।

क्लेशकर्म तथा जन्म क्लेशज्ञेयावृती तथा ।
येन वैपक्षिका भग्नास्तेनेह भगवान् स्मृतः ॥

इत्यर्थोक्त्या नैरुक्तविधानेन क्लेशादिकं भग्नवानिति भगवान् । अथवा ।

ऐश्वर्यस्य समग्रस्य रूपस्य यशसः श्रियः ।
ज्ञानस्याथ प्रयत्नस्य षण्णां भग इति श्रुतिः ॥

सोऽस्यास्तीति समग्रैश्वर्यादिमान् भगवान् विहरति स्मेति संबन्धः । राजगृहे ऽन्वर्थसंज्ञके प्रसिद्धस्थानविशेषे यस्तथागतैर्जीनजननीदेशनां प्रत्यभिसम्बोधिस्थानवद्बोधिसत्त्वादिमहासन्निपातभारोद्वहनासमर्थान्यदेशत्वेनाभिकाङ्क्षितो नानारत्ननिकरो गृध्रकूटः पुण्यकामदेवादीनामष्टम्यादिषु पर्वसु याचां तनोतीति नैरुक्तविधानात्पर्वतः ।

तत्र विहरति स्म । नानाप्रकारर्द्धिप्रातिहार्येण लोकातिक्रान्तातिद्रुतधर्मदेशनादावर्ज्यदेशनाप्रातिहार्येणाशयानुशयपरिज्ञानात्परिपाच्यानुशासनीप्रातिहार्येण यानत्रयविनेयसत्त्वानां विशेषेण स्मरणादिकारिणां मोचनादभिमतमर्थं कुर्वन् चतुर्भिरीर्यापथदेशनासमापत्तिप्रतिसंलयनविहारैः कायवाक्कर्मधर्मसत्त्वालम्बनमनःस्वभावैरेवं विहृतवान् । ननु च भूतानद्यतनपरोक्षे काले लटः स्मशब्दयोगे विहितो न चात्र कालः सङ्गीतिकारस्य परोक्षस्तत्कथं विहरति स्मेति प्रयोगः । सत्यं, किन्तु तदन्तरमपरोक्षे चेत्यन्येनास्य साधुत्वम् । यदि वा पूर्वव्याकरणानुरोधादन्यजनापेक्षया वा परोक्षोपलक्षणत्वाददोषः । तथामन्त्रयते स्मेत्यादिवाच्यम् । महतेति सङ्ख्यानुगुणमहत्त्वयोगात् । महानुभवेन भिक्षूणां चैवाचिकेन कर्मणा ज्ञप्तिचतुर्थेनानाघातपञ्चमेनैहिभिक्षुत्वेन चोपसम्पन्नानां भिन्नक्लेशानां समूहेन ।

बुद्धधर्मस्तथा सङ्घो मारकोटिशतैरपि ।
भेत्तुं न शक्यते यस्मात्तस्मात् सङ्घोऽभिधीयते ॥

इति सङ्घेन सार्धं सहितः परिवृतो विहरति स्मेति सम्बन्धः । तत्र सङ्ख्यामहत्त्वमर्धेत्यादिनाह । अभिधेयार्थः सुगमः । सङ्ख्यावचनन्तु श्रावकपरिवाराणामानन्त्यात् सङ्ख्येयावधारणार्थम् । पूर्वं प्रभूतार्थस्य समाससङ्ख्याग्रहणाविस्मरणात् सुखावबोधार्थं बहुश्रवणग्रहणभीरूणां श्रोत्रावधानार्थमथवा परिमाणज्ञापनार्थमुपात्तम् । गुणमहत्त्वं सर्वैरित्यादिराह । सर्व एवात्र पूजादक्षिणागुणप्रकर्षाद्यर्ह-

तयार्हन्तः। क्षीणास्रवा भवाग्रादासंसारं स्रवन्तीति काम-भवाविद्यास्रवा यथायोगं तत्प्रतिपक्षानास्रवशीलादि-स्कन्धलाभेन येषां ते क्षीणास्रवाः। निर्गतः क्लेशकर्मजन्म-संक्लेशाख्यः क्लेशो येषां ते निःक्लेशाः। यथासङ्ख्यं संप्राप्त-शीलसमाधिप्रज्ञाविमुक्तिस्कन्धपरिपूरिभिर्दुश्चरिततृष्णादु-र्दृष्टिभवबन्धनविमुक्तया सम्यगीर्यापथाभिज्ञाविक्रीडित-दिव्यार्यविहारलाभैर्यथाक्रमं स्वयं ते लोकस्य लोकचित्तं वशीभूतम् येषाम्। स्वयं च सर्वबन्धनविगमस्वातन्त्र्याद्वे वशिनो भूतास्ते वशीभूताः। तृष्णाऽविद्यापक्षसर्वक्लेशोप-क्लेशप्रहाणात्समाधिसमापत्तयश्चेतोविमुक्तिरर्हन्मार्गज्ञानं प्रज्ञाविमुक्तिरिति कृत्वा तृष्णाऽविद्यापक्षाणामभावेन यथाक्रमं रागविरागादविद्याविरागाच्चेतःप्रज्ञाविमुक्तिरत-स्तल्लाभात्समापत्तिक्लेशावरणविमुक्तया सर्वथोभयभाग-विमुक्ताः सुविमुक्तचित्ताः सुविमुक्तप्रज्ञाः। शोकपरिदेवादि-भयानामात्मानुवादपरानुवाददुर्गतिजीविकादण्डाश्लोक-मरणभयानां लाभालाभाद्यष्टलोकधर्मोपलेपभयस्य स्वाधि-गमपरिपन्थीभूताज्ञानसंशयमिथ्याज्ञानभयानाञ्चाभावाद्य-थाक्रमं दुःखभयलोकधर्माज्ञानाशंकाविगमान्निर्भयत्वेना-जानेयाः। त्रैविद्यादित्वविशिष्टधर्माधिगमयोगान्महाप्रधा-नभावेन महानागाः। शीलसमाधिप्रज्ञापरिपूर्या कृत-मवश्यकर्तव्यं सर्वदुःखप्रमोक्षादिकृत्यम्। कृतञ्चानु-षङ्गिकं कर्तव्यं स्वेच्छाप्रतिबद्धवृत्तिधूतगुणादिकं करणीयं यैस्ते कृतकृत्याः कृतकरणीयाः। दुःखाद्यार्यसत्यचतुष्टया-धिगमाद्यथास्वं परिज्ञेयप्रहातव्यसाक्षात्कर्तव्यभावयितव्या-नामभावेनापहृताः सर्वथापनीताः स्कन्धक्लेशप्रतिज्ञोद्योग-

भारा यैस्तेऽपहृतभाराः। भगवतः पश्चादनुप्राप्तो हिताहितप्राप्तिपरिहारलक्षणो द्विविधः स्वकोऽर्थो विद्याविद्याधिगमप्रहाणाभ्यां यैस्तेऽनुप्राप्तस्वकार्थाः। परिसमन्ताद्यथासम्भवमार्यमार्गेण क्षीणानि भवेन सह पुरुषसंयोजनात्प्रतिघादिनवसंयोजनानि येषां ते परिक्षीणभावसंयोजनाः। सम्यगविपरीतमासमन्ताज्ज्ञानमाज्ञा तत्त्वावबोधस्तया सुष्ठुविमुक्तं सर्वबन्धनविसंयुक्तं चित्तं येषां ते सम्यगाज्ञासुविमुक्तचित्ताः। सर्वच चेतसि नवानुपूर्वविहारसमापत्तिलक्षणे स्वातन्त्र्याद्वशिनस्ते चेतःपरमपारमिं स्वगोचप्रहर्षपर्यन्तगतिं प्राप्ताश्चेति सर्वचेतोवशिपरमपारमिप्राप्ताः। अतस्तैरेवंभूतैर्भिक्षुशतैरिति तृतीयान्तेन सर्वथा सम्बन्धः कार्यः। सर्वेऽर्हन्तः, कुतः क्षीणास्रवत्वात्। क्षीणास्रवाः निःक्लेशत्वादेवं यावत् सम्यगाज्ञासुविमुक्तचित्ताः। सर्वचेतोवशिपरमपारमिप्राप्तत्वादेवं पूर्वपूर्वस्योत्तरोत्तरं कारणमतः सर्वपुरुषार्थपरिसमाप्तत्वान्नापरं विशेषणं वाच्यमित्येके। हतारित्वादर्हन्तः प्रहीणक्लेशावरणत्वात्। क्षीणास्रवाः पुनरास्रवक्षयप्रयासात्मकक्लेशाभावान्निःक्लेशाः। तदेवमेभिः पदैर्दोषात्यन्तप्रहाणलक्षणं गुणमभिधायेदानीं प्रतिपक्षलक्षणं गुणं वशीभूतैरित्यादिनाह। अभिज्ञादिवैशेषिकगुणाभिनिर्हाराभ्यामशैक्षशमथविपश्यनाभ्यां योगात्त्रैलोक्यानुग्रहक्षमत्वेन सत्त्वार्थधुरि नियोक्तुं भगवता वशीभूताः। सर्वप्रकारतृष्णादृष्टिबन्धनविमोक्षाद्यथाक्रमं सुविमुक्तचित्ताः सुविमुक्तप्रज्ञाः। अकुटिलमृजुना मार्गेण यावत्सम्यगमनादाजानेयाः क्लेशसङ्ग्रामविजयित्वान्महानागाः पुनर्जेतव्याभावात्कृतकृत्याः। युक्तरूपकार्य-

सम्पादनात्कृतकरणीयाः। पौनर्भाविकदुःखानुपार्जना-दपहृतभाराः। निर्वाणसाक्षात्करणादनुप्राप्तस्वकार्थाः। भवहेतुसमुद्घातात्परिक्षीणभवसंयोजनाः। दर्शनभावना-मार्गनिष्ठोत्कर्षात्सम्यगाज्ञासुविमुक्तचित्ताः। वैशेषिका-भिज्ञादिगुणवशित्वस्वर्गोचोत्कर्षगमनात्सर्वचेतोवशिपरमपा-रमिताप्राप्ता इति तथैव संबन्धः। पूर्वपूर्वस्योत्तरोत्तरं कारणम्। "विशेषणनिष्ठाभिधाने च न पुनर्विशेषणं वाच्यमतो नापर्यवसानदोष" इति वार्त्तिककारः। धर्म-धराग्रत्वाद्यथोक्तसंख्यान्तर्गतोऽपि नैवंगुणयुक्त इत्याह॥

एकेत्यादि। नित्यस्य कार्यकारणलक्षणवास्यवासक-भावानुपपत्तेः शुभाशुभवासनाभिः पूर्णोऽनित्यस्तदनुरूपां गतिं चातिगृह्णातीति नैरुक्तविधानात्प्रबन्धतया एकः पुद्गलः। यदुतशब्दो निपात उपदर्शनपरः। आका-ङ्क्षितायुर्भवत्वित्यायुष्मान् हितसुखपूजावाचकः। सर्वा-गमधारणबुद्धोपस्थानेन प्राप्तहर्षत्वादानन्दः। तदुक्त-मेष आयुष्मानार्यानन्दो देशनाकाले स्रोत-आपन्नत्वेन यथोक्तगुणवैकल्यादेनमेकं पुद्गलं स्थापयित्वा परि-त्यज्येति। परिसमाप्तकार्यत्वेन स्वहितैषितया तथागता-धिष्ठानेन सर्वसम्पत्तेश्च।

पञ्चादीनववैकल्यारतिरागाभिघट्टतः (?)।
लाभादितृष्णाप्रियताऽनुकम्पागुरुगौरवैः॥
कौतुहलाद्विशेषार्थमापत्त्या रत्नकारणात्।
चैत्यादिवन्दनार्थं च भिक्षुश्चरति चारिकामिति॥

पञ्चदशचारिकाकारणवैकल्यात्स्वयं न क्वचिद् गच्छन्ति

केवलं कृतज्ञताधर्मगौरवादिभिर्भगवतोऽन्तिके सदा विहरन्तीति निजत्वात्त्वेयं महाश्रावकपर्षदुक्ता ।

गंभीरामितसूत्रान्तरत्नश्रवणतृष्णया ।
लोकधातुष्वनन्तेषु भ्रमन्ति कृतिनो यतः ॥
तद्यानभाषणादेव बहवस्ते समागताः ।
तेनैवागमसूत्रेषु न पठ्यन्ते जिनात्मजाः ॥ इत्येके ।

पदपरमविस्तररुचिसत्त्वानुग्रहार्थं देशितार्यशतसाहस्रिका । सर्वार्थसङ्ग्रहेण मध्यरुचिविपञ्चितज्ञसत्त्वानुकम्पयार्यपञ्चविंशतिसाहस्रिका देशिता । तस्याश्च सर्वार्थोपसंहारेणोद्घाटितज्ञसंक्षिप्तरुचिसत्त्वहितोदयेनार्याष्टसाहस्रिका भाषितेति । अतस्तदनुसारेण दृष्टधर्मसंक्षिप्तरुचिभिक्षुभिक्षुण्युपासकोपासिकापर्षत् । तथा शुद्धाध्याशयिनः साभोगानिमित्तविहारिणोऽनाभोगानिमित्तविहारिणो नियतचर्याप्रतिपन्नाः सम्यगेकजातिप्रतिबद्धाश्चेत्येवमप्रमेयमहाबोधिसत्त्वपर्षदपि ज्ञेयेत्यपरे । तथा चाहाचार्यदिङ्नागः ।

इत्थमष्टसहस्रीयमन्यूनार्थैर्यथोदितैः ।
ग्रन्थसंक्षेप इष्टोऽत्र त एवार्था यथोदिताः ॥ इति ॥

तथा तदनुसारेणैव मन्दभाग्यानां परिवाराद्यभावे दौर्मनस्यनिवृत्त्यर्थमत्यच्छतानुरागार्थं च स्वयं भगवान् धर्मासनं प्रज्ञाप्य समाहितैरेव गम्यमिदं सूत्ररत्नमिति दर्शयन् वज्रपर्यङ्केनातिघाटितत्वादिदोषरहितेनोपविश्य, ऋजुना कायेन धर्मचक्रमुद्राबन्धपूर्वकं नासाग्रदृष्टिन्यासादेकाग्रामभिमुखीं स्मृतिं विधाय सर्वसमाधिसङ्ग्रहा-

त्समाधिराजं नाम समाधिं समापद्योत्थितस्ततो मैत्री-करुणानयनाभ्यामिमं लोकं दुःखार्तमभिसमीक्ष्य मृदु-मध्याधिमात्रभेदेन यथाभव्यतया च सर्वत्रगा बुद्धत्वपर्य-वसानफला देशनेयमिति विनेयवर्गं बोधयन्, यथायोग-मङ्गप्रत्यङ्गेभ्यः सर्वरोमकूपेभ्यः प्रकृतिप्रभायाश्च षष्टिरश्मि-कोटीनियुतशतसहस्रनिर्माणेन दशसु दिक्षु गङ्गानदी-वालुकोपमांल्लोकधातूनवभास्य सर्वसत्त्वांश्चानुत्तरसम्यक्-संबोधौ नियतान् कृत्वा जिह्वेन्द्रियेणेमं त्रिसाहस्रमहा-साहस्रलोकधातुं व्याप्य तस्मात्स्फुरितानेकरश्मिसमूहेषु पद्मगर्भतथागताधिष्ठानपूर्वकं षट्पारमिताप्रतिसंयुक्तधर्म-देशनया पूर्ववत्सत्त्वार्थकरणात्तदर्थिजनसंनिपाताय मातृ-देशनानिमित्तमव्याहतं दर्शितवान्। तदनु तथैवं पर्षच्छारद्यादिसर्वभयविगमात्, सिंहविजृम्भितं नाम समाधिं समापद्याशुद्धे स्थाने संवृतिपरमार्थसत्यविभागा-कुशले च श्रोतरि[न]कथनीया जीनजननीति धर्मभानका-नवबोधयंस्तादृशमृद्ध्याभिसंस्कारमभिसंस्कृतवान् येनाष्टा-दशमहानिमित्तपूर्वकं तथैव सर्वलोकधातुसङ्गृहीताष्टा-क्षणविनाशात्, स्थानपरिशोधनेन तत्र ते सत्त्वा देव-मनुष्यसभां गता यामुपपद्य जातिस्मराः प्रीतिप्रमोदेन स्वस्वबुद्धक्षेत्रेषूपसंक्रमणादिपूर्वकं बुद्धान् भगवन्तो नमन्ति स्म। सर्वे च सत्त्वा व्यपगतचक्षुरादिवैकल्यदोषा दशकुशल-कर्मपथसेविनश्चतुर्ब्रह्मविहारनिरतास्तृतीयध्यानसमापन्ना इव सुखलाभिनो जीनजननीश्रवणयोग्या भूत्वैवंरूपया प्रज्ञया समन्वागता भवन्ति स्म। यदेवमुदानमुदानयन्ति स्म। साधु दमः साधु शमः साधु संयमः साधु चीर्णो

ब्रह्मचर्यावासः । साधु प्राणिभूतेष्वविहिंसेति द्विविधं समाधिप्रातिहार्यम् । तदनु भगवान् प्राप्तसमस्तज्ञेयाधिपत्येनेयं प्रज्ञापारमिता देशयितुं शक्यत इति कथयन् विनेयानामादरोत्पादनाय पूर्ववत् सर्वलोकधातूनभिभूय प्रभावर्णश्रीतेजोभिर्यथाक्रमं स्थानभासनतपनविरोचनं सर्वपर्वतानभिभूय सुमेरुः पर्वतराज इव कृतवान् । तथैवेदृशैरेवेयं बोद्धुं देशयितुं च शक्यते न मादृशैरिति यत्नं न कुर्युर्विनेयास्ततो मनुष्या एव सर्वं सम्पादयितुमलमित्युत्साहसंजननार्थमेतल्लोकधातुसत्त्वात्मभावसमानमात्मभावं प्राकृतमुपदर्शितवान् । ततो जातप्रसादातिशयैर्देवमनुष्यैर्भूतार्थभावनाभ्यासात्, कालान्तरेणेदृशमेव धर्माधिगमं पश्यद्भिर्भगवान् पुष्पादिभिः पूजितः । यथा देयाः परिभुज्यन्ते तथा सुपरिणमितवस्तुपरिभोगाच्चित्तप्रसादेन पुण्याभिवृद्धौ प्रमृष्टकायादितया प्रज्ञासम्भारो विनेयानां सुखेनोत्पद्यत इत्यनुग्रहार्थं तानि च पुण्यादीनि त्रिसाहस्रमहासाहस्रलोकधातुप्रमाणसर्वालङ्कारशोभनकूटागाररूपेणैतल्लोकधातोरतीवशोभाकारेण स्वमूर्ध्नि भगवताधिष्ठितानि । तथाच तान्यधिष्ठाय क्षपिताहम्मानवासनानामेकाभिलक्ष्यधर्मदेशनायां दौर्मनस्यादिना सम्यक्प्रतिपत्तिवैकल्यमिति पूर्ववत् सर्वलोकधातुस्थसत्त्वानां पुरतः सर्वथोद्ग्रहणाद्यर्थं तथा सर्वसत्त्वसमताप्रवृत्तावप्युत्तरत्र यथाभव्यतया चिरक्षिप्रादिभेदेन केषाञ्चिदधिगमव्याकरणादावनुनयाद्याध्यारोपपूर्वकं नास्मासु चित्तान्यथात्वं कार्यमिति प्रदर्शनार्थं सर्वाकारधर्मदेशनापरं सममात्मभावं प्रदर्शितवान् । सुगतराज इति द्विविधमृद्धिप्रातिहार्यम् ।

तदनु संक्लिष्टलोकधातूत्पादात्संभवत्प्रज्ञादिप्रकर्षत्वाच्च सर्वबुद्धैर्न समानोऽयं भगवानिति सर्वाकारजगदर्थकरणाय मन्दधीजनाशङ्कामपाकुर्वन् समानप्रस्थानसंभारपरिपूर्णबोधिसत्वानां प्रतिबुद्धक्षेत्रमनुत्तरसम्यक्संबोधिसंभवात्सर्वबुद्धैः सह संभारधर्मकायाभ्यां जगतश्चार्थचर्यया समता सर्वबुद्धानान्नायुर्जातिप्रमाणत इत्यात्मनस्तुल्यतां कथयंस्तथा नानालोकधातूत्पन्नकृतप्रणिधानस्वविनेयबोधिसत्त्वानामविपरीतसमस्तप्रवचनरत्नस्त्रचदेशनया संभारपरिपूरणोपायोपदेशार्थं तथा स्मितमकरोद्भगवान् येनान्योन्यं सर्वलोकधातुस्थसत्त्वाः सर्वथोन्मूलितातुल्यत्वसंशयबीजाः सपर्षत्समूहानितरेतरलोकधातवीयबुद्धान् भगवन्तः समुपलभ्य तुल्यतां प्रतिपन्नाः। तथा महावभासादिनिमित्तोपालंभपूर्वकं गुर्वायत्तया न सहसागमनं युक्तमिति तदर्थं दशदिग्लोकधातवीयजिनात्मजास्तान् स्वस्वतथागतानुपसंक्रम्य पदाभिवंदनपुरःसरा एव कस्यायमनुभाव इति प्रश्नस्य विसर्जनानन्तरं प्रशंसावाक्यश्रवणेन विदितस्वाधिपतिभद्राशयास्तादृग्विधसपरिवारभगवद्दर्शनाद्यर्थं गमिष्यामो वयं भगवन्त इत्यालोच्य गृहीतस्वाधिपतिधर्मगौरवप्रेषितपूजार्थनानारत्नपद्मवार्त्तासंदेशाल्पाबधातादिपरिपृच्छावचनाः पञ्चकषायोत्सादत्वादस्य लोकधातोरप्रमादविहारिणो भविष्यथेत्यनुशासनीं प्रतिगृह्यान्तरालवर्तिबुद्धानां पूजामभिनिवर्तयन्तोऽपरिमितपरिवाराः समागम्यानुष्ठितपादवन्दनपूर्वकपूजाप्रसराः स्वस्वस्थानीभूय कथितस्वस्वतथागतवार्त्तावचनाः पद्मानि निर्यातितवन्त इति द्विविधं धर्मावभासनप्रातिहार्यम्। तदनु

भगवांस्तानि पद्मान्यपरिशुद्धलोकधातूत्पादेऽपि तद्दोषानुपलेपज्ञापनाय सद्धर्मपूजार्थं प्रहितानीति कृत्वा स्वस्वदिक्षु प्रक्षिप्य तेषु च पद्मेषु तथागताधिष्ठानपूर्वकजिनजननीदेशनयानुत्तरसम्यक्संबोधौ सर्वसत्त्वान् नियतीकर्तुं सद्धर्मपूजायामुपनाम्य समागतं यथाभव्यं महाबोधिसत्त्वादिसंनिपातमवगम्यादिमध्यान्तकल्याणत्वादियुक्तां प्रज्ञापारमितां देशितवानिति निदानं प्रतिपत्तव्यम्। अत्र तूद्घटितज्ञसंक्षिप्तरुचिसत्त्वानुग्रहदेशनाधिकारान्नोक्तम्। तदुक्तं यदा भगवान् राजगृहे महानगरे गृध्रकूटे पर्वते यथोक्तपर्षदा परिवृतो धर्मं देशयन् विजहार तदा भगवतः सकाशात्तत्रैव स्थाने तया पर्षदा सार्धमेवं मया सूत्ररत्नं श्रुतमिति सर्वैरप्येतैर्लोकव्यवहारानुवर्तनात् सङ्गीर्तितदेशादिभिः सङ्गीतिकारेणात्मप्रामाण्यप्रतिपादनाद्विनेयानाम् सादरश्रवणचिन्तनादिकमुक्तम्। तथा चाहार्यदिङ्नागः।

श्रद्धावतां प्रवृत्त्यङ्गं शास्ता पर्षच्च साक्षिणी।
देशकालौ च निर्दिष्टौ स्वप्रामाण्यप्रसिद्धये॥
सङ्गीतिकर्त्ता लोके हि देशकालोपलक्षितम्।
समाक्षिकं वदन् वक्ता प्रामाण्यमधिगच्छति॥ इति।

तत्र।

प्रयोजनं सपिण्डार्थं पदार्थमानुसन्धिकः।
सचोद्यपरिहारश्च वाच्यः सूत्रार्थवादिभिः॥

इति पञ्चभिराकारैः सूत्रं व्याख्यातव्यमिति व्याख्यायुक्तौ निर्णीतम्। इत्यभिहितमेव प्रयोजनम्। अतः श्रोतृजनसुखप्रतिपत्तये कृतविभागार्थस्य च शास्त्रस्य सुकरं व्याख्या-

तॄणां व्याख्यानमिति समासनिर्देशेन पिण्डार्थस्तावदभिधीयते। तत्र बुद्धत्वार्थिनो बोधिसत्त्वस्य चित्तोत्पादादिसर्वाकारपरिज्ञानादौ फलनिर्देशेन सर्वाकारज्ञता कथिता। सा न विना श्रावकमार्गादिपरिज्ञानेनेति तदनु मार्गज्ञता। सापि न सर्ववस्तुपरिज्ञानमन्तरेणेति तदनन्तरं सर्वज्ञता। ततः सर्वथैवंप्राप्तत्रिसर्वज्ञतावशित्वार्थं पुनः सर्वाकारमार्गवस्तुज्ञानप्रकारसङ्ग्रहेण त्रिसर्वज्ञताभावनयाऽधिगम्य सर्वाकाराभिसम्बोधं विशेषमार्गेण प्रकर्षपर्यन्ताधिगमलाभान्मूर्धाभिसमयमासाद्य व्यस्तसमस्तभेदेन विभावितानर्थान् प्रगुणीकृत्य निश्चयाय साक्षात्करोतीति विदित्वानुपूर्वाभिसमयम् पुनरपि स्वभ्यस्तीकरणाय विभावितैकक्षणाभिसंबोधानन्तरं द्वितीये क्षणे धर्मकायाऽभिसंबोधं सम्यगधिगच्छतीति समासतोऽष्टाभिसमयः प्रज्ञापारमितायां पिण्डार्थः।

तथाचोक्तम्।

प्रज्ञापारमिताऽष्टाभिः पदार्थैः समुदीरिता।
सर्वाकारज्ञता मार्गज्ञता सर्वज्ञता ततः॥ ४॥

सर्वाकाराभिसंबोधो मूर्धप्राप्तोऽनुपूर्विकः।
एकक्षणाभिसंबोधो धर्मकायश्च ते ऽष्टधा॥ ५॥ इति।

समासनिर्दिष्टस्य व्यासतश्चाख्यानात्व्याख्यातत्वमिति पुनरपि व्यासतः पिण्डार्थोऽभिधीयते। तत्र सम्यक्संबोधिमधिगन्तुकामेनादौ शून्यताकरुणागर्भं बोधिचित्तं प्रणिधिप्रस्थानस्वभावं द्विविधमुत्पाद्य चित्तोत्पादतदाक्षिप्तधर्मनिष्पत्तये संप्राप्तगुणपरिपालनार्थेनाभिष्टद्ध्यर्थं प्रतिपत्त्या-

दिष्ववादग्रहणानन्तरं श्रुतादिप्रकर्षप्राप्तमोक्षभागीयश्रद्धादिलक्षणकुशलमूलादूर्ध्वं चतुःसत्यप्रतिवेधानुकूलं चतुर्विधनिर्वेधभागीयं लौकिकभावनामयन्निश्रित्य प्रतिपत्तिमतो यथोक्तनिर्वेधभागीयमन्यदपि दर्शनमार्गादिकमिति प्रतिपत्तिराधारेण धर्मधातुस्वभाविनैव बोधिसत्त्वेन सर्वधर्मालंबनपूर्वकं सर्वसत्त्वाग्रताचित्तमहत्वं प्रमाणमहत्वमधिगममहत्वं चाधिकृत्य प्रतिपत्तिः प्रवर्तत इत्यभिलक्ष्यस्थानीयस्त्रिविधः समुद्देशो ध्येयः। तदनु तत्प्राप्तये त्रिसर्वज्ञताविषये सामान्येन शुक्लधर्माधिष्ठाना सर्वाकाराभिसम्बोधादौ चतुर्विधेऽभिसमये प्रत्यभिसमयं षट्पारमिताऽधिष्ठाना च क्रियाप्रतिपत्तिरित्येवं यथावत्प्रयोगदर्शनभावनाविशेषमार्गस्वभावानां सन्नाहादिप्रतिपत्तीनां मध्ये वीर्यरूपतया प्रथमतः सन्नाहप्रतिपत्त्या सन्नह्य प्रस्थानप्रतिपत्त्या समस्तमहायानधर्माभिरोहणपूर्वकं संभारप्रतिपत्त्या सम्भृतसंभारेण निर्याणप्रतिपत्तिरधिगन्तव्येत्येवं बुद्धत्वावाहकधर्माधिगमानुक्रमेण प्रकाशनात्तथागतानामिति प्रथमपरिवर्तसङ्गृहीता सर्वाकारज्ञता।

तथाचोक्तम्।

चित्तोत्पादोऽववादश्च निर्वेधाङ्गं चतुर्विधम्।
आधारः प्रतिपत्तेश्च धर्मधातुस्वभावकः॥ ६॥

आलम्बनं समुद्देशः सन्नाहप्रस्थितिक्रिये।
सम्भाराश्च सनिर्याणाः सर्वाकारज्ञता मुनेः॥ ७॥

इति।

तदनु सर्वाकारज्ञताधिगमो न विना सर्वमार्गाधिगमन-

मिति मार्गज्ञतां दर्शयितुं स्वप्रकृतिप्रभाभिर्देवादीनां वैपाकिकप्रभाया मलिनीकरणेन लोकपालत्वाद्यभिमाननिराकरणाद्वक्रोक्त्या निहतमानसंतान एव पुद्गलोऽधिगमेऽस्या भाव्य इत्याधारकथनानन्तरं स्वविषयप्रतिनियमादिकमभिधाय मार्गज्ञताऽधिकारे सर्वे मार्गाः परिपूरयितव्या इति श्रावकप्रत्येकबुद्धमार्गप्रतिपादनपूर्वकमैहलौकिकादिगुणैरुपेतो महानुशंसो बोधिसत्त्वानां दर्शनमार्गो भगवताभिहितः। ततोऽनन्तरं भावनामार्गाभिधाने सति स्वल्पवक्तव्यत्वेन फलनिम्नत्वेन च विनेयप्रवृत्तेस्तस्य कारित्रमादौ निर्दिश्य साश्रवानाश्रवरूपेण द्विविधो भावनामार्ग इत्यधिमुक्तिपरिणामनानुमोदनाभेदेन त्रिविधसाश्रवभावनामार्गमध्ये काञ्चनपिण्डमिव धातुभ्यः पुण्यमभिसंस्करोतीत्यादावधिमुक्तिमनस्कारमुक्त्वा तच्छ्रावकबोधिसत्त्वोत्साहनायैवमधिमुक्तेर्बुद्धादिभिः स्तुत्यादयः क्रियन्त इत्युत्तरोत्तराभिनन्दनरूपाः स्तुतस्तोभितशंसिताः कथिताः। तदनु सम्यक्संबोधेस्तत्पुण्यमुपकरणीकरोति सुवर्णकार इवाभरणमिति परिणामनामनस्कारपूर्वकं स्वपरपुण्यक्रियासमताप्रतिलाभार्थमनुमोदनामनस्कारमभिधाय प्रयोगविशुद्धिभेदेन द्विविधोऽनाश्रवो भावनामार्ग इति प्रथममभिनिर्हारलक्षणं प्रतिपाद्य द्वितीयोऽत्यन्तविशुद्धिलक्षणो देशित इति। द्वितीयपरिवर्तमारभ्य यावदष्टमपरिवर्ते। य एवमस्य बोधिसत्त्वस्य महासत्त्वस्य भगवन्नवबोध इयमस्य प्रज्ञापारमिता। भगवानाह। अत्यन्तविशुद्धत्वत्सुभूत (p. 189, 21) इति एतत्पर्यन्तेनोक्ता बोधिसत्त्वानां मार्गज्ञता।

तथाचोक्तम्—

ध्यामीकरणतादीनि शिष्यखड्गपथौ च यौ ।
महानुशंसो दृङ्मार्ग ऐहिकामुत्रिकैर्गुणैः ॥ ८ ॥

कारित्रमधिमुक्तिश्च स्तुतस्तोभितशंसिताः ।
परिणामेऽनुमोदे च मनस्कारावनुत्तमौ ॥ ९ ॥

निर्हारः शुद्धिरत्यन्तमित्ययं भावनापथः ।
विज्ञानां बोधिसत्त्वानामिति मार्गज्ञतोदिता ॥ १० ॥

इति ।

ततः सर्ववस्तुपरिज्ञानं विना न मार्गज्ञतापरिज्ञानं सम्यगिति सर्वज्ञतां दर्शयितुं प्रज्ञया संसारादीनवदर्शनेन कृपया च सत्त्वार्थकरणपारतन्त्र्येण बोधिसत्त्वानां भवशमानवस्थानाद्व्यतिरेकनिर्देशेन चैवं श्रावकप्रत्येकबुद्धानामिति निर्देशपूर्वकं तत्समर्थनार्थमेवान्वयव्यतिरेकतया निमित्तानिमित्तग्रहणाज्जीनजनन्या निर्दिष्टदूरेतरभावेनोपलम्भानुपलम्भाभ्यां विपक्षप्रतिपक्षौ निर्दिश्य तयोर्विभावनायां पुनरन्वयमुखेनैव बोधिसत्त्वानां प्रयोगकथनादनन्तरं तत्समताप्रतिपादनपूर्वको ध्येयो दर्शनमार्गोऽभिहित इत्यष्टमपरिवर्ते। आयुष्मान् सुभूतिराहेत्यारभ्य (p. 189, 22) यावन्नवमपरिवर्ते नापि कस्यचिद्धर्मस्य प्रवर्तनं वा निवर्तनं वैवमियं सुभूते बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमितेत्ये (p. 203, 17) तत्पर्यन्तेनोक्ता श्रावकप्रत्येकबुद्धानां सर्वज्ञता। तथाचोक्तम् ।

प्रज्ञया न भवे स्थानं कृपया न शमे स्थितिः ।
अनुपायेन दूरत्वमुपायेनाविदूरता ॥ ११ ॥

विपक्षप्रतिपक्षौ च प्रयोगः समताऽस्य च।
दृङ्मार्गः श्रावकादीनामिति सर्वज्ञतेष्यते ॥ १२ ॥
इति।

तदनु परिज्ञातत्रिसर्वज्ञतावशित्वार्थं पुनः सर्वाकारमार्गवस्तुज्ञानप्रकारसङ्ग्रहेण त्रिसर्वज्ञतां भावयतीति सर्वाकाराभिसंबोधं दर्शयितुमाकारविशिष्टप्रयोगैर्भावयितव्या यथासंख्यं गुणदोषादानत्यागेन लक्षणज्ञानपूर्वकमुत्पन्नमोक्षभागीयकुशलमूलेनेत्याकारादीन्निर्दिश्य विवर्धितमोक्षभागीयस्योत्साहिनो निर्वेधभागीयाद्यधिगमद्वारेण प्राप्तशैक्षावैवर्तिकबोधिसत्त्वगणधर्मस्य बुद्धत्वनिमित्तसंसारनिर्वाणसमताभावनापूर्वकं निष्पादितस्वबुद्धक्षेत्रविशुद्धावुपायकौशलेन यथाभव्यतयाऽनाभोगाद्बुद्धकृत्यं प्रवर्तत इति निर्वेधभागीयादयो देशिता इति नवमपरिवर्ते। एवमुक्त आयुष्मान् सुभूतिर्भगवन्तमेतदवोचत्। महापारमितेयम् (p. 204, 1) इत्यारभ्य यावद् विंशतितमपरिवर्ते। ते ते बोधिसत्त्वा महासत्त्वा असंहार्याः सदेवमानुषासुरेण लोकेनेत्ये (p. 380, 12) तत्पर्यन्तेनोक्तो बुद्धादीनां यथासम्भवं सर्वाकाराभिसंबोधः।

तथाचोक्तम्।

आकाराः संप्रयोगाश्च गुणा दोषाः सलक्षणाः।
मोक्षनिर्वेधभागीये शैक्षोऽवैवर्तिको गणः ॥ १३ ॥
समताभवशान्त्योश्च क्षेत्रशुद्धिरनुत्तरा।
सर्वाकाराभिसंबोध एष सोपायकौशलः ॥ १४ ॥
इति।

तदनन्तरं प्राप्तसर्वाकाराभिसंबोधस्य विशेषमार्गेण प्रकर्षपर्यन्तोऽधिगम इति मूर्धाभिसमयं दर्शयितुं यथासंख्यमुष्मादिचतुर्विधनिर्वेधभागीयस्वभावलिङ्गविवृद्धि-निरूढिचित्तसंस्थितिप्रतिपादनपूर्वकं प्रवृत्तिनिवृत्तिपक्षा-धिष्ठानौ द्रव्यप्रज्ञप्तिसत्पुरुषाधिष्ठानौ च यथाक्रमं द्वौ द्वौ ग्राह्यग्राहकविकल्पाविति प्रहेयतया चतुर्विधविपक्षं तत्प्रहाणावस्थाविशेषं चोपदेयतया चतुर्विधं प्रतिपक्षं प्रत्येकं दर्शनभावनामार्गं निर्दिश्य बुद्धत्वप्राप्तेरव्यवधानेनानन्तर्य-समाधिरुभयसत्याश्रितोपायकौशलेन निराकरणीयवि-प्रतिपत्त्या सह देशित इति विंशतितमपरिवर्ते सचेद्बोधि-सत्त्वो महासत्वः स्वप्नान्तरगतोऽपीत्यारभ्य (p. 380, 13) यावदेकोनत्रिंशत्तमपरिवर्ते कुशलाकुशलधर्मापरिमाण-तया प्रज्ञापारमिताऽपरिमाणतानुगन्तव्येति (p. 428, 8) एतत्पर्यन्तेन सकारणेनोक्तो मूर्धाभिसमयस्तथाचोक्तम् ।

लिङ्गं तस्य विवृद्धिश्च निरूढिश्चित्तसंस्थितिः ।
चतुर्धा च विकल्पस्य प्रतिपक्षश्चतुर्विधः ॥ १५ ॥
प्रत्येकं दर्शनाख्ये च भावनाख्ये च वर्त्मनि ।
आनन्तर्यसमाधिश्च सह विप्रतिपत्तिभिः ॥ १६ ॥

"मूर्धाभिसमय" इति । तदनु प्राप्तमूर्धाभिसमयो व्यस्तसमस्तत्वेनाधिगतानर्थाननुपूर्वीकृत्य स्थिरीकरणाय विभावयतीति सर्वधर्मसङ्ग्राहकदानादित्रयोदशप्रकार-तयैकोनत्रिंशत्तमपरिवर्ते सिंहनादनदनतया प्रज्ञापार-मिता नदनतानुगन्तव्ये (p. 478, 9) त्येकेनैव पदेन सकारणे-नोक्तो ऽनुपूर्वाभिसमयस्तथाचोक्तम् । "त्रिधा दशधा

वानुपूर्विक" इति। तदनन्तरं विभावितानुपूर्वाभिसमयस्य स्वभ्यस्तीकरणाय तेषामेवाधिगतानां धर्माणामविपाकानास्रवसर्वधर्मैकक्षणलक्षणादिचतुर्विधभेदादेकेनैव क्षणेनाभिमुखीकरणमिति तत्रैव परिवर्ते सर्वधर्मा कोप्यतया प्रज्ञापारमिताऽकोप्यतानुगन्तव्येत्येकेनैव पदेन सकारणेनैकक्षणाभिसंबोधो दर्शितः। तथाचोक्तम्।

एकक्षणाभिसंबोधो लक्षणेन चतुर्विधः॥ १७॥ इति।

तदनु विभावितैकक्षणाभिसंबोधस्य द्वितीये क्षणे धर्मकायाभिसंबोध इति चिविधमनन्तराभिसंबोधं बोधिसत्त्वानां निर्दिश्य परिशिष्टकायत्रयं तथ्यसंवृत्या प्रतिभासमानं परमार्थतो धर्मतारूपं यथाधिमोक्षप्रभावितं बुद्धबोधिसत्त्वश्रावकादिगोचरं व्यवस्थापितमिति कथनाय "विविक्ताव्यतिरेकित्वं विवेकस्य यतो मतमि"ति न्यायात् तदव्यतिरेकेऽपि पृथग् लोकोत्तरेण मार्गेण प्राप्यते न तु क्रियत इत्यकृत्रिमार्थेन मायोपमविज्ञानमयसर्वधर्मप्रतिपत्त्याधिगतः स्वाभाविकः काय इति तत्कथनपूर्वकमवश्यमेवाभ्युपगन्तव्या योगिसंवृत्त्या विशिष्टार्थप्रतिभासजननद्वारेणाश्रयपरावृत्त्या परावृत्ता धर्मदेशनाद्यर्थक्रियाकारिणोऽद्वयाश्चित्तचैताः। सर्वाकारस्तथागतानामेव गोचरो ज्ञानसंभारजः सव्यापारो धर्मकाय इत्यभिधानानन्तरं नानासूत्ररत्नश्रवणाभिलाषिभिर्दशभूमिप्रविष्टैर्महाबोधिसत्त्वैः सह परमानवद्यमहायानधर्मसंभोगप्रीतिसुखोपभोगादप्रमेयपुण्यसंभारसंभृतं लक्षणानुव्यञ्जनविराजितगात्रं सांभोगिककायं प्रतिपाद्य यथाभव्यतयाशेषजगदर्थक्रियाकारी सर्वथाऽऽभावाग्रादनुपरतप्रबन्धः शाक्य-

मुनितथागतादिरूपो निर्माणकायः पुण्यज्ञानसंभारांश्च एव श्रावकाद्युपलम्भयोग्यो देशित इत्येकोनत्रिंशत्तमपरिवर्ते । एवं हि सुभूते बोधिसत्त्वेन महासत्त्वेनेत्यारभ्य (p. 424, 1) यावदनुत्तराणां च बुद्धधर्माणां परिपूरिरिति (p. 480, 9) परिवर्तपर्यवसानेनोक्तो बुद्धानां भगवतां धर्मकायाभिसंबोधः ।

तथाचोक्तम् ।

स्वाभाविकः ससांभोगो नैर्माणिकोऽपरस्तथा ।

धर्मकायः सकारित्रश्चतुर्धा समुदीरितः ॥ १८ ॥ इति ।

तदनन्तरं सदाप्ररुदितबोधिसत्त्ववत्प्रतिपत्तिः कार्येति विनेयजनबोधनाय तत्पूर्वयोगकथामुखेन कल्याणमित्राराधनपूर्वकप्रज्ञापारमितायोगानुशंसां दर्शयितुमुपसंहारद्वारेण मध्यमप्रतिपत्त्या यथोक्ताभिसमयक्रमप्रतिपादनपरमेव परिवर्तत्रयं देशितम् । तत्पुनः सुगमत्वाच्चाभिसमयालङ्कारकारिकया न सङ्गृहीतमित्यपरप्रकारद्वयेन समुदायार्थस्याभिधास्यमानत्वादेकस्तावत्समुदायार्थः ।

इदानीं पदार्थादिव्याख्यानेन सूत्रार्थोऽभिधीयते । तत्र इति (p. 3, 12) वाक्योपन्यासे । खलुशब्दो वाक्यालङ्कारे । शोभनाऽरणाविहारिणां मध्येऽग्रा भूतिश्चेतसः संपत्तिर्यस्य स सुभूतिः । सदेवके लोके पूजादिभिः स्थाविर्यप्राप्तत्वात्स्थविरः । इह क्वचित्तथागतानां कायव्यापारात्मकपाण्याद्यधिष्ठानेन देशना । तद्यथा दशभूमकादेः सूत्रस्य देशना । क्वचिद्वचनाधिष्ठानेन तद्यथाऽजातशत्रुशोकविनोदनसूत्रादेः । क्वचिन्मनोऽधिष्ठानेन तद्यथा समन्तभद्रचर्यानिर्देशसूत्रादे-

रित्यार्यसुभूत्यधिमुक्तानामनुग्रहपरीन्दनाभ्यां सम्यक्परिग्रहादिक्रमेण महायाने विनयनात्स्ववंशानुपच्छेदार्थमचिन्त्यो वा तथागतानामुपायकौशलप्रभावो यस्मात् सर्वथाशक्तेनापि देश्यत इति प्रभावसंदर्शनविनेयानामनुग्रहार्थं प्रज्ञापारमिताभाषणं प्रति वागधिष्ठानद्वारेणार्यसुभूतिमन्यमनस्कमभिमुखीकरणार्थं भगवानामन्त्रयते स्मामन्त्रितवान्। कथमित्याह। प्रतिभात्वित्यादि। धर्मदेशनाधिकाराद्विद्यमानत्वेऽपि हे सुभूते विशिष्टधर्मार्थनिरुक्तिप्रतिभानं प्रतिसंवित्सर्वथा ते तवाभिमुखी भवतु। बोधौ सर्वधर्मासक्ततायां स्वार्थसंपदि सत्त्वमभिप्रायो येषां ते बोधिसत्त्वाः। श्रावका अपि स्युरेवमित्याह। महासत्त्वा इति। महत्यां परार्थसंपदि सत्त्वं येषां ते महासत्त्वाः। महत्त्वं चान्यथापि तीर्थिकसाधुजने च स्यादिति बोधिसत्त्वग्रहणम्। अतस्तेषां बोधिसत्त्वानां महासत्त्वानां प्रज्ञापारमितामारभ्येति। प्रथमकल्पासंख्येयनिर्यातोऽधिमुक्तिचर्यां विवर्धयन् संभृतपुण्यसंभारो बोधिसत्त्वः शुभे देशे पर्यङ्कमाभुज्य बुद्धबोधिसत्त्वालम्बनपूर्वकं प्रज्ञापारमितानयं सर्वधर्मनैरात्म्यद्योतकं मूलचित्तेन नामतः समालक्ष्य तस्यैव पदप्रभेदं परिवर्तादिभेदादनुचरचित्तेन निरूपयेत्। तथाष्टाभिसमयावस्थाभेदेन सङ्क्षाग्रहणाङ्गणनया। प्रत्यभिसमयं स्वरूपनिश्चयात्तुलनयाऽध्यारोपापवादाभावान्मीमांसाप्रत्यक्षानुमानप्रमाणोपपन्नत्वात्प्रत्यवेक्षणतयेत्येवं प्रज्ञापारमितार्थश्चतुर्भिराकारैर्व्यञ्जनानि तु व्यस्तसमस्तानि यथाक्रमं निरर्थसदर्थतयेत्येवमाकाराभ्यां विचारणाचित्तेन

विचारयेत् । तदनु यथाविचारितं तन्निमित्तमवधारणाचित्तेनावधृत्य यथाविचारितमेवार्थं नामालंबके मूलचित्ते सङ्कलनचित्तेन प्रक्षिप्य यदर्थं प्रयुक्तो भवति तच्छन्दसहगतेनाशास्तिचित्तेन भावनां कुर्यादित्येवमादिश्रुतचित्तभावनामयज्ञानोदयक्रमेण सर्वाकारज्ञानाधिगमात्पारं प्रकर्षपर्यन्तमेतीति विगृह्य क्विपि सर्वापहारलोपेऽनित्यमागमशासनमित्यलुकि तत्पुरुषे कृति बहुलमित्यलुकि च कर्मविभक्तेः कृते पारमिस्तद्भावः पारमिता। प्रज्ञाया धर्मप्रविचयलक्षणायाः पारमिता मुख्या बुद्धो भगवान्मायोपमं ज्ञानमद्वयम् । तत्प्राप्त्यनुकूलत्वेन तु पदवाक्यसमूहो ग्रन्थो दर्शनादिलक्षणो मार्गश्च गौणी प्रज्ञापारमिता । तथाचाहाचार्यदिङ्नागः

प्रज्ञापारमिता ज्ञानमद्वयं सा तथागतः ।
साध्या तादर्थ्ययोगेन ताच्छब्द्यं ग्रन्थमार्गयोः ॥ इति ।

अतस्त्रिविधामपि तत्सम्बन्धिनीं प्रतिवर्णिकोपदेशरहितां प्रज्ञापारमितामेव प्राधान्यादधिकृत्येत्यवधारणम् । न तु तेषामेवेति बोधिचर्येऽस्या नान्तरीयकत्वेनाधिकारात् । तथाह्यत्रैव वक्ष्यति श्रावकभूमावपि शिक्षितुकामेनेयमेव प्रज्ञापारमिता श्रोतव्येत्यादि (p. 6, 12) । सर्वाकारपरमपुरुषार्थोपयुक्ताधिगमक्रमस्य प्रतिपाद्यमानत्वात्तच्च बोधिचित्तं कुलपुत्रबीजभूतं तदेव फलभूतं सारं सर्वबुद्धधर्माणामित्यार्यगण्डव्यूहादिनिर्देशाद्यथा येन परार्थालम्बनसम्यक्संबोधिकामतालक्षणाद्वाविंशतिप्रभेदभिन्नबोधिचित्ताधिगमप्रकारेण बोधिसत्त्वा महासत्त्वास्त्रिविधामपि

प्रज्ञापारमितान्निर्यायुर्निश्चित्य प्राप्नुयुरिति स्वालम्बन-स्वरूपप्रभेदश्चित्तोत्पादस्तत्प्रभेद एव च सूत्रार्थ इति दर्शयितुं स्वयं भगवता मन्त्रणद्वारेण समासतः प्रज्ञापार-मिता देशिता । तदयं संक्षिप्तो वाक्यार्थो यथा सर्व-प्रकारबोधिचित्ताधिगमप्रकारेण बोधिसत्त्वा महासत्त्वा-स्त्रिविधामपि प्रज्ञापारमितां यथासम्भवं श्रुतादिज्ञानो-दयक्रमेण सम्यक् प्राप्नुयुस्तथा तेषां सम्बन्धिनीं प्रज्ञा-पारमितामेवारभ्य व्यासतो भाषणाय चतुर्विधा प्रति-संवित्ते, तव, सुभूते, संमुखीभवत्वित्येवमार्यसुभूतिं स्थविरं भगवानामन्त्रितवानिति । विस्तारतस्तु

तत्रादौ गोत्रसामर्थ्यात् कृपाबीजप्रबोधतः ।
प्रयोगाशयसंपत्त्या बोधिचित्तपरिग्रहः ॥

इति न्यायाद्गोत्रादिसामर्थ्येन बोधिसत्त्वसंवरसमादाना-दिना शून्यताकरुणागर्भबोधिचित्तमुत्पाद्य सम्यक्संबुद्धो भूत्वा यथाभव्यतया परार्थं प्रति त्रियानधर्मदेशनादिभिर्यत्नं कुर्यामिति प्रणिधानं कृत्वा प्रतिपत्त्या सम्पादयेदिति । परार्थालम्बनः सहेतुफलः सम्यक्संबोध्यधिगमकामता-लक्षणः । गन्तुकामस्य गन्तुश्च यथा भेदः प्रतीयते, तथा भेदोऽनयोर्ज्ञेयो यथासंख्येन पण्डितैरिति प्रणिधिप्रस्थान-स्वभावेन द्विविधो बोधिचित्तोत्पादः ।

ननु

महोत्साहा महारम्भा महार्थार्थमहोदया ।
चेतना बोधिसत्त्वानां द्वयार्था चित्तसंभवः ॥

इति वचनाच्चेतनासंप्रयुक्तं चित्तं विशिष्टविषयप्रति-

भासमुत्पद्यमानं चित्तोत्पादः। सम्यक्संबोधिकामता च तत्प्रार्थना कुशलो धर्मच्छन्दश्चैतसिक इति कथं स चित्तोत्पादो भवेत्। सत्यमेतत्। किन्तु दुःखार्णवनिमग्नं जगदत्राणमभिसमीक्ष्य तदुद्धरणाभिप्रायः कुशलधर्मच्छन्दलक्षणायां प्रार्थनायां सत्यां संबुद्धत्वाय चित्तमुत्पादयतीति कारणेनात्र कार्यं निर्दिष्टमेवं छन्दप्रार्थनस्य बोधिसत्त्वस्य सर्वे कुशलधर्मा वृद्धिं यान्तीति ज्ञापनाय चोपचारः समाश्रित इत्यदोषः। प्रणिधानं वा प्रार्थना सम्यक्संबोधिकामता। तत्सहचरितचित्तोत्पादः प्रार्थनयातिदिश्यते। प्रार्थना प्रधाना हि चित्तोत्पादावस्थेति कृत्वा। एवञ्च प्रणिधानसहगतं तच्चित्तमुत्पद्यते बोधिसत्त्वानामित्युपपन्नं भवति। अथ केयं सम्यक्संबोधिः कश्च परार्थो यत्कामतात्मको यदर्थश्चित्तोत्पाद इति चेत्। उच्यते यथार्यपञ्चविंशतिसाहस्रिकासूत्रान्ते सम्यक्संबोधेः समासनिर्देशो यदाह। "सर्वाकारं शारिपुत्र सर्वधर्मानभिसंबोद्धुकामेन बोधिसत्त्वेन प्रज्ञापारमितायां योगः करणीय" इति। तत्रायं तस्या व्यासनिर्देशो यदाह। "इह शारिपुत्र बोधिसत्त्वेनास्थानयोगेन प्रज्ञापारमितायां स्थित्वा दानपारमिता परिपूरयितव्या देयदायकप्रतिग्राहकानुपलब्धिमुपादाये"त्यादि। तत्रायं परार्थस्य समासनिर्देशो यदाह। "दशसु दिक्षु प्रत्येकं गङ्गानदीवालुकोपमेषु लोकधातुषु ये सत्त्वास्तान् सर्वाननुपधिशेषे निर्वाणधातौ परिनिर्वापयितुकामेन बोधिसत्त्वेन प्रज्ञापारमितायां शिक्षितव्यमिति"। तत्रायं तस्य व्यासनिर्देशो यदाह। "मत्सरिणः सत्त्वान्दाने दुःशीलान् शीले व्यापादबहुलान् क्षान्तौ

प्रतिष्ठापयितुकामेन बोधिसत्त्वेन प्रज्ञापारमितायां शिक्षितव्यमि"त्यादि ।

तथाचोक्तम् ।

चित्तोत्पादः परार्थाय सम्यक्संबोधिकामता ।
समासव्यासतः सा च यथासूत्रं स चोच्यते ॥ १९ ॥

इति ।

तत्रायं तस्य प्रभेदः । तत्र प्रथमश्चित्तोत्पादश्छन्दसहगतो बोधिसत्त्वानां पृथिवीसमः सर्वाकारसर्वधर्माभिसंबोधस्य संभारप्रसवप्रतिष्ठाभूतत्वात् । द्वितीय आशयसहगतः कल्याणसुवर्णोपमः षट्पारमितासङ्गृहीतस्य हितसुखाशयस्यायतितदात्वयोर्विकारभजनादासम्यक्संबोधिशय आशय इति कृत्वा । तृतीयोऽध्याशयसहगतः शुक्लपक्षनवचन्द्रोपमः । सर्वशुक्लपक्षधर्मोत्तरोत्तरविवृद्धिगमनेनाधिक आश्रयोऽध्याशय इति कृत्वा । एते च त्रयो मृदुमध्याधिमात्रतयाऽऽदिकर्मिकसंभारभूमिसङ्गृहीताः । चतुर्थः प्रयोगसहगतो ज्वलनोपमस्त्रिसर्वज्ञताप्रयोगस्येन्धनान्तरविशेषेणेवाग्नेरुत्तरोत्तरविशेषगमनात्प्रकृष्टो योगः प्रयोग इति कृत्वा । अयञ्च प्रथमभूमिप्रवेशप्रयोगमार्गसङ्गृहीतोऽधिमुक्तिचर्याभूमिप्रतिबद्धः । पञ्चमो दानपारमितासहगतो महानिधानोपमः । सर्वथाऽमिषसम्भोगेनाप्रमेयसत्त्वसंतर्पणेऽप्यपर्यादानात् । षष्ठः शीलपारमितासहगतो रत्नाकरोपमः सर्वगुणरत्नानामाश्रयभावेन ततः प्रसवनात् । सप्तमः क्षान्तिपारमितासहगतो महार्णवोपमः सर्वानिष्टोपनिपातैरक्षोभ्यत्वात् । अष्टमो वीर्यपारमितासहगतो वज्रोपमः संप्रत्ययदार्ढ्येना-

भेद्यत्वात् । नवमो ध्यानपारमितासहगतः पर्वतोपमः सर्वथालम्बनविक्षेपेणानिष्कम्प्यत्वात् । दशमः प्रज्ञापारमितासहगतो महाभैषज्योपमः सर्वक्लेशज्ञेयावरणव्याधिप्रशमनात् । एकादश उपायकौशलपारमितासहगतः कल्याणमित्रोपमः सर्वावस्थासु सत्त्वार्थापरित्यागात् । द्वादशः प्रणिधानपारमितासहगतश्चिन्तामणिसदृशो यथा प्रणिधानं फलसमृद्धेः । त्रयोदशो बलपारमितासहगत आदित्योपमो विनेयजनस्य परिपाचनात् । चतुर्दशो ज्ञानपारमितासहगतो मधुरसङ्गीतिघोषोपमो विनेयावर्जनकरधर्मदेशकत्वात् । एते च दश यथाक्रमं प्रमुदितादिदशभूमिसङ्गृहीता दर्शनभावनामार्गगोचराः । पञ्चदशोऽभिज्ञासहगतो महाराजोपमोऽव्याहतप्रभावत्वेन परार्थानुष्ठानात् । षोडशः पुण्यज्ञानसंभारसहगतः कोष्ठागारोपमो बहुपुण्यज्ञानसंभारकोशस्थानत्वात् । सप्तदशो बोधिपक्षधर्मसहगतो महामार्गोपमः सर्वार्यपुद्गलयातानुयातत्वात् । अष्टादशः शमथविपश्यनासहगतो यानोपमो युगनद्धवाहित्वात्संसारनिर्वाणान्यतरापातेन सुखसंवाहनात् । एकोनविंशतितमो धारणीप्रतिभानसहगतः प्रस्रवणोपमः सर्वथोदकधारणाक्षयोद्भेदसाधर्म्येण श्रुताश्रुतधर्मधारणादपर्यान्तदेशनोद्भेदत्वात् । एते च पञ्चबोधिसत्त्वभूमिषु विशेषमार्गसङ्गृहीताः । विंशतितमो धर्मो दानसहगत आनन्दशब्दोपमो मोक्षकामानां विनेयानां प्रियश्रावणात् । अयञ्च बुद्धभूमिप्रवेशप्रयोगमार्गसङ्गृहीतो बोधिसत्त्वभूमिप्रतिबद्धः । एकविंशतितम एकायनमार्गसहगतो नदीस्रोतःसदृशो ज्ञानज्ञेययोः समताधिगमेनोरुकरुणाप्रज्ञोपायतयाऽ-

संभिन्नपरकार्यक्रियत्वात्। अयञ्च बुद्धभूमिसङ्गृहीतो मौलावस्थाप्राप्तः। द्वाविंशतितमो धर्मकायसहगतो महामेघोपमस्तुषितभुवनवासादिसन्दर्शनेन निर्माणकायतया सर्वसत्त्वार्थक्रियाणां तदधीनत्वात्। अयमपि निर्विकल्पकतथागताधिपत्यप्रवृत्तनिर्माणाद्युपलब्धेर्विनेयपरिकल्पितशुद्धलौकिकज्ञानपृष्ठावस्थाप्राप्तो बुद्धभूमिसङ्गृहीत इत्यादिकर्मिकभूमिमारभ्य यावद्बुद्धभूमिसङ्गृहीत इत्यतोऽर्थाधिगमानुक्रमेण यथोक्तानुपूर्व्या, इयानेव प्रभेदो न न्यूनो नाधिको नाप्यन्यथानुपूर्व्या प्रतिपादनीय इति प्रतिपादितं भवति। एवंक्रमेण द्वाविंशतिभेदभिन्नबोधिचित्ताधिगमद्वारेण यथा बोधिसत्त्वा महासत्त्वास्त्रिविधामपीत्यादिना पूर्ववत्सम्बन्ध इति।

तथाचोक्तम्।

भूहेमचन्द्रज्वलनैर्निधिरत्नाकरार्णवैः।
वज्राचलौषधीमित्रैश्चिन्तामण्यर्कगीतिभिः॥ २०॥
नृपगञ्जमहामार्गयानप्रस्रवणोदकैः।
आनन्दोक्तिनदीमेघैर्द्वाविंशतिविधः स च॥ २१॥ इति।

अयमवश्यं पृथग्जनबोधिसत्त्वतथागतभूमिभेदेन हेतुफलात्मकः प्रभेदो ज्ञेयः। तथाहि।

सूत्रालंकारे

चित्तोत्पादोऽधिमोक्षोऽसौ शुद्धाध्याशयिकोऽपरः।
वैपाक्यो भूमिषु मतस्तथावरणवर्जितः॥
करुणामूल इष्टोऽसौ सदा सत्त्वहिताशयः।

इति वचनाद्धेतुफलालम्बनात्मक एव चित्तोत्पाद

उत्पाद्यः कथितः । तस्य प्रभेदोऽपि क्रियमाणस्तथाकर्तव्यो ऽन्यथा हेतुमात्रप्रभेदान्न तस्य सर्वथा प्रभेद इत्यपरिपूर्ण एव प्रभेदः स्यादित्येके । अन्ये तु महाराजोपमादय एवाष्टौ चित्तोत्पादा बोधिसत्त्वभूमिषु विशेषमार्गसङ्गृहीता इति वर्णयन्ति । सर्वप्रकारबोधिचित्तोत्पादप्रभेदप्रतिपादको ग्रन्थः पञ्चविंशतिसाहस्रिकातो ज्ञापकत्वेनेह प्राचुर्यभयान्न लिख्यते । अत्र तु इटितज्ञसंक्षिप्तरुचिसत्त्वानुग्रहेण प्रवृत्त-त्वाद्देशनाया इति कृत्वा नोक्तः । यथोक्तसत्त्वार्थप्रभेदो-ऽवश्यमेव प्रतिपत्तव्या यतः पञ्चविंशतिसाहस्रिकार्थोप-संहारेण प्रवृत्तमिदं सूत्ररत्नमिति प्रागेव प्रतिपादितम् ।

तथाचाहाचार्यदिङ्नागः ।

इत्यमष्टसहस्रीयमन्यूनार्थैर्यथोदितैः ।
ग्रन्थसंक्षेप इष्टोऽत्र त एवार्था यथोदिताः ॥

इति सर्वाकारतथागतज्ञानगम्यत्वेन गंभीरायां प्रज्ञापारमितायामात्मनोऽशक्तिवदप्रहीणज्ञेयावरणत्वेनार्य-सुभूतेरप्यशक्तिं सम्भावयन्नार्यशारिपुत्रोऽध्येषणामात्राव-गमादविदिततत्सामर्थ्याधिष्ठानोऽथेत्यादिना (p. 3, 21) वितर्कयति । एतदिति वक्ष्यमाणं वितर्कजातं तदेव-मित्यादिनाह । किंशब्दो वितर्के । आत्मीयेन (p. 4, 1) स्वप्रतिबद्धवृत्तिना । तद्विषये तु न परकृतेन तस्यात्मीये-नापि तु स्वकेन स्वकृतेन । प्रज्ञा धर्मप्रविचयः । प्रतिभानं युक्तयुक्ताभिधानम् । तयोर्बलस्याव्याहतसामर्थ्यस्याधानेना-पूर्वकरणेन । प्रकारान्तरेणाप्याह स्वकेनेत्यत्राप्यात्मीयेनेति द्रष्टव्यम् । प्रज्ञाप्रतिभानबलस्य व्यवस्थितस्याधिष्ठानेन

विशेषकरणेनोपदेक्ष्यति । उताहो शब्दः पश्चान्तरद्योतकोऽथ बुद्धानुभावेनेति । एवं मन्यतेऽचिन्त्यत्वादुपायविशेषस्य कदाचिदनेनापूर्वज्ञानमधिगतं व्यवस्थितस्योत्कर्षो वा कृतस्तथागताधिष्ठानं वा प्राप्तमन्यथाहमिवार्यसुभूतिरशक्तः न चारणाविहारिणामग्रत्वेन विशेषसद्भावाद्भाषत इत्यपि शक्यते वक्तुम् । ममापि प्रज्ञावतामग्रत्वविशेषसद्भावाद्भाषणप्राप्तेः । न चारणासमाधेर्देशनायां व्यापार इत्यार्यशारिपुत्रस्य भावः । मृद्विन्द्रियतया न सहसाऽपूर्वज्ञानादिकं कर्तुं शक्यते ऽचिन्त्योपायसद्भावेऽपीति पाश्चात्यमेव विकल्पं दर्शयन्नाह । अथेत्यादि (p. 4, 4) श्रावकाणां समन्वाहृत्य परचित्तज्ञानं नान्यथेति बुद्धानुभाववचनेनासमन्वाहारज्ञानमुक्तम् । इदमनन्तरोक्तमेवंरूपं यथोक्तविकल्पचयस्वभावम् । चेतनां वा निश्रित्य प्रज्ञां वा पर्येषको मनोजल्पः सा च चित्तस्योदारिकतेति वितर्कम् । चेतसा संवृत्या तद्रूपानुकारिणा ज्ञात्वा वक्ष्यमाणमेतदुक्तवान् । तदेवाह यत्किञ्चिदिति । (p. 4, 2)

सूत्रं गेयं व्याकरणं गाथोदानावदानकम् ।
इतिवृत्तकं निदानं वैपुल्यञ्च सजातकम् ॥
उपदेशाद्भुतौ धर्मौ द्वादशाङ्गमिदं वचः ।

तत्र भाषन्ते श्रुतमयज्ञानोत्पादाद्बोधिबीजावरोपणार्थं यतो ग्रन्थमुदीरयन्ति । देशयन्ति चिन्तामयज्ञानोत्पादात्परिपाचनार्थं यतोऽर्थं प्रकाशयन्ति । उपदिशन्ति भावनामयज्ञानोत्पादात्परिमोचनार्थं यतो ग्रन्थार्थनिश्चयोत्पादनतः संप्रकाशयन्ति । तदेवमुदीरयन्तीत्यादिपदत्रयं

भाषन्त इत्यादेर्यथाक्रमं व्याख्यानम् । पुरुषकारोऽधिष्ठानं तद्धेतुकत्वात्स सर्वो भाषणादिरुपचारात्पुरुषकारशब्देनोक्तः । ननु श्रावकैरपि स्वाधिगमधर्मता साक्षात्कृता । तत्कस्मान्न स्वशक्त्यैव सर्वं भाषणादि क्रियत इत्याशङ्क्य तत्कस्माद्धेतोरिति स्वयमेव प्रश्नः कृतः । परैः क्रियमाणे नीरसिकत्वादिदोषोदयादित्येके । तदनन्तरं कथाविच्छेददोषपरिहारार्थं शारद्वेन प्रष्टुमशक्नुवतामनुग्रहार्थमेकाग्रीकृतचेतसां वचनेनेर्यापथभेदाद्विक्षेपदोषपरिहारार्थं चेत्यपरे । यो हीत्याद्युत्तरम् (p. 4, 9) । तत्र धर्मेऽभिधेये निर्वेधभागीयाधिगमद्वारेण धर्मदेशनायां सत्यां शिक्षमाणा दर्शनमार्गाधिगमेन तामधिगमधर्मतां साक्षात्कुर्वन्ति । भावनामार्गाधिगमेन धारयन्ति । सर्वं तदधिगतार्थविषयं देशनाधर्मसूत्रादिधर्मतयाधिगमेनाविरुद्धम् । तदविरुद्धप्रकाशनात् । तस्मात्तथागतधर्मदेशनाया एवोपचारनिर्दिष्टपुरुषकारस्वभावाया एष सदृशः स्यन्दो निष्यन्दस्तदनुरूपं फलं यत्सूत्रादि ते श्रावका उपदिशन्तस्तामागमधर्मतामधिगमधर्मतया न विरोधयन्ति (p. 4, 14) । उपदिशन्त इति चोपलक्षणाद्भाषमाणा देशयन्त इत्यपि ग्राह्यं तथाप्रकृतत्वात् । अनेनैतदाह नित्यसमाधानोपायकौशलवैकल्यादधिगतार्थविषयमपि धर्मं स्वाधिगमाविरुद्धं भाषितुमसमर्थाः प्रागेवानधिगतार्थविषयमतो बुद्धानुभाव एव द्रष्टव्यः । तथा

कियद्वा शक्यमुन्नेतुं स्वतर्कमनुधावता ।
परीक्षापेयतद्धेतोस्तदाख्यानं हि दुष्करम् ॥

इति न्यायान्नाप्यभ्यूह्यो देशयितुं शक्यत इति प्रसङ्गागतं निवर्त्येदानीमुत्पादितप्रथमादिबोधिचित्तो यथाकालं बोधिसत्त्वोऽपि दानादिकुशलधर्माभ्यासेन पुण्यसम्भारमुपार्जयन् ।

ध्यानेऽभिज्ञाभिनिर्हाराल्लोकधातून् स गच्छति ।
पूजार्थमप्रमेयानां बुद्धानां श्रवणाय च ॥
अप्रमेयानुपास्यासौ बुद्धान् कल्पैरप्रमेयैः ।
कर्मण्यतां परामेति चेतसस्तदुपासनात् ॥

इति चित्तकर्मण्यताबलेन स्थितः समाधौ ।
धर्मश्रोतसि बुद्धेभ्योऽववादं लभते तदा ।
विपुलं शमथज्ञानवैपुल्यगमनाय सः ॥

इति न्यायादेवंप्रवृत्तबोधिसत्त्वस्य सम्बन्धनार्थं भगवदुक्तवचनपूर्वकमववादमार्यसुभूतिर्बोधिसत्त्व इत्यादिनाह, बोधिसत्त्वो बोधिसत्त्व (p. 4, 19) इत्यस्मिन्नर्थे प्रज्ञाबलेन बोध्यालम्बनाद्बोधिश्चासौ महाकृपाशयेन सत्त्वालम्बनात् सत्त्वश्चेति बोधिसत्त्व इत्युक्तः । यथाऽशुभालम्बनसमाधिरशुभेति । प्रदेशान्तराभिहितस्यापि बोधिसत्त्वस्य ग्रहणार्थं वीप्सयाभिधानम् । कतमस्य कल्पितादिरूपस्याधिवचनमाभिमुख्येन व्यपदेशः परमार्थतोऽपि तु न कस्यचिदित्यर्थः । तदेवाह ॥

नाहं भगवंस्तन्धर्ममिति (p. 4, 21) कल्पितादिरूपम् । तत्त्वतोऽववदनीयस्यानुपलम्भात् ॥

अववादविषयस्तर्ह्यस्तीत्याह । तमपीत्यादि (p. 5, 1) । प्रज्ञापारमिता प्रतिपत्त्यादिदशप्रकारधर्मस्वभावा । तथा-

ह्यववादविषयमधिकृत्य पञ्चविंशतिसाहस्रिकायामुक्तम् । “कथं भगवन् बोधिसत्त्वेन महासत्त्वेन प्रज्ञापारमितायाञ्चरितव्यम् । भगवानाह । इह शारिपुत्र बोधिसत्त्वो बोधिसत्त्वं तन्नाम च न समनुपश्यतीत्यादि”। बोधिसत्त्वधर्मं वेति यस्य धर्मस्य बोधिसत्त्व इत्यधिवचनम् । तं धर्मम् । अविन्दन् श्रुत्या । अनुपलभमानश्चिन्तया । असमनुपश्यन् भावनया । अथवा प्रतिनियतार्थेन सह प्रत्यासत्तिनिबन्धनाभावान्निराकारेण ज्ञानेनाविन्दन् । वस्तुभावमन्तरेणापि स्वप्नादौ भावात्साकारेणानुपलभमानः । अत एवोभाभ्यामसमनुपश्यन् कतमस्यां प्रज्ञापारमितायां प्रतिपत्त्यादि (p. 5, 3) दशप्रकारायां प्रथमं सम्प्राप्तगुणपरिपालनार्थेनापरिहाणिमुपादाय शिक्षणेनाववदिष्यामि । ततः पश्चादप्राप्तगुणप्राप्तिमुपादायानुशासिष्यामि । सर्वथा तत्त्वतो नैव किं तूद्भावनासंवृत्त्याऽववाद इत्यर्थादाक्षिप्तं भवति । तथा चात्रैवानन्तरं वक्ष्यति एषोऽववाद इत्यादि । स पुनर्विषयभेदाद्दशधा ज्ञेयः । तत्र यथोक्तप्रभेदबोधिचित्तप्रतिपत्तौ संवृतिपरमार्थसत्यानतिक्रमेण श्रावकाद्यसाधारणतयाऽनुपलम्भयोगेन वर्तनमिति शिक्षणं प्रतिपत्त्यववादः । दुःखे फलभूतरूपादिशून्यताप्रज्ञापारमितयोस्तु तथा रूपत्वादैकात्म्यमिति । समुदये शून्यताहेतुभूतरूपाद्योरव्यतिरिक्तत्वेन रूपादिः समुदयनिरोधसंक्लेशव्यवदानधर्मा इति । निरोधे शून्यतायामुत्पादनिरोधसंक्लेशव्यवदानहानिवृद्ध्यादिरहितायान्न रूपं यावन्न विद्योत्पादो नाविद्यानिरोधो न बुद्धो न बोधिरिति । मार्गे दानादिपारमिताभिरात्मनोऽध्यात्मशून्यतादीनां

बहिर्द्धाशून्यतादिभिः पूर्वान्तापरान्तयोश्च परस्परं न युक्तायुक्तत्वेन प्रतिपत्तिरित्युपदेशः सत्याववादः । बुद्धे बुद्धबोध्योरेकलक्षणत्वेन बुद्धकारकधर्मलक्षणसर्वाकारज्ञतायामनुपलम्भरूपाद्ययोजनेनालम्ब्यालम्बकसमताज्ञानमिति । धर्मे चिसर्वज्ञतासङ्गृहीतसमस्तवस्तुप्रतिपक्षाकारसङ्ग्रहैः सर्वधर्माणां सङ्गृहीतानां निःस्वभावतेति । सङ्घे बुद्धरत्नान्तर्गतत्वेनार्हद्वर्ज्येषु फलस्थप्रतिपन्नकभेदेन सप्तसु महापुरुषेषु प्रत्येकबुद्धेन सहाष्टसु मृद्विन्द्रियादिभेदेन विंशतिसंख्यावच्छिन्नेष्वार्यावैवर्तिकबोधिसत्त्वशैक्षेष्वनुत्पादतया प्रवृत्तिरित्युपदेशो रत्नत्रयाववादः । आरब्धवीर्यतया यथोक्तार्थानुष्ठानं प्रति कायादिसुखक्लिकत्वेन कस्यचिदभिनिवेशः स्यादित्यसक्तौ कायादीनामस्वभावतया देशनाववादः । चिरतरकालाभ्यासेनापि समीहितार्थानिष्पत्तावुत्त्रसनजातीयस्य परिखेदः स्यादित्यपरिश्रान्तौ रूपादेर्यावत्सम्यक्सम्बोधेरमननतया देशनाववादः । दशदिगवस्थितबुद्धादिभ्यः प्रत्यर्थं मार्गोपदेशे गृह्यमाणे चित्तावलीनता स्यादिति प्रतिपत्सम्परिग्रहे धर्माणां प्रकृत्यजातत्वेन शिक्षणमववादः । मांसवैपाकिकदिव्यप्रज्ञाधर्मबुद्धचक्षुषां यथासंख्यं प्रतिनियतवस्तुसर्वसत्त्वच्युत्युपपत्तिसर्वधर्माविकल्पानां सर्वार्यपुद्गलाधिगमसर्वाकारसर्वधर्माभिसम्बोधविषयाणां तथतयैकत्वेन प्रतिपत्तिरिति शिक्षणं पञ्चचक्षुरववादः । ऋद्धिदिव्यश्रोत्रपरचित्तज्ञानपूर्वनिवासानुस्मृत्याभिसंस्कारिकदिव्यचक्षुराश्रवक्षयज्ञानाभिज्ञानां पृथिवीकम्पनादिसर्वलोकधातुस्थसूक्ष्मेतरशब्दश्रवणसरागादिपरचित्तज्ञानस्वपरपूर्वानेकजात्यनुस्मरण-

सर्वरूपदर्शनक्लेशज्ञेयावरणप्रहाणकारित्वाणामादिशान्तत्वेनावबोध इति देशनाऽभिज्ञाववादः। चतुःसत्यसङ्गृहीतषोडशक्षणस्वभावं दर्शनमार्गं धर्मान्वयज्ञानक्षान्तिज्ञानात्मकं सर्वधर्मनिःस्वभावबोधेन मायाकार इव सर्वत्रानभिनिविष्टमूर्तिस्तत्प्रहातव्यवस्तुप्रतिपक्षत्वेन योगी विभावतीति देशना दर्शनमार्गाववादः। संस्कृतासंस्कृतयोरेकरूपत्वेन परस्परमशक्यव्यतिरेकप्रज्ञप्तिवद्यथोक्तदर्शनमार्गसम्मुखीकृतवस्त्वव्यतिरेकालम्बनाद्दर्शनभावनयोरपृथग्भाव इति न लाक्षणिकं भावनामार्गव्यवस्थानमथ च स तत्प्रहातव्यवस्तुप्रतिपक्षत्वेन विभाव्यते प्रतीत्यसमुत्पादधर्मतयेति देशनाभावनामार्गाववाद इत्येवन्दशविधोऽववादो ग्रन्थसंक्षेपस्याचेष्टत्वात्प्रज्ञापारमिताशब्देनोक्तः। तथाहि पञ्चविंशतिसाहस्रिकायां प्रत्यववादं स्पष्ट एव ग्रन्थो निर्दिष्टो ज्ञापकत्वेन च विस्तरभयान्न लिख्यते। तदेवमववादेन किम्भूतो बोधिसत्त्वोऽववादनीय इत्याह। अपितु खलु पुनरित्यादि (p. 5, 4) स चेदिति निपातो यद्यर्थे। एवमिति बोधिसत्त्वप्रज्ञापारमितानुपलम्भेन। अववादविषये दशप्रकारे भाष्यमाणे चित्तन्नावलीयते न सङ्कोचायते यतो न विषीदति न मुह्यति, अतएव आज्ञत्वेन धर्मभजनादादौ नोत्त्रस्यत्यस्थानत्रासेन देश्यमाने न संलीयते नालस्यायते। यतो न विषादमापद्यते न कातरभावं याति। अतएव प्राज्ञत्वेन तत्त्ववेदिनां मध्ये न संत्रस्यति सन्ततित्रासेन। उपदिश्यमाने नास्य विपृष्ठीभवति न विप्रतिसारीभवति, मन एव मानसम्। यतो न भग्नपृष्ठीभवति न पृष्ठं चित्तं

भग्नं भवति अतएव श्रद्धाप्रज्ञाभ्यां योगात्पर्यवसाने न संत्रासमापद्यते। सर्वथाऽनिश्चयत्रासेन। अथवा भाषणादिकाले यथाक्रमं ग्रन्थार्थभयावधारणान्नावलीयते न संलीयते न विषीदति। कुतो यस्मात्प्रत्यक्षानुमानागमप्रमाणैरविरुद्धस्वविषयार्थपरिच्छेदान्न विषादमापद्यते, नास्य विपृष्ठीभवति मानसं न भग्नपृष्ठीभवति। अत एवादिमध्यपर्यवसाने नोत्त्रस्यति न सन्त्रस्यति न सन्त्रासमापद्यत इति योज्यम्। एष एवेति। यो बोधिसत्त्वः संवृतिपरमार्थविभागकौशल्याद्यथोक्तावववादे चित्तावलीनत्वादिरहितः स एष एवेत्यर्थः। एष एवेति लक्षणमनुक्त्वा कथं प्रज्ञापारमिता प्रत्यवमृष्यत इति चेदुच्यते, यस्यार्थस्य भाषणादौ चित्तावलीनत्वादि न करोति सोऽर्थः। प्रज्ञापारमिता प्रतिपत्त्यादिदशप्रकारा कथितैवेत्यर्थाक्षिप्तपरामर्षणाददोष इति, उपसंहरन्नाह। स चेदित्यादि, (p. 5, 10) स बोधिसत्त्वो यद्यनन्तरोक्ताववादेन यथोक्तविषये स्थितिमान् भवति तदास्य बोधिसत्त्वस्यैषैव प्रार्थितार्थप्राप्तिकर्तव्यतोपदेशोऽववादानुशासनी वेदितव्या। तदेवमुक्त्वा बोधिचित्ततदाक्षिप्तधर्मस्वभावप्रज्ञापारमितायां या प्रतिपत्तिरनुपलम्भाकारा, तस्या यदालम्बनं चत्वार्यार्यसत्यानि। य आश्रयस्त्रीणि शरणानि। यो विशेषगमनहेतुरसक्तिः योऽव्यावृत्तिगमनहेतुरपरिश्रान्तिः। योऽनन्ययानगमनहेतुः प्रतिपत्सम्परिग्रहः। योऽपरप्रत्ययगामित्वहेतुः पञ्च चक्षूंषि। यः सर्वाकारज्ञतापरिपूरिहेतुः षडभिज्ञाः। यो निष्ठाहेतुर्दर्शनभावनामार्गौ तत्सर्वमववादप्रकरणे निर्दिष्ट-

मेतावतैव सर्वोऽर्थः सम्पन्न इति यथोक्तानुपूर्वीनिर्दिष्टो दशविधोऽववादः। तथाचोक्तम्।

प्रतिपत्तौ च सत्येषु बुद्धरत्नादिषु त्रिषु।
असक्तावपरिश्रान्तौ प्रतिपत्सम्परिग्रहे॥ २२॥
चक्षुःषु पञ्चसु ज्ञेयः षड्स्वभिज्ञागुणेषु च।
दृङ्मार्गे भावनाख्ये चेत्यववादो दशात्मकः॥ २३॥

इति।

किन्तु सङ्गरते मृद्विन्द्रियादिबोधिसत्त्वानामयं प्रभेदो ग्राह्यः, वक्ष्यमाणमार्गज्ञतासङ्गृहीतषोडशक्षणदर्शनमार्गमाश्रित्य। पञ्चदशसु दर्शनमार्गचित्तक्षणेषु श्रद्धाधर्मानुसारिभेदेन प्रथमफलप्रतिपन्नको द्विविधः। ततो यः कामवीतरागः स षोडशे दर्शनमार्गचित्तक्षणे स्रोतआपन्नः। ततो भावनामार्गे यावच्चतुर्थक्लेशप्रकारप्रहाणाद्देवमनुष्यकुलङ्कुलत्वेन स एवान्यो द्विविधः। ततः कामावचरपञ्चप्रकारक्लेशप्रहाणेन द्वितीयफलप्रतिपन्नको मृदुतीक्ष्णेन्द्रिय एवैकः श्रद्धादृष्टिप्राप्तः। ततः कामावचरषट्प्रकारक्लेशप्रहाणात्सकृदागामी। ततः स एवैकजन्मावशेषत्वाद्देवेष्वेकवीचिकोऽपरः। ततः कामावचरसप्ताष्टक्लेशप्रकारप्रहाणात्तृतीयफलप्रतिपन्नकः पूर्ववच्छ्रद्धादृष्टिप्राप्तः। ततो यः कामावचरनवमक्लेशप्रकारप्रहाणादनागमीत्युच्यते स पञ्चधा वेदितव्यः। तत्रोपपत्तिसंयोजनप्रहाणादभिनिर्वृत्तिसंयोजनाप्रहाणादन्तराभवमभिनिर्वर्तयन्नेवाभिनिर्वृत्ते चान्तराभवे मार्गसम्मुखीभावेन दुःखान्तप्राप्तावन्तरापरिनिर्वायी। उभयसंयोजनाप्रहाणाद्रूपधातावुपपद्य दुःखान्तप्राप्तावुपपद्य परिनिर्वायी। तथैवोपपन्नोऽभिसंस्कारेण मार्गसम्मुखीभाव-

लाभाद्दुःखान्तप्राप्तावभिसंस्कारपरिनिर्वायी। तद्विपर्यया-दनभिसंस्कारपरिनिर्वायी। ऊर्ध्वस्रोताश्च पञ्चमः स पुनर-कनिष्ठपरमो भवाग्रपरमश्च। तत्राकनिष्ठपरमः प्लुतार्धप्लुत-सर्वस्थानच्युतत्वेनाकनिष्ठप्रवेशस्त्रिविधः। भावाग्रपरमस्तु रूपवीतरागो दृष्टधर्मे शमः कायसाक्षीति द्विविधः। ततो भावाग्रिकाष्टमक्लेशप्रकाराणां प्रहाणादर्हत्वफलप्रतिपन्नकः। ततः श्रावकपिटकमेवावलम्ब्य स्वमार्गसंमुखीकरणाद-बुद्धोत्पादे प्रत्येकबुद्ध इति विंशतिः। तथाच पञ्चविंशति-साहस्रिकायामयमर्थो विस्तरेणोक्तः। अवैवर्तिकचक्रसूत्रे तु बोधिसत्त्वश्रद्धानुसारिणमारभ्य यावद्बोधिसत्त्वप्रत्येकबुद्ध इति पुद्गलव्यवस्थानं स्पष्टतरार्थं भगवतोक्तमिति तत्रैवावलोक-नीयमत्रास्माभिर्विस्तरेण नोपन्यस्तं किं पिष्टं पिष्येति। तथाच प्रथमद्वितीयफलस्थं चतुर्थफलप्रतिपन्नकञ्च पुद्गलं सुगमत्वेनासङ्गृह्योक्तम्।

मृदुतीक्ष्णेन्द्रियौ श्रद्धादृष्टिप्राप्तौ कुलङ्कुलौ।
एकवीच्यन्तरोत्पद्य काराकाराकनिष्ठगाः॥ २४॥
प्लुतास्त्रयो भवस्याग्रपरमो रूपरागहा।
दृष्टधर्मशमः कायसाक्षी खड्गश्च विंशतिः॥ २५॥ इति,

लब्धाववादस्यैवमादिकर्मिकस्य।

सम्पूर्णपुण्यसम्भारस्ततो धीमान्दृढाशयः।
श्रद्धाद्यैः कुशलैर्धर्मैः परिभावितसन्ततिः॥
ज्ञानसम्भारसिद्ध्यर्थं कल्पासङ्ख्येयनिर्गमात्।
स्थिराभिज्ञोऽववादेन चर्याभूमौ प्रवर्तते॥

इति कृत्वाऽधिमुक्तिचर्याभूमिपरिशोधनार्थं श्रुतादि-प्रकर्षप्राप्तमोक्षभागीयश्रद्धादिलक्षणकुशलमूलादूर्ध्वञ्चतुः-

सत्यप्रतिवेधानुकूलानि चतुर्निर्वेधभागीयानि लौकिकभावनामयानि वक्तव्यानि। श्रावकाद्युष्मादिभ्यश्चैषामनित्यादिलक्षणवस्त्वालम्बनविशेषाद्धर्मदर्शनप्रतिपक्षत्वेनानभिनिवेशाद्याकारविशेषाद्यानत्रयाधिगमहेतुत्वविशेषादुपायकौशलकल्याणमित्रलक्षणसम्परिग्रहविशेषाद्विशेषो वक्तव्यः। तथा संक्लेशवस्त्वधिष्ठानः प्रतिपक्षवस्त्वधिष्ठानश्चेति द्विविधो ग्राह्यविकल्पः। द्रव्यसत्पुरुषाधिष्ठानः प्रज्ञप्तिसत्पुरुषाधिष्ठानश्चेति द्विविधो ग्राहकविकल्प इति वक्ष्यमाणमूर्द्धाभिसमयसङ्गृहीतदर्शनभावनामार्गप्रहातव्यैश्चतुर्भिर्विकल्पैर्यथासङ्ख्यं संक्लेशभाञ्ज्येतानि निर्वेधभागीयानीति वक्तव्यम्। तथा यथोक्तविकल्पसंयोगञ्च भजतां सतां प्रत्येकमेषां मृदुमध्याधिमात्रभेदेन विशिष्टता च वक्तव्येति पञ्चविधो विशेषः। श्रावकादीनामुष्मादिचतुर्विधकुशलमूलं रूपणादिलक्षणवस्त्वात्मकचतुःसत्यालम्बनमात्मदर्शनप्रतिपक्षत्वेनानित्यादिभिराकारैः स्वयानाधिगमहेतुभूतं सम्परिग्रहरहितं स्वबोधिपरिपन्थभूतश्चतुर्विधो विकल्पो न भवतीति कृत्वा तेन संसृष्टमप्यसंसृष्टमुत्पद्यत इति व्यवस्थाप्यते। यतस्तथा चोक्तम्।

आलम्बनत आकाराद्धेतुत्वात्सम्परिग्रहात्।
चतुर्विकल्पसंयोगं यथास्वं भजतां सताम्॥ २६॥
श्रावकेभ्यः सखड्गेभ्यो बोधिसत्त्वस्य तायिनः।
मृदुमध्यादिमात्राणामूष्मादीनां विशिष्टता॥ २७॥

इति,

तत्र मृदुन ऊष्मगतकुशलमूलस्यालम्बनार्थमाह॥

पुनरित्यादि पुनरपरमिति (p. 5, 11) प्रकारान्तरेण प्रज्ञा-

पारमितोपदेशसूचनम् । प्रज्ञापारमितायामिति सामान्यश्रुतावप्यनित्यतादिवस्त्वालम्बनलक्षणायामित्यर्थः । तथाहि प्रदेशान्तरे "भगवताभिहितं सूत्रं भिक्षवः सूत्रान्तरानुसारेण व्याख्यातव्यमिति" । पञ्चविंशतिसाहस्रिकायाञ्च मृदूष्मालम्बनमधिकृत्योक्तम् । "इहायुष्मञ्छारिपुत्र बोधिसत्त्वो रूपमनित्यमिति रूपं दुःखमिति रूपं शून्यमिति रूपमनात्मे"-त्यादि । एतावांस्त्वत्र विशेषो यदुत संक्षेपनिर्देशः । तत्र पुनः प्रत्येकं सत्यमधिकृत्य विस्तरनिर्देश इति न सन्देहः कार्यः । चरतेत्यसमाहितेन ज्ञानेन भावयतेति समाहितेन । एतदुक्तमनित्यादिषोडशाकारं दुःखादिचतुःसत्याधारं वस्त्वालम्बनमिति । तत्केनाकारेणालम्बनीयमित्याह । एवमित्यादि । एवमिति वक्ष्यमाणक्रमेण तेनापीत्यादि न केवलं ज्ञेयस्यात्यन्तपरोक्षत्वादालम्बनं न मन्येत येनाप्याकारेणाभिनिवेशादेर्निषेधात्मकेन बोध्यावाहकज्ञानरूपेणालम्ब्येत तेनापि न मन्येताभिनिवेशं न कुर्यादित्यर्थः । धर्मतामुखेनानभिनिवेशाद्याकारेणेति यावत् । इदमुक्तं भवति श्रावको रूपणादिलक्षणं वस्त्वालम्बते । तस्यानित्यतादय आकारा भवन्त्यात्मदर्शनप्रतिपक्षत्वात् । बोधिसत्त्वः पुनरनित्यतादिलक्षणं वस्त्वालम्बते । तस्यानभिनिवेशादय आकारा भवन्ति धर्मदर्शनप्रतिपक्षत्वादिति । ननु यद्यभिनिवेशाभावोऽनभिनिवेश एवं सत्यभावत्वात् प्रतिपक्षो न युज्यते । अथ यन्नाभिनिवेशस्तदा चक्षुरादिष्वपि प्रसङ्ग इति चेत् । उच्यते, यथा विपक्षस्तथाभिनिवेशः । यथा प्रतिपक्षस्तथानभिनिवेशः । कथञ्च विपक्षः । यथाऽसत्यपरिकल्पनासमुत्थितावस्तिनास्तिग्राहौ । कथञ्च प्रतिपक्षः ।

यथा तयोरभावः । कथञ्च तयोरभावः । यदि तौ तत्त्वतो न स्त इति ज्ञातौ भवतः । तथा चानन्तरं वक्ष्यति स चेदायुष्मञ्छारिपुत्र तत्राचित्ततायामित्यादि (p. 6, 1) ननु प्रमाणोपपन्नेऽनभिनिवेशाद्याकारे कथं प्रेक्षावतो नाभिनिवेश इत्याह । तत्कस्य हेतोरिति (p. 5, 13) तत्कस्माद्धेतोः । अथवा यदेतदभिनिवेशाकरणं तत्कस्यार्थस्य हेतोः प्रयोजनादित्यर्थः । उत्तरार्थमाह । तथाहीत्यादि । यस्मादेकानेकस्वभाववैधुर्याच्चित्तस्य प्रकृतिः स्वभावोऽनुत्पादता प्रभास्वरा विधमितसर्वासत्संकल्पान्धकाराऽतोऽनभिनिवेशाद्याकाराव्यतिरिक्तं चित्तं तत्त्वतोऽचित्तम् । एवं मन्यते चित्तस्य नैःस्वाभाव्यात्तदव्यतिरिक्तोऽनभिनिवेशाद्याकारः कथं तत्त्वतोऽभिनिवेशस्थानीय इति । पर्युदासेऽथ प्रसज्ये वाचित्तमिति नञः प्रयोगेऽपि सदसन्मात्रमननानुबन्धेन विपर्यासाविनिवृत्तिं पश्यन्नाह । अस्ति तच्चित्तं यच्चित्तमचित्तमिति । यच्चित्तमनभिनिवेशाद्याकाराव्यतिरिक्तं तच्चित्तं तत्त्वतोऽचित्तमिति यदुच्यते, तत्किमचित्तमस्तीति सम्बन्धनीयम् । न्यायेन वस्तुनोऽसत्त्वान्न पर्युदासे नञः प्रयोगोऽपि तु प्रसज्ये । तत्रापि सदसन्मात्रप्रज्ञप्तिरपि । नास्तीत्यभिप्रायवान् सुभूतिस्तेनैव परिहारं प्रतिपादयितुकामः प्रतिप्रश्नक्रियया शारिपुत्रमाह, किं पुनरित्यादिना (p. 5, 16) चित्ताभावमात्रमचित्तं तद्भावो याऽचित्तता । तत्राचित्ततायां किमस्तिता भावो विद्यते वाऽनुपलब्धिलक्षणप्राप्ता । अथोपलभ्यते चोपलब्धिलक्षणप्राप्ता । एवं नास्तिता वेति योज्यं, पूर्वो वाशब्द उत्तरापेक्षया । उत्तरश्च पूर्वापेक्षयेति ज्ञेयम् ।

अजातस्य स्वभावेन शाश्वतोच्छेदता कुतः।
स्वभावे हि विकल्प्यान्ते धर्मभेदविकल्पनाः॥
पत्रलेखादिविन्यासः केनचिद्व्योम्नि शक्यते।
कर्तुं नैव तथाऽजाते धर्मभेदविकल्पनाः॥

इत्यभिप्रायवानाह नह्येतदित्यनन्तरोक्तमुभयं इदानीं तद्वचनमेव परिहारे योजयन्नाह। स चेदित्यादि, (p. 6, 1) अपि तु शब्दः क्षेपेणैवेत्यर्थः। पर्यनुयोगश्चोद्यं, तमेवाह। यदायुष्मानित्यादिना। एवं मन्यते, यद्यचित्ततायामस्तिता वा नास्तिता वा न विद्यते नोपलभ्यते वा तत्कथं तवैष पर्यनुयोगोऽस्ति "तच्चित्तं यच्चित्तमचित्तमिति"। तत्रापि ह्यचित्तमिति चित्ताभावमात्रमेवाभिप्रेतमतः सदसद्रूपेणास्तित्वसमारोपो नैव घटत इति। चित्तस्य धर्मिणोऽसत्त्वे निर्विषयस्य नञो ऽप्रयोगादचित्ततापि नास्तीत्याह। का पुनरेषेत्यादि (p. 6, 6) "नहि संवृतिसोपानमन्तरेण तत्त्वप्रासादशिखरारोहणं विपश्चित" इति योगिसंवृत्या प्रतिविधातुमाह। अविकारेत्यादि, पारम्पर्येणैवाऽचित्तताऽभ्यस्यमाना बुद्धभूमावविकारपरिनिष्पत्तिं प्रति हेतुत्वादविकारा। अविपर्यासपरिनिष्पत्तिहेतुत्वाच्चाविकल्पा। एवञ्चाधिगमाविरुद्धमुक्तमित्याह। अथेत्यादि (p. 6, 8) साधु साध्विति सम्भ्रमाद्द्विरभिधानम्। यथा येन प्रकारेण। अपिनामशब्दः पूजावाचकः। यस्य समाधेः प्रभावात्परेषां सन्ताने स्वपरव्याबाधनार्थेन रणयन्तीति रणाः क्लेशा न जायन्ते सोऽरणासमाधिस्तद्विहारिणां मध्येऽग्रतायां निर्दिष्टः सन्निर्दिशस्याचित्ततामिति विभक्तिविपरिणामेन योज्यम्।

ननु च बुद्धाधिष्ठानात् सोपायकौशलामपि प्रज्ञापारमितां निर्दिशतः कोऽतिशयो यतस्तद्विदुषोऽपि शारिपुत्रस्य सुभूतिं प्रति साधुकारः साधुः स्यात् । न कश्चित्, किन्तु तयोर्विनेयानामनुग्रहाय माहात्म्यद्योतनादनागतविनेयसन्देहापनयनाय । तथागताधिष्ठानादेव वाविवादपूर्वकः साधुकारः इत्यदोषः । माहात्म्यमेवाचिन्त्यतया दर्शयन् कश्चिदनियतगोत्रकोऽपि तीक्ष्णेन्द्रियतया निर्वेधभागीयावस्थायामप्यचिन्त्योपायविशेषादवैवर्तिकत्वे नियत इत्याह । अतश्चेत्यादि (p. 6, 10) यतस्तेनापि बोधिचित्तेन मन्यते । अतोऽनभिनिवेशाद्याकारात् । चकारादनित्यतादिलक्षणवस्त्वालम्बनात् । उपपरीक्षितव्यो निश्चेतव्यः । अष्टम्यां तु भूमौ सर्वेषामेव नियतत्वेनावैवर्तिकत्वव्यवस्थानमित्यदोषः । अविरहितश्चापरिहानियोगात् प्रज्ञापारमितया निर्वेधभागीयरूपया वेदितव्यः । न केवलमविनिवर्तनीय उपपरीक्षितव्य इति चकारः । एवमालम्बनाकारावभिधाय मृदूष्मणोर्हेतुत्वविशेषार्थमाह । श्रावकभूमावपीत्यादि (p. 6, 12) विशिष्टावस्थाप्राप्तमेव ज्ञानं भूमिस्तत्र शिक्षितुकामेन प्रतिपत्तिं कर्तुकामेन इयमेवेति निर्वेधभागीयप्रदिपादनपरा मुख्यतः । श्रोत्रविज्ञानेन तदाकृष्टेन च मनोविज्ञानेन ग्रन्थार्थयोः परिच्छेदाच्छ्रोतव्या । चिन्तामयेन मनसिकरणादुद्गृहीतव्या । भावनामयेन प्रतिपत्त्या सम्पादनाद्धारयितव्या । समादानेन पुस्तकवाचनाद्वाचयितव्या । आगमाधिगमलाभात् पर्यवाप्तव्या । व्याख्यानादिनाऽन्येभ्यः प्रकाशनात्प्रवर्तयितव्या । सर्वत्र च श्रवणादौ सम्यक्प्रयोगपृष्ठचित्तसम्पादनाच्छिक्षितव्यम् । मौलचित्तेन

तु समाधानकरणाद्योगमापत्तव्यम् । लिङ्गस्य लोकाश्रयत्वाद्योगशब्दो नपुंसकलिङ्गत्वेनोक्तः । उपायकौशल्यसमन्वागतेनेति ।

पूरये बुद्धधर्माणां सत्त्वानां परिपाचने ।
क्षिप्रप्राप्तौ क्रियासिद्धौ वर्त्मोच्छेदे च कौशलम् ॥

उपायो बोधिसत्त्वानामसमः सर्वभूमिषु ।
यत्कौशल्यं समाश्रित्य सर्वार्थान् साधयन्ति ते ॥

इति वचनाद्यथोक्तार्थाशुपरिप्रापकः संवृतिपरमार्थाश्रितश्चेतोविशेष एवोपायकौशलं । तेन समन्वागतेन युक्तेन सर्वबोधिसत्त्वधर्मसमुदागमायेति (p. 6, 21) सर्वेषां बोधिसत्त्वानामेव धर्माः श्रावकाद्यसाधारणा मार्गज्ञतालक्षणास्तेषां समुदागमाय प्रतिलाभाय योगः समाधिः करणीयः । क्वचित्तु सर्वबुद्धधर्मसमुदागमायेति पाठः । स चायुक्तः । अनन्तरमेव वक्ष्यति । सर्वे बोधिसत्त्वधर्मा इत्यादि । ननु श्रावकयानेऽपि बोधिसत्त्वधर्मा दानादयो निर्दिष्टा एवेत्याशङ्क्याह । तत्कस्य हेतोरिति । (p. 7, 1) इहैव हीत्याद्युत्तरम् । हिशब्दो यस्मादर्थः । यत्रेति येषु बोधिसत्त्वधर्मेषु । एवं मन्यते । श्रावकादिधर्मास्तत्पिटके विस्तरेणाभिहिता बोधिसत्त्वधर्मास्तु प्रसङ्गात् । इह पुनर्बोधिसत्त्वधर्मा एव विस्तरेण निर्दिष्टाः श्रावकधर्माः प्रसङ्गादिति । अनुत्तरायां सम्यक्सम्बोधाविति । नास्त्युत्तरं प्रधानं यस्याः सेयमनुत्तरा सम्यगविपरीता सर्वाकाराभिसम्बोधिः सम्यक्सम्बोधिर्बुद्धभूमिरिति यावत् । सर्वबुद्धधर्मसमुदागमायेति । सर्वेषां बुद्धधर्माणां सर्वाकारज्ञतालक्षणाना-

मधिगमाय। श्रावकयानेऽपि बुद्धधर्मा निर्दिष्टा इत्याशङ्काह। तत्कस्य हेतोरिति। तथैवोत्तरार्थमाह। इहैव हीत्यादि (p. 7, 7) श्रावकभूमावपीत्यारभ्य यावदन्तेन योगमापत्तव्यमित्यनेनैतदुक्तम्। यानत्रयाधिगमप्राप्तये मृदूष्मगतं कुशलं हेतुरिति। अयं च हेतुभावः सर्वेषामेवोष्मादीनां वेदितव्यः। मध्यस्यालम्बनार्थमाह। योऽहं भगवन्नित्यादि। बोधिसत्त्वनामधेयमिति (p. 7, 9)। पूर्वं यस्यार्थस्य बोधिसत्त्व इति नाम तस्यानुपलम्भो नाहं भगवंस्तं धर्मं समनुपश्यामी(p. 4, 20)त्यादिनोक्तः। साम्प्रतम्।

नाममात्रमिदं सर्वं संज्ञामात्रे प्रतिष्ठितम्।
नाभिधानात् पृथग् भूतमभिधेयं प्रकल्प्यते॥

इति कृत्वा यदेतद्बोधिसत्त्व इति नामस्वरूपमववदनीयं तस्यानुपलम्भो देशित इति शेषः। न वेद्मीत्यादि व्याख्यातम्। अथवाऽतीतं न वेद्मि वर्तमानं नोपलभेऽनागतं न समनुपश्याम्यध्वशून्यत्वात् सर्वधर्माणामिति योज्यम्। अववादविषयं नाम तर्ह्यस्तीत्याह। प्रज्ञापारमितामपीति (p. 7, 12)। नाममात्रामित्यभिप्रायः। बोधिसत्त्वमितिनामस्वरूपं। नामधेयस्य प्रकृतत्वात्। कौकृत्यमिति। संवेदननिष्ठत्वाद्विषयस्थितेरनुपलम्भादेतत्कौकृत्यञ्चेतसो विप्रतिसारिता। तदेवाह योऽहमित्यादिना। आयव्ययमिति। विधिरायो व्ययो निषेधः।

विधानं प्रतिषेधं च मुक्त्वा शब्दो ऽस्ति नापरो।

व्यवहार इति कृत्वा पदद्वयेनैव सर्वसङ्ग्रहादेतावन्मात्रकमुक्तम्। एतदुक्तं तत्त्वेनायव्ययविनिर्मुक्तत्व-

विशिष्टं रूपाद्यालम्बनमिति। तत्केनाकारेणालम्बनीय-मित्याह। अपि त्वित्यादि। तदपि नामधेयमालम्बनं न स्थितं प्रबन्धरूपेण।

निषेध्याभावतः स्पष्टं न निषेधोऽस्ति तत्त्वतः।
न च निर्विषयः साधुप्रयोगो विद्यते नञः॥
विकल्पापाश्रयत्वे वा सांवृतः स्यान्न तात्त्विकः।

इति न्यायान्नास्थितं न विष्ठितं प्रबन्धविसदृशत्वेन तथैव नाविष्ठितम्। संवृत्या प्रतिभासमाननामधेयस्य कथं प्रबन्धतद्वैसदृश्यानुपपत्तिरिति। तत्कस्य हेतोरित्याशङ्क्याह। अविद्यमानत्वेनेत्यादि। तत्त्वत इति शेषः। संवृत्या न दोष इत्यभिप्रायः। उपसंहरन्नाह। एवं तदित्यादि। एतदुक्तं धर्मतामुखेन प्रबन्धतद्वैसदृश्यापगततत्त्वमाकार इति। अधिमात्रस्यालम्बनार्थमाह। स चेदित्यादि। एवं गम्भीरायामिति नाममात्रत्वेन प्रज्ञप्तिमात्रस्वभावाया-मन्यतीर्थ्यैः स्वैश्चानिश्रयभीरुभिरलब्धगाधायाम्। एतदुक्तं प्रज्ञप्तिमात्रत्वविशिष्टं दुःखादिसत्यमालम्बनमिति। तत्के-नाकारेणालम्बनीयमित्याह। अधिमुच्यत इत्यादि (p. 8, 1)। सा प्रज्ञप्तिर्न केनचिद्धर्मेण कुशलादिना वाच्येत्यधिमुच्यते, अध्यालम्बते।

आयतो विपुलो हृष्ट उपकारपरो महान्।
कल्याणश्चैवमाधिक्यादाशयो ऽध्याशयः सताम्॥

इत्यध्याशयेनाविरहितो युक्तः स बोधिसत्त्वः प्रज्ञा-पारमितयाऽधिमात्रोष्मस्वभावया मुख्यतः। अन्यत्राप्येवं-प्रकरणबलात् प्रज्ञापारमितार्थो वेदितव्यः। स्थितः

प्राप्तापरिहाण्याऽविनिवर्तनीयायामष्टम्यां बोधिसत्त्वभूमौ तत्कार्यवैवर्तिकत्वलाभात् । सुस्थितस्तदुपादानयोग्यत्वेनोत्तरोत्तरविशेषाधिगमलाभादप्राप्तापरिहाण्या । एतच्च द्वयमनभिनिवेशयोगेनेत्याह । अस्थानयोगेनेति (p. 8, 3) । एतदुक्तं धर्मतामुखेनाकारोऽवाच्यतेति । पञ्चविंशतिसाहस्रिकायाञ्चाधिमात्रोष्मालम्बनाकारमधिकृत्योक्तम् । "यापीयं भगवन् धर्मसाङ्केतिकी प्रज्ञप्तिर्यदुत बोधिसत्त्व" इति विस्तरेण यावद्बुद्ध इति । "सापि न केनचिद्धर्मेण वचनीया कुशलेन वा ऽकुशलेन वा" यावद्भावेन वाऽभावेन वा । तद्यथापि नाम स्वप्न इत्यादि । तस्मान्न सन्देहः कार्य इत्यालम्बनाकारवन्निर्विकल्पकज्ञानाग्नेः पूर्वरूपत्वादूष्मगतमिवोष्मागतं त्रिविधम् । दर्शनमार्गासन्नतरत्वमसत्यन्तराये भवतीति । मोक्षभागीयादस्य विशेषो वेदितव्यः । तथाचोक्तम् ।

आलम्बनमनित्यादि सत्याधारं तदाकृतिः ।
निषेधोऽभिनिवेशादेर्हेतुर्यानत्रयाप्तये ॥ २८ ॥
रूपाद्यायव्ययौ विष्ठास्थिती प्रज्ञप्त्यवाच्यते ॥

इति उष्मानन्तरमिदानीं मृदुनो मूर्धगतकुशलस्यालम्बनार्थमाह । पुनरपरमित्यादि (p. 8, 3) । प्रज्ञापारमितायां मुख्यतो मूर्धस्वभावायाञ्चरता भावयतेति व्याख्यातमथवा प्रयोगपृष्ठचित्तेन चरता मौलचित्तेन भावयतेति योज्यम् ।

न रूपे स्थातव्यमित्यादि । तत्र रूपणालक्षणं रूपम् । अनुभवलक्षणा वेदना । निमित्तोद्ग्रहणात्मिका संज्ञा । चित्ताभिसंस्कारलक्षणाः संस्काराः । अवबोधनलक्षणं

विज्ञानम् । तत् पुनस्त्रिविधं रूपम् । कल्पितं रूपं ग्राह्य-ग्राहकरूपेण कल्पितत्वात् । विकल्पितं रूपमसद्भूतपरि-कल्पेन ज्ञानमेव तथा प्रतिभासत इति विकल्पितत्वात् । धर्मतारूपं तत्त्वतोऽरूपमेव शून्यतारूपेण परिनिष्पन्न-त्वात् । एवं वेदनादयोऽपि वाच्याः । यथौदारिकसंक्लेश-भाजनाद्यर्थधातुतो रूपादीनामियानेवमनुक्रमः । तच्च रूपादौ तत्त्वतोऽसत्त्वेन वस्तूपलम्भयोगान्न स्थातव्यं चेतसः प्रतिष्ठानं न कार्यमिति यावत् । एतदुक्तं यस्मात् स्वभाव-शून्यतया रूपादीनां रूपादिस्वभावेनापगतस्वभावता । तस्मादस्थानार्हत्वविशिष्टं रूपाद्यालम्बनमिति । कस्मादेव-मालम्बनमिति तत्कस्य हेतोरित्याशङ्क्याकारं व्यतिरेक-मुखेनाह । सचेद्रूपे इत्यादिना । एवं मन्यते । आलम्बन-ग्रहणप्रकार एवाकारः संविन्निष्ठा च विषयस्थितिरित्या-कारानुरूपमेवालम्बनं ग्राह्यम् । अतो यदि रूपेऽनित्या-दिभिराकारैस्तिष्ठति तदा रूपाभिसंस्कारे रूपाभोगविकल्पे चरति । एवञ्च न चरति प्रज्ञापारमितायां मुख्यतो मृदुमूर्धस्वभावायामेवं वेदनादिष्वपि योज्यम् । एतदुक्तं धर्मतामुखेनाकारश्चैवं विधो ग्राह्यो यदुत परमार्थेन रूपादिसर्वधर्मशून्यतयोः परस्परमेकं रूपमिति । तच्च शून्यतायामनित्यत्वादीनामभावेन रूपादौ न नित्या-नित्यादिभिराकारैः स्थानं विधेयमिति । तथा हि मृदु-मूर्धाकारमधिकृत्य पञ्चविंशतिसाहस्रिकायां व्याख्यातम् । "रूपमेव शून्यता शून्यतैव रूपमेवं यावद्या च भगवन्ननित्य-तायाः शून्यता न सा ऽनित्यते"त्यादि । अभिसंस्कारमन्त-रेण भावनानुत्पत्तेः कथं पुनरभिसंस्कारे चरन्न चरतीति ।

तत्कस्य हेतोरित्याशङ्क्याह । न हीत्यादि (p. 8, 9) । एवं मन्यते विकल्पोऽभिसंस्कारः प्रज्ञापारमिता च निर्विकल्पा । तत्कथं विकल्पे तत्त्वाभिनिवेशेन चरन् प्रज्ञापारमितायां चरति । केवलं मायापुरुषेणेव चरितव्यमिति । न परिगृह्णाति नापि योगमापद्यते नापि परिपूरयत इति पदत्रयं यथासङ्ख्यं प्रयोगमौलपृष्ठावस्थासु द्रष्टव्यम् । प्रज्ञापारमितामिति मुख्यतो मृदुमूर्धस्वभावां, न निर्यास्यतीत्यादि । अपरिगृहीतमग्रहणार्हमभिसंस्कारं परिगृह्णन् स्वीकुर्वाणो न निर्यास्यति सर्वाकारज्ञतायामिति योज्यम् । सर्वाकारज्ञता चात्र त्रिसर्वज्ञतासामान्यात् सर्वज्ञताशब्देनोक्ता यथासम्भवमेवमन्यत्रापि । कथमग्रहणार्हो ऽभिसंस्कार इति चेत् । तत्कस्य हेतोरित्याशङ्क्याह । रूपं हीत्यादि । एवं मन्यते । अभिसंस्कारविषयस्वभावा रूपादयो न्यायतो ऽसत्त्वेनापरिगृहीताः प्रज्ञापारमितायामतस्तद्विषयोऽभिसंस्कारो वितथप्रतिभासित्वान्न ग्राह्य इति । तदेव दर्शयन्नाह । यश्च रूपस्यापरिग्रहो न तद्रूपमित्यादि (p. 8, 14) । विधिप्रतिषेधयोर्भिन्नविषयत्वादितिभावः । प्रज्ञापारमितायामपि तत्त्वाभिनिवेशो न कार्यो विपर्यासप्रसङ्गादित्याह । सापीत्यादि उपसंहरन्नाह । एवं हीत्यादि । हिशब्दोऽवधारणे । एवमेवेत्यर्थः । एवमालम्बनाकारनिर्यातं मृदुमूर्धगतं समाधिमाह । अयमित्यादिना । "सर्वधर्मै रूपादिभिरपरिगृहीतो यः समाधिरन्वर्थसंज्ञकः स तथोक्तः । विपुलो धर्मधातुवैपुल्येन, पुरस्कृतो यथोक्तालम्बनाकारविशेषाभ्यां चेतसः पुरतो वर्तना"दित्यार्यविमुक्तिसेनः । अतएव क्वचिदपुरस्कृत इति

पाठो न ग्राह्यः। अप्रमाणनियतः सर्वाकारज्ञताप्रति-नियमात्। उरुकरुणाप्रज्ञायोगेन वाऽप्रमाणसत्त्वार्थ-करणे नियतत्वादप्रमाणनियतः। असाधारणोऽगम्यो-ऽन्येषां यथोक्तालम्बनादिपञ्चविधवैशिष्ट्यात्। मध्यस्या-लम्बनार्थमाह। सापि सर्वज्ञतेति। अपिशब्दादनित्य-तादिशून्यतानां परिग्रहः। अपरिगृहीता कुत इत्यादि। न हीत्यादि। निमित्तमसाधारणं रूपं तत्त्वेनान्योन्यमेक-रूपत्वान्नास्त्यतोऽग्रहणमिति यावत्। एतदुक्तं धर्मधातु-रूपतयाऽनित्यतादिसर्वाकारज्ञताशून्यतानां स्वस्वभावेन निःस्वभावत्वात् परस्परमेषामेकात्म्येनानिमित्तत्वविशिष्टं रूपाद्यालम्बनमिति। निमित्तग्रहे को दोष इत्याह। स चेदित्यादि। यदि निमित्ततो ग्रहीतव्या भवेत्तदा स्वशासने निमित्तग्रहेण दीर्घकालं मुक्तिमपश्यन्निर्विण्णः सन्नैवेह शासने श्रेणिकसंज्ञकः परिव्राजकस्तपस्वी श्रद्धामनिमित्तयोगे-नाभिसंप्रत्ययं प्रतिलभेत। निमित्तग्रहस्य तुल्यत्वादिति भावः। तदेव कथयन्नाह। अत्र हीत्यादि। अत्रानिमित्ते तथागतत्वावाहकत्वेन सर्वज्ञज्ञाने तन्निमित्तमधिमुच्याधि-मोक्षमनस्कारं कृत्वा मृद्विन्द्रियत्वेन श्रद्धया मार्गानु-सरणाच्छ्रद्धानुसारी प्रादेशिकेन पुद्गलनैरात्म्यज्ञानेना-वतीर्णः सोऽवतीर्योत्तरकालं न रूपादि निमित्ततो मनसि-करोति। “नापि तत्रानिमित्तभावनायामुत्पन्नेन प्रीति-सुखेन तद्भावकं ज्ञानं निमित्ततः समनुपश्यति। तत्र प्रीतिः सौमनस्यं चैतसिकं, सुखं प्रस्रब्धिः कायिकी। स हि लौकिकवीतरागः प्रथमद्वितीयध्यानान्यतरसन्निश्रयेणा-

वतीर्ण” इति भदन्त विमुक्तिसेनः। केनाकारेणालम्बनीयमित्याह। नाध्यात्ममित्यादि (p. 9, 3)। अध्यात्मरूपस्योपात्तभूतभौतिकस्याध्यात्मिकायतनस्य तद्भावकं ज्ञानमध्यात्मशून्यतया न समनुपश्यति निमित्तत इति शेषः। बहिर्धा रूपस्यानुपात्तभूतभौतिकस्य बाह्यायतनस्य बहिर्धाशून्यतया। अध्यात्मबहिर्धारूपस्य तदुभयस्य शरीरस्योभयशून्यतया। रूपादन्यच्च तर्हि पश्यतीत्याह। नाप्यन्यच्चेत्यादि। एवं धर्मभावनाभिनिविष्टः कथमसौ वक्तव्य इत्याह। अत्रेत्यादि (p. 9, 9)। अत्रास्मिन् पदपर्याये योगस्थानविशेषेऽधिमुक्तिचर्याभूमौ स्थितः श्रेणिकोऽधिमुक्त इति वक्तव्यो नाधिगत इति। यतः श्रेणिकोऽत्र सर्वत्रानिमित्ते सर्वज्ञज्ञाने तत्त्वानधिगमेन श्रद्धानुसारीत्युच्यते। तीक्ष्णेन्द्रियत्वेन तत्त्वाधिगमे तु धर्मानुसारी भवतीत्यभिप्रायः। कथं पुनर्मृद्विन्द्रियोऽप्येवमधिमुक्त इत्याह। धर्मतामित्यादि। पूर्वावेधबलात् प्रज्ञापारमिताधर्मतामविसंवादेन प्रमाणीकृत्यैवमनिमित्तत्वेनाधिमुक्त इति। तस्मात्तेन न कश्चिद्धर्मोऽध्यारोपतः परिगृहीतो नापि विद्यमानत्वेनोपलब्धो यं धर्ममुपादेयत्वेन गृह्णीयात्, स्वीकुर्यात्। मुञ्चेद्वा हेयत्वेन। आस्तां तावदन्यं निर्वाणमपि न स मन्यते। तत्त्वतो न बुध्यते। एतदुक्तं स्वभावप्रतिषेधेनास्वीकारो रूपादीनां धर्मतामुखेनाकार इति। तत्र श्रेणिकोदाहरणम्। तस्य तीर्थिकसम्बन्धेन समाधिव्युत्थितस्याधिमोक्षबलेनैव तदर्थप्रत्यक्षसाक्षित्वज्ञापनार्थम्। अधिमात्रस्यालम्बनार्थमाह। इयमपीत्यादि, (p. 9, 13)। इयमिति। वक्ष्यमाणा न केवलं

पूर्वोक्तेत्यपिशब्दः। तदेव दर्शयन्नाह। यद्रूपमित्यादि। यदिति यस्मादर्थे निपातः। रूपादीनां निमित्तासमीक्षणादिति भावः। श्रावकवत्तर्ह्यनुपलम्भेन सर्वनिरोधे बोधिसत्त्वो निर्वायादित्याह। न चेत्यादि। चशब्दोऽवधारणे।

असंलीनेन कायेन वेदनामधिवासयन्।

प्रद्योतस्येव निर्वाणं विमोक्षस्तस्य चेतसः॥ इति।

निर्वाणस्य महायाने प्रतिषिद्धत्वात्। सद्धर्मपुण्डरीकसूत्रप्रामाण्येन तावत्कालं सत्त्वार्थं प्रति प्रस्रब्धिमुपादाय नैवान्तरा मध्ये श्रावकवदनिमित्तत्वसाक्षात्करणेन महोपायकौशल्यबलात् परिनिर्वाति। निर्वेधभागीयावस्थायां श्रावकपरिनिर्वाणस्यासद्भावात् क्रमेणेति शेषः। अपरिपूर्णैरिति कियन्मात्रेणाप्यन्येषां भावात् सर्वाकारानिष्पन्नैर्यावद्बुद्धधर्मैरिति योज्यम्। तथागतबलादयो वक्ष्यन्ते। तस्मादित्याद्युपसंहारः। एतदुक्तं स्वभावाभावतयैव नीलादिनिमित्तादर्शनविशिष्टं तत्त्वतो रूपाद्यालम्बनमिति। केनाकारेणालम्बनीयमित्याह। पुनरपरमित्यादि (p. 10, 1) एवमिति। वक्ष्यमाणक्रमेण। उपपरीक्षितव्यं भावनाकाले यथावस्थितार्थप्रत्यवेक्षणात्। उपनिध्यातव्यं श्रुतचिन्ताकाले युक्त्यागमाभ्यान्निरूपणात्। कतमैषेति रूपादिस्कन्धानां मध्ये कतमा। अथवा किं द्रव्यं गुणः कर्म सामान्यं समवायो विशेषो वेत्यर्थः। कस्य चैषेति किमात्मनो धर्मस्य वा सम्बन्धिनी। अपि तु रूपादीनामनुत्पन्नत्वान्न काचिन्नापि कस्यचिदित्यर्थः।

यद्येवमभावस्तर्हीत्याह। किं यो धर्म इत्यादि (p. 10, 4)। निर्विषयस्य नञोऽप्रयोगादभावस्तत्त्वतः प्रज्ञापारमिता न भवतीति भावः। स चेदित्याद्युपसंहारः। प्रज्ञापारमितयाऽधिमात्रमूर्धस्वभावयाऽधिगमादविरहितो वेदितव्यः। एतदुक्तं "सम्यग्धर्मप्रविचयत्वेन प्रज्ञया सर्ववस्तुनोऽनुपलम्भतया निरूपणादविद्यमानप्रज्ञापारमितास्वभावत्वं धर्मतामुखेनाकार" इत्यालम्बनाकारवच्चलकुशलमूलमूर्धत्वान्मूर्धगतं त्रिविधम्। तथाचोक्तम्।

रूपादावस्थितिस्तेषां तद्भावेनास्वभावता ॥ २९ ॥
तयोर्मिथः स्वभावत्वं तदनित्याद्यसंस्थितिः।
तासां तद्भावशून्यत्वं मिथः स्वाभाव्यमेतयोः ॥ ३० ॥
अनुद्ग्रहो यो धर्माणां तन्निमित्तासमीक्षणम्।
परीक्षणञ्च प्रज्ञायाः सर्वस्यानुपलम्भतः ॥ ३१ ॥ इति

मूर्धानन्तरमिदानीं मृदुनः क्षान्तिगतकुशलस्यालम्बनार्थं प्रश्नपूर्वकमाह। किं कारणमित्यादि (p. 10, 10)। रूपस्वभावेनेत्यालभ्यत इति शेषः। एतदुक्तम्। यदा रूपादिकं विरहितं रूपादिस्वभावेनालभ्यते तदा किं कारणं प्रज्ञापारमितया मुख्यतो मृदुक्षान्तिस्वभावयाऽविरहितो वेदितव्य इति। प्रतीत्यसमुत्पादधर्मतेयं यदुतास्मिन् सतीदं भवतीत्यभिप्रायेण रूपमेवेत्युत्तरमावेदयन्नाह। अन्यथा यदा रूपमेव विरहितं रूपस्वभावेनेति प्रश्ने रूपमेव विरहितं रूपस्वभावेनेत्युत्तरं न युक्तं स्यात्। कथं पुनः स्वभावेन विरहितं रूपादीत्याशङ्क्य प्रज्ञापारमितायाः स्वभावविरहितत्वप्रतिपादनेनैवान्येषां

स्वभावविरहितत्वं प्रतिपादितमिति। तदर्थमाह। प्रज्ञा-पारमितालक्षणेन सामान्यरूपेण विरहिता प्रज्ञापारमिता विशेषरूपेणापि लक्षणेनेत्यपिशब्दः विपर्यासविनिवृत्ति-फलत्वाद्देशनायाः लक्ष्यलक्षणं तर्ह्यस्तीत्याह। लक्षण-स्वभावेनेत्याह (p. 10, 20)। लक्षणं सामान्यं लक्ष्यो विशेषः। तयोस्तर्हि स्वभावोऽस्तीत्याह। स्वभावलक्षणेनेति।

लक्ष्यलक्षणनिर्मुक्तं वागुदाहारवर्जितम्।
तत्त्वं प्राज्ञप्तिकी युक्ता लक्ष्यलक्षणसंस्थितिः॥

इति भावः। एतदुक्तम्। "शून्यतया तल्लक्ष्यलक्षणयोरेक-त्वेनास्वभावत्वविशिष्टं रूपाद्यालम्बनमि"ति। केनाकारेणा-लम्बनीयमिति प्रश्नपूर्वकमाकारार्थमाह। किं पुनरित्यादि (p. 11, 1)। अत्रास्मिन्नालम्बने संवृत्या यः शिक्षिष्यते स किन्निर्यास्यति सर्वज्ञतायां तन्निमित्तमृदुक्षान्तिगतकुशल-लाभेनेति भावः। धर्मताऽविरुद्ध एवोक्त इत्यभ्युपग-मार्थमाह। एवमेतदित्यादि। निर्यास्यतीति रूपादीनाम-भाव एव स्वभावता संवृतिपरमार्थमुखेनाकारस्तस्य भाव-नयेति यावत्। कथं पुनर्मृदुक्षान्तिगतकुशले शिक्षमाणः सर्वाकारज्ञतायां गमिष्यतीति। तत्कस्य हेतोरित्याशङ्क्य (p. 11, 5) मध्यस्यालम्बनार्थमाह। अजाता हीत्यादि। उत्तरोत्तरालम्बनविशेषादिभिरधिगमविशेषे नियमेन यास्यतीति भावः। आद्यो हिशब्दो ऽवधारणे। अजाता एवेत्यर्थः। कुतो, यस्मात् क्षणिकानित्यतया जातिधर्म-निरोधेनानिर्याता न निर्वाणं गताः सर्वधर्मा इति प्रकृत्य-स्वभावत्वेनानुत्पादानिरोधविशिष्टं रूपाद्यालम्बनमिति

यावत् । केनाकारेणालम्बनीयमित्याह । एवञ्चरत इत्यादि । एवमनन्तरोक्तेन न्यायेन चरतो भावयतः सर्व-गत्यर्थावबोधार्था इति कृत्वा । आसन्नीभवतीति शीघ्राधि-गमप्राप्तेर्निकटवर्तिनी स्यात् । सत्त्वपरिपाचनायेति कुशल-धर्मनियोजनात् सत्त्वपरिपाकायेत्यादि । सर्वधर्मस्वरूपाव-बोधेन कायादीनां सर्वाकारविशुद्धिरिति विशुद्धिहेतुत्वा-द्विशुद्ध्याकारेण हेतुमुखेनाभ्यसनात्कायपरिशुद्धिर्भवति परिशुद्धं त्रिविधं कायकर्म । चित्तपरिशुद्धिः परिशुद्धं त्रिविधं मनस्कर्म । स्थानस्थोत्तप्तपूर्णत्वेन निष्पत्तेर्द्वात्रिंश-न्महापुरुषलक्षणपरिशुद्धिः । सत्त्वभाजनयोः परिशुद्धता बुद्धक्षेत्रपरिशुद्धिः ।

निर्वेधभागीयावस्थायां सर्वथाऽसम्भवात् कियन्मात्रे-णेति भावः । एवमित्याद्युपसंहारः । अधिमात्रस्या-लम्बनार्थमाह । सचेद्रूप इत्यादिना । एवं मन्यते । यावदभिनिवेशयोगेन निमित्तग्रहाच्चरति तावन्निमित्तक्लेशा बोधिसत्त्वा इति वचनादुपलम्भमूले संसारक्लेशे पततीति । तत्र रूपं कार्यभूतम् । रूपनिमित्तं सहकारिकारणम् । रूपं निमित्तमुपादानकारणम् । उत्पादो जन्म । निरोधः क्षणिकानित्यतया । विनाशः प्रबन्धानित्यतया । शून्य-मुभयोरभावः । अनुपायकुशलो (p. 12, 10) विपर्यास-प्रवृत्तत्वाद्वेदितव्यः । व्यतिरेकमुखेन निर्दिश्यान्वयमुखे-नाह । कथमित्याह । एवञ्चरन्नित्याद्युपसंहारः । स्व-सामान्यलक्षणानुपपत्त्या सर्वधर्माणामनिमित्तत्वविशिष्टं रूपाद्यालम्बनमिति । एवं चरन् बोधिसत्त्वश्चरति प्रज्ञा-

पारमितायामधिमात्रक्षान्तिस्वभावायाम्। केनाकारेणा-लम्बनीयमित्याह। स हि चरन्नित्यादि (p. 13, 3)।

विधानं प्रतिषेधञ्च तावेव सहितौ पुनः।
प्रतिषेधं तयोरेव सर्वथा नावगच्छति॥

इति भावः। कथं पुनरनवगमे भावनेति। तत्कस्य हेतोरितीत्याशङ्क्याह। सर्वधर्मा हीत्यादि (p. 13, 8)। यस्मात् प्रकृत्यैव रूपादिनिमित्तानामाश्रयरहितत्वेना-धिमोक्षमनस्कारानधिमोक्षतत्त्वमनस्कारापरिज्ञानमिति धर्मतामुखेनाकारेणालम्बनादधिमोक्षणास्वीकृतत्वादनुप-गतास्तत्त्वमनस्कारेण चागृहीतत्वादनुपात्ताः। इत्यालम्ब-नाकारवदपायाभावेनाधिमात्रधर्मक्षमणात् क्षान्तिगतं त्रिविधम्। तथाचोक्तम्।

रूपादेरस्वभावत्वं तदभावस्वभावता।
तदजातिरनिर्याणं शुद्धिस्तदनिमित्तता॥ ३२॥
तन्निमित्तानधिष्ठानाऽनधिमुक्तिरसंज्ञता। इति।

अतएव "क्षान्तिलाभ्यनपायग" इति वचनाद्बोधिसत्त्वाः क्षान्तिं नोत्पादयन्तीति यदुक्तमाचार्यपादैस्तच्चिन्त्यम्। बोधिसत्त्वानां क्षान्त्यधिगमवचनात्, कर्मायत्ततयेत्यभि-प्रायात् क्षान्तिलाभी नापायं गच्छतीत्यपि सूत्रं न विरुध्यते। अवश्यञ्चैतद्विज्ञेयम्। तथाहि भगवदादेशेन शारिपुत्रादयोऽपि सुन्दरनन्दं गृहीत्वा नरकचारिकां गता इति प्रदेशान्तरे पठ्यते। क्षान्त्यनन्तरमिदानीं मृदुनो-ऽग्रधर्मगतकुशलस्यालम्बनार्थमाह। अयमित्यादि। सर्व-धर्मा नोपादीयन्ते येन समाधिना सर्वधर्मानुपादानो

नाम समाधिस्तत्त्वतः समाधिस्वरूपं रूपाद्यालम्बनमयमिति सम्बन्धः। केनाकारेणालम्बनीयमित्याह। अनेनैवेत्यादि (p. 13, 10)। स्वप्रणिधिपुण्यज्ञानधर्मधातुबलेनानाभोगात्सर्वलोकधातुषु यथाभव्यतया समाधेर्व्यापारः प्रवर्तत इति कार्यमुखेनाकारेणालम्बनात् क्षिप्रमनुत्तरां सम्यक्सम्बोधिमभिसम्बुध्यते। मध्यस्यालम्बनार्थमाह। बुद्धानुभावेनेत्यादि। बुद्धानुभावप्रक्रमेऽपि पुनस्तद्वचनं प्रतिभानविशेषाभिद्योतनार्थमथवा विनेयानां तत्स्मरणदृढीभावार्थम्। व्याकृतोऽयमिति (p. 13, 12)। धर्मतैषा सम्यक्प्रतिपन्नसमाधेर्योगिनो बुद्धैर्व्याकरणं क्रियत इति व्याकरणहेतुत्वविशिष्टरूपाद्यालम्बनात्। तथागतैरित्यादि। सर्वाकाराविपरीतधर्मदेशिकत्वेन परार्थसम्पदा तथागताः। सवासनक्लेशज्ञेयावरणप्रहाणयोगात् स्वार्थसम्पदाऽर्हन्तः। सम्यक्सम्पद्द्वयावाहकमार्गाधिगमात्सम्बुद्धाः। अनेनेति मध्याग्रधर्मगतेन। केनाकारेणालम्बनीयमित्याह। स तमपीत्यादि। न समनुपश्यति निर्विकल्पेन चेतसा। न च तेन मन्यते सविकल्पेन तत्त्वतोऽसत्त्वात्। अहं समाहित इति लब्धसमाधिकः समापत्स्य इत्यादयः प्रयोगमौलपृष्ठभाविनो विकल्पाः कालत्रयभाविनो वा। सर्वेणेत्यादि (p. 13, 16) "द्वे ह्यमू सर्वते वस्तुसर्वताऽकारसर्वते"ति वचनात्। सर्वेणातीतादिवस्तुभेदेन सर्वं स्कन्धादिविषयं विकल्पजातं वस्तु। सर्वथा मृदुमृदुनापि प्रकारेण। सर्वं सवासनसर्वप्रकारम्। न संविद्यते सर्वविकल्पानुपपत्त्या

विदितसमाधिस्वरूपस्य बोधिसत्त्वस्याऽहं समाहित इत्यादिज्ञानानुत्पत्त्या धर्मतामुखेनाकारेणाभ्यसनान्न सम्भवति। अधिमात्रस्यालम्बनार्थमाह। येनायुष्मन् सुभूते समाधिनेत्यादि। अधिमात्राग्रधर्मगतेन। शक्यः स समाधिर्दर्शयितुमिति। किं बोधिसत्त्वादीनां विवेकरूपेणेति भावः। क्वचित्कतमेनेति पाठः। तत्र शक्यः स समाधिर्दर्शयितुमिति तस्यैव प्रश्नयितुर्वचनमसङ्गतमिति चिन्त्यम्। नो हीदमि(p. 14, 3)त्याद्युत्तरम्। धर्मतया समाधिबोधिसत्त्वप्रज्ञापारमितार्थत्रयस्य परस्परमेकं रूपमित्यशक्यपृथगुपदर्शनविशिष्टरूपाद्यालम्बनान्नैवेत्यर्थः। कथं पुनर्भाव्यमानोऽपि दर्शयितुमशक्य इति। तत्कस्य हेतोरित्याशङ्काकारप्रतिपादनेनोत्तरमाह। तमपीत्यादिना। सर्वधर्माविद्यमानत्वेन समाधेरविकल्पनं परमोपाय इति धर्मतामुखेनाकारेणालम्बनात्तं समाधिं न जानाति निराकारेण चेतसा प्रत्यासत्तिनिबन्धनाभावात्। न सञ्जानीते साकारेण वस्तुभावमन्तरेण स्वप्नादौ भावात्। न केवलमाकारमित्यपिशब्दः। इदन्तया दर्शनस्य विकल्पाधीनत्वादितिभावः। सर्वानुपलम्भे भाव्यभावकभावनाऽनुपपत्तिरित्यभिप्रायेण शारिपुत्रो न जानातीत्याद्याह। संवृत्या न दोष इति मत्वा सुभूतिराह। न जानातीत्यादि। तमेवाभिप्रायम्। तत्कस्य हेतोरित्याशङ्क्याह। अविद्यमानत्वेनेति (p. 14, 8)। तत्त्वत इति शेषः। प्रयोगादयस्तु मायापुरुषस्येव पूर्वावेधवशादित्याद्याकृतम्। धर्मताऽविरुद्धकथनात्साधुकारार्थमाह। साध्वित्यादि। प्रतिभाति ते तव तन्निर्भासिज्ञानोदयेन।

उपदिशसि परेषां तदालम्बनकथनात् । एवञ्चाचेत्याद्युपसंहारः । चशब्दोऽवधारणे । एवमेवात्र निर्वेधभागीय इत्यर्थः । कथं पुनरनेन क्रमेण शिक्षितव्यमिति । तत्कस्य हेतोरित्याशङ्क्याह । एवं हीत्यादि । प्रज्ञापारमितायां निर्वेधभागीयस्वभावायाम् । इत्यालम्बनाकारवल्लौकिकसर्वधर्माग्रत्वादग्रधर्माख्यं त्रिविधम् । तथाचोक्तम् ।

समाधिस्तस्य कारित्रं व्याकृतिर्मननाक्षयः ॥ ३३ ॥

मिथस्त्रिकस्य स्वाभाव्यं समाधेरविकल्पना ।

इति निर्वेधभागीयं मृदुमध्याधिमात्रतः ॥ ३४ ॥ इति एतदुक्तम् । एवं कृतधर्मप्रविचयः समाहितचित्तश्च सर्वधर्मनैरात्म्यं भावयन् क्रमेण यदा पृथग्भूतार्थाभिनिवेशाभावादीषत्स्पष्टज्ञानालोकेन मनोमात्रमेव पश्यति तदाऽस्योष्मगतावस्था । स एवाचालोकलब्धो नाम समाधिरुच्यते महायाने। यदा तस्यैव धर्मालोकस्य वृद्ध्यर्थं नैरात्म्यभावनायां वीर्यारम्भेण मध्यस्पष्टो ज्ञानालोको भवति, तदा मूर्धावस्था। स एव वृद्धालोको नाम समाधिः। यदा तु चित्तमात्रावस्थानेन स्पष्टतरो बाह्यार्थाभिनिवेशाभावो ज्ञानालोको जायते। तदा क्षान्त्यवस्था । ग्राह्याकाराभावानुप्रवेशात्तत्त्वार्थैकदेशप्रविष्टो नाम समाधिः। यदा पुनरर्थग्राहकविक्षेपानाभासो ज्ञानालोको निष्पद्यते, तदा लौकिकाग्रधर्मावस्था। स एवानन्तर्यो नाम समाधिः। सर्वाश्चैता अवस्था दृढाधिमुक्तितोऽधिमुक्तिचर्याभूमिरुच्यते । अस्याञ्च भूमौ वर्तमानो बोधिसत्त्वः पृथग्जनोऽपि सर्वबालविपत्तिसमतिक्रान्तोऽसंख्येयसमाधिधारणीविमोक्षाभिज्ञादिगुणा-

न्वितो रत्नमेघे पठ्यत इति निर्वेधभागीयानामेवमालम्बनाकारहेतुत्वविशेषान्निर्दिश्य चतुर्विकल्पसंयोगार्थं सर्ववस्त्वधिष्ठानं प्रथमं ग्राह्यविकल्पमाह । एवं शिक्षमाण इत्यादिना (p. 14, 15) । किमिति भावः । उद्भावनासंवृत्या शिक्षत इत्यभिप्रायेणाह । एवं शिक्षमाण इत्यादि । अविदितभगवदभिप्रायः शारिपुत्रः पृच्छति । तत्त्वेन कतमस्मिन् धर्मे शिक्षत इति । तत्र वस्तुमात्राधिष्ठानविकल्पेन विपर्यासानुषङ्गात्परमार्थतो न क्वचिदित्याह भगवान् कस्मिंश्चिद्धर्मे शिक्षत इति । शिक्षमाणोऽपि कथं न शिक्षत इति । तत्कस्य हेतोरित्याशङ्क्याह । न हीत्यादि (p. 15, 1) सांक्लेशिकधर्मयोगाद्बालाः, वैयवदानिकधर्मविरहात्पृथग्जनाः । त एव चैवंविधधर्माधिमुक्तिबाहुश्रुत्यविगमादश्रुतवन्तः । एवं मन्यते । यथाऽविद्याविकल्पबलाद्विद्यमानत्वेनोपलम्भादभिनिविष्टास्तथा न संविद्यन्तेऽतः संवृत्या शिक्षमाणास्तत्त्वतो न शिक्षन्त इति । यदि तथा न संविद्यन्ते, अर्थात्तर्ह्यन्यथा विद्यन्ते । तथा च भावग्रहाद्दोष इत्यभिप्रायेणाह । कथन्तर्हीत्यादि । प्रवृत्तिविपर्यासनिराकरणाद्यथाभिनिविष्टास्तथा न संविद्यन्त इति । यदि नामैवमुक्तं तथापि तत्त्वतो न सन्तीत्याह । यथेत्यादि । यथा न्यायतो न संविद्यन्ते तथाऽविचारैकरम्यत्वेन संवृत्त्या विद्यन्तेऽविद्यमानतैव विद्यमानतेति यावत् । एवमित्याद्युपसंहारः । एवमविद्यमाना यतस्तेन कारणेन नैरुक्तविधानात् संवृत्या विपरीतज्ञानमज्ञानमविद्येत्युच्यत इत्यनेनाविद्याविकल्पोऽभिहितः । रूपादि-

स्कन्धविकल्पार्थमाह। तानित्यादि वस्तुमात्राधिष्ठानेन सर्वेऽपि तत्प्रतिबद्धा विकल्पाः। सम्बद्धा इति ज्ञापयितुं पूर्वेण सम्बन्धः कथितः। एवमुत्तरत्रापि ज्ञेयम्। कथमभिनिविष्टा इत्याह। तैरित्यादि। तत्त्वेनासंविद्यमानाः सर्वधर्मा रूपादिस्कन्धास्तद्विकल्पनयाऽभूतपरिकल्पादध्यारोपिताः, कल्पिताः। नामरूपाभिनिवेशविकल्पार्थमाह। ते तान् कल्पयित्वेत्यादि (p. 15, 6)। शाश्वतोच्छेदयोरन्तयोरभिनिविष्टास्तान्नामरूपादीन्धर्मांस्तदभिनिवेशविकल्पान्नित्यस्यार्थक्रियाविरहात्संवृत्याऽनित्या एवेति लौकिकेन श्रुतादिमयेन ज्ञानेन न जानन्ति।

अज्ञानात् कल्पितं पूर्वं पश्चात्तत्त्वार्थनिर्णये।
यदा न लभते भावमेवाभावं तदा कुतः॥

इति भावनया न पश्यन्ति लोकोत्तरेण तस्मात्तत्त्वेनासंविद्यमानान्नामरूपादीन्सर्वधर्मांस्तदभिनिवेशबलात्कल्पयन्ति। अन्तद्वयसक्तिविकल्पार्थमाह। कल्पयित्वा द्वावन्तावभिनिविशन्त इति। तत्सक्तिविकल्पादिति भावः। संक्लेशव्यवदानाज्ञानविकल्पार्थमाह। अभिनिविश्येत्यादि। अभिनिवेशहेतुं तन्निमित्तमुपलम्भं निश्रित्य निमित्तीकृत्वा सांक्लेशिकवैयवदानिकधर्मस्वरूपाज्ञानविकल्पबलेनातीतान् यावत्प्रत्युत्पन्नान्धर्मान् कल्पयन्ति। आर्यमार्गाप्रतिष्ठानविकल्पार्थमाह। ते कल्पयित्वा नामरूपेऽभिनिविष्टा इति (p. 15, 11)। दर्शनादिमार्गास्थित्यभिनिवेशादिति भावः। तत्र नाम वेदनादयोऽरूपिणः स्कन्धाः, रूपं रूपस्कन्धः। उपलम्भविकल्पार्थमाह। तैरसंविद्यमानाः

सर्वधर्माः कल्पिता इति। तदुपलम्भाभिनिवेशादिति भावः। आत्मादिविकल्पार्थमाह। ते तानसंविद्यमानानित्यादि।

आत्मनि सति परसंज्ञा, स्वपरविभागात्परिग्रहद्वेषौ।
अनयोः सम्प्रतिबद्धाः सर्वक्लेशाः प्रजायन्ते॥

इत्यात्माद्यभिनिवेशाद्विपरीतं धर्मपुद्गलनैरात्म्यलक्षणं यथाभूतं मार्गं दर्शनादिकं पूर्ववन्न जानन्ति, न पश्यन्ति। विशुद्ध्युत्पादादिविकल्पार्थमाह। यथाभूतं मार्गमजानन्त इति। न निर्यान्ति न निर्गच्छन्ति। त्रैधातुकात्संसारात्। यतो न बुध्यन्त इत्यादिना। विशुद्ध्युत्पादाद्यभिनिवेशाद्भूतकोटिमग्रार्थेनं तत्त्वम्। तेन कारणेन बाला इति व्यपदेशं सङ्ख्यां गच्छन्ति प्रतिलभन्ते। प्रतिपक्षवस्त्वधिष्ठानं द्वितीयं ग्राह्यविकल्पमाह। ते सत्यं धर्मं न श्रद्दधतीत्यादिना। अविपरीतार्थेन सत्यं धर्मं प्रतिपक्षलक्षणं तदभिनिवेशविकल्पयोगेन विपरीतप्रतिपत्त्या स्वरूपाननुभवान्न श्रद्दधति नाधिमुच्येयुः। व्यतिरेकमुखेन विपरीतप्रतिपत्तिमेवाह। न खलु पुनरित्यादिना (p. 15, 16)। कञ्चिद्धर्मं वैयवदानिकं ग्राह्यविकल्पेनेति शेषः। स चैवं विषयभेदान्नवप्रकारो भवति। तद्यथा राश्यर्थविकल्पः। आयद्वारार्थविकल्पः। गोत्रार्थविकल्पः। उत्पादार्थविकल्पः। शून्यतार्थविकल्पः। पारमितार्थविकल्पः। दर्शनमार्गविकल्पः। भावनामार्गविकल्पः। अशैक्षमार्गविकल्प इति। तथाचोक्तम्।

द्वैविध्यं ग्राह्यकल्पस्य वस्तुतत्प्रतिपक्षतः।
मोहराश्यादिभेदेन प्रत्येकं नवधा तु सः॥ ३५॥ इति

तत्र सर्ववस्तुक एव प्रथमो ग्राह्यविकल्पो व्यवदान-

वस्तुक एव द्वितीय इत्ययमनयोर्ग्राह्यविकल्पयोर्विशेषः । एवञ्च कृत्वोच्यते । यः प्रथमो ग्राह्यविकल्पो द्वितीयोऽपि स इति पूर्वपादकः । यस्तावत्प्रथमो द्वितीयोऽपि सः । तद्यथा सर्ववस्तुकः प्रथमो ग्राह्यविकल्पः स्याद्द्वितीय एव न प्रथमस्तद्यथा व्यवदानमात्राधिष्ठानो द्वितीयो ग्राह्यविकल्प इत्येके । प्रथमः संक्लेशवस्त्वधिष्ठानो द्वितीयो व्यवदानवस्त्वधिष्ठानोऽन्योन्यव्यवच्छेदरूपत्वादनयोर्भेद इत्यपरः । पुद्गलद्रव्याधिष्ठानं प्रथमं ग्राह्यविकल्पमाह । एवमित्या-(p. 15, 17)दिना । एवमनन्तरोक्तक्रमेण ग्राह्यविकल्पद्वयमकृत्वा शिक्षते किम्प्रथमविकल्पनेनेति भावः । विकल्पावरणस्य तुल्यत्वादिति । भगवानाह न शिक्षत इति । तत्त्वेनेति शेषः । संवृत्या त्वादिकर्मिकस्यैवंशिक्षाऽन्यथानुपपत्तेरित्याह । एवं शिक्षमाण इत्यादि । सर्वज्ञतायां शिक्षत इत्यादिपदत्रयं यथाक्रमं प्रयोगाद्यवस्थासु वेदितव्यम् । सचैवं विषयभेदान्नवप्रकारो भवति । तद्यथा । स्वतन्त्रात्मविकल्पः । एकात्मविकल्पः । कारणात्मविकल्पः । द्रष्ट्राद्यात्मविकल्पः । संक्लेशाधारात्मविकल्पः । वैराग्याधारात्मविकल्पः । दर्शनमार्गाधारात्मविकल्पः । भावनामार्गाधारात्मविकल्पः । कृतार्थाधारात्मविकल्प इति । प्राज्ञप्तिकपुरुषाधिष्ठानं द्वितीयं ग्राहकविकल्पम् । तस्मिन् विकल्पे चोद्यपरिहारद्वारेणाह । यो भगवन्नित्या(p. 16, 2)दिना । प्राज्ञप्तिक एव पुरुषो ग्राहक इत्यभिनिवेशे वितथप्रख्यातिरूपत्वान्मायास्वभावः पुरुषो मायापुरुषः प्राज्ञप्तिक एवेति । तस्यापि शिक्षा प्राप्ता न चैवमचेतनत्वादपरिज्ञानेऽपि शिक्षायां सर्वेषां शिक्षाप्राप्तेर्मुक्तिरयत्नसिद्धेत्यभिप्रायेण

य इत्यादि वदतस्तस्य कथं निर्देष्टव्यमुत्तरं भवेदित्यर्थः। वितथप्रख्यातिरूपं समानं रूपादीनामतो गत्यन्तराभावान्मायापुरुषेणेव शिक्षितव्यम्। न चायत्नसिद्धा मुक्तिरित्यभिप्रायवानाह। तेन हीत्यादि। यस्मात्त्वमेवं पृच्छसि तस्मात्त्वामेवात्र प्रश्ने प्रतिप्रक्ष्यामि प्रतिप्रश्नं करिष्यामि। साध्वित्यादि। साध्वेवं भगवन्नित्यभ्युपगमं कृत्वा, इत्येवं भगवतः सकाशादश्रौषीत्। श्रुतवान्। कथमेवं श्रुतवानित्याह। भगवानित्यादि। विसर्जयन्नाह। नहीत्यादि। नैव तदन्यत्वं भगवन् यस्मान्नान्या सा माया। नान्यत्तद्रूपादि। रूपाद्येव माया मायैव रूपादि। एकानेकस्वभाववैधुर्यात्तत्त्वतोऽनयोर्निःस्वभावत्वे वितथप्रख्यातिरूपं समानमिति भावः। मायारूपाद्योरेकत्वप्रतिपादने सति मायापुरुषेणेव शिक्षितव्यमिति प्रतिपादनायाह। तत्किं मन्यस इत्यादि। "अत्रैषा पञ्चसूपादानस्कन्धेषु मायोपमेषु बोधिसत्त्व इति संज्ञा निमित्तोद्ग्रहणम्। वस्तुसमेतमहमिति ज्ञानं समज्ञा। ज्ञेयज्ञानयोर्ग्राह्यग्राहकप्रकाराभिनिवेशविज्ञापनं प्रज्ञप्तिः। विविधपरोपात्तानुपात्तवस्तुसम्बन्धव्यवहरणं व्यवहार" इत्यार्यविमुक्तिसेनः। "गोत्रावस्थायां बोधिसत्त्व इति संज्ञा संज्ञैव केवला। चित्तोत्पादावस्थायां जानातीति ज्ञं समं ज्ञं चित्तं प्रवृत्तिनिमित्तं यस्या बोधिसत्त्व इति संज्ञायाः सेयं समज्ञा सर्वसत्त्वसमज्ञाननिमित्ता। सप्तसु प्रयोगभूमिषु सर्वधर्मप्रज्ञप्तिमात्रताप्रतिवेधात् प्रज्ञप्तिः। अष्टम्यादौ निमित्तानाभोगमार्गलाभाद्व्यवहारमात्रेणाभिलाप्याद्व्यवहार" इति भदन्तविमुक्तिसेनः। रूपादिव्यतिरिक्तबोधिसत्त्वा-

नुपपत्त्याऽभ्युपगमार्थमाह । एवमेतदित्यादि (p. 16, 19) । सम्भ्रमे द्विरभिधानम् । तेन हीत्याद्युपसंहारः । यस्मादेवं तेन कारणेन गत्यन्तराभावाद्यथा कर्ममायाजनितः संसारस्तथा लोकोत्तरा अपि धर्मा ज्ञानमायाजनिता इत्यनभिनिवेशयोगान्मायापुरुषेणेवानुत्तरायां सम्यक्सम्बोधौ शिक्षितव्यमित्युपपन्नम् । न चायत्नसिद्धा मुक्तिर्यतो ज्ञातमेव तत्त्वं मोक्षावाहकं नाविज्ञातमिति भावः । मायापुरुषत्वे संक्लेशव्यवदानव्यवस्था कथमिति । तत्कस्य हेतोरि(p. 17, 1)त्याशङ्क्याह । स एव हीत्यादि । पञ्चोपादानस्कन्धाः । सास्रवा रूपादयोऽनास्रवपञ्चस्कन्धपरिग्रहाय पञ्चस्कन्धाश्चेत्यध्याहार्यम् । यथादर्शनमेव संक्लेशव्यवदानव्यवस्था मायापुरुषत्वेऽपीति भावः । कथम्पुनर्मायोपमत्वमिति । तत्कस्य हेतोरित्याशङ्क्याह । तथाहीत्यादि । उक्तोऽप्यर्थः प्रकारान्तरेणाशङ्क्यमानो न पुनरुक्तम् । इति पुनरुक्ततादोषो नोद्भावनीयः । सर्वत्रैवं ज्ञेयम् । उक्तं भगवतेति । अत्र पञ्चोपादानस्कन्धेषु बोधिसत्त्व इति संज्ञादिवचनादनन्तरमेव मायोपमं रूपादिकमुक्तं भगवता । षडिन्द्रियं चक्षुरादि सविज्ञानविषयमिति शेषः । यतोऽनन्तरं वक्ष्यति ते पञ्चस्कन्धा इति । यद्विज्ञानं तत् षडिन्द्रियम् । ज्ञानस्यैव तदाकारेण प्रतिभासनात् । षडिन्द्रियञ्च पूर्ववद्ग्राह्यमिति । प्राज्ञप्तिकपुरुषाधिष्ठानग्राहकविकल्पः प्रतिपादितः । स चैवं विषयभेदान्नवप्रकारो भवति । तद्यथा स्कन्धप्रज्ञप्तिविकल्पः । आयतनप्रज्ञप्तिविकल्पः । धातुप्रज्ञप्तिविकल्पः । प्रतीत्यसमुत्पादप्रज्ञप्ति-

विकल्पः । व्यवदानप्रज्ञप्तिविकल्पः । दर्शनमार्गप्रज्ञप्तिविकल्पः । भावनामार्गप्रज्ञप्तिविकल्पः । विशेषमार्गप्रज्ञप्तिविकल्पः । अशैक्षमार्गप्रज्ञप्तिविकल्प इति । तथा-चोक्तम् ।

द्रव्यप्रज्ञप्त्यधिष्ठानो द्विविधो ग्राहको मतः ।

स्वतन्त्रात्मादिरूपेण स्कन्धाद्याश्रयतस्तथा ॥ ३६ ॥ इति

चतुर्विकल्पसंयोगं निर्दिश्येदानीमुपायकौशलकल्याणमित्रस्वभावं संपरिग्रहमावेदयन्नाह । मा भगवन्नित्यादि । नवयानसम्प्रस्थिता इति । प्रत्यग्रं महायाने प्रवृत्ताः । इमम्-इति, गाम्भीर्यौदार्यालम्बनादिविशेषेण विशिष्टम् । उत्त्रसिषुरित्यादि (p. 17, 7) । तत्रास्थानत्रास उत्त्रास उन्मार्गवत् । सन्तत्या त्रासः सन्त्रासः । उत्पन्नभयस्याप्रतिविनोदनात् । सन्त्रासनिश्चयगमनं सन्त्रासापत्तिः । पापमित्रहस्तगता इति । संवृतिपरमार्थविभागमकृत्वा निरवधिकालाभ्यस्तोपलम्भानिराकरणेन सहसैवानुत्पादादिदेशको नरकादिफलसद्धर्मप्रतिक्षेपपापस्य हेतुत्वात्पापमित्रं तस्य हस्तगता ग्रहणयोग्यतां गता इत्यर्थः । व्यतिरेकमुखेन कथितोऽर्थोऽन्वयमुखेन कथ्यमानः सुदृढो भवतीत्याह । कल्याणमित्रहस्तगता इति । चित्तानवलीनत्वानुत्त्रासादिनोपायकौशल्येन यथाशयं क्षितीशेष्टराज्ञीमरणनिवेदनन्यायेन मात्सर्यादिधर्मवियुक्तः समस्तवस्तुनैरात्म्यादिदेशकः सुगतिफलादिप्रापकत्वेन कल्याणमित्रं तस्य हस्तगता इति पूर्ववत् । कानीत्यादिना कल्याणमित्रस्वरूपः प्रश्नः । उत्तरमाह । य एनमित्यादि । ये पुद्गला देवदत्तादिकमेनं

पुद्गलं दानादिपारमितासु संवृतिपरमार्थसत्यानतिक्रमेण हितप्राप्त्या पूर्ववदववदन्त्यनुशासति। ये चास्मै देवदत्तादिकायाहितपरिहारेण मारकर्माण्युपदिशन्ति। कथमित्याह। एवमित्यादि। एवं मारदोषा मारस्यान्तराया बुद्धवेषेणोपसङ्क्रम्य किं ते ऽनुत्तरया बोध्येत्यनागतार्थविवेचनता। इमे मारदोषास्तथैव किं ते प्रज्ञापारमितायां लिखनाद्यनुष्ठानेनेति वर्तमानार्थविवेचनता। तद्विच्छिन्दनाबलेन यथाक्रमं स्वीकृतत्यागकर्मार्थमाह। एवं मारकर्माणामित्यादि (p. 17, 17) बुद्ध्वा च यत्कार्यं तदाह। तानि त्वयेत्यादिना। इमानीत्याद्युपसंहारः। महासन्नाहसन्नद्धस्येति। सन्नाहप्रतिपत्त्या वक्ष्यमाणया युक्तस्य महायानसंप्रस्थितस्येतिप्रस्थानप्रतिपत्त्या तथैवान्वितस्य महायानसमारूढस्येति। तथैव महायानमुत्कलितस्य। तथाह्यादौ तया प्रस्थितः पश्चादारूढ इष्यते। तथाचोक्तम्।

चित्तानवलीनत्वादि नैःस्वाभाव्यादिदेशकः।
तद्विपक्षपरित्यागः सर्वथा सम्परिग्रहः॥ ३७॥ इति

"सूत्रं सूत्रान्तरानुसारेण व्याख्यातव्य"मिति भगवद्वचनादेव पञ्चविंशतिसाहस्रिकानुसारेण पूर्वाचार्यवसुबन्धुप्रभृतिव्याख्याक्रममाश्रित्याभिसमयालङ्कारकारिकानुरोधेन च भावाध्याहारादिपदं कृत्वा तथा सामान्यशब्दस्यापि प्रकरणादिबलेन विशेषे वर्तनाद्विवक्षापरतन्त्रत्वेन यथोक्तार्थे प्रवचनाविरुद्धे शब्दानां वर्तनात्तत्प्रतिषेधे वचनाभावेन च कारणेन ग्रन्थानुगतमेव व्याख्यातमिदम्। अतः कथमग्रन्थानुगममेवं व्याख्यानमिति न मन्तव्यम्।

अन्यथा यद्ययं न्यायो नाश्रीयते तदा प्रवचनव्याख्यैव न स्यात्। शब्दानां सामयिकत्वेनानेकार्थवृत्तौ प्रतिनियतार्थ-परिग्रहे सन्देहात्। किञ्चार्यासङ्गप्रभृतीनामेवेदं व्याख्यानं लिख्यत इति प्रमाणीकर्तव्यम्। तथाहि श्रूयते। विदित-समस्तप्रवचनार्थो लब्धाधिगमोऽप्यार्यासङ्गः पुनरुक्त-बाहुल्येनापुनरुक्तप्रदेशेऽपि प्रत्येकपदव्यवच्छेदादर्शनेन गाम्भीर्याच्च प्रज्ञापारमितार्थमुन्नेतुमशक्तो दौर्मनस्यमनु-प्राप्तस्ततस्तमुद्दिश्य मैत्रेयेण भगवता प्रज्ञापारमितासूत्रं व्याख्यातमभिसमयालङ्कारकारिकाशास्त्रञ्च कृतम्। तच्छ्रुत्वा पुनरार्यासङ्गेनाचार्यवसुबन्धुप्रभृतिभिश्च व्याख्यातमित्यलं प्रसङ्गेन। निर्वेधभागीयानन्तरं प्रतिपत्तिमतो यथोक्त-निर्वेधभागीयमन्यदपि दर्शनमार्गादिकमिति प्रतिपत्ते-राधारं धर्मधातुस्वभावकमावेदयन्नाह। यद्भगवानेव-मित्यादि (p. 17, 21) एतदुक्तम्। यद्भगवानेवमाह बोधि-सत्त्वस्य महासत्त्वस्येत्यादि। यच्च सूत्रान्तरेषु महासत्त्वो इत्युच्यते। तत्र पूर्वके वाक्ये तेषु च सूत्रान्तरेषु धर्मधातुस्वभावत्वे बुद्धधर्माणां कः प्रतिष्ठार्थः पदार्थो बोधिसत्त्व इति। उत्तरं वक्तुमाह। अपदार्थ (p. 18, 5) इत्यादि। बोधिसत्त्वो बुद्धधर्माणां पदार्थो बोधिसत्त्व-पदार्थो यः स तत्त्वतो ऽपदार्थो ऽप्रतिष्ठार्थोऽगोचरमिति यावत्।

अधिगममनन्तरेण मुक्त्यनुपपत्तेरधिगच्छन् बुद्धधर्मान् कथमपदार्थो बोधिसत्त्व इति। तत्कस्य हेतोरित्याशङ्क्याह। सर्वधर्माणां हीत्यादि। यस्मात् सर्वधर्माणां वस्तुतन्निमित्ता-

भिनिवेशाभावेनाऽसक्ततायां सत्यामन्यथाधिगमानुपपत्त्या बुद्धधर्माधिगमाय मायापुरुष इति शिष्यते । तस्मात् कथं तत्त्वतः प्रतिष्ठार्थ इति भावः । संवृत्या पुनः प्रतिपत्तिधर्मस्यावस्थान्तरभेदेन धर्मधातुस्वभाव एव बुद्धधर्माधारो बोधिसत्त्वस्त्रयोदशविधो गोचरमिति निर्दिश्यते । तत्रादौ तावच्चतुर्विधलौकिकनिर्वेधभागीयानामुत्पादाधारः । ततो लोकोत्तरदर्शनभावनामार्गयोः ततस्तदुत्पत्तिबलेन चौरनिष्कासनकपाटपिधानवत् समकालं समस्तप्रतिपक्षोत्पादविपक्षनिरोधयोस्ततस्तदनुपलब्ध्या तयोर्विपक्षप्रतिपक्षयोर्निरोधोत्पादयुक्तविकल्पापगमस्य । ततः पूर्वप्रणिधानदानाद्युपायकौशल्यबलेन संसारनिर्वाणाप्रतिष्ठानलक्षणयोः प्रज्ञाकरुणयोस्ततस्तदुत्पत्त्या श्रावकाद्यसाधारणधर्मस्य । ततो यथाशयमवतारणाद्यभिसन्धिद्वारेण यानत्रयं प्रतिष्ठापनलक्षणपरार्थानुक्रमस्य । ततो यावदासंसारं निर्निमित्तानाभोगपरकार्यज्ञानस्य चाधारः । ततश्चैवमधिगमानुक्रमादियमानुपूर्वी । अनया च सर्वाधिगमधर्मसङ्ग्रहादियानेव निर्देशो न न्यूनो नाप्यधिकः । तथा संवृत्याधारभावस्याक्षिप्तत्वादयं सर्वोऽर्थोऽत्र प्रज्ञापारमितायामाक्षिप्त एवेत्यवगन्तव्यम् । पञ्चविंशतिसाहस्रिकायाञ्च प्रत्यर्थमाधारमधिकृत्य निर्दिष्टो ग्रन्थो नेह ज्ञापकत्वेन प्राचुर्यभयाल्लिख्यते । तथाचोक्तम् ।

षोढाऽधिगमधर्मस्य प्रतिपक्षप्रहाणयोः ।
तयोः पर्युपयोगस्य प्रज्ञायाः कृपया सह ॥ ३८ ॥
शिष्यासाधारणत्वस्य परार्थानुक्रमस्य च ।
ज्ञानस्यायत्नवृत्तेश्च प्रतिष्ठा गोचरमुच्यते ॥ ३९ ॥ इति

यदि धर्मधातोरेवार्यधर्माधिगमाय हेतुत्वात्तदात्मको बोधिसत्त्वः प्रकृतिस्थमनुत्तरबुद्धधर्माणां गोत्रं धर्मतासंज्ञकम्। तदा धर्मधातोः सामान्यवर्तित्वादिदं प्रकृतिस्थं गोत्रमनादिकालायातं धर्मताप्रतिलब्धमिदं समुदानीतं पूर्वकुशलमूलाभ्यासप्रतिलब्धमिदं नियतं श्रावकप्रत्येकबुद्धतथागतगोत्रं महद्भिरपि प्रत्ययैरहार्यत्वादिदमनियतं श्रावकादिगोत्रं प्रत्ययैर्हार्यत्वादिति गोत्रभेदो न युज्यते। यथा श्रावकयानाद्यधिगमक्रमेणालम्बेत तथार्यधर्माधिगमाय धर्मधातोर्हेतुभावेन व्यवस्थापनाद्गोत्रत्वेन व्यपदेश इति समाधिरथवा यथैकमृद्द्रव्याभिनिर्वृत्तैकतेजःपरिपक्वाधारघटादेराधेयक्षौद्रशर्करादिभाजनत्वेन भेदस्तद्वद्यानत्रयसङ्गृहीताधिगन्तव्याधेयधर्मनानात्वेनाधारनानात्वं निर्दिष्टमिति न दोषः। तथाचोक्तम्।

धर्मधातोरसम्भेदाद्गोत्रभेदो न युज्यते।
आधेयधर्मभेदात्तु तद्भेदः परिगीयते॥ ४०॥ इति

निरुक्तं तु गुणोत्तारणार्थेन धर्मधातुर्गोत्रं तस्माद्धि ते गुणा रोहन्ति प्रभवन्तीत्यर्थः। एवञ्च कृत्वोच्यते। असंस्कृतप्रभाविताः सर्वार्यपुद्गला इति। ननु चादावेव गोत्रं वक्तव्यं तत्पूर्वकत्वाच्चित्तोत्पादस्य मोक्षनिर्वेधभागीयानाञ्चेति कथमेवमुक्तम्। सत्यमर्थानुपूर्व्येषा। इयं तु प्रतिपादनानुपूर्वी यत्कार्यं प्रतिपाद्य पश्चात्कारणं निर्दिश्यत इत्यदोषः। आधारानन्तरं यथोक्तप्रतिपत्त्याधारस्य बोधिसत्त्वस्य किमालम्बनमित्यालम्बनार्थमाह। यस्मात्सर्वधर्माणामेवावलम्बनस्थानीयानामनुबोधार्थेन सम्यगुभयसत्यान-

तिक्रमावलम्बनेन याऽसक्तता तस्यां सत्यामालम्बनविशुद्धिगमनेनानुत्तरां सम्यक्सम्बोधिमभिसम्बुध्यते नान्यथाऽतो बोध्यालम्बनप्रयोजनेन सर्वप्रकारस्वार्थसम्पादनाद् बोधिसत्त्व इत्युच्यते। तत्रादौ तावत् सामान्येन सर्वधर्मान् कुशलाकुशलाव्याकृतान् यथाक्रमं श्रामण्यताप्राणातिपाताव्याकृतकायकर्मादय इति त्रिधा विभिद्योपादेयपरित्यागोपेक्षास्थानीयत्वेन विभावयति। ततः पुनर्लौकिकमार्गसङ्गृहीताः पञ्चोपादानस्कन्धादयो लौकिकाः। सम्यगार्यमार्गेण सङ्गृहीताश्चतुर्ध्यानादयो लोकोत्तरा इति चिन्तयति। तत्रात्मग्रहाप्रतिपक्षत्वेन लौकिकाः पञ्चोपादानस्कन्धादयः साश्रवाः। लोकोत्तरास्त्वात्मदर्शनप्रतिपक्षत्वेन स्मृत्युपस्थानादयोऽनाश्रवा इति हेयोपादेयतया निरूपयति। ततो ऽनाश्रवानादाय हेतुप्रत्ययाधीनकामादिधातुसङ्गृहीता बोधिपक्षादयः संस्कृताः संवृत्या। कारणानपेक्षधातुत्रयापर्यापन्नतथतादयो ऽसंस्कृताः परमार्थत इति द्विधा ध्यायति। ततो ऽसंस्कृतप्रभाविताः सर्वार्यजनसन्तानप्रभवचतुर्ध्यानादयः साधारणधर्माः। सम्यक्सम्बुद्धसन्तानोदयधर्मिदशबलादयोऽसाधारणा धर्मा इति द्विधा भावयतीत्येवमधिगमानुक्रमेण सर्वधर्मा मायोपमतया यथावदियन्त एवालम्ब्यन्त इत्यालम्बनमेकादशविधं ज्ञेयम्। यथोक्तालम्बनक्रमप्रतिपादनग्रन्थपञ्चविंशतिसाहस्रिकायां स्पष्ट एवेति न विप्रतिपत्तिः कार्या। तथाचोक्तम्।

आलम्बनं सर्वधर्मास्ते पुनः कुशलादयः।
लौकिकाधिगमाख्याश्च ये च लोकोत्तरा मताः॥ ४१॥

साश्रवानाश्रवा धर्माः संस्कृतासंस्कृताश्च ये ।
शिष्यसाधारणा धर्मा ये चासाधारणा मुनेः ॥४२॥ इति

ये तु धर्मधातुमेव सदा विशुद्धमद्वयं ज्ञानमालम्बनं मन्यन्ते तैः सदा विशुद्धत्वादुत्तरोत्तरविशुद्धिविशेषगमनं कथमिति वक्तव्यम् ।

"अब्धातुकनकाकाशशुद्धिवच्छुद्धिरिष्यत" ।

इति चेत् । एवन्तर्हि शुद्धं तात्त्विकं ज्ञानमिति प्रतिपक्षाभिनिवेशादर्थाक्षिप्तो विपक्षाभिनिवेशः । अतो विपक्षप्रतिपक्षविकल्पप्रहाणाभावात्प्रादेशिकशुद्धिप्रसङ्गः । ननु च त्वत्पक्षे सर्वाकारज्ञतायाः सुभूतेऽभाव आलम्बनमित्यालम्बननिष्ठा कथमिति चेत् । अदोषः । "यतो न्यायानुयायी भावो नास्तीत्यभावस्तथा संवृतिरुच्यते । तस्याश्च प्रच्छादिततत्त्वरूपायाः क्रमेण मायोपमत्वप्रतीतिरेव शुद्धिः । एवञ्च कृत्वा प्रकृतिप्रधानं गोचम् । विकृतिप्रधानमालम्बनमुभयं तूभयचाप्रतिषिद्धमित्याधारालम्बनयोर्लक्षणभेदः । बहुवक्तव्यं चालम्बनव्यवस्थानमित्यलं प्रसङ्गेने"त्यार्यविमुक्तिसेनः । आलम्बनानन्तरमेवालम्बनप्रतिपत्तेर्बोधिसत्त्वस्य कः समुद्देशः । इति समुद्देशार्थमाह । यत्पुनरित्यादि (p. 18, 10) । केन कारणेन केन प्रयोजनेन बोधिसत्त्वः सन्महासत्त्व इत्युच्यते । उत्तरमभिधातुमाह । महत इत्यादि । महतः सत्त्वराशेरित्यपरिमितस्य सत्त्वसमूहस्य सामान्येनाभिधानम् । एकोऽप्यनादिसंसारप्रवृत्तिमहत्त्वेन महान् भवेदिति राशिग्रहणम् । सत्त्वनिकायस्येति प्रतिपन्नकफलस्थनिकायादिभेदेन विजा-

तीयव्यावृत्त्या सत्त्वसामान्यात् सत्त्वसभागसङ्गृहीतस्य विशेषेणाभिधानम् । अग्रतां कारयिष्यतीति (p. 18, 12) । सर्वसत्त्वाग्रताचित्तमहत्त्वं तदुद्देशेन प्रवृत्तत्वादधिगम्य पश्चात्तत्प्राप्तुकामानां सत्त्वानामग्रतां धर्मदेशनादिना निष्पादयिष्यति । तेनार्थेनेति । तेन कारणेन बोधिसत्त्वो महत्सत्त्वं चित्तमस्येति महासत्त्व इति । चित्तमहत्त्वे सति प्रहाणं महदिति । प्रहाणमहत्त्वप्रतिपादनाय गुर्वायत्ततयाऽनुज्ञामार्गणं प्रत्याह शारिपुत्रो ममापीत्यादि । सोऽर्थो मम भगवन् प्रतिभासते । येनार्थेन बोधिसत्त्वः सन्महासत्त्व इत्युच्यते इति वाक्यार्थः । न केवलं भगवत इत्यपि शब्दः । अनुज्ञातार्थमाह । प्रतिभात्वित्यादि (p. 19, 1) । यस्यार्थस्य कथनायेदानीं साम्प्रतमवसरं कालं मन्यसे । सोऽर्थः प्रतिभातु सम्यगभिमुखीभवतु । लब्धानुज्ञो महत्या इत्याद्याह । तत्राहङ्काराधारार्थेनात्मा । आहितोऽहङ्कार एतस्मिन्निति कृत्वा । सीदनात्मकत्वात् सत्त्वो जीवितेन्द्रियवशेनानिकायसभागापरिसमाप्तेर्वर्तत इति जीवः । पुनः पुनर्गतिषु लीयत इति पुद्गलः । आविर्भवतीति भवः । तिरोभवतीति विभवः । नास्तीदानीमभूत्पूर्वमित्युच्छेदः । अस्ति यत्स्वभावेन न तन्नास्तीति शाश्वतः । आत्मात्मीयाकारेण पञ्चस्कन्धदर्शनं स्वकायः । एवमाद्यानां दृष्टीनामिति । यथोक्तदृष्टिप्रमुखानां मिथ्याशीलव्रतपरामर्शादिदृष्टीनामात्मादिधर्मसन्तीरणाकाराभिनिवेशस्वभावानां प्रहाणाय सवासनपरित्यागाय धर्मं देशयिष्यति । प्रहाणाधिगममहत्त्वं प्राप्येति भावः ।

अन्यथा परोक्षोपेयतत्त्वस्य "तदाख्यानं हि दुष्करम्"। इतिशब्दस्तस्मादर्थे रागाद्यशेषदोषप्रहाणे विशिष्टोऽधिगम इत्यधिगममहत्त्वं तथैवाह। बोधिसत्त्वो महासत्त्व (p. 19, 5) इति भगवन्नुच्यते। यदपीत्यादिना न केवलमन्यदित्यपिशब्दः। बोधिचित्तमिति बोध्यर्थं चित्तं प्रणिधिप्रस्थानात्मकं चित्तमिति यावत्। सर्वज्ञताप्रवणं चित्तं सर्वज्ञताचित्तमाधिमोक्षिकमधिमुक्तिचर्याभूमिसङ्गृहीतम्। निर्विकल्पकलोकोत्तरज्ञानप्रतिवेधादनास्रवं चित्तं शुद्धाध्याशयिकं सप्तसु प्रयोगभूमिषु निर्निमित्तानाभोगवाहित्वेनासमं चित्तं वैपाकिकमष्टम्यादौ। असमैर्बुद्धैः समं तुल्यं चित्तमसमसमं चित्तं सर्वावरणवर्जितं बुद्धभूमिगतम्। अथवानुत्पादरूपबोधिस्वभावीभूतं चित्तं बोधिचित्तम्। तदेव च योगिसंवृत्या आदर्शादिज्ञानसम्बन्धेन कथञ्चिद्व्यावृत्त्या सर्वज्ञताचित्तमित्यादि चतुर्धा व्यपदिश्यते। सर्वमप्येतदसाधारणमगम्यं सर्वश्रावकप्रत्येकबुद्धानाम्। तत्राप्येवंविधे चित्ते महार्थत्वात् पक्षपातार्हेऽसक्तोऽनभिनिविष्टोऽपर्यापन्नोऽस्थित इत्यनेनाधिगममहत्त्वमावेदितम्। सुतरामन्यत्रेत्यपिशब्दः। अनभिनिविश्यास्थित्वा च भावनानुपपत्तेः कथं ह्ययमेतदिति तत्कस्य हेतोरि(p. 19, 12)त्याशङ्क्याह। तथाहीत्यादि। यस्मात्तदनन्तरोक्तं सर्वज्ञताचित्तं पूर्वोक्तसर्वचित्तोपलक्षणपरं सक्तिप्रतिपक्षभूतमनास्रवं स्थितिपक्षभूतमपर्यापन्नं तस्मान्मायापुरुषस्येव भावनेति भावः। तद्यदपीत्यादिनिगमनमनास्रवत्वेऽपि वस्तुसद्भावादनभिनिवेशादिरयुक्त इत्याह। केन कारणे-

नेत्यादि । उत्तरार्धमाह । अचित्तत्वादिति (p. 19, 17) तत्त्वेनानुत्पन्नत्वात् । शारिपुत्र आहेत्यारभ्य (p. 19, 20) यावदग्रतायां निर्दिष्टो निर्दिशसीति (p. 20, 8) व्याख्यातम् । अर्थान्तरप्रसङ्गेनागतत्वात् पुनरुक्तिदोषो न भवति । तथा चाहाचार्यदिङ्नागः ।

आवर्त्यते स एवार्थः पुनरर्थान्तराश्रितः । इति

"तदेवमजितं जयोद्देशसाधर्म्येण त्रिविधः प्रतिपत्त्युद्देशो बोधिसत्त्वस्य निर्दिष्टो वेदितव्यः । आलम्बनादुद्देशस्य को विशेषः । तादात्विकमालम्बनं समीपवर्ति । आमुत्रिक-विप्रकृष्टस्तूद्देशः । शरसन्धानलक्ष्यवेधसाधर्म्येणे" त्यार्य-विमुक्तिसेनः । तथाचोक्तम् ।

सर्वसत्त्वाग्रता चित्तप्रहाणाधिगमत्रये ।
त्रिभिर्महत्त्वैरुद्देशो विज्ञेयोऽयं स्वयम्भुवाम् ॥ ४३ ॥

इति

उद्देशानन्तरमिदानीं तन्निष्पत्तये प्रतिपत्तिर्वक्तव्या । सा च त्रिसर्वज्ञताविषये सामान्येन शुक्लधर्माधिष्ठाना । सर्वाकाराभिसम्बोधादौ चतुर्विधेऽभिसमये प्रत्यभिसमयं षट्-पारमिताधिष्ठाना च क्रिया प्रतिपत्तिः । न धर्मकायाभिसमये फलत्वेन तत्र क्रियाऽसम्भवात् । तत्र "सन्नाह-प्रस्थानप्रतिपत्ती यथासंख्यं पारम्पर्येण साक्षात्प्रयोग-स्वभावे सम्भाराधिमुक्तिचर्याभूमिसङ्गृहीते । सम्भारप्रति-पत्तिर्दयामारभ्य धारणीपर्यन्तेन साक्षात्प्रयोगमार्गस्व-भावाधिमात्राग्रधर्मसङ्गृहीता । प्रथमप्रमुदिताभूमिस्वभावा सम्भारप्रतिपत्तिदर्शनमार्गात्मिका । द्वितीयादिभूमिस्वरूपा

भावनामार्गस्वभावा प्रतिपक्षात्मिका च सम्भारप्रतिपत्ति-रुभयमार्गगोचरा। निर्याणप्रतिपत्तिर्भावनामार्गाधिष्ठाने" त्यार्यासङ्गः। एवं प्रयोगदर्शनभावनामार्गस्वभावानां प्रतिपत्तिलक्षणानां सन्नाहप्रस्थानसम्भारनिर्याणानां मध्ये वीर्यरूपतया सन्नाहप्रतिपत्तिं प्रथमां दर्शयितुमाह। अथ खल्वायुष्मानित्यादि (p. 20, 9)। पूर्णो मैत्रायणीपुत्र इति पूर्णस्यैव मैत्रायणीपुत्र इति संज्ञान्तरमथवा मैत्रायण्याः स्वमातुः पुत्रो मैत्रायणीपुत्रः। यदिदमिति। अनन्तरमिदं यद्वस्तु। महासन्नाहसन्नद्ध इति सन्नाहप्रतिपत्त्या युक्तः। सा चेयमर्थाक्षिप्ता सन्नाहप्रतिपत्तिः। यदुत दानपारमितायां चरतो बोधिसत्त्वस्य धर्मदानादिदानात् दानपारमितासन्नाहः। तस्यैव श्रावकादिमनस्कारपरिवर्जनाच्छीलपारमितासन्नाहः। तस्यैव सर्वाकारज्ञता धर्माणां क्षमणरोचनव्युपपरीक्षणसर्वजनाप्रियवादित्वसहनात् क्षान्तिपारमितासन्नाहः। तस्यैवोत्तरोत्तरकुशलमूलाभिवृद्ध्यर्थं छन्दादिजननाद्वीर्यपारमितासन्नाहः। तस्यैव यानान्तराव्यवकीर्णचित्तैकाग्रतया तत्कुशलमूलानुत्तरसम्यक्सम्बोधिपरिणामालम्बनाद्ध्यानपारमितासन्नाहः। तस्यैव मायाकारसंज्ञोपस्थानेन देयदायकप्रतिग्राहकानुपलम्भात् प्रज्ञापारमितासन्नाह इत्येवमिदं प्रथमं सन्नाहप्रतिपत्तेर्दानपारमिताषट्कम्।

एवं तस्यैव शीलपारमितायां चरतो द्वितीयं, क्षान्तिपारमितायां तृतीयं, वीर्यपारमितायां चतुर्थं, ध्यानपारमितायां पञ्चमं, तस्यैव प्रज्ञापारमितायां चरतः

षष्ठमिति। एवमेते षट् षट्का भवन्ति। सन्नाहानां षट् साधर्म्याद्दानादिसाधर्म्याच्च षट् सन्नाहप्रतिपत्तयोऽभिधीयन्ते। पञ्चविंशतिसाहस्रिकायाञ्च सन्नाहप्रतिपत्तिप्रतिपादने दानादयः षट् षट्काः स्पष्टमुपलभ्यन्त एवेति न विप्रतिपत्तिः कार्या। तत्रादौ भोगनैरपेक्ष्याच्छीलसमादानं करोति। शीलानुरक्षी क्षमो भवति। खेदसहिष्णुरारब्धवीर्यः। कौशीद्यविगमाद्ध्यानं निष्पादयति। सम्पन्नध्यानो लोकोत्तरां प्रज्ञां प्रतिलभत इत्येवं दानादीनामधिगमानुसारेण निर्देशोऽतिप्रतीत इत्ययमेव क्रमः।

तथाचोक्तम्।

दानादौ षड्विधे तेषां प्रत्येकं सङ्ग्रहेण या।
सन्नाहप्रतिपत्तिः सा षड्भिः षट्कैर्यथोदिता ॥ ४४ ॥

इति

कृतसन्नाहस्यैवं प्रस्थानमिति प्रस्थानप्रतिपत्तिं द्वितीयां कथयन्नाह। महायानसंप्रस्थितो महायानसमारूढश्चेति। यानशब्दस्य कर्मकरणसाधनत्वादादौ प्रस्थानप्रतिपत्त्या महायाने हेतुफलात्मके धर्मे सम्प्रस्थितः। पश्चादुत्तरोत्तरविशेषाधिगमान् महायानसमारूढ इति पदद्वयम्। सा चेयमर्थाक्षिप्ता प्रस्थानप्रतिपत्तिः। यदुतादौ चित्तस्थिरीकरणात्स्वाकारलिङ्गनिमित्तैर्ध्यानारूप्यसमापत्तिव्यवस्थानं प्रस्थानं भवति। ततः स्थिरीभूतचित्तस्य पुण्यज्ञानाभ्यास इति। देयदायकप्रतिग्राहकादित्रिमण्डलविशुद्धा षट्पारमिताप्रस्थानम्। ततः सम्भृतपुण्यज्ञानस्य तत्त्वाधिमोक्ष इति दर्शनभावनाऽशैक्षविशेषमार्गस्वभावार्यमार्गप्रस्थानम्। ततो धर्मताप्रवणस्य यथा-

ग्रयं परार्थ इति मैत्र्यादिचतुरप्रमाणप्रस्थानम्। ततः परार्थप्रवृत्तस्योपलम्भो बन्धनमित्यनुपलम्भयोगप्रस्थानम्। ततो निःस्वभावयोगवतः कथं प्रवृत्तिरिति कर्मकर्तृक्रियानुपलम्भेन मायापुरुषस्येव सर्वत्र त्रिमण्डलविशुद्धिप्रस्थानम्। तत एवं परिशुद्धचारिणः स्वसाध्ये यत्न इति सर्वसत्त्वाग्रताचित्तमहत्त्वादित्रिविधोद्देशप्रस्थानम्। ततः कृतोद्देशप्रयत्नस्य परचित्तपरिज्ञानादौ वीर्यमिति दिव्यचक्षुरादिषडभिज्ञाप्रस्थानम्। ततः प्राप्ताभिज्ञस्य बुद्धत्वोत्साह इति सर्वाकारज्ञता प्रस्थानं भवति एवमधिगमानुक्रमेण नवधैव सम्यग्व्यवस्थितिलक्षणसमस्तमहायानधर्माक्रमणस्वभावा प्रस्थानप्रतिपत्तिः। पञ्चविंशतिसाहस्रिकायाञ्च यथोक्तप्रतिपत्तिप्रतिपादको ग्रन्थो ग्रन्थप्राचुर्यान्नेह ज्ञापकत्वेन लिख्यते।

तथाचोक्तम्।

ध्यानारूप्येषु दानादौ मार्गमैत्र्यादिकेषु च।
गतोपलम्भयोगे च त्रिमण्डलविशुद्धिषु ॥ ४५ ॥
उद्देशे षड्स्वभिज्ञासु सर्वाकारज्ञतानये।
प्रस्थानप्रतिपज्ज्ञेया महायानाधिरोहिणी ॥ ४६ ॥

इति

तस्मादिति। सन्नाहप्रस्थानप्रतिपत्तिभ्यां युक्तत्वात्। सञ्ज्ञामिति (p. 20, 12) व्यपदेशम्। एतदुक्तम्। "यस्मात् सन्नाहप्रस्थानप्रतिपत्तिभ्यां युक्तः तस्मान्महासत्त्वव्यपदेश" इति। कृतप्रस्थानस्यैवं सम्भार इति सम्भारप्रतिपत्तिस्तृतीया सप्तदशप्रकारा वक्तव्या।

तथाचोक्तम् ।

दयादानादिकं षट्कं शमथः सविदर्शनः ।
युगनद्धश्च यो मार्ग उपाये यच्च कौशलम् ॥ ४७ ॥
ज्ञानं पुण्यञ्च मार्गश्च धारणी भूमयो दश ।
प्रतिपक्षश्च विज्ञेयः सम्भारप्रतिपत्क्रमः ॥ ४८ ॥ इति

अतस्तां प्रतिपादयितुं प्रश्नयन्नाह । सन्नद्ध इत्यादि । कियतेति कियत्सङ्ख्यावच्छिन्नेनार्थान्तरेण धर्मेण युक्त इत्यध्याहार्यम् । यतः सन्नाहप्रतिपत्त्या करुणादिसम्भारेण च युक्तो महासन्नाहसन्नद्ध इति । पञ्चविंशतिसाहस्रिकायां भगवता व्याख्यातम् ।

तत्रार्थाक्षिप्तसन्नाहप्रतिपत्त्या युक्तो महासन्नाहसन्नद्ध इत्यानन्तरमावेदितमधुना करुणादिसम्भारेणेत्यदोषोऽध्याहारपदस्यार्थं विसर्जयन्नाह । इहेत्यादि (p. 20, 10) । इहेति वाक्योपन्यासे । एवं भवतीति । एवञ्चित्तमुत्पद्यते । तदेवाह । अप्रमेया इत्यादिना । प्रत्यक्षादिप्रमाणेन प्रमातुमशक्यत्वादप्रमेयाः । यथाशयं यानत्रयनिर्वाणप्रापणात्परिनिर्वापयितव्याः । असङ्ख्येया इत्येकत्वादिसङ्ख्यारहिताः । एतदुक्तं "कृपया विहीनस्यानुपायवतः परेषां क्वचिदप्रतिष्ठापनेन निर्वपणासम्भवादिदमर्थादाक्षिप्तं भवति । करुणया पीड्यमानस्य दानादिभिः षड्भिः पारमिताभिरुपायभूताभिरनुगृह्य दानपारमितया तदात्वसुखोपसंहारेण शीलपारमितयाऽयतिसुखोपसंहारेण सहिष्णोरुत्साहिन एकाग्रचित्तस्यैकान्तिकफलप्राप्तिमुपादाय क्षान्तिवीर्यध्यानपारमिताभिरैकान्तिकसुखोपसंहारेण

प्रज्ञापारमितयाऽत्यन्तिकसुखोपसंहारेण चात्मनः षट्पारमितास्ववस्थानवत्तच समादापननिवेशनप्रतिष्ठापनैर्विक्षेपात्प्रतिष्ठापयितव्या मये"ति । एवञ्च सप्तसम्भारा निर्दिष्टा भवन्ति । यदुत करुणासम्भारो दानसम्भारः शीलसम्भारः क्षान्तिसम्भारो वीर्यसम्भारो ध्यानसम्भारः प्रज्ञासम्भार इति । तत्रापि समाधिलाभात् कर्तृकर्मोपलम्भो नास्तीत्याह । न च ते सन्तीत्यादि । एवं तर्ह्यनुपलम्भ इत्याह । स तानित्यादि । स करुणादिसम्भारेण युक्तो बोधिसत्त्वो ऽप्रमेयांस्तावतो ऽसङ्ख्येयांस्तान् सत्त्वान् परिनिर्वापयति संवृत्या । यद्येवमुपलम्भस्तर्हि प्राप्त इत्याह । न चेत्यादि । परमार्थतो ऽनुपलम्भादिति भावः । कथं पुनरेकस्योपलम्भानुपलम्भाविति । तत्कस्य हेतोरित्याशङ्क्याह । धर्मतैषेत्यादि । यथा मायाधर्मता यथादर्शनं सत्या, न्यायेनासंघटनादसत्या । अतस्तां तर्कविस्यन्दासन्दूषितां सार्वलौकिकीमाभासमात्रगमनतां दृष्टान्तत्वेनोपादाय गृहीत्वा तथाधर्माणां रूपादीनामेषा धर्मता । भिन्नविषयव्यावृत्त्यपेक्षा प्रकल्पितत्वेनोपलम्भानुपलम्भस्वभावाऽविरुद्धा स्याद्भवेत् । एकविषयव्यावृत्त्यपेक्षोभयधर्मकल्पनायां दोष इति भावः । एतच्च द्वयमन्योन्यविपर्यासनिराकरणायाभिहितं न तत्त्वतो यथोक्तं प्रागित्यनेन शमथसम्भारो निर्दिष्टः । प्राप्तशमथस्य विदर्शनेति विदर्शनासम्भारमाह । यथापीत्यादिना (p. 21, 1) । दक्षो निपुणः । मायाकारान्तेवासी तच्छिष्यः । मुख्यतो मायानिर्माणस्थानत्वाच्चतुर्महापथग्रहणम् । जनकायं सत्त्व-

समूहम्। अभिनिर्मिमीते निर्माणं करोति। अन्तर्धान-मित्युपसंहारम्। तदनन्तरोक्तमर्थजातम्। तत् किं मन्यसे किं बुध्यस इति सामान्येन प्रश्नं कृत्वा। अथैवं मन्यस इत्याह। अपि न्वित्यादि। अपिशब्दः सम्भावनायामेव-मित्यर्थे नुशब्दः। तत्र तस्मिन् जनकायमध्ये। केनचिन्माया-कारादिना कश्चिद्देवदत्तादिर्हत आयुषो दुर्बलप्रयोगात्। मृतः सर्वथोच्छेदात्। नाशितः कायस्यापचयप्रयोगात्। अन्तर्हितो ऽदृश्यत्वापादनादिति मन्यसे। तत्त्वतो धर्मिणो ऽसत्त्वादेतत् सर्वं न सम्भवति। यथादर्शनं तु भवत्येवेति भावः। विदिताभिप्रायत्वेनाह। नो हीदमिति। तत्त्वत इति शेषः। प्रसाधितदृष्टान्तार्थमभिमतार्थं योजयन्नाह। एव-मित्यादि (p. 21, 7)। विस्तरेण निर्दिश्यैवमुपसंहरन्नाह। स चेदित्यादि। इममित्यनन्तरम्। एवमिति संवृति-परमार्थसत्यानतिक्रमेण। यदुक्तं क्रियतेति तस्य परिहारा-दियतेति वचः। एतदुक्तमियता करुणादिसम्भारेणापि योगान्महासन्नाहसन्नद्धव्यपदेश इति। विदर्शनया शून्यता-लम्बनेन श्रावकादिबोधौ पातादतोऽनन्तरं युगनद्ध-सम्भारमाह। यथाहमित्यादिना (p. 21, 13)। भगवतो भाषितस्येति। धर्मतैषा सुभूते धर्माणामित्यादि। वतशब्दोऽवधारणे। एवं मन्यते येन प्रकारेण माया-धर्मस्य व्यापित्वेन भगवतो भाषितस्य धर्मतैषेत्यादेरर्थ-माजानामि। तेन प्रकारेण मायाधर्मतानभिनिवृत्ते-रसन्नाहसन्नद्ध एवायं बोधिसत्त्व इति। अविपरीतत्वेना-भ्युपगमादाह। एवमेतदित्यादि। ननु विदर्श-

नया सर्वाकारज्ञता गगनगञ्जादिसमाधिभिश्च सत्त्वार्थप्रतिसन्नद्धोऽपि कथमसन्नद्ध इति। तत्कस्य हेतोरित्याशङ्क्याह। अकृता ही(p. 21, 17)त्यादि। न्यायेन कारकहेतोरभावादकृता। विनाशहेतोरसत्त्वेनाविकृता। उभयसहकारिप्रत्ययानुपपत्तेरनभिसंस्कृता। अभूतप्रादुर्भावं तद्विशेषगमनं फलप्राप्तिसंमुखीकरणं चाधिकृत्य यथाक्रमं वा त्रीणि पदानि। युक्त्युपेतत्वेनाभ्युपगमादाह। एवमेतदित्यादि। ननु बन्धमोक्षसद्भावे कथमेवमेतदकृतादिकमिति। तत्कस्य हेतोरिति। (p. 21, 21) कस्यचिच्चोद्यमाशङ्क्याह। तथाहीत्यादि। अन्यथाऽभ्युपगम्य विचारायोगादसङ्गतमेतत्स्यात्। एवमन्यत्रापि वक्तव्यम्। अध्यारोपिताकारप्रवृत्तत्रैधातुकचित्तचैत्तकल्पनया बन्धाभावादबद्धं रूपम्। यथोक्तकल्पनाविकल्पनाविवेकेन मोक्षाभावाच्चामुक्तम्। तत्त्वतो रूपादीनामसत्त्वात्। धर्मस्य तर्हि बन्धमोक्षौ भवत इत्याह। रूपतथतापीत्यादि (p. 22, 2)। धर्म्यभावे धर्मतानुपपत्ते रूपादिशून्यता न बद्धा न मुक्ता। यथादर्शनं तु रूपादितत्तथतयोर्बन्धमोक्षौ भवत इति भावः। सुभूत्यभिप्रायानवगमाच्चोद्यद्वारेणाह। रूपमित्यादि। पृच्छतोऽयमभिप्रायः। रूपादितत्तथताऽबद्धा ऽमुक्तेति वदसि। नैवं वक्तव्यं सामान्येन प्रत्यक्षादिबाधोपनिपातादिति। अथ विशेषेण स तर्हि वक्तव्य इत्याह। अथ कतमत्तदि(p. 22, 9)त्यादि। विचारविमर्दासहिष्णुत्वेन बुद्धबोधिसत्त्वादिरेव मायापुरुष इत्यभिप्रायवान् सामान्येनाह। यदायुष्मन् पूर्ण मायापुरुषस्येत्यादि (p. 22, 16)। कथमेवं

प्रत्यक्षत्वादिबाधोपनिपातो न भवतीति। तत्कस्य हेतोरित्याशङ्क्याह। असद्भूतत्वादि(p. 23, 1)त्यादि। न्यायेन कल्पितस्य रूपादेरसद्भूतत्वादलीकत्वाद्विकल्पितस्य विविक्तत्वात् स्वरूपविरहाद्धर्मतास्वभावस्यानुत्पन्नत्वादजातत्वादबद्धाऽमुक्तेत्येके। प्रत्यक्षानुमानागमप्रमाणैरप्रतिभासमानतत्त्वोत्पत्त्यादिनिराकरणादसद्भूतत्वादिपदचयमित्यपरः।

निर्भासते हि यद्रूपं नैव तत् प्रतिषिध्यते।
वेद्यमानस्य नो युक्तं कस्यचित्प्रतिषेधनम्॥

इति न्यायाद्यथादर्शनं बन्धमोक्षस्य व्यवस्थापनात् कुतः प्रत्यक्षादिबाधेति भावः। अयमित्याद्युपसंहारः। महासन्नाहो ऽसन्नाह इति यथाक्रमं कृपाप्रज्ञाबलात्। संवृतिपरमार्थयोरिति शेषः। निरुत्तरस्तूष्णीं स्थित इत्याह। एवमित्यादि। ननु शमथविदर्शनयोर्विरुद्धत्वात् कथमेकत्र सम्भव इति चेत्। नैवं, तथाहि यदा शमथेनालम्बने चित्तं स्थिरीकृतं भवति। तदा प्रज्ञया विचारयतः सम्यग्ज्ञानालोकोत्पादादन्धकारमिवालोकोदये सत्यावरणमपहीयते। अत एवानयोश्चक्षुरालोकवत्सम्यग्ज्ञानोत्पादं प्रत्यन्योन्यानुगुण्येनावस्थितत्वान्नालोकान्धकारवत् परस्परं विरोधः। नहि समाधिरन्धकारस्वभावः। किन्तर्हि चित्तैकाग्रतालक्षणः। स च समाहितो यथाभूतं प्रजानातीति वचनादेकान्तेन प्रज्ञानुकूलत्वादविरुद्ध इति युगनद्धमार्गसम्भारान्वितस्योपायकौशलादिकमित्युपायकौशलादिसम्भारप्रतिपादनाय प्रश्नं कर्तुमुपोद्घातयन्नाह। एवं भगवन्नित्यादि। एवं प्रागुक्तक्रमेण महासन्नाहसन्नद्धः सन्महायानसंप्रस्थितो भवतीति

यदुच्यते। "तत्र महायानं न ज्ञायत इति प्रज्ञाकरुणाप्रयोगः। तयोरन्यतराव्यतिरेकं विपक्षातिक्रममवस्थाननिश्चयं प्रतिपक्षप्रयोगप्रश्रब्धिमधिगन्तारं चाधिकृत्य यद्यथा यतो येन यत्र यो निर्यास्यतीति कतमदित्यादिव्यपदेशेन षट्प्रश्ना" इत्यार्यविमुक्तिसेनः। तत्रोपायकौशलादिसम्भारान् प्रतिपादयितुं प्रथमं प्रश्नं विसर्जयन्नाह। महायानमित्या(p. 23, 17)दि।

पञ्चधर्माः स्वभावश्च विज्ञानान्यष्ट एव च।
द्वे नैरात्म्ये भवेत्कृत्स्नो महायानपरिग्रहः॥

इत्यार्यलङ्कावतारवचनेऽपि सम्भारप्रकरणबलादप्रमेयताया, उपायकौशलादिसम्भारात्मिकाया महायानमित्येतदधिवचनं मुख्यतो व्यपदेशः। कथं पुनरुपायकौशलादिसम्भारोऽप्रमेय इत्याह। अप्रमेयमित्यादि। प्रत्यक्षादिप्रमाणापरिच्छेदेन यथोक्तमेव वस्त्वप्रमेयम्। एतदुक्तम्। युगनद्धमार्गसम्भारवतः सर्वाकारज्ञताप्रतिसंयुक्तैर्मनसिकारैः सत्त्वार्थकरणादुपायकौशलसम्भारः। विदितोपायकौशलस्य ज्ञानाभ्यास इति ज्ञानसम्भारः। स पुनरध्यात्मादिशून्यताभेदेन विंशतिविधो वेदितव्यः। तत्रेयं विंशतिविधा शून्यता। यदुताध्यात्मिकानां चक्षुरादीनामकूटस्थाविनाशितां प्रकृतिमुपादायाध्यात्मशून्यता॥१॥ बाह्यानां रूपादीनां तथाप्रकृतिमुपादाय बहिर्धाशून्यता॥२॥ आध्यात्मिकबाह्यानामायतनानां तथाप्रकृतिमुपादायाध्यात्मबहिर्धाशून्यता॥३॥ तत्राध्यात्मिकमायतनं यदिन्द्रियरूपसङ्गृहीतम्। बाह्यं यद्विषय-

रूपसङ्गृहीतम् । आध्यात्मिकबाह्यं यदिन्द्रियाधिष्ठानसङ्गृहीतम् । तद्ध्याध्यात्मिकञ्च चित्तेनोपात्तत्वाद्बाह्यञ्चानिन्द्रियसङ्गृहीतत्वात् । एतच्च शून्यताचयमधिमुक्तिचर्याभूमौ । सर्वधर्मशून्यतया शून्यताया आध्यात्मादिशून्यतालम्बनज्ञानस्वभावाया अपि शून्यत्वेन शून्यताशून्यता सर्वधर्मशून्यताज्ञानमत्र सर्वधर्मशून्यता तेन च शून्यता शून्या । तस्य ग्राहकविकल्पप्रहाणादियं प्रयोगमार्गे ॥ ४ ॥ दशानां दिशां दिग्भिः शून्यत्वेन महाशून्यता । तासां महासन्निवेशत्वादियं सर्वत्रगार्थेन प्रथमायां भूमौ ॥ ५ ॥ परमस्य निर्वाणस्य निर्वाणार्थरूपशून्यत्वेन परमार्थशून्यता तस्य विसंयोगमात्रत्वादियमग्रार्थेन द्वितीयायाम् ॥ ६ ॥ संस्कृतस्य त्रैधातुकस्य कामादिधातुशून्यत्वेन संस्कृतशून्यता । तस्यापरिनिष्पन्नस्वभावत्वेन शक्यप्रतिपक्षत्वात् । इयं निष्यन्दाग्रार्थेन तृतीयायाम् ॥ ७ ॥ असंस्कृतस्यानुत्पादानिरोधानन्यथात्वस्य तेन शून्यत्वादसंस्कृतशून्यता । अनुत्पादादीनामुत्पादादिप्रतियोगिप्रज्ञप्तिनिमित्ताभावात् । इयं निष्परिग्रहार्थेन चतुर्थ्याम् ॥ ८ ॥ अन्तस्यान्तेन शून्यत्वादतीतान्तत्वेनात्यन्तशून्यता । अन्तोभागस्तत्रोच्छेदशाश्वतान्तयोर्मध्ये न तदस्ति किञ्चिद्येन तयोर्भागव्यवच्छेदनिमित्तत्वेन स्वभावो व्यवस्थाप्येत । इयं सन्तानाभेदार्थेन पञ्चम्याम् ॥ ९ ॥ आदिमध्यापर्यवसानानान्तैः शून्यत्वेनानवराग्रशून्यता । आद्यादीनां धर्मतानुस्यूतत्वेनात्यन्तिकत्वादियं निःसंक्लेशविशुद्ध्यर्थेन षष्ठ्याम् ॥ १० ॥ अवकिरणच्छोरणोत्सर्गलक्षणस्यावकारस्य विपर्ययेणानवकारस्तस्य तेन शून्यत्वादनवकारशून्यता । अवकिरणादेरक्रिया-

रूपत्वेनानुत्सर्गप्रज्ञप्तिनिमित्तत्वायोगादियमनानात्वार्थेन सप्तम्याम्॥ ११॥ सर्वार्यैरकृता प्रकृतिस्तस्यास्तया शून्यत्वात्प्रकृतिशून्यता। तस्याः संस्कृतासंस्कृतविकाराविकारानापत्तेः॥ १२॥ धर्मस्य धर्मेण शून्यत्वात् सर्वधर्मशून्यता। सर्वधर्माणां संस्कृतासंस्कृतराश्योरितरेतरापेक्षत्वेन स्वभावापरिनिष्पन्नत्वात्॥ १३॥ एतच्च शून्यताद्वयमहीनानधिकार्थेन निर्विकल्पक्षेत्रपरिशुद्धिवशिताद्वयाश्रयत्वेन च फलभूमित्वात् प्रतिवेधपरिकर्मभेदेनाष्टम्याम्। रूपणादिलक्षणस्य रूपादेस्तल्लक्षणशून्यत्वाल्लक्षणशून्यता। लक्षणव्यवस्थानस्य सामान्यविशेषप्रज्ञप्तिमात्रत्वात्॥ १४॥ अतीतादीनां धर्माणामतीतादिष्वध्वस्वितरेतरविपर्ययानुपलभ्यत्वेनानुपलम्भशून्यता। अध्वनां भावप्रज्ञप्तिमात्रत्वात्॥ १५॥ एतच्च शून्यताद्वयं ज्ञानवशिताश्रयत्वेन तथैव नवम्याम्। नास्ति सांयोगिकस्य धर्मस्य स्वभावः प्रतीत्यसमुत्पन्नत्वादिति संयोगस्य तेन शून्यत्वादभावस्वभावशून्यता सामग्रीमात्रं भाव इति कृत्वा॥ १६॥ भावस्योपादानस्कन्धलक्षणस्य तेन शून्यत्वाद्भावशून्यता। राश्यर्थो हि स्कन्धार्थो राशिश्चापदार्थत्वान्नोपादानलक्षणस्य भावस्य निमित्तं भवितुमर्हतीति कृत्वा॥ १७॥ एतच्च शून्यताद्वयं कर्मवशिताश्रयत्वेन पूर्ववद्दशम्याम्। अभावस्यासंस्कृतस्य शून्यतादेस्तेन शून्यत्वादभावशून्यता वस्तुधर्मेणावरणादिना तत्प्रज्ञप्तेः॥ १८॥ स्वभावस्य शून्यताख्यस्यार्याणां ज्ञानेन दर्शनेन वाकृतकत्वात् स्वभावशून्यता। ज्ञानदर्शनस्य यथाभूतार्थद्योतकत्वात्॥ १९॥ उत्पादाद्वा तथागतानामनुत्पादाद्वा स्थितैवैषा धर्माणां धर्मतेति परेण

कर्त्री शून्यत्वात् परभावशून्यता। शून्यताधिष्ठानो हि पुरुषव्यापारः केवलं विघातायेति कृत्वा ॥ २० ॥ एतच्च शून्यतात्रयं यथाक्रमं सवासनक्लेशावरणप्रहाणाश्रयत्वेन सवासनज्ञेयावरणप्रहाणाश्रयत्वेन स्वयम्भूत्वार्थेन च बुद्ध-भूमौ वेदितव्यम्। अनया तु दिशा प्रकरणानामानु-पूर्वीविकलानां प्रकरणार्थो वाच्यः। "ये हि परप्रतिषेध-मुखेन शून्यतामेव केवलं वर्णयन्ति। न त्वेषामभिसमयानु-पूर्वी काचिदस्तीति तेषां प्रकरणार्थ एव वाच्यो न मुख्यः शास्त्रार्थ इत्यनेन शून्यताप्रकरणानां गतगन्तव्यानुपूर्वी-वैकल्यादुद्देशभ्रंशसम्भव" इत्यार्यविमुक्तिसेनः। किं पुनरिदं निर्विकल्पकं ज्ञानमालम्बते शून्यतामित्येके। सर्वधर्माणां स्वभावशून्यतालम्बनं तदित्यपरे। एतदेव च न्याय्यम्। यद्यज्ज्ञानं तत्तत् सर्वधर्मस्वभावशून्यतालम्बनं तत्त्वेन। तद्यथा स्वप्नेऽश्वादीनां स्वभावशून्यतालम्बनं ज्ञानम्। ज्ञानञ्चेदं निर्विकल्पकं विवादपदमारूढं मन इति स्वभावहेतुः।

"अप्रत्यक्षोपलम्भस्य नार्थदृष्टिः प्रसिध्यति"।

इति नासिद्धो हेतुः। सपक्षभावान्न विरुद्धः। सर्व-धर्माणां तात्त्विकस्वभावस्य पश्चान्निराकरिष्यमाणत्वान्नाप्य-नैकान्तिकः। ननु च यदालम्ब्यते तन्नास्ति। तद्यथा द्विचन्द्रादि। सर्वधर्मस्वभावशून्यतापि चेयमालम्ब्यमाना तथैव नास्तीति सर्वधर्मास्तित्वमापद्यत इति चेददोष एषः। यस्मान्न देवदत्तप्रख्यस्याभावस्यापवादान्तस्य हन्तरि यज्ञदत्तप्रख्ये स्वभावे समारोपान्ते तच्छून्यतया हते पुनः प्रादुर्भाव इति। किञ्चालम्बनं तत्त्वतोऽसिद्धम्।

"संवृत्या संविन्निष्ठा हि विषयस्थितिरिति" विरुद्ध-मित्येवमादिदोषोऽवाच्यः। शून्यतालम्बनपक्षे तु निःस्वभावगोचरं ज्ञानं शून्यतायाश्च संस्कृतत्वं प्रसज्यते। यथाक्रमं ज्ञानतच्छून्यतयोर्भावाभावत्वेन परस्परव्यतिरेकाव्यतिरेकविकल्पात्। आदर्शादिज्ञानभेदेन तु पुनर्बहुवक्तव्यज्ञानसम्भारव्यवस्थानामेषा दिक् प्रभेदश्च प्रसङ्गादभिहितो न त्विदानीमेव समस्तज्ञानसम्भाराधिगमः परिशिष्टाभिसमयक्रमनिर्देशात्। एवमन्यत्रापीति वेदितव्यम्। ज्ञानाभ्यासवतः प्रज्ञापरिशुद्ध्या सम्यक्समाध्यादिभिः सत्त्वार्थकरणात् पुण्यमिति पुण्यसम्भारः। कृतपुण्यज्ञानाभ्यासस्य वस्तुपरीक्षामार्गादौ यत्न इति मार्गसम्भारः। मार्गान्वितस्याकारो मुखं सर्वधर्माणामाद्यनुत्पन्नत्वादित्यादिना तेन तेनाक्षरविचित्रीकारेणानल्पकल्पधर्मदेशनाहेतोः स्मृतेरपर्युपयोगात् स्मृतिर्हि ग्रन्थार्थधारणेन धारयतीति कृत्वा धारणीसम्भार इति। एतच्चोपायकौशलसम्भारादिपञ्चकं पञ्चविंशतिसाहस्रिकायामपि महायानशब्देन विस्तरतो निर्दिष्टमिति न सन्देहः कार्यः। प्राप्तधारणीकस्योत्तरोत्तराधिगमप्रतिष्ठायोगेन तज्जगुणाधारयोगेन चाधिगमावस्थाविशेषा भूमय इति भूमिसम्भारं प्रतिपादयितुम्। यदपि सुभूते एवं वदसि कथं वा तत्सम्प्रस्थितो वेदितव्य इत्यादि (p. 23, 13) चोद्यवचनं सम्बन्धार्थमुच्चार्योत्तरार्थमाह। पारमिताभिः सम्प्रस्थित इति। दशभूमिसङ्गृहीताभिर्दशभिरतिरिक्ततराभिर्दानादिपारमिताभिः क्रमेण सम्यक् सम्प्रस्थित इति फलनिर्देशाद्भूमिसम्भारः कथितः। एतदुक्तम्। तत्र यदा निरात्मानः

सर्वधर्मा इति । भावनया निरंशत्वात् । सर्वात्मना धर्म-धातोः प्रतिवेधेऽपि निश्चयोत्पादनापेक्षया सर्वत्रगार्थेन प्रतिवेधात् सर्वधर्मनिःस्वभावतासाक्षात्कारि स्फुटतरं ज्ञानमुत्पद्यते । तदा बोधिसत्त्वः सम्यक्त्वन्यामावक्रान्तितो दर्शनमार्गं प्रतिलभते । अत्र च रागप्रतिघमानाविद्या-विचिकित्साः सत्कायान्तग्राहमिथ्यादृष्टिपरामर्शशीलव्रत-परामर्शाश्च कामधातौ चतुःसत्यभेदेन चत्वारिंशद्भवन्त्येवं-रूपारूप्यधातौ त एव चतुःसत्यदर्शनप्रहातव्याष्टप्रकार-प्रतिघवर्जिता द्वासप्ततिः । समुदायेन द्वादशोत्तरं क्लेश-शतं दर्शनप्रहेयं प्रहीयते । सत्यानामेकाभिसमयादतः प्रमुदिताया भूमेः प्रथमः क्षणो दर्शनमार्गः । ततोऽन्ये द्वितीयादयः क्षणा यावद्वज्रोपमाख्य आनन्तर्यमार्गो यस्मादनन्तरं समन्तप्रभा बुद्धभूमिरवाप्यते । सर्वोऽसाव-ग्रार्थेनेत्यादिना धर्मधातोः प्रतिवेधाद्भावनामार्गोऽभि-धीयते । तत्र च षोडशक्लेशा यथासम्भवं क्रमेण प्रहीयन्ते । तद्यथा रागो द्वेषो मानोऽविद्या सत्कायदृष्टिरन्तग्राहदृष्टि-श्चेति कामावचराः षट् । रूपारूप्यावचरास्त एव दश द्वेषवर्जिता इति दर्शनभावनामार्गे परिकर्मधर्मभेदेन प्रमुदितादिदशभूमिव्यवस्थानम् । तत्र च यद्भूमेर्ये परि-कर्मभूता धर्मा यावन्न परिपूर्यन्ते तावत्तद्भूमिः । परि-पूरौ तु भूम्यन्तरं वेदितव्यम् । तत्रेमे परिकर्मभूता धर्माः पञ्चविंशतिसाहस्रिकायां निर्दिष्टाः । तद्यथा सर्वकुशल-मूलसमुदानयनं, सत्त्वार्थे महायानधर्मपरिग्रहः । चतुर-प्रमाणाभिनिर्हरणम् । निर्विकल्पप्रयोगेन सर्वस्वपरि-त्यागः । कल्याणमित्राराधनम् । श्रावकयानादिनिरपेक्ष-

तयाऽशेषसद्धर्मालम्बनपर्येष्टिः। सदा गृहवासानभिरतिः। सर्वथानुत्तरबुद्धकायमनसिकाराविरहः। यथावत्सूत्रादिधर्मप्रकाशनम्। प्रतिज्ञातार्थनिष्पत्तिश्चेत्येभिर्दशभिर्धर्मैः सर्वथोत्पाद्यमानत्वात् परिकर्मभिः कारणविशेषैः स्वभावानुपलम्भतया कृतविशेषलक्षणपरिकर्मभिरेव प्रथमाऽपूर्वधर्मतत्त्वाधिगमेन प्रमोदलाभात् प्रमुदिता भूमिः प्राप्यते।

तथाचोक्तम्।

लभ्यते प्रथमा भूमिर्दशधा परिकर्मणा।
आशयो हितवस्तुत्वं सत्त्वेषु समचित्तता ॥ ४९ ॥
त्यागः सेवा च मित्राणां सद्धर्मालम्बनैषिणा।
सदा नैष्क्रम्यचित्तत्वं बुद्धकायगता स्पृहा ॥ ५० ॥
धर्मस्य देशना सत्यं दशमं वाक्यमिष्यते।
ज्ञेयञ्च परिकर्मैषां स्वभावानुपलम्भतः ॥ ५१ ॥ इति

सर्वथा परिशुद्धं श्रावकप्रत्येकबुद्धमनस्कारपरिवर्जितं कुशलधर्मसङ्ग्राहकं सत्त्वार्थक्रियासंवरशीलम्। परकृतोपकारस्याविप्रणाशनम्। सत्त्वानामन्तिके ऽव्यापादादिचित्तता। सत्त्वपरिपाचनादावविप्रतिसारः। एकसत्त्वस्यापि कृतशो दीर्घकालं नरकादिवासोत्साहः। सर्वजननम्रता। गुरूणामन्तिके तद्वचनानुष्ठानेन शास्तृसञ्ज्ञा। अनन्यकर्मणो दानादिपारमितास्वद्योगपर्येष्टिश्चेत्येवं परिकर्मणा पूर्ववत्। कृतपरिकर्मविशेषेणाष्टप्रकारधर्मेण द्वितीया सर्वदौःशील्यमलापगमाद्विमला भूमिरधिगम्यते।

तथाचोक्तम्।

शीलं कृतज्ञता क्षान्तिः प्रामोद्यं महती कृपा।
गौरवं गुरुशुश्रूषा वीर्यं दानादिकेऽष्टमम् ॥ ५२ ॥ इति

सर्वबुद्धभाषितधर्मधारणाभिप्रायः। कुशलमूलादिनिरपेक्षतया सद्धर्मप्रकाशनम्। बुद्धक्षेत्रपरिशोधनकरधर्माणां तत्रैव परिणामना। सत्त्वार्थकरणाय न जातु चित्खेदापत्तिः। श्रावकप्रत्येकबुद्धमनस्कारादिभिः स्वपरापेक्षया लज्जा चेत्येवं पञ्चधापरिकर्मणा। पूर्ववत् कृता न च बुध्यमानस्वभावपरिकर्मणा तृतीया लोकोत्तरज्ञानावभासकरणात् प्रभाकरी भूमिरवबुध्यते।

तथाचोक्तम्।

अतृप्तता श्रुते दानं धर्मस्य च निरामिषम्।
बुद्धक्षेत्रस्य संशुद्धिः संसारापरिखेदिता ॥ ५३ ॥
ह्रीरपत्राप्यमित्येतत् पञ्चधा मननात्मकम्। इति

श्रावकादिमनस्कारविवेकः। उपलम्भयोगेनाप्राप्तबोधेरप्यनिच्छा। प्राप्तेनापि प्रणीतवस्तुनाऽमननता। गम्भीरधर्मक्षान्तिनिध्यानाद्यपरित्यागः। सर्वशिक्षाणामपरित्यजनम्। कामचित्तस्यानुत्पादः। सर्वधर्माणामनभिसंस्कारः। स्वशरीराद्यग्रहणता। कुशलधर्मालम्बनचित्तासङ्कोचः। सर्ववस्त्वमनसिकारश्चेत्येवं परिकर्मणा। पूर्ववद्दशप्रकारेण चतुर्थी सकलक्लेशेन्धनदहनज्वालयोपेतत्वादर्चिष्मती भूमिरभिरुह्यते।

तथाचोक्तम्।

वनासाऽल्पेच्छता तुष्टिर्धूतसंलेखसेवनम् ॥ ५४ ॥
शिक्षाया अपरित्यागः कामानां विजुगुप्सनम्।
निर्वित्सर्वास्तिसन्त्यागो ऽवलीनत्वानपेक्षते ॥ ५५ ॥ इति

लाभाद्यर्थं गृहिप्रव्रजितैः संवासः। श्राद्धकुलानुपदर्शनम्। जनाकीर्णनगरादि। स्वप्रशंसनपरनिन्दने।

दशाकुशलकर्मपथाः। श्रुताद्यभिमानः पराप्रणमनम्। कुशलाकुशलविपरीताभिनिवेशः। सत्कायदृष्ट्यादिमतिः। सर्वरागादिक्लेशाभिमुखीकरणं चेत्येवंलक्षणान् दशधर्मान् बोधिनिबन्धकत्वेन विवर्जयन्नर्थादाक्षिप्तविपर्ययधर्मेण दशप्रकारपरिकर्मणा पूर्ववत् पञ्चमी सुष्ठु दुःखेन जीयत इति सुदुर्जया भूमिराक्रम्यते।

तथाचोक्तम्।

संस्तवं कुलमात्सर्यं स्थानं सङ्गणिकावहम्।
आत्मोत्कर्षपरावज्ञे कर्ममार्गान् दशाशुभान्॥५६॥
मानं स्तम्भं विपर्यासं विमतिं क्लेशमर्षणम्।
विवर्जयन् समाप्नोति दशैतान् पञ्चमीं भुवम्॥५७॥ इति

दानादिषट्पारमितापरिपूरणेन श्रावकप्रत्येकबुद्धाभिलाषस्य स्वभावानुपलम्भोत्त्रासचित्तस्य च याचकजनप्रार्थनासङ्कोचचित्तस्य स्वरसप्रवृत्तसर्वार्थत्यागदौर्मनस्यस्य दारिद्र्यादर्थिजनप्रतिक्षेपचित्तस्य वर्जनेनेत्येवं द्वादशभिः परिकर्मभिः पूर्ववत् षष्ठी सर्वबुद्धधर्माभिमुखी भूमिराज्ञायते।

तथाचोक्तम्।

दानशीलक्षमावीर्यध्यानप्रज्ञाप्रपूरणात्।
शिष्यखड्गस्पृहात्रासचेतसां परिवर्जकः॥५८॥
याचितोऽनवलीनश्च सर्वत्यागेऽप्यदुर्मनाः।
कृशोऽपि नार्थिनां क्षेप्ता षष्ठीं भूमिं समश्नुते॥५९॥ इति

शून्यताऽनिमित्ताऽप्रणिहितत्रिविमोक्षमुखज्ञानाद्यथाक्रममात्मसत्त्वजीवग्रहाभावः। त्रिमण्डलविशुद्धदशकुशलकर्मपथपरिपूर्याधिमोक्षादेकपुद्गलग्रहवर्जनम्। दुःखार्त्त-

सर्वजनालम्बनकृपाप्रतिवेधादुच्छेदग्रहायोगः। बुद्धक्षेत्रपरिपूरिमुपादाय सर्ववस्त्वनुपलम्भाच्छाश्वतग्रहविनिवृत्तिः। सर्वधर्मसमतावगमान्निमित्तग्रहानुपपत्तिः। महायानत्वेनैकयानावबोधाद्धेतुग्रहत्यागः। नामरूपाद्यनुत्पादपरिज्ञानात् स्कन्धग्रहवियोगः। गम्भीरधर्मनिध्यानक्षान्त्यवगमात् धातुग्रहोच्छेदः। सर्वधर्माणां महायानोपायमुखेन प्रकाशनादायतनग्रहविश्लेषः। सर्वकल्पनोच्छेदात्त्रैधातुकप्रतिष्ठानग्रहविच्छेदः। निमित्तोद्ग्रहणसत्कायादिदृष्टिरागादिक्लेशवर्जनात् सक्तिग्रहविरहः। शमथभावनाबलादालीनचित्तग्रहविवेकः। प्रज्ञाकौशल्याद्बुद्धदृष्टिनिश्रयारूपता। धर्मनैरात्म्यभावनाचित्तोपशमाद्धर्मदृष्टिनिश्रयास्वभावता। उभयसत्याश्रितरूपाद्यप्रतिघातज्ञानोदयात् सङ्घदृष्टिनिश्रयानुदयः। अभिनिवेशास्थानज्ञानलाभाच्छीलदृष्टिनिश्रयाभवनम्। सम्यग्धर्मप्रविचयार्थं यथेष्टसमकालसर्वबुद्धक्षेत्रगमनाच्छून्यताविवादग्रहाप्रसवः। उपलम्भाभिनिविष्टसत्त्वधातूत्तारणाय यथानुरूपं सर्वत्र स्वात्मभावदर्शनाच्छून्यताविरोधोद्भावनाग्रहोत्सृष्टिश्चेत्येवं विंशतिप्रकारेण परिकर्मधर्मेण पूर्ववत् कृतविशेषलक्षणपरिकर्मणाऽधिगतेन यथोक्तविंशतिप्रकारधर्मकलङ्कापगमात् सप्तमी सम्यगनाभोगमार्गोपसर्गात् सुष्ठु दूरङ्गतत्वादूरङ्गमा भूमिः समीयते। तथा च हेयमधिकृत्योक्तम्।

आत्मसत्त्वग्रहो जीवपुद्गलोच्छेदशाश्वतः।
निमित्तहेत्वोः स्कन्धेषु धातुष्वायतनेषु च॥ ६०॥
त्रैधातुके प्रतिष्ठानं सक्तिरालीनचित्तता।
रत्नत्रितयशीलेषु तद्दृष्ट्यभिनिवेशिता॥ ६१॥

शून्यतायां विवादस्य तद्विरोधस्य विंशतिः ।
कलङ्का यस्य विच्छिन्नाः सप्तमीमेत्यसौ भुवम् ॥ ६२ ॥ इति
तथाचोपादेयमधिकृत्योक्तम् ।
त्रिविमोक्षमुखज्ञानं त्रिमण्डलविशुद्धता ।
करुणामनना धर्मसमतैकनयज्ञता ॥ ६३ ॥
अनुत्पादक्षमाज्ञानं धर्माणामेकधेरणा ।
कल्पनायाः समुद्घातः सञ्ज्ञादृक्क्लेशवर्जनम् ॥ ६४ ॥
शमथस्य च निध्यप्तिः कौशलञ्च विदर्शने ।
चित्तस्य दान्तता ज्ञानं सर्वत्राप्रतिघाति च ॥ ६५ ॥
सक्तेरभूमिर्यत्रेच्छं क्षेत्रान्तरगतिः समम् ।
सर्वत्र स्वात्मभावस्य दर्शनञ्चेति विंशतिः ॥ ६६ ॥ इति

यथावत्सर्वसत्त्वचित्तचरितज्ञानम् । नानालोकधातौ सत्त्वार्थमृद्ध्यभिज्ञाभिः क्रीडनम् । आधारबुद्धक्षेत्रसुवर्णादिभावपरिणामः। सर्वाकारधर्मपरीक्षणार्थं तथागतारागणम्। दिव्यचक्षुषो निष्पत्तिः । आधेयबुद्धक्षेत्रसत्त्वपरिशोधनम् । सर्वत्र मायोपमतावस्थानम् । सत्त्वार्थदर्शनाद्बुद्धिपूर्वकजन्मग्रहणञ्चेत्येवमष्टप्रकारधर्मेण परिकर्मणा पूर्ववदष्टमीनिमित्ताभोगाप्रकम्प्यत्वादचला भूमिरनुभूयते ।
तथाचोक्तम् ।

सर्वसत्त्वमनोज्ञानमभिज्ञा क्रीडने शुभा ।
बुद्धक्षेत्रस्य निष्पत्तिर्बुद्धसेवापरीक्षणे ॥ ६७ ॥
अक्षज्ञानं जिनक्षेत्रशुद्धिर्मायोपमा स्थितिः ।
सञ्चिन्त्य च भवादानमिदं कर्माष्टधोदितम् ॥ ६८ ॥ इति

अनन्तप्रणिधानम् । देवादिसर्वसत्त्वरुतज्ञानम् । नद्युपमिताक्षयप्रतिभानम् । सर्वजनप्रशस्तगर्भावक्रमणम् ।

राजादिस्थानम्। आदित्याद्यन्वयः। मात्रादिसम्बन्धज्ञातिः। स्वविधेयपरिवारः। शक्राद्यभिनन्दितोत्पादः। बुद्धादिसञ्चोदननिष्क्रमणम्। चिन्तामणिसदृशाश्वत्थवृक्षादिः। सर्वबुद्धधर्मस्वभावगुणपरिपूरणञ्चेत्येवं सम्पत्तिलक्षणैर्द्वादशभिः परिकर्मभिः पूर्ववत्कृतपरिकर्मविशेषैर्नवमी धर्मदेशनाकौशलतोऽनवद्यत्वात् साधुमती भूमिः साक्षात्क्रियते। तथाचोक्तम् ।

प्रणिधानान्यनन्तानि देवादीनां रुतज्ञता ।
नदीव प्रतिभानानां गर्भावक्रान्तिरुत्तमा ॥ ६९ ॥
कुलजात्योश्च गोत्रस्य परिवारस्य जन्मनः ।
नैष्क्रम्य बोधिवृक्षाणां गुणपूरे स्वसम्पदः ॥ ७० ॥ इति

गोत्रभूमिः श्रावकादिगोत्रस्याष्टमकभूमिः प्रथमफलप्रतिपन्नकस्य। दर्शनभूमिः स्रोतआपन्नस्य। तनुभूमिः सकृदागामिनः। वीतरागभूमिरनागामिनः। कृताविकल्पभूमिरर्हतः। विशेषवचनाभावेन श्रावकभूमिः प्रतिपन्नकत्रयस्य। प्रत्येकबुद्धभूमिः प्रत्येकबुद्धानाम्। बोधिसत्त्वभूमिश्च यथोक्ता बोधिसत्त्वानां नवविधेत्येवं नवभूमीरतिक्रम्य दशम्यां पुनः भूमौ बोधिसत्त्वो बुद्ध एव वक्तव्यो न च सम्यक्संबुद्ध इति। पञ्चविंशतिसाहस्रिकायां वचनाद्यत्र बुद्धभूमौ येन कर्मवशिताश्रयत्वादिना ज्ञानेनावतिष्ठते, सा तेन प्राप्या दशमी धर्माम्बुप्रवर्षणाद्धर्ममेघा बोधिसत्त्वभूमिः ।

तथाचोक्तम् ।

नवभूमीरतिक्रम्य बुद्धभूमौ प्रतिष्ठते ।
येन ज्ञानेन सा ज्ञेया दशमी बोधिसत्त्वभूः ॥ ७१ ॥ इति

विस्तरेण तु निर्दिष्टो भूमिसम्भारः पञ्चविंशतिसाहस्रिकायां ग्राह्यो ग्रन्थविस्तरप्राचुर्यान्मयेह न विस्तारित इत्यलं प्रसङ्गेन। दर्शनभावनामार्गात्मक एव भूमिसम्भार इति तदनन्तरं तस्य विपक्षप्रहाणावस्थाभेदेन प्रतिपक्षसम्भारत्वं प्रतिपादयितुं तृतीयादिप्रश्नपरिहारद्वारेणाह। त्रैधातुकादित्यादि (p. 23, 16)। तत्रादौ वस्तुमात्रप्रतिपक्षाधिष्ठानग्राह्यविकल्पद्वयस्य द्रव्यपुद्गलप्रज्ञप्तिपुरुषाधिष्ठानग्राहकविकल्पद्वयस्य च। दर्शनमार्गे प्रहाणाद्विपक्षभेदेन तत्प्रतिपक्षावस्थाऽधिगमाद्यथाक्रमं चतुर्विधप्रतिपक्षसम्भारप्रतिपादनपरं त्रैधातुकान्निर्यास्यतीत्यादि वाक्यचतुष्टयं संवृतिसत्याश्रयेण योज्यम्। तदनु भावनामार्गे वस्तुमात्रप्रतिपक्षाकाराधिष्ठानद्विविधग्राह्यविकल्पस्य। द्रव्यपुद्गलप्रज्ञप्तिपुरुषाधिष्ठानद्विविधग्राहकविकल्पस्य च प्रहाणाद्विपक्षभेदेन तत्प्रतिपक्षावस्थाधिगमादपरं चतुर्विधप्रतिपक्षसम्भारं यथासङ्ख्यं परमार्थसत्याश्रयेणोक्तं क्रियाप्रतिषेधात्प्रतिपादयन्नाह। अपित्वित्यादि। स्थानप्रतिषेधमेव स्पष्टयति। अपि तु स्थास्यति सर्वज्ञतायामस्थानयोगेनेति (p. 23, 20)। तत्र स्थानं वस्तूपलम्भःकरणादिभिः प्रतिष्ठानं चेतसस्तत्प्रतिषेधादस्थानम्। अत्र विचार्यते। यदि तावत् स्थानाभावोऽस्थानमेवं सत्यभावत्वात् प्रतिपक्षो न युज्यते। अथ यन्न स्थानं तथा चक्षुरादिष्वप्यतिप्रसङ्ग इति। यथानभिनिवेशो व्याख्यातस्तथेदानीमपि नयो द्रष्टव्य इति न प्रतन्यते। त्रैकालिकवस्तुप्रतिषेधान्न निर्यात इत्याद्यभिधानम्। भूतार्थाभ्यासेन निर्याणात् कथमेवमिति। तत्कस्य हेतोरित्याशङ्क्याह।

यश्चेत्यादि। उभाविति। यो बोधिसत्त्वो येन च मार्गेण निर्यायात् तौवेतौ तत्त्वेनोपसंहरन्नाह। एवमित्यादि (p. 24, 1)। संवृत्या त्वस्तीति भावः।

तथाचोक्तम्।

प्रतिपक्षोऽष्टधा ज्ञेयो दर्शनाभ्यासमार्गयोः।
ग्राह्यग्राहकविकल्पानामष्टानामुपशान्तये॥ ७२॥ इति

यथोक्तानुपूर्व्या संवृतिपरमार्थसत्यानतिक्रमेण समस्तमहायानानुष्ठानेन संह्रियते। समुदागमभावेन महाबोधिरेभिः करुणादिभिरिति करुणादयः सम्भारा इति सप्तदशप्रकारा सम्भारप्रतिपत्तिः। सम्भृतसम्भारस्यैवमजितजयप्राप्त्या निर्याणमिति निर्याणप्रतिपत्तिश्चतुर्था वक्तव्या। सा पुनर्विषयभेदेनाष्टधेत्यादौ प्राधान्यादुद्देशनिर्याणम्। तत्पुनः सर्वसत्त्वाग्रताचित्तमहत्त्वनिर्याणम्। प्रहाणमहत्त्वनिर्याणम्। अधिगममहत्त्वनिर्याणञ्चेति त्रिविधम्। अतस्त्रिविधोद्देशनिर्याणमधिकृत्याह। महायानमित्यादि।

आलम्बनमहत्त्वञ्च प्रतिपत्त्योर्द्वयोस्तथा।
ज्ञानस्य वीर्यारम्भस्य उपायकौशलस्य च॥
उदागममहत्त्वञ्च महत्त्वं बुद्धकर्मणः।
एतन्महत्त्वयोगाद्धि महायानं निरुच्यते॥ इति

सप्तविधमहत्त्वयोगान्महायानं सफलो बोधिसत्त्वमार्गः लोकप्रसिद्धमाचस्यैवायथार्थाभिसम्बोधिफलं महायानम्। तस्यैव वन्ध्यत्वादितरथा हि महायानस्य प्रतिपक्षभावनावैयर्थ्यं स्यात्। अतोऽभूतपरिकल्पमाचत्वाद्वितथप्रख्यातिरूपं

सदेवमानुषासुरं लोकं तत्प्रतिपक्षत्वेनासत्यार्थतया स्वरूपपरिज्ञानादभिभवाद्यस्मान्निश्चयेन गन्तव्यं स्थानं सर्वसत्त्वाग्रतादिमहत्त्वं यास्यतीति तस्मान्महायानमुच्यत इति वाक्यार्थः। समताधिगममन्तरेणोद्देशनिर्याणासम्भव इति। तदनन्तरं समतानिर्याणं दर्शयितुमाह। आकाशेत्यादि (p. 24, 7)। आकाशमिव समतया शून्यतया सकलज्ञेयमण्डलव्यापिनिर्मलज्ञानत्वान्महत्तद्यानम्। सत्त्वार्थमन्तरेण पुण्योपचयाभावान्न समतावगमनं सम्यगिति तदनु सत्त्वार्थनिर्याणमाह। यथेत्यादिना। महायाने सत्त्वानामवकाश इति वचनात्तेन महायानेन तेषामर्थो निर्यातव्य इत्यावेदितमन्यथाऽर्थक्रियाशून्यत्वेनावकाशानुपपत्तेः। अनेनेत्याद्युपसंहारः। पर्यायेणार्थान्तरेणानेन। आभोगे सत्यविकलसत्त्वार्थो न निष्पद्यत इत्यतोऽनन्तरमनाभोगनिर्याणं वक्तुमाह। नैवास्येत्यादि। आगमोऽतीतात् निर्गमोऽनागते, स्थानं वर्तमाने। आगमाद्यभावादयत्नसिद्धं निर्याणमिति भावः। शाश्वतोच्छेदरहितावस्थाधिगमं विनाऽनाभोगनिर्याणं न भवतीत्यतोऽनन्तरमत्यन्तनिर्याणं दर्शयितुमाह। एवमस्येत्यादि (p. 24, 11)। एवमिति वक्ष्यमाणक्रमेण। पूर्वान्तः शाश्वतः। उच्छेदोऽपरान्तः। तद्विनिर्मुक्तोऽन्योऽपि नास्तीत्याह। नापि मध्य इति। एवमिति यदुक्तं तत्कथयन्नाह। त्र्यध्वेत्यादि। यस्मात् प्रकृतिपरिनिर्वृतत्वेन सर्वधर्माणां त्र्यध्वशून्यं तद्यानं तस्मान्महायानत्वेन पूर्वान्तत्वाद्यभाव इति वाक्यार्थः। धर्मताऽविरुद्धार्थकथनात् साधुकारमावेदयन्नाह। साध्वित्यादि। उपसंहरन्नाह। एवमित्यादि। अत्यन्तनिर्याणमपि यान-

त्रयप्रतिविशिष्टावस्थाप्राप्तिं विना न सम्पद्यत इत्यतोऽनन्तरं प्राप्तिनिर्याणमाह। अत्र शिक्षित्वेत्यादिना। अत्रेति महायाने। सर्वज्ञता यानत्रयात्मिका। सर्वार्थपुद्गलाधिगमहेतुत्वज्ञापनार्थमनुप्राप्तेत्यभिधानम्। शब्दान्यथात्वजनितविभ्रमादार्यपूर्णोऽयमित्याह। प्रज्ञापारमितायाः क्षतशः प्रयोजनेन प्रतिभातु त इत्यादिना प्रारम्भ एवाधीष्टो नित्यसमन्वाहारमन्तरेण ज्ञानदर्शनासम्भवादन्यथापि स्यादित्यार्यसुभूतिराह। नाऽहं भगवन्नित्यादि (p. 25, 1)। व्यतिक्रम्येत्युल्लंघ्य तथागताधिष्ठितस्य विपरीतदेशनानुपपत्त्या नो हीदमित्याद्याह। अनुलोमेति। अनुकूलं प्रज्ञापारमितार्थस्य महायानस्वभावत्वादिति भावः। सर्वाकारगम्भीरधर्मदेशनाशक्तिमात्मनोऽपश्यन्नाह। बुद्धानुभावाद्भगवन्निति। तच्च प्राप्तिनिर्याणं प्राप्यप्रापकतदुभयसम्बन्धप्रतिषेधलक्षणम्। अतः प्राप्यप्रतिषेधमधिकृत्याह। अपि त्वित्यादि। अपि तुशब्दः क्रमार्थः। आद्यादित्वेन सप्तम्यन्तात्तसिः। पूर्वान्तत इत्यादौ ज्ञेयः। नोपैतीति बोधिसत्त्वं कञ्चित् प्राप्यं रूपादिस्वभावमिति शेषः। तस्यैव प्राप्यस्य बोधिसत्त्वस्याविद्यमानत्वादिति भावः। ननु रूपादिप्रतिभासो बोधिसत्त्वः कथमविद्यमान इति तत्कस्य हेतोरित्याशङ्क्याह। रूपापर्यन्ततयेत्यादि (p. 25, 8)।

"धर्मधातुविनिर्मुक्तो यस्माद्धर्मो न विद्यते"।

इति न्यायाद्धर्मधातुवत्तत्स्वभावीभूतानां यस्माद्रूपादीनामपर्यन्ततया बोधिसत्त्वापर्यन्तता तस्माद्बोधिसत्त्वं नोपैतीति भावः। प्रापकप्रतिषेधमधिकृत्याह। रूपमित्यादि। रूपादीनां न्यायेनासत्त्वात्तदात्मकप्रापकबोधिसत्त्वोप-

लम्भाभाव इति भावः। यद्येवमनुपलम्भस्तर्हि तत्त्वमित्याह इदमित्यादि। इदमपि नोपैतीत्यपि न विद्यते। निर्विषयस्य नञोऽप्रयोगादतो वस्तुतोऽसत्त्वान्नोपलभ्यते। सामान्येन निर्दिश्यैवमात्मानमधिकृत्याह। एवं भगवन्नित्यादि (p 25, 12)। एवमिति प्राप्यप्रापकप्रतिषेधेन "द्वे ह्यमू सर्वते वस्तुसर्वता। आकारसर्वता चे"ति न्यायात्। तत्र सर्वेणेति स्कन्धादिवस्तुरूपेण। सर्वमिति बाह्याध्यात्मिकवस्तु-स्वभावम्। सर्वथेति अध्यात्मशून्यतादिभिराकारप्रकारैः। पुनः सर्वमिति व्यस्तसमस्तप्रकारम्। बोधिसत्त्वधर्ममिति। बोधिसत्त्व एव प्राप्यप्रापकलक्षणो धर्मो रूपादिस्वभाव-स्तमनुपलभमानः सन्। तदुभयसम्बन्धप्रतिषेधमाह। प्रज्ञेत्यादिना। साकारनिराकारज्ञानाभ्यां यथासङ्ख्यं न समनुपश्यामि नोपलभे। प्रत्यक्षानुमानाभ्यां वा। तत्प्रति-पादनार्थमेवाह। सर्वज्ञतामिति। उपसंहरन्नाह। सोऽह-मित्यादि। कतमं प्रापकं बोधिसत्त्वं कतमेन प्राप्योपाय-मुखेन कतमस्मिन् सम्बन्धे सर्वाकारज्ञतालक्षणे किंशब्दस्य क्षेपाभिधायित्वात्। नैव कश्चित् केनचित् क्वचिदित्यर्थः। कुतो यस्मात् बुद्ध इत्यादि। प्राप्योऽत्र बुद्धशब्देनोक्तः। प्रापकसम्बन्धस्योत्तरपदद्वयेनाभिधानाद्यतो यदेव प्रक्रान्तं तदेवोपसंह्रियते। यथावस्तुशब्दप्रयोगेण संज्ञामात्रसङ्गा-वात् सत्यं वस्तु स्यादित्याह। तच्चेत्यादि (p. 25, 20)।

नार्थशब्दविशेषस्य वाच्यवाचकतेष्यते।
तस्य पूर्वमदृष्टत्वात् सामान्यं तूपदेक्ष्यते॥

इति न्यायाद्यथावस्तु तन्नामधेयमनभिनिर्वृत्तत्वान्नोत्पन्नम्। किमिवेत्याह। यथा आत्मेति। तदेव कथयति। आत्मेत्यादिना। अर्थक्रियाऽसमर्थत्वात् खरविषाणवत्तस्य संवृत्याप्यनभिनिर्वृत्तत्वेनात्यन्ततया नास्त्यात्मा। अथ चात्मेति व्यपदेशः। यद्येवं न्यायेनास्वभावत्वे सर्वधर्माणां कतमत्तद्रूपमित्याशंक्याह। यदित्यादि। यस्मादनभिनिर्वृत्तं तस्माद्ग्राह्यग्राहकभावविगतं तत्त्वेन तदविचारैकमनोहरं संवृत्या रूपम्। एवं ग्राह्यग्राहकभावेनानभिनिर्वृत्तिस्तर्हि पारमार्थिको धर्म इत्याह। एवमित्यादि (p. 26, 1) न्यायेनैषां सर्वधर्माणामस्वभावता या सैवानभिनिर्वृत्तिर्या चानभिनिर्वृत्तिः स्वरूपधारणवैकल्यान्न ते धर्माः। प्रसाधितमर्थं निगमयन्नाह। तदित्यादि (p. 26, 5)। तत्तस्मात् किंशब्दस्य क्षेपाभिधायित्वान्नैवेत्यर्थः। अभिनिर्वृत्तिस्तर्हि धर्म इत्याह। न चान्यत्रेत्यादि। सर्ववस्तुनोऽभिनिवृत्तेः प्रतिषिद्धत्वादनभिनिर्वृत्तितोऽन्यत्रापि निर्वृत्तौ धर्मो नैवोपलभ्यते। सर्वधर्माः प्रज्ञापारमितामार्गस्वभावाः। बुद्धधर्माः प्राप्यलक्षणाः। बोधिसत्त्वधर्माः प्रापकबोधिसत्त्वप्रज्ञप्तिनिबन्धना रूपादयः। यो वाऽन्यः कश्चित् सामान्यधर्मो बोध्यर्थं चरेत् स नैवोपलभ्यत इति विभक्तिविपरिणामेन सम्बन्धः। कः पुनरेवं प्रज्ञापारमितायामभियुक्त इत्याह। स चेदित्यादि। चरत्यसमाहितज्ञानेन, भावयति समाहितेन। उपपरीक्षते युक्त्या व्यवस्थापयति। स्मरणप्रत्यये ऽवस्थापनादुपनिध्यायति। ननु रूपाद्युपलम्भेन कथं प्रज्ञापारमितामुपपरीक्षत इति। तत् कस्य हेतो-

रित्याशङ्क्याह। यस्मिन्नित्यादि (p. 26, 13)। यस्माद्यस्मिन् काले रूपादीनिमान्धर्मान् प्रज्ञापारमितायां तन्निमित्तं व्युपपरीक्षते नैःस्वभाव्याकारेण तस्मात्तस्मिन् काले न रूपमुपैति न प्रतिपद्यते। अतो नोपगच्छति न स्वीकरोति। यतो नोत्पादं न निरोधं वा समनुपश्यति। उत्पादव्यय-निर्मुक्तस्यान्यस्यासत्त्वादिति भावः। न त्वैकात्म्येऽनुत्पादा-निरोधोपलम्भ एव रूपोपलम्भोऽतः कथं न रूपमुपैतीति। तत्कस्य हेतोरित्याशङ्क्याह। तथाहीत्यादि (p. 26, 21)। यस्माद्यावनुत्पादाव्ययौ न तौ रूपं संवृत्या रूपस्यैव प्रतिभासनात्। तच्च भाव एव क्षणस्थितिधर्मा नाशो व्यय-स्तत्प्रतिषेधादव्ययः। यतः संवृत्या नानात्वमिति। तस्मा-दनुत्पादाव्ययौ रूपं च परमार्थतोऽनुत्पादाव्ययस्यैव स्थितेरद्वयमनुत्पादाद्येकरूपमेतत्। यतोऽद्वैधीकारमपगत-द्विधाभावकारकप्रमाणम्। यद्येवं कथं पुना रूपव्यपदेश इत्याह। यत्पुनरित्यादि (p. 27, 1)। अद्वयस्य न्यायेनानु-त्पादादिरूपस्यैषा रूपमित्युद्भावना संवृत्या गणना संज्ञा कृता सङ्केतिता। सर्वाकारज्ञताऽधिगमेन विना न प्राप्ति-निर्याणमिति तदनु सर्वाकारज्ञतानिर्याणं दर्शयितुमाह। एवं भगवन्नित्यादि (p. 27, 7)। एवं सर्वाकारमिति सम्बन्धः। प्रज्ञापारमितायां सर्वाकारज्ञतायां निर्यातुमिति शेषः। सर्वाकारं नैःस्वभाव्याद्याकारं क्रियाविशेषणमेतत्। सर्व-धर्मान् रूपादीन् व्युपपरीक्षमाणस्तस्मिन् समयेऽभिसमय-काले न रूपमुपैतीत्यादिप्रसङ्गान्तरेण पुनरावर्तितमिति न पुनरुक्ततादोषः। एवं सति सत्त्वार्थदुःखचर्याद्यनुप-पत्तिरित्यभिप्रायवानाह। तेन हीत्यादि (p. 28, 1)। यतो

रूपाद्यनुत्पादाव्ययोरद्वयत्वं तस्मात् कारणात् । यथा-भाषितस्य न रूपमुपैतीत्यादिवचनस्यार्थमाजानामि । तथा बोधिसत्त्वोऽप्यनुत्पादस्तस्यापि रूपादिस्वभावत्वात् । भव-त्वेवमित्यभ्युपगमे दोषार्थमाह । यदि चेत्यादि । किंशब्दः क्षेपेऽनुत्पादविरुद्धत्वान्नैव चरतीत्यर्थः । यानि दुःखानि सत्त्वानां कृतशः प्रयोजनेन प्रत्यनुभवितुमुत्सहते । किमर्थं वा तानि नैवेत्यर्थः । सत्त्वाद्यभावादिति भावः । नार्हामि-(p. 28, 7)त्यादिनोत्तरमाह । एवं मन्यते । यदि बोधि-सत्त्वोऽनुत्पादः । परमार्थतो नैव दुष्करचर्यां चरतीत्या-पद्यते । तदा तत्त्वेन चर्यानुपपत्तेः सिद्धसाध्यता । अथ संवृत्या तदा नानुत्पादस्तर्हि बोधिसत्त्वस्तस्योत्पादप्रति-पादनात्तत्कथं चर्याविरुद्धेति । संवृत्यापि दुष्करचर्या कथं चर्यत इत्यपि न मन्तव्यमित्याह । नापीत्यादि । दुष्कर-संज्ञया चरतीत्यत्र दुष्करचर्यामिति शेषः । ननु शिरो-दानादिदुष्करचर्यां बोधिसत्त्वा एव कुर्वन्तीति कथं न दुष्करसंज्ञेति । तत्कस्य हेतोरित्याशङ्क्याह । नहीत्यादि । यस्माद्दुष्करसंज्ञां जनयित्वा न शक्यः सत्त्वानामर्थः कर्तुं सम्यक्चर्याऽनिष्पत्तेरतो यो दुष्करसंज्ञां दानादि-चर्यासु करोति स सत्त्वार्थाकरणेन बोधिसत्त्वो न भवतीति भावः । कथं तर्हि शक्यते इत्याह । अपि त्वित्यादि । दानादिषु मात्सर्याद्यभावेन सुकरसंज्ञां सुखसंज्ञां तथा सत्त्वानामन्तिके सामान्येन माचादिसंज्ञाविशेषेण वा स्त्रीपुरुषेषु वयसा वृद्धन्यूनप्रमाणेषु यथासम्भवं माचादि-संज्ञां कृत्वा यदि बोधिसत्त्वश्चर्यां चरति तदार्थः शक्यते कर्तुमिति भावः । तदेवोपसंहरन्नाह । तस्मादित्यादि

(p. 28, 13)। यावदित्यनेन समानवयःप्रमाणेषु स्त्रीपुरुषेषु भ्रातृभगिनीसंज्ञापरिग्रहः। कथमात्मसंज्ञोत्पादयितव्येत्याह। यथेत्यादि। आहिताहंमानत्वेन स्वसन्तान एवात्मा। सर्वदुःखेभ्यः संस्कारादिदुःखेभ्यो मोचयितव्यो-ऽपनेतव्यः। प्रकारान्तरमप्याह। एवञ्चेत्यादि। न परित्यक्तव्या महाकरुणाशयप्रयोगेण परिमोचयितव्यास्तथाभूतकार्यसम्पादनतः। चित्तप्रदोषो द्वेषो नोत्पादयितव्यः। कदेत्याह। अन्तश (p. 28, 20) इत्यादि। अन्तशः पर्यवसाने शतशोऽपि स्वकायेन छिद्यमानेन तैरेवेत्यध्याहार्यं परार्थकोऽतिशयः स्यात्। तदेव निगमयन्नाह। एवं हीत्यादि। एवञ्चित्तोऽनन्तरोक्तचित्तः। चरिष्यति दानादिचर्याम्। विहरिष्यति चतुर्षु र्यापथेषु। एवं संवृतिसत्याश्रयेण चर्याया या न दुष्करसंज्ञेति प्रतिपाद्य परमार्थसत्याश्रयेण प्रतिपादयन्नाह। पुनरपरमित्यादि। सर्वेण प्रत्यक्षादिप्रमाणेन सर्वं व्यापीतरद्वा रूपम्। सर्वथा सत्त्वजीवादिप्रसिद्धिप्रकारैः पुनः सर्वमिति कर्तृत्वादिरूपम्। एकानेकस्वभाववैधुर्याद्यथात्मा न विद्यते। अत एव नोपलभ्यते। तथा सर्वधर्माः। तदेव कथयन्नाह। एवमित्यादि (p. 29, 2) धर्मेषु तु सर्वेण स्वलक्षणादिरूपेण सर्वं वाक्यादिकं सर्वथा क्लिष्टत्वादिप्रकारेण सर्वं सर्वप्रकारम्। अतो गत्यन्तराभावान्मायापुरुषेण वा चरितव्यम्। तच्च च कथं दुष्करचर्येति भावः। एवमनुत्पादेऽतिप्रसङ्गं परिहृत्याभ्युपगममाह। यदपीत्यादिना। एवमेवैतत् परमार्थेनेति भावः। बोधिसत्त्वोऽनुत्पाद इति वचनात्। प्रादेशिकी शून्यते-

त्याह। किं पुनरित्यादि (p. 29, 8)। बोधिसत्त्वकरका धर्मा मार्गज्ञतादिस्वभावा बोधिसत्त्वधर्मा अप्यनुत्पादः। न्यायस्य तुल्यत्वात्। तदेवाह। बोधिसत्त्वेत्यादिना। यदेव पृष्टं तदेव परिहर्तव्यमन्यथाऽश्रोतृसंस्कारकं वाक्यम्। अतः प्रादेशिकशून्यत्वपरिहारार्थमुताहो सर्वज्ञतापीत्यादिनोत्त-रोत्तरप्रश्नपरिहारेण शून्यतायाः सर्वविषयत्वमाह। तच्च सर्वज्ञता बुद्धत्वम्। बुद्धकरका धर्माः सर्वाकारज्ञता-लक्षणाः धर्माः। अनुत्पन्नार्यमार्गो बालः पृथग्जनः। तन्निबन्धना रागादयो धर्माः पृथग्जनधर्माः। क्रमेणैवं सर्वधर्मानुत्पादाभ्युपगमं कारयित्वा दोषमापादयन्नाह। यद्यायुष्मन्नित्यादि (p. 30, 2)। ननुशब्दोऽक्षमायाम्। अनु-प्राप्तैव सर्वज्ञताऽयत्नेनेति शेषः। क्वचिदयत्नेनेति पाठः स्पष्ट एव। एतदुक्तम्। "सत्कृत्य निरन्तरदीर्घकालभावनयाऽनु-त्पादाधिगमेन बुद्धत्वमनुप्राप्तव्यम्। यदि पुनः सर्व एव धर्मोऽनुत्पन्नस्तदाऽयत्नेन सर्वाकारज्ञताऽनुप्राप्तैव ततश्च मुक्ताः स्युः सर्वदेहिन" इति। यद्यनुत्पादे प्राप्यप्रापकधर्मा विद्यन्ते, तदाऽयत्नेन प्राप्तिरिति प्रसज्यते। यावता नैव-मित्यभिप्रायेणाह। नाहमि(p. 30, 7)त्यादिना। न्यायेना-नुत्पन्नस्य धर्मस्य प्राप्यप्रापकस्य न प्राप्तिं ग्रहणं प्रयोगाव-स्थायामिच्छामि। नाप्यभिसमयमधिगमं मौलावस्थायाम्। तदेवाह। नापि इत्यादिना। नैवानुत्पन्नेन प्रापकेण धर्मेणानुत्पन्ना प्राप्तिः प्राप्यतालक्षणा प्राप्यते। उभयो-रेव नीरूपत्वात्। अन्यतरानुत्पादेन तर्हि प्राप्तिः प्राप्य-तामित्याह। किं पुनरित्यादि। उताहोशब्दः पक्षान्तर-

द्योतकः। प्रतिप्रश्नेन परिहारार्थमाह। किं पुनरायुष्माञ्छारिपुत्रेत्यादि (p. 30, 11)। उत्पादस्यासत्त्वात्। किमनुत्पन्नो धर्म उत्पन्न इत्यभिधीयते। एवमिति चेदभिधीयताम्। न हि नामान्तरकरणाद्वस्तुनोऽन्यथात्वमतः कथमुत्पन्नेन धर्मेणानुत्पन्ना प्राप्तिः प्राप्यते। अथानुत्पन्न एव धर्मोऽनुत्पन्न इत्यभिधीयते त्वया तथापि दोष एव। यो ह्यनुत्पन्नो धर्मः सोऽनुत्पन्न एवाविद्यमानोऽतः कथमनुत्पन्नेन धर्मेणानुत्पन्ना प्राप्तिः प्राप्यते। एतदुक्तम्। "तत्त्वेन प्राप्यप्रापकयोरसत्त्वात्कुतोऽयत्नेन प्राप्तिः। संवृत्यापि निरन्तरं दीर्घकालभावनयाऽष्टम्यादिभूमावनाभोगवाहिज्ञानलाभात् कथमयत्नेन प्राप्तिर्येन मुक्ताः स्युः सर्वदेहिन" इति। ननु संवृतिपरमार्थसत्याश्रयेणोत्पादानुत्पादव्यवस्थायां तवाप्येष पर्यनुयोग इत्यभिप्रायेणाह। उत्पाद एव धर्मोऽनुत्पाद उताहोऽनुत्पादो धर्मोऽनुत्पाद इति। उद्भावनासंवृत्यापि वागुदाहारवर्जितं तत्त्वमिति मत्वाऽह। उत्पाद इत्यादि (p. 30, 15)। द्वयोरलीकत्वान्न तत्त्वतो जल्पितुं प्रतिभातीति भावः। अनुत्पादस्य परमार्थत्वादित्यभिप्रायेणाह। अनुत्पादोऽपीत्यादि। परमार्थानुकूलत्वात्परमार्थोऽयमुच्यते। अनुत्पाद इत्याह। अनुत्पाद एवायुष्मञ्छारिपुत्र जल्प इति। अनुत्पादोऽपि जल्प्यत इति जल्पः। प्रपञ्चो विकल्प इति यावत्। अभिसमयकाले तर्हि किं प्रतिभासत इत्याह। अनुत्पाद एवेत्यादि। सर्वविकल्पविनिर्मुक्तोऽग्राह्य एवानुत्पादो ग्राह्यः प्रतिभाति। अग्राहकमेव ग्राहकं प्रतिभानम्। कथं पुनरतद्रूपोऽपि तद्रूपत्वेन

प्रतिभातीत्याह। एवमेवेत्यादि। एवमेव यथादर्शनमशक्यापह्नवत्वात् संवृत्याऽस्तु यथा तथा। अथवा एवमेवाविचारितेन रूपेणालीकमेव प्रतिभाति। अत्यन्तं प्रतिभातीत्यपगतशाश्वतोच्छेदरूपं प्रतिभासते। सम्यग्धर्मतत्त्वकथनात्स्तुत्यर्थमाह। धार्मकथिकानामित्यादि (p. 30, 22)। स्थापयितव्यो धारयितव्यः। ननु धर्ममेघभूम्यधिगमाभावे श्रावकोऽपि कथमेवमिति। तत्कस्य हेतोरित्याशङ्क्याह। तथाहीत्यादि (p. 31, 1)। यतो यत इति। आद्यादित्वेन सप्तम्यन्तात्तसिस्तथा ततस्तत इत्यपि। यत्र यत्र परिप्रश्नीक्रियते तत्र तत्र परिहारदानेन निःसरति। धर्मतायाः स्वाधिगमलक्षणाया व्यवस्थापनान्न चलति। ताञ्च धर्मतामागमरूपामधिगमेन न विरोधयति। नित्यं समाहितज्ञानाभावेऽपीति शेषः। तथागताधिष्ठानमादर्शयन्नाह। धर्मतैषेत्यादि (p. 31, 5)। अनिश्रितधर्माणामनभिनिविष्टधर्माणां तथागतश्रावकाणाम्। धर्मतैषा प्रतीत्यसमुत्पादनियामता। कासौ धर्मतेत्याह। रूपादिलक्षणवस्तूपलम्भसद्भावेऽपि कथं पुनरनिश्रितधर्माणः श्रावकाः इति। तत्कस्य हेतोरित्याशङ्क्याह। यथापीत्यादि। एकानेकस्वभाववैधुर्येणानिश्रितत्वादनिश्रयार्हत्वात्। सर्वधर्माणामनिश्रितधर्माणः श्रावकाः प्रज्ञापारमिताभाषणं प्रत्यधिष्ठा एवाऽन्यथा सम्यग्देशनानुपपत्तेः। पुद्गलनैरात्म्यमात्रप्रभावितत्वेनैवंविधधर्माधिमोक्षवैकल्यात्तथागताधिष्ठानेनेति शेषः। तदपि सर्वाकारज्ञतानिर्याणं विशेषमार्गादिना विना न भवतीत्यतो-

ऽनन्तरं मार्गनिर्याणं दर्शयन्नाह । साध्वित्यादि (p. 31, 10) । सुभाषितत्वार्थत्वे साधु साधु सुभूते किन्तु कतमैषा सर्वधर्मानिश्रितपारमिता यया बोध्यधिगमः । स्वरूपमावेदयन्नाह । प्रज्ञेत्यादि । यानत्रयसङ्गृहीता । सार्वयानिकी सर्वभूमिपारमिता । बोधिपक्षधर्मस्वभावेन मार्गलक्षणा प्रज्ञापारमिता । सर्वधर्मेष्वनिश्रिततया सर्वधर्मानिश्रितपारमितेत्युच्यते । एवंविधप्रज्ञापारमितायां मार्गात्मिकायां को निर्यातीत्याह । इति हीत्यादि । इत्येवमनन्तरोक्तेन क्रमेण चित्तावलीनत्वं चित्तसङ्कोचः । तदेवाह । कांक्षेत्यादिना (p. 31, 16) । कांक्षायितत्वं संशयज्ञानं किमयमन्यो वेति मार्गान्तरकांक्षणात् । धन्वायितत्वमज्ञानम् । तत्स्वरूपाप्रतिपत्तिः । चित्तस्यान्यथात्वं मिथ्याज्ञानं विपरीतार्थप्रतिपत्तिः । एतच्च सर्वमविद्यैवेति भावनाप्रहेयं दर्शयति । विहरत्यनेन मार्गस्वभावेन प्रज्ञापारमिताविहारेण चतुर्भिरीर्यापथैश्चित्तकर्मण्यताऽपादनात् । अविरहितश्चानेन मनसिकारेण मार्गात्मकेन प्रतिसंलीनावस्थायाम् । ननु मनस्कारश्चेतस आभोग आलम्बने चित्तधारणकर्मकः । प्रज्ञापारमिताविहारश्च तद्विपरीतस्वभाव इति कुतोऽनयोः सहावस्थानमित्यभिप्रायेणाह । कथमित्यादि (p. 31, 20) । यो मनसिकारेणाविरहितः स कथं प्रज्ञापारमिताविहारेण विहरेत् । परस्परविरोधान्नैवेत्यर्थः । तदेव कथयन्नाह । यदि हीत्यादि । यदि मनस्कारेणाविरहितस्तदा प्रज्ञापारमिताविहारेण विरहितः । अथ प्रज्ञापारमिताविहारेणाविरहितस्तदा मनस्कारेण विरहितः । अथ विरुद्धयोरप्येकत्र

सहावस्थानमिष्यते । तदातिप्रसङ्ग इत्याह । यदीत्यादि (p. 32, 1) । यदि च मनसिकारेणाविरहितोऽपि प्रज्ञापारमिताविहारेणाविरहित इष्यते । मार्गनिर्याणावस्थायां तदैवं सति प्रज्ञापारमिताविहारेणाविरहिताः सर्वसत्त्वा इति प्राप्तं तेषां मनस्कारसद्भावात् । ननु प्रज्ञापारमिताविहारोऽनेकयत्नसाध्योऽतः कथं तेनाविरहिताः सर्वसत्त्वा इति । तत्कस्य हेतोरित्याशङ्क्याह । सर्वसत्त्वा अपि हीत्यादि (p. 32, 7) । मनसिकारेणेत्यत्राविरुद्धेनेति शेषः । एवं मन्यते सन्नपि प्रज्ञापारमिताविहारस्तद्विरुद्धविपर्यासप्रवृत्तमनस्कारसद्भावात् सर्वसत्त्वानां न व्यवस्थाप्यते । यदा पुनस्त्वया मार्गनिर्याणावस्थायामुभयोः सहावस्थानेन विरोधो नाभ्युपगतस्तदा कादाचित्कविरोधानुपपत्तेः । यस्मादविरुद्धेन मनस्कारेण सर्वसत्त्वा विहरन्ति । तस्मात् प्रज्ञापारमिताविहारेणाविरहितत्वप्रसङ्ग इति । मनस्कारस्य यथारुतत्वे स्यादयं दोष इत्याह । साध्वित्यादि । किं त्वमनस्कार एव मनस्कारोऽभिप्रेतस्तत्र च शब्दप्रवृत्तिमात्रेण यद्युपालम्भः क्रियते तदाह । अपि तूपालप्स्ये त्वेत्यादि । यतो मनस्कारलक्षण एवार्थो भूतपदाभिधानेन यथारुताभिधानेनायुष्मता शारिपुत्रेण परिगृहीतस्तस्मात् त्वामप्येवंजातीयकेषूत्तरत्रवाक्येषु परिप्रश्नयिष्यामि । यथारुतशब्दार्थग्रहणे तुल्यो दोष इत्यनेनादर्शयति । कथं पुनरमनस्कार एव मनस्कारो न तु यथारुत इति । तत्कस्य हेतोरित्याशङ्क्याह । सत्त्वास्वभावतयेत्यादि । सत्त्वस्य प्राणिनो मायोपमता सत्त्वास्वभावता । तया हेतुभूतया तदव्यतिरेकात् मनस्कारास्वभावता ।

सत्त्वस्यासत्येव भावता सत्त्वासद्भावता । सत्त्वस्य तत्त्वोत्पत्त्यादिभिर्विविक्तता सत्त्वविविक्तता । सत्त्वस्य चित्तातिक्रान्तत्वमचिन्त्यता सत्त्वाचिन्त्यता । सत्त्वस्याप्रतिपत्तिरनभिसम्बोधनता सत्त्वानभिसम्बोधनता । सत्त्वोऽयथाभूतार्थोऽलीक इत्यभिसम्बोधनता सत्त्वायथाभूतार्थाभिसम्बोधनता । एतच्च षट्पदकं यथासङ्ख्यं चतुर्विधनिर्वेधभागीयदर्शनभावनामार्गावस्थासु ग्राह्यम् । एवं न्यायतो ऽमनस्कार एव मनस्कार इत्यभिधायोपसंहरन्नाह । अनेनेत्यादि (p. 32, 18)। एवंरूपेणानन्तरोक्तस्वभावेनानेन मनसिकारेणाविपर्यासप्रवृत्तत्वादिच्छामि विहरन्तं बोधिसत्त्वमनेन च प्रज्ञापारमितात्मकेन विहारेण मार्गनिर्याणलक्षणेनेत्येवं निर्यातव्यवस्तुषु प्रतिविशिष्टान्यधर्माभावेन सर्वधर्मानुपलम्भतया निर्याणादेवमेभिरष्टाभिर्निर्याणैर्निर्याणप्रतिपत्तिर्वेदितव्या । तथा चोक्तम् ।

उद्देशे समतायाञ्च सत्त्वार्थे यत्नवर्जने ।
अत्यन्ताय च निर्याणं निर्याणं प्राप्तिलक्षणम् ॥ ७३ ॥
सर्वाकारज्ञतायाञ्च निर्याणं मार्गगोचरम् ।
निर्याणप्रतिपज्ज्ञेया सेयमष्टविधात्मिका ॥ ७४ ॥ इति

सर्वाकारज्ञातैवानुष्ठीयमानत्वेन चर्या चित्तोत्पादादिरूपेण हेतुफलात्मकेन निःशेषाकारतया समस्तवस्तुपरिज्ञानात्तथागतानां सम्बन्धिनी पुनःपुनः परिवर्ततेऽनेत्यसौ ग्रन्थपरिच्छेदः सर्वाकारज्ञताचर्यापरिवर्तः ।

अभिसमयालङ्कारालोकायां प्रज्ञापारमिताव्याख्यायां सर्वाकारज्ञताचर्यापरिवर्तो नाम प्रथमः ॥

---

सर्वाकारज्ञताधिगमो न विना मार्गज्ञतापरिज्ञानेनेति मार्गज्ञतां वक्तुमाह । तेनेत्यादि (p. 33, 1) । तेन समयेन मार्गज्ञताकथनकाले पुनर्भूयोऽपि शक्रः सन्निषण्ण इति सम्बन्धः । किम्भूत इत्याह । देवानामिन्द्रः प्रभुस्तस्यामेव यथोपवर्णितायां पर्षदि सन्निपतितः । कृतकायादिसामग्रीको विहितसम्यक्प्रणामो वा स्वासने निषण्णः समुपविष्टः । कुबेरधृतराष्ट्रविरूपाक्षविरूढकाश्चत्वारो लोकपालाः । सहे लोकधातावा समन्तात् पतिः सहापतिर्नायको देवपुत्रो ब्रह्मापि चतुर्थध्यानप्रभवः । "संवर्तन्यः पुनस्तिस्रो भवन्त्यग्न्यम्बुवायुभिरि"ति न्यायाद्यथाक्रमं प्रथमादिध्यानत्रयस्य विनाशेन तस्यैव चिरस्थायितया पतित्वाभिमानादित्येके । अपरे त्वन्यथान्यतरसत्त्वस्याभास्वरदेवनिकायाच्च्युत्वैकाकिनः शून्ये ब्राह्मे विमाने समुत्पन्नस्याहोवतान्येऽपि सत्त्वा इहोपपद्येरन्निति प्रणिधानानन्तरं पुण्यादिक्षयादपरेषां काकतालीयन्यायेन तत्र समुत्पादे ऽहमेषामीश्वर इत्याद्यभिमानात्प्रथमध्यानतृतीयभूमिको ब्रह्मा सहापतिरिति वर्णयन्ति । तत्रैवं पर्षत्सन्निपाते मार्गज्ञतोत्पत्तिं प्रति योग्यताऽपादनाय देवादीनां स्वकर्मजप्रभायास्तथागतप्रकृतिप्रभाभिर्मलिनीकरणता निहतमानसन्तानेऽधिगम उत्पद्यत इति ज्ञापनाय कृताऽतो वक्ष्योक्त्याधारः कथित इत्याह । योऽपि चेत्यादि । स्वकर्मविपाकजः स्वशुभकर्मवासनानिर्जातोऽवभासो रश्म्यालोकः । चशब्दात् कायादिरपि । अनुभावेन शक्तिविशेषेण । तेजसा प्रभारूपेण । अधिष्ठानेन सान्नि-

ध्येनेत्येके। कायवाङ्मनोव्यापाररश्मिभेदाद्वाऽनुभावादि-पदत्रयमित्यपरे। अभिभूतो ध्यामीकृतो ऽभूत्। अथेत्यादि (p. 33, 9)। एवं मलिनीकरणेन लोकपालत्वाद्यभिमान-निरासानन्तरमित्यथशब्द आनन्तर्ये। इमानीति प्रत्यक्ष-रूपाणि। अन्तिकादिति सकाशात्। प्रज्ञापारमितामिति मार्गज्ञतात्मकाम्। श्रोतुकामानीति। श्रौतेन ज्ञानेनाव-धारयितुकामानीति। केषां सम्बन्धिनीमित्याह। बोधि-सत्त्वानां महासत्त्वानामिति। उपदेशमित्यादि। श्रवणा-वस्थायां ग्रन्थधारणाय शिक्षणमुपदेशः। चिन्तावस्थायां गृहीतार्थाविस्मरणमववादः। भावनावस्थायां पूर्वोपा-र्जनानुशासनी। एतत् सर्वं बोधिसत्त्वानाम्। कथं श्रोतुकामानीत्याह। तत्कथमित्यादि। स्थातव्यमित्यादि (p. 33, 13)। पदत्रयं यथाक्रमं श्रवणाद्यवस्थासु वेदितव्यम्। एवमभ्यर्थितः सुभूतिर्विगताभिमान एवोत्पादित बोधि-चित्तो मार्गज्ञताधिगमे भव्य इति विषयप्रतिनियमद्वारे-णाह। तेन हीत्यादि। यस्मादेव श्रोतुकामानि तेन कारणेनोपदेक्ष्यामि कथयिष्यामि। चित्तमिति। शून्यता-करुणागर्भमिति भावः। त्रियानव्यवस्थानमाभिप्रायिकं न लाक्षणिकमिति न्यायादनुत्तरसम्यक्सम्बोधिपर्यवसान एव सर्वो जन इत्यतो वीतरागेतरयोगिनापि बुद्धत्वप्राप्तये मार्गज्ञता भावनीयेति व्याप्तिमादर्शयितुं श्रावक-यानादिप्रतिपन्नानामनुत्तरसम्यक्सम्बोध्यभाजनत्वेनानि-यतगोत्राणां प्रथमतो महाबोधावाकर्षणार्थमन्येषाञ्च प्रवृत्तानां सन्धारणार्थमित्याभिप्रायिकं वचनमाह। ये

त्ववक्रान्ता (p. 33, 17) इत्यादि । तुशब्दोऽवधारणे । य एवावक्रान्ताः सर्वथाऽधिगताः सम्यक्त्वनियामं स्वश्रावकादिदर्शनादिमार्गं न ते भव्या योग्या बुद्धो भवेयं जगतो हितायेत्यनुत्तरसम्यक्सम्बोधिनिमित्तं चित्तमुत्पादयितुम् । यत्र बालोऽपि जनः शक्तस्तत्र कथं विदितार्यमार्गाः श्रावका न शक्ता इति । तत्कस्य हेतोरित्याशङ्क्याह । बद्धसीमान इत्यादि । स्वमार्गनिर्दग्धनिःशेषत्रैधातुकोत्पत्तिक्लेशावरणतया यस्मात्ते श्रावकाः संसारस्रोतसो जन्मप्रवाहाद्बद्धसीमानोऽनुत्पत्तिधर्मतया कृतमर्यादास्ततोऽभव्या एव ते पुनः पुनरभीक्ष्णं संसरणाय जन्मग्रहणाय । ततश्चानुत्तरायां सम्यक्सम्बोधौ चित्तमुत्पादयितुमभव्या इति सम्बन्धः । एतदुक्तम् ।

यावत् संसारवासस्था भवन्ति वरसूरयः ।
तावत् सत्त्वार्थमतुलं शक्ताः कर्तुमनिर्वृताः ॥

इति वचनात्। पुनर्जन्मग्रहणे सति दानादिना सत्त्वार्थक्रियायामभ्यासाद्बोधिचित्तं सुविशुद्धं तथागतपदप्रापकमुपजायते । अतो महाश्रावकाः समुच्छिन्नक्लेशतया पुनर्जन्माख्यमूलकारणनिवृत्त्या तादृग्विधं चित्तरत्नं कार्यात्मकं नोत्पादयितुं शक्ता निर्हेतुकत्वप्रसङ्गात् । बालाः पुनर्यथोक्तविकलकारणसद्भावेन शक्नुवन्त्येवेति युक्तरूपमेवैतद्वचनं कथमाभिप्रायिकमित्याह। अपि त्वित्यादि। अपितुशब्दो निपातः प्रस्तावेऽथशब्दार्थे वर्तते। तेषामिति महाश्रावकाणां वक्ष्यमाणानुमोदनामनस्कारेणानुमोदेऽनुमोदयामि। किमनुमोदसे । इत्याह। स चेदित्यादि।

यदि ते महाश्रावका बोधिचित्तान्युत्पादयेयुस्तान्यनुमोदे-ऽहमिति सम्बन्धः। कथं प्रतिक्षिप्यानुमोदे स चेत्याह। नाहमित्यादि। यदि नाम विनेयविशेषापेक्षयाऽऽभिप्रायिकं वचनं प्रागुक्तवानहम्। तथापि न पुनः कुशलमूलस्य बोधिचित्तप्रभवबुद्धत्वस्यान्तरायमसम्भवित्वेन विच्छेदं महाश्रावकाणां करोमि। कथं न करोमीत्याह। विशिष्टेभ्य इत्यादि। यस्माद्विशिष्टेभ्यः कल्याणमित्रादिभ्यो विशिष्टतमा एव बोधिचित्तादयो धर्मा अध्यालम्बितव्याः प्रतिकांक्षितव्याः। दग्धपुनर्भवक्लेशानामपि च श्रावकप्रत्येकजिनानां कथं तासु तासु गतिषु जन्म न विरुध्यत इति न वक्तव्यम्। यस्माद्योऽनन्यसत्त्वनेयस्य जन्तोरभिरतिपूर्वको हीनस्थान-परिग्रहः। स सम्यगात्मस्नेहवतो दुःखसुखत्यागाप्तिवाञ्छा-पूर्वकस्तद्यथा कामिनां स्त्रीगुणपरिग्रहस्तथा चेश्वराद्यनधि-ष्ठितस्य जन्तोरभिरतिपूर्वको ग्रहोऽयं गर्भस्थानपरिग्रह इत्येवं स्वभावहेतुना क्लेशानां त्रैधातुकोत्पत्तिं प्रति सामर्थ्यं प्रति-पाद्यते। महाश्रावकास्तु सोपधिनिरुपधिसंज्ञकं बोधिद्वयं लब्ध्वा भवादुरुकरुणाप्रज्ञावैकल्येनोत्त्रस्तमानसाः पूर्वावेधा-क्षिप्तायुःसंस्कारपरिक्षयान्निर्वाणासम्भवेऽपि प्रदीपनिर्वाण-प्रख्यनिर्वाणसंज्ञिनो व्यतिवृत्तत्रैधातुकजन्मानश्च्युतिचित्ता-नन्तरं परिशुद्धेषु बुद्धक्षेत्रेष्वनास्रवे धातौ समाहिता एव पद्मपुटेषु जायन्ते। ततस्तेऽमिताभादिसम्बुद्धभास्करकरैर-क्लिष्टतमोहानये प्रबोधिता बोधिचित्तमुत्पाद्य मुक्त्यवस्थायां नरकादिचारिकामिव गतिं गच्छन्तः क्रमेण बोधिसम्भारं सम्भृत्य लोकगुरवो भवन्ति इत्यागमान्निश्चितमिति। पुनर्भवक्लेशकारणनिवृत्त्या त्रैधातुकोत्पत्तिकार्यं निवर्तते

नत्वनाश्रवधातूत्पत्तिरिति कथं विरोधस्तस्मात् सर्वस्मिन् याने सर्वथैकमहायानसमवसरणदेशनैव न्याय्या लक्ष्यते। एवञ्चार्यसद्धर्मपुण्डरीकसत्यकीपरिवर्तादिषु पाठः सुनीतो भवति। "भविष्यसि त्वं शारिपुत्रानागतेऽध्वनि सम्यक्संबुद्धः"। तथा "एकं हि यानं द्वितीयं न विद्यते" इत्यादि। पुनरुक्तासपरिवर्जनार्थं केषाञ्चिद्दशधर्मकरत्नमेघादिष्वेकयानदेशनार्थो नीतार्थ इति भगवतैवं स्पष्टीकृतः। लङ्कावतारे चोक्तं "नास्ति महामते श्रावकयानिकानां श्रावकयानेन मोक्षोऽपि तु महायानपर्यवसानिका एव ते" इत्यादि। तथार्यनागार्जुनपादास्तन्मतानुसारिणश्चैकयाननयवादिन आहुः।

लब्ध्वा बोधिद्वयं ह्येते भवादुत्त्रस्तमानसाः।
भवन्त्यायुःक्षयात्तुष्टाः प्राप्तनिर्वाणसंज्ञिनः॥
न तेषामस्ति निर्वाणं किन्तु जन्म भवत्रये।
धातौ न विद्यते तेषां ते ऽपि तिष्ठन्त्यनाश्रवे॥
अक्लिष्टाज्ञानहानाय पश्चाद्बुद्धैः प्रबोधिताः।
सम्भृत्या बोधिसम्भारांस्तेऽपि स्युर्लोकनायकाः॥

इति। तदेवं सर्वाकाररमणीयतत्त्वनिर्देशादार्यसुभूतौ समुपजातबहुमानानां प्रसादोपबृंहणाय भगवानाह। साध्वित्यादि (p. 34, 5)। अगोचरोऽप्येवमर्थो विस्पष्टवाग्भिः प्रत्यक्षेणेव प्रकाश्यत इति विस्मये साधु साध्विति द्विरभिधानम्। यदि वा स्वविवक्षितस्य व्यक्तं द्योतनात् प्रहर्षे पुनः साधुरिति वचनं शोभनमेवैतद्यद्वदसीति। खलुशब्दोऽवधारणे। यःशब्दो निपातो यस्मादर्थे वर्तते। क्वचि-

त्पुस्तके यदिति पाठः। यस्मात्त्वमेकयानदेशनया बोधिसत्त्वानां स्वपक्षस्थिरीकरणेनोत्साहं ददासि नानानयवादिनस्त्वार्यासङ्गपादास्तदनुसारिणश्चान्यथा व्याचक्षते। येत्ववक्रान्ता इत्यादि वाक्यं नीतार्थमपि तु खल्वित्यादिवचनं नेयार्थमतो व्याख्यर्थौ बुद्धगोत्रकानधिकृत्येति।

तथा।

आकर्षणार्थमेकेषामन्यसन्धारणाय च।
देशिता नियतानां हि सम्बुद्धैरेकयानता॥

इत्यादिना च सूत्रान्तरविरोधं परिहरन्ति। पूर्वस्मिन्नेकयानदेशनापक्षे ये श्रावकादिबोध्यधिगमपूर्विकां महाबोधिमधिगच्छन्ति ते तावत्कालं व्यपदेशेन श्रावकादिगोत्रका व्यपदिष्टाः। प्रथमतस्तु प्रमुदिताभूम्यधिगमानुक्रमेणानुत्तरबोधिभाजो महायानगोत्रका इति गोत्रभेदो न विद्यत इत्यलं प्रसङ्गेन। इदानीं मार्गज्ञतायाः स्वभावं कारित्रञ्च कथयन्नाह। कृतज्ञैरित्यादि। निष्पादितोपकारस्मरणदक्षाः कृतज्ञाः। ननु विशेषमार्गादिनाऽपरिसमाप्तकार्यत्वात् क्रियमाणोपकाराः कथमेवं वदन्तीति। तत् कस्य हेतोरित्याशङ्क्याह। पौर्वकाणां हीत्यादि (p. 34, 9) पूर्वका एव पौर्वकाः। प्रज्ञादेराकृतिगणत्वेन स्वार्थे तद्धितविधानात्। अस्मदर्थेऽस्माकं प्रयोजनेन कृतेनेत्यर्थः। श्रावकयानपुरःसरस्य धर्मचक्रस्य प्रवर्तनादिति मतिः। यथेत्यस्मदर्थ इति सम्बन्धो यदि वा यथाऽववदित इति। ब्रह्मचर्यमब्रह्मचर्याद्विरतिः।

वृत्तस्थः श्रुतचिन्तावान् भावनायां प्रयुज्यते।

इत्यनेन यथासम्भवं पञ्चशिक्षापदादिकत्वं कथयति। बोधायानुत्तरबोधिनिमित्तम्। चरन्नित्यासंसारं सत्त्वार्थकरणप्रवृत्तत्वेनोत्पादितबोधिचित्तस्य सर्वथा मार्गज्ञतया क्लेशाप्रहाणमित्यस्याः स्वभावेन क्लेशवशितामासाद्य दीर्घकालं प्रतिपद्यमानः सन्नित्यनेन स्वभावः कथितः। अन्यथाऽपरिपूर्णैव बोधिचर्या स्यादिति मतिः। अववदितो यथाववादेन दानादिषु पारमितासु। अववादः कृतोऽववादितोऽववादं दत्त्वाऽववादकः कृत इति व्युत्पत्तिः। क्वचिदववादित इति पाठः सुगमः। अनुशिष्टोऽनुशासन्या। तत्रेति तेषु श्रावकेषु क्वचिदवस्थायाञ्चरतेति। यथोक्तस्वभावस्य भूतकोटेरसाक्षात्करणेन प्रज्ञोपायकौशलेन च दानादिभिरपरिगृहीतासमादापितापरिमोचितसत्त्वपरिग्रहणसमादापनपरिमोचनादिकर्म कुर्वता सम्भृतसम्भारेणेति कारित्रमावेदितमन्यथाऽधिगमानुपपत्त्या। अनुत्तरं ताथागतं ज्ञानमुत्पादितमधिगतम्। एवं दृष्टान्तमावेद्य दार्ष्टान्तिकमर्थमाह। एवमित्यादि (p. 34, 13)। एवमिति तथेत्यर्थः। अपिशब्दान्न केवलं भगवताऽस्माभिरपि महाश्रावकैरववादानुशासनीभ्यामेवानुग्रहपरीन्दनान्यायेनानुपरिग्रहीतव्या अनुपरिवारयितव्याश्च। तथोत्तरोत्तरपरिपाकार्थं संपरिग्रहीतव्याः संपरिवारयितव्याश्चेति। चशब्दोऽवधारणार्थः। कोऽत्र प्रतिबन्धो यथा भगवान् पूर्वं बोधिसत्त्वावस्थायां श्रावकैरनुपरिगृहीतो भवद्भिरपि श्रावकैरन्ये बोधिसत्त्वास्तथानुपरिग्रहीतव्या इति। तत्कस्य हेतोरित्याशङ्क्याह। अस्माभिरपीत्यादि (p. 34, 15)। अयमाशयो यथा पूर्वश्रावकैः स्वबुद्धानां

बोधिसत्त्वावस्थायामस्मदर्थं ब्रह्मचर्यचरणं जातमिति पूर्वकृतोपकारावबोधकारणेन तेषां प्रत्युपकारचिकीर्षया तदन्तिकेऽस्मदर्थं ब्रह्मचर्यं चरन् भगवान् बोधिसत्त्वावस्थायां प्रियतमः शाक्यमुनिरनुपरिगृहीतः। अस्माभिरपि श्रावकैः शाक्याधिराजस्य बोधिसत्त्वावस्थायामस्मदर्थं ब्रह्मचर्यचरणं जातमिति पूर्वकृतोपकारावबोधकारणेन भगवतः प्रत्युपकाराभिप्रायाद्युष्मदन्तिकेऽनागतसत्त्वार्थं ब्रह्मचर्यं बोधिसत्त्वाः प्रियतमाश्चरन्तोऽनुपरिग्रहीतव्याः। एवं हि वयं भगवतः कृतज्ञा इति। एवमनुपरिग्रहे किं भवतीत्याह। क्षिप्रमित्यादि। अभिसम्भोत्स्यन्तेऽधिगमिष्यन्ति। क्वचिदभिसम्बुध्यन्त इति पाठः। स तु नहि तदानीमेवाभिसम्बुध्यन्तेऽनुपरिगृहीता इति, चिन्त्यमित्येके। अविकलकारणसम्पत्त्या कार्योदयविवक्षायां वर्तमाननिर्देश इत्यपरः। यथोक्तमेव ध्यामीकरणादिकं प्रतिपत्तव्यम्। तथाचोक्तम्।

ध्यामीकरणता भाभिर्देवानां योग्यतां प्रति।
विषयो नियतो व्याप्तिः स्वभावस्तस्य कर्म च॥ १ इति

आधारादिकमेवमभिधाय श्रावकमार्गार्थमाह। अथ खल्वायुष्मानित्यादि। तेन हीति (p. 34, 19)। यस्मान्मार्गज्ञताधिकारे स्वमार्गपर्यन्तगतिमासाद्य यानान्तरविनेयसत्त्वार्थं प्रत्यसाक्षात्करणेन सहेतुकमार्गोपदेशपरिचयकौशल्यात् सर्वमार्गाः परिपूरयितव्या बोधिसत्त्वेन तस्मात् कारणाच्छ्रावकमार्गं भाषिष्येऽहं कौशिक शृणिवति सम्बन्धः। यथा देवे वर्षत्यप्यवाङ्मुखे घटे न

किञ्चिदप्युदकं प्रविशति तद्वत्त्वमवाङ्मुखो भूत्वाऽप्रतिपत्त्या मा शृण्वित्याह। साधु चेति। यथोत्तानाशुचिघटे यदुदकं प्रविशति तत् सर्वमशुचीभवत्यकार्योपगतं तद्वत्त्वं विपरीतप्रतिपत्त्या श्रुतमशुचीकुर्वन् मा शृण्वित्याह। सुष्ठु चेति। यथोत्तानशुचिच्छिद्रघटं प्रविशत्युदकं न तु तिष्ठति तद्वत्त्वमस्थिरप्रतिपत्त्या मा शृणु किन्तु तथा शृणु यथा पटुतरानुभवद्वारेण चेतसि स्थिरीभवतीत्याह। मनसि कुर्विति। एवं हि श्रवणं सफलमित्याचार्यवसुबन्धुः। मध्यस्थोऽर्थी भूत्वा शृण्विति यथाक्रममाह। साधु च सुष्ठु चेति। तथैव विचारको भूत्वा निरूपयेत्याह। मनसि कुर्विति। अनेन श्रोतृलक्षणमावेदितमित्यार्यदेवः। भाषिष्येऽहं त इति तवानुग्रहाय प्रकाशयिष्यामि। कथं भाषिष्य इत्याह। यथेत्यादि। यथा येन प्रकारेण प्रज्ञापारमितायां श्रावकमार्गस्वभावायां स्थातव्यं प्रतिपत्तव्यम्। एवमभ्युपगम्येदानीमाह। शून्यतायामिति (p. 34, 20)। दुःखादिचतुरार्यसत्यसम्बन्धिनामाकाराणामनुपलम्भे सामान्योक्तावपि विशेषप्रतीतिः पूर्वाचार्यसम्प्रदायाद्यनुसारेण भवतीति नात्र सन्देहः। तदयं संक्षेपार्थः। तत्रोदयव्ययधर्मित्वेनानित्यतः। सास्रवस्य वस्तुनः प्रतिकूलत्वेन दुःखतः। एवं कृत्वाऽनित्योऽप्यार्यमार्गोऽनास्रवत्वेनार्याणामप्रतिकूल इति नास्य दुःखत्वप्रसङ्गः। परेणात्मना शून्यत्वादनात्मतः। स्वयमनात्मत्वेन शान्तत इति दुःखसत्याकाराः। फलस्येव बीजं मूलहेतुत्वेन रोगतः। फलसमुदयत्वेन गण्डतः। दुःखप्रत्ययत्वेन शल्यतः। दुःखपरम्पराप्रभवत्वेनात्यर्थघातादन्यत

इति समुदयसत्याकाराः। प्रत्यर्थिकभूतत्वेन परतः। प्रत्यर्थिकभावस्य प्रलोपधर्मत्वात् प्रलोपधर्मत इति। तयोरेव दुःखसमुदययोः प्रत्येकं निर्वेदाकारौ। स्वरूपानवस्थितत्वेन चलतः। हेत्वनपेक्षस्य प्रकृत्यैव भङ्गुरत्वेन प्रभङ्गुरत इति। तयोरेव प्रत्येकं विरागाकारौ। ऐहिकामुत्रिकातङ्कस्थानत्वेन भयतः। रक्षःप्रभृतीनामुपक्रमगम्यत्वेनोपसर्गतः। महाभूतसंक्षोभाशनिपाताद्युपक्रमास्पदत्वेनोपद्रवतश्चेति तयोरेव प्रत्येकं निरोधाकाराः। एवञ्च कृत्वाऽऽर्यश्रावको निर्विदे विरागाय निरोधाय च प्रतिपन्नो भवतीत्यागमार्थः कथितः स्यात्। क्लेशविसंयोगत्वेन निरात्मतः। दुःखप्रशमत्वेन शान्ततः। सुखशुचिवस्तुत्वेन विविक्ततः। नित्यहितवस्तुत्वेन शून्यानिमित्ताप्रणिहितानभिसंस्कारत इति निरोधसत्याकाराः। निर्वाणपुरपरिप्रापणार्थेन मार्गतः। निःशेषक्लेशप्रतिपक्षराशिभावेन न्यायतः। चित्तस्याविपर्यासप्रतिपादनार्थेन प्रतिपत्तितः। निरभिनिवेशनित्यस्थानगमनेन नैर्याणिकत इति मार्गसत्याकाराः। तथाच सत्यमुना क्रमेण महायाने केचिदाकाराः पर्यायतः केचिच्च स्वरूपतो निर्दिष्टा इति नाश्रावकमार्गत्वप्रसङ्गः। ततश्चैषां चतुरार्यसत्यसङ्गतानां स्वभावानुपलम्भभावनया मार्गज्ञताधिकारे श्रावकाणां मार्गो बोधिसत्त्वेन परिज्ञेय इति। अस्य चार्थसंक्षेपस्य पञ्चविंशतिसाहस्रिकायां स्पष्टमुपलभ्यमानत्वान्न विप्रतिपत्तिः कार्या। तथाचोक्तम्।

चतुर्णामार्यसत्यानामाकारानुपलम्भतः।
श्रावकाणामयं मार्गो ज्ञेयो मार्गज्ञतानये॥ २॥ इति
श्रावकमार्गमभिधायैवमुष्मार्थमाह। तेन हीत्यादि।

यस्मान्निर्वेधभागीयाधिगमपूर्वकं चतुःसत्यपरिज्ञानं तस्माद्बोधिसत्त्वेनोष्माधिगमार्थं रूपं रूपस्वभावेन शून्यम् । एवं वेदनादयो या च रूपस्य शून्यता या च वेदनादीनामद्वयमेतदद्वैधीकारमित्यभेदतो भावनीयम् । अयञ्चार्थो महासन्नाहसन्नद्धेन भवितव्यमित्यनेन कथितः । तथाहि मध्यमायां जिनजनन्यामुक्तम् । "कियता बोधिसत्त्वो महासन्नाहसन्नद्धो भवति । इह सुभूते बोधिसत्त्वः शून्यतया सर्वधर्मानभेदतः प्रत्यवेक्षत" इत्यादि ॥ तथाचोक्तम् ।

रूपादिस्कन्धशून्यत्वाच्छून्यतानामभेदतः ।
उष्मागः

इति मूर्धार्थमाह । न रूपे स्थातव्यमि(p. 35, 1)त्यादि । उपलम्भयोगेनेति भावः । एषामेव पञ्चस्कन्धानां न चक्षुषीत्यादिना न स्मृत्युपस्थानेष्वित्यादिना न स्रोतआपत्तिफल इत्यादिना च यथाक्रमं सास्रवोभयानास्रववत्त्वेन प्रभेदं दर्शयतीति हारकार्थः । धात्वादीनाञ्च स्वरूपलक्षणमभिप्रतीतमिति न लिखितम् । यावन्न मनोविज्ञान इत्यत्र यावद्ग्रहणेन घ्राणादिविज्ञानातिदेशं करोति । न बुद्धत्वे स्थातव्यमित्यनुत्तरसम्यक्सम्बुद्धत्वे यद्याधारात्मके रूपादौ न स्थातव्यमेवं तर्हि व्यावृत्तिफलत्वात् सर्ववाक्यानां रूपादिकमिति तादात्म्येनावस्थानं प्राप्तमिति कस्यचिदाशङ्कानिषेधार्थमाह । इति हि न रूपमित्यादि (p. 35, 12) । इतिशब्दस्तस्मादर्थे । हिशब्दः पूर्ववत् । तदयं वाक्यार्थो यस्मान्न्यायतोऽनुपलम्भभावनया रूपादेरसत्त्वादाधार-

भावनानुपपत्तिस्तस्मादेव च कारणात् स्वरूपविरहे तादात्म्येनान्यथा चोपगमो न युक्तरूपः। सन्निहित-विनेयजनविपर्यासनिराचिकीर्षया तु कथञ्चिदाधार-भावेन निर्देशान्न व्यावृत्तिफलमास्थेयमतो मूर्धाधि-गमार्थं सर्वथानुपलम्भभावना रूपादीनां विधेयेति। तथाचोक्तम्।

अनुपलम्भेन तेषां मूर्धगतं मतम् ॥ ३ ॥ इति

यावन्मनःसंस्पर्शजेति। अत्र यावद्वचनेन चक्षुर्विज्ञानादि-सङ्ग्रहः। यावद्विज्ञानधातुरित्यत्र यावदुपादानेनार्थत्वादि-परिग्रहः। क्षान्त्यर्थमाह। रूपं नित्यमनित्यमित्यादि (p. 35, 20)। अनित्यादिपदं व्याख्यातम्। तद्विपर्ययेण नित्यादिपदं वाच्यम्। विपक्षप्रतिपक्षभेदेन दुःखसत्या-कारोपादानं प्रधानत्वात् सर्वाभिनिवेशनिवृत्तये कृतम्। शुभमशुभमिति (p. 36, 5)। शुभं प्रशस्तमशुभमप्रशस्तम्। एतच्च परिशिष्टसत्याकारसूचनपरम्। यद्येवं सर्वाकार-विगमे स्वभावशून्यमेव तर्हि प्राप्तमित्याशङ्कावारणार्थ-माह। रूपं शून्यमित्यादि। अशून्यवस्तुप्रतिषेधेन शून्य-मित्युच्यते। अतो यथोदितविधिना वस्त्वभावान्न निर्विषय-प्रतिषेधोऽयुक्त इति मतिः। एतदुक्तम्। "क्षान्त्याधि-गमाय रूपादौ नित्यमनित्यमित्यादिभिराकारैरुपलम्भ-योगेन सर्वथावस्थानं न विधेयमित्येवम्भावनीयमि"ति। तथाचोक्तम्।

क्षान्तयस्तेषु नित्यादियोगस्थाननिषेधतः। इति

अग्रधर्मार्थमाह । स्रोतआपत्तिफलमित्यादि । असंस्कृतप्रभावितमिति (p. 36, 8) । तत्त्वतोऽनुत्पादस्वभावत्वान्मार्गस्यासंस्कृतनिर्जातं फलं कार्यम् । सामान्येनाभिनिवेशनिषेधार्थमेवं निर्दिश्य विशेषेणाह । स्रोतआपन्नो दक्षिणीय इत्यादि । विशिष्टपुण्यक्षेत्रत्वेन मुख्यतो दक्षिणार्हत्वाद्दक्षिणीयः । सप्तकृत्वो भवपरम इति । कर्तव्यशेषतया परेण प्रकर्षेण यावत् सप्तवारान्संसारवासनिम्नः । अपरिनिष्ठितत्वादित्यादि । अपरिसमाप्तकार्यत्वात्सकृदेकवारम् । इमम् मनुष्यलोकमागम्य संप्राप्य दुःखस्य रागादिक्लेशगणस्यान्तं विनाशं करिष्यति । तत्रैवान्तराभवाद्यवस्थायाम् । इहैवेति । यस्मिन्नेव जन्मन्यर्हत्त्वं ज्ञातस्तस्मिन्नेवेत्यर्थः । अनुपधिशेषनिर्वाणधाताविति (p. 36, 16) । न विद्यन्त उपधयः स्कन्धाः सर्वरागादिप्रहाणावशेषीभूतत्वेन शेषा यस्मिन्निर्वाणे तत्तथोक्तम् । निर्वान्त्यस्मिन्सर्वे विकल्पा इति निर्वाणं तथता । तदेव धातुस्तदालम्बनभावेनार्याणां निष्पत्तेर्हेतुरतस्तस्मिन्निति योजनीयम् । स्रोतआपन्न इत्यादि । चतुर्विधफलस्योपादानेन नान्तरीयकतया प्रतिपन्नकावस्थाश्चतस्रोऽपि ग्राह्यास्तेन श्रावकभूमिरष्टप्रकारा भवति । यस्य च पुद्गलस्य यावन्मात्रक्लेशप्रकारप्रहाणेन प्रतिपन्नकत्वादिव्यवस्था तत्प्रागेवोक्तमिति न पुनरुपन्यस्यते । प्रत्येकबुद्ध इत्याद्युद्देशपदं निर्दिशन्नाह । प्रत्येकबुद्धोऽतिक्रमेत्यादि । आत्मानमेकं प्रतिनिमित्तभूतं स्वबोधिं बुद्धवान् स्वयमिति प्रत्येकबुद्धः नैवं श्रावकेऽपि प्रसङ्गस्तस्य परोपदेशसापेक्षत्वात् । न च

सम्यक्सम्बुद्धेऽपि प्रसङ्गस्तस्य सर्वाकारज्ञतायाः सर्वसत्त्वार्थोद्देशेन विशिष्टत्वात्। अनेन च नवमी प्रत्येकबुद्धभूमिरुक्ता। ग्राह्यार्थविकल्पप्रहाणेन श्रावकभूमिमतिक्रम्योल्लंघ्य ग्राहकार्थविकल्पाप्रहाणेनानुत्तरबुद्धभूमिमप्राप्यानधिगम्य। तथैव बुद्धो दक्षिणीय इति। न स्थातव्यमिति पदं विद्दण्वन्नाह। बुद्ध इत्यादि। पृथग्जनभूतमिति। अधिमुक्तिचर्याभूमिम्। अप्रमेयाणामित्यादि (p. 36, 21)। प्रत्यक्षादिप्रमाणेन प्रमातुमशक्यत्वादप्रमेयाणाम्। एकत्वादिसङ्ख्यारहितत्वेनासङ्ख्यानाम्। एतेन यत्र क्वचिद्विनयादौ सुभद्रान्तप्रतिनियतसत्त्वार्थकरणमुक्तम्। तदाभिप्रायिकमित्युपपन्नम्। यद्वात्र लोकधातावर्थक्रियामधिकृत्य तदुक्तमन्यत्र तु निर्माणमेघैः सर्वलोकधातुषु सत्त्वार्थकारणादप्रमेयादिवचनमविरुद्धम्। अथवाऽन्यादेवेदं प्रतिविशिष्टं महायानसंज्ञितं यानान्तरं गाम्भीर्यादियुक्तमतोऽत्र विलक्षणैव देशनेति न यानान्तरेण सह विरोधो वाच्यः। तथान्यत्राप्येवंजातीयकेष्वर्थेष्वयमेव परिहारो ग्राह्यः। सत्त्वानामर्थं कृत्वेति। केषांचिद्दानादिभिरभ्युदयधर्मं निष्पाद्य परिनिर्वाप्येति श्रावकादिनिर्वाणे कांश्चिन्निःश्रेयसधर्मे प्रतिष्ठाप्य। श्रावकप्रत्येकबुद्धसम्यक्सम्बुद्धत्वनियतानिति यस्य कुशलनिर्वेधभागीयादेरधिगमान्नियमेनाभ्युदयनिःश्रेयसधर्मौ प्राप्यते तत्र हेतौ स्थापनादन्यान्नियतान्नियतगोत्रस्थानिति यावत्। बुद्धभूमावि-(p. 37, 1)त्यनेन समन्तप्रभा दशमी बुद्धभूमिः कथिता। बुद्धकृत्यमिति धर्मचक्रप्रवर्तनम्। बुद्धपरिनिर्वाणेनेति

श्रावकाद्यसाधारणपरिनिर्वाणेन । एतच्च परिनिर्वाणमिष्टं निर्माणकायेन। कुत एतत्। आगमाद्युक्तितश्च। तथा हि ये समग्रस्थितिहेतवस्ते नित्यमुपरतस्थितिधर्माणो न भवन्ति। यथा संपूर्णदहनेन्धनादिसमग्रस्थितिकारणा धूमादयः। सम्यगासंसारमविकलस्थितिहेतवश्च बुद्धा भगवन्त इति। स्थितिविच्छेदव्यापकेनासमग्रस्थितिहेतुत्वेन विरुद्धस्य समग्रस्थितिहेतुत्वस्येह विधानाद्व्यापकविरुद्धोपलब्धिः। कथं हेतुसिद्धिरिति चेदुच्यते। स्थितिहेतुवैकल्यं सत्त्वार्थसंपादनशक्तिपरिक्षयान्महाकरुणाव्यपगमादायुःसंस्कारावस्थापनवशिताभ्रंशाज्जीवितेन्द्रियविपाककर्ममर्यादानाद्बुद्धविनेयसत्त्वाभावतो वा भवेत्। तत्र शास्तुरव्याहतशक्तिज्ञानप्रतिज्ञानान्न प्रथमो विकल्पः। को हि तस्यान्यथा खड्गादेर्विशेषः स्यात्। दीर्घकालाभ्यासेन श्रोत्रियजोटिङ्गनैर्घृण्यवत्सात्मीकृतत्वान्महाकृपायाः। न यत्नेन विना हानिर्यतस्तु नादोषदर्शनाद्विष्टद्धतद्रसास्वादलम्पटस्य तस्यामेव बुद्धेः पक्षपातादिति। नापि द्वितीयो विकल्पः संभवति। ऋद्धिपादाभ्यासकाष्ठावसानगमनात्। न विकल्पस्तृतीयोऽपि युक्तिसङ्गतः। तथा ह्युक्तम्। "यस्य कस्यचिदानन्द चत्वार ऋद्धिपादा आसेविता भाविता बहुलीकृता आकाङ्क्षन् स कल्पं वा तिष्ठेत् कल्पावशेषं वा, तथागतस्यानन्द चत्वार ऋद्धिपादा आसेविता भाविता बहुलीकृता आकाङ्क्षन् स तथागतकल्पं वा तिष्ठेत् कल्पावशेषं वेति"। जीवितफलकर्मसंक्षयोऽपि नानल्पकल्पोपचितप्राणातिपातप्रतिविरतेरभ्यस्तानन्तोपायदानपारमितस्य गुरोः सम्भाव्यते। अयं हि हेतु-

फलयोः धर्मो यत् प्रकृष्टाद्धेतोः प्रकृष्टं फलमप्रकृष्टाच्चाप्रकृष्टमिति। अन्यथा कारणप्रकर्षाभ्यां कार्ये तदसम्भवान्नोपकार्योपकारकभावो भवेत्। तद्गतभेदानपेक्षणात्। अस्ति च शास्तुरमितजीवितकारणमनवद्यामितपरबधविरत्यादीति कथमब्दशतमप्यनवस्थानम्। सर्वस्यैवास्य सर्वज्ञताफलमिति चेत् नाभिमुख्येन दीर्घकालजीवितफलसंवर्णनात्। प्राणातिपातविरतिदानपारमितयोर्ह्यन्वयव्यतिरेकाभ्यामनल्पमायुः फलमुपवर्णितम्। यश्च यस्याभिमुख्येन हेतुर्वर्ण्यते स परिपुष्टप्रत्ययसमवधानेन। तदुत्पादयन्नेवान्यस्यापि यदि निमित्ततां प्रतिपद्यते तदा न दोषः। न त्वसकृद्विनिश्चितं फलमपहायान्यदुत्पादयति। सकृदप्यतज्जनकत्वप्रसङ्गात्। किञ्च धर्मतत्त्वाभ्यासवशादेव सर्वाकारज्ञतोपजायते। पुण्यसम्भारस्तु तस्य विशिष्टाश्रयोत्पादनादानुगुण्यमापद्यते। तस्मात् साहसमात्रं पुण्यपरिक्षयाद्भगवतो मरणवर्णनम्। स्यान्मतिस्तथागतविनेयसत्त्वासम्भवात् परिनिर्वाणमिति। तदच चिन्त्यम्। किं बुद्धरूपविनेया एव सत्त्वा विद्यन्ते किं वा रूपान्तरविनेया अपीति। यदि पूर्वः पक्षस्तदा शक्रादिरूपसन्दर्शनविनेयजनसम्भवात्ताद्रूप्येण किन्नावतिष्ठेत्। आश्रयन्ते हि दयाविधेयचेतसश्चेष्टान्तरमपि जनहितसम्पादनाय यथा भगवतैव चक्रवर्तिरूपमास्थितम्। न च शक्रादिरूपविनेयाभावोऽपि ज्ञापकाभावात्। शक्रादीनां परोपकाराभावप्रसङ्गाच्च। अपि च। एकत्र लोकधातौ बुद्धरूपविनेयजनाभावेऽपि लोकधात्वन्तरेष्वपरिमितेषु तद्भावात् किमस्य परिनिर्वाणम्। धात्वन्तरेऽपि ते न सम्भवन्तीति

चेत्। तदिदमज्ञापकं नहीदं पठ्यते क्वचित् सर्वेष्वेव लोकधातुषु बुद्धरूपसन्दर्शनविनेयाः सत्त्वा न सन्तीति। अथ मतम्। नियमतो न सन्ति। सत्त्वे हि परार्थवृत्तेः किं परिनिर्वाणमिति। नन्विदमेव न सिद्धं परिनिर्वृत इति। यस्मादेकत्र धातौ बुद्धरूपसन्दर्शनविनेयासत्त्वे निर्वाणोपदर्शनविनेयजनानुग्रहविधानायोपदर्शितनिर्वृतिरप्यन्यत्राविकलं जातिबोधिधर्मचक्रप्रवर्तनाद्युपदर्शयतीत्ययं समयः।

यथोक्तम्।

न बुद्धः परिनिर्वाति धर्मोऽन्तर्हीयते न च।
सत्त्वानां परिपाकाय निर्वाणं तूपदर्शयेत्॥ इति

अन्यत्रान्येऽपि तावत् साधवो बोधिभवभाविनः। कृपादारिद्र्येऽपि सत्यधनपालनाय प्रतिज्ञातार्थनिर्वहणमवश्यं तया सर्वशक्तिपरिक्षयेणापि सम्पादयन्तो दृश्यन्ते। तथागतास्तु सकलसाधुजनचूडामणयः समुत्तीर्णभवभयाः सात्मीकृतह्रीसत्यकृपाधर्माणोऽप्रतिहतज्ञानशक्तयो न सम्पादयन्तीति कः पुनः सचेतनः श्रद्दध्यात्। प्रतिज्ञातश्च तैः सत्त्वानामत्यन्तदुःखनिर्मोक्षणम्। तथा हि भगवता पूर्वं प्रणिहितम्।

अनेन पुण्येन तु सर्वदर्शिता-
मवाप्य निर्जित्य च दोषविद्विषः।
जरारुजामृत्युमहोर्मिसङ्कुलात्
समुद्धरेयं भवसागराज्जगत्। इति

न च जगच्छब्देन कतिपयसत्त्वग्रहणं न्याय्यम्। मा भूत् सर्वसत्त्वालम्बनाभावो महाकरुणाया इति। अतश्च याव-

देकोऽपि सत्त्वोऽस्ति न तावन्निर्वाणं कृपाशयस्य युक्तम्। न सम्भवत्यपर्यन्तत्वात् सर्वसत्त्वानां संसारादभ्युद्धरणमिति चेत्। अत एव दयामयस्य तदाशयस्यापर्यन्तमेवावस्थान-मन्यथा न प्रतिज्ञानुरूपमनुष्ठानं भवेत्। न च महा-करुणानुरूपम्। तथा हीयं महाकरुणा सर्वसत्त्वदुःख-परित्राणेच्छाकारा तदस्याः सुभावितायाः कुतोऽकाण्ड एव विच्छेदः। स्यान्मतिः। न विच्छेदः किन्तु ये तत्काल-भाविनो बुद्धविनेयाः सुभद्रान्तास्ते सर्वे विनीताः। ये चान्ये कालान्तरेण परिपक्वसन्ततयो भविष्यन्ति। तदर्थ-करणायान्य एव तथागताः क्रमेणोत्पत्स्यन्ते। ततस्तद्धित-सम्पादनायान्यमेव कञ्चिद्बोधिसत्त्वमभिषिच्य परिनिर्वाति। अन्यथान्तरालेऽपरार्थवृत्तेर्निरर्थकमवस्थानं भवेदिति। तदयुक्तम्। बुद्धविनेयसत्त्वाभावस्यासिद्धत्वात्। सर्वलोक-धातुषु क्रियान्तरविनेयजनभावाच्च। यथोक्तं प्राक्। न चानर्थकमवस्थानं तदर्थकरणायैवावस्थानात्। यथा शाक्याधिराजस्यैव सुभद्रप्रतीक्षया कतिपयक्षणावस्थानम-भूत्। स्वल्पतरः स काल इत्यपि न सम्यक्। येनाभि-प्रेतफलाहितचेतसो न कालस्य दैर्घ्यमदैर्घ्यं वा गणयन्ति। कालान्तरेण परिपक्वसन्ततिष्वपर एव समर्थो भविष्यतीत्य-नुत्तरम्। यस्मादेवं बोधिचित्तोत्पादनेऽपि न यत्नः प्राप्नोति बहूनां लोकाभ्युद्धरणाशयानां व्यापारदर्शनादेतैरेव व्यापृताः किमत्र मया कर्तव्यमित्याशयात्। कारुणिक-त्वादिमां गणनामकृत्वा वृत्तिश्चेत्। अत्यन्तावस्थाने कस्माद्गणनामारभन्ते। युक्ता हि तस्यामवस्थायामगणना सात्मीकृतत्वाद्वृत्तिहेतोः करुणायाः।

तस्मात् ।

अल्पकल्पासंख्येयभावनापरिवर्द्धिताः ।

तिष्ठन्त्येव पराधीना येषां तु महती कृपा ॥

गुणमयमूर्तेस्तु भगवतोऽत्यन्तोच्छेदलक्षणायां परिनिर्वृताविष्यमाणायां तच्छरणार्थोऽपि नेदानीन्तनानामुपपद्यते। तथाहि त्राणार्थः शरणार्थो वर्ण्यते यश्च बुद्धं भगवन्तं शरणं गच्छति। सोऽशैक्षान् बुद्धकारकान्धर्मान् शरणं गच्छति। प्रदीपप्रबन्धस्येव बुद्धकारकाशैक्षधर्मात्मकजिनात्यन्तप्रत्यस्तमये कुतस्तेषां त्रातुं सामर्थ्यम्। सामर्थ्यसम्भवेऽनिर्वृतिप्रसङ्गः सामर्थ्यलक्षणत्वाद्वस्तुनः। अतीतार्थस्थितस्य न शक्तिर्व्याहन्यत इति चेत्। नातीतस्य ताद्रूप्येणास्तित्वे वर्तमानताप्राप्तेः। तथा च सैवाप्रतिष्ठितनिर्वाणसिद्धिः। समस्तरूपप्रत्यस्तमये वा किमवशिष्यते। अथ मतम्। तदुपदिष्टस्य प्रवचनरत्नस्य त्रातुमद्यापि सामर्थ्यमस्तीति तस्यापि सामर्थ्यमुच्यत इति। यद्येवं न मुख्यं तर्हि तच्छरणं स्यात्। न हि तत्कार्यस्य सामर्थ्यं तस्य भवति। स्वभावभेदात्। तस्य चाधुना सामर्थ्यमेकान्तेन न प्रच्युतमिष्यत इति। नानुपचरितस्तच्छरणार्थोऽस्ति। को वायमागमधराणामस्थाननिर्बन्धो यदमी निष्कारणवैरिणो युक्त्यागमान्तरोपेतमप्याभिप्रायिकमागमार्थमुल्लङ्घ्य भगवन्निर्वृतिप्रतिपादनाय सोत्साहाः सन्तिष्ठन्ते। भगवतः परिनिर्वाणाभावे कथं धातवो दृश्यन्त इति चेत्। नापि धातूनामयोगो भगवदाधिपत्यादेव तद्विनेयानां प्रसादायतनधातुप्रतिभासनात्। परमार्थस्तु धातवो नेष्यन्त एव। मायोपमज्ञानमयकायत्वा-

न्मुनीनामकलुषधियामासंसारावस्थानाच्च। यथोक्तं सुवर्णप्रभासोत्तमसूत्रे।

यदा शशविषाणेन निश्रेणी सुकृता भवेत्।
स्वर्गस्यारोहणार्थाय तदा धातुर्भविष्यति॥
अनस्थिरुधिरे काये कुतो धातुर्भविष्यति।

इत्येवं नासिद्धो हेतुः। सपक्षभावान्न विरुद्धः। अविकले कारणे सति कार्यासम्भवायोगो बाधक इति विपर्यये बाधकप्रमाणान्नानैकान्तिकः। अथ मतम्। आसंसारावस्थितौ महामुनेरव्याहतज्ञानशक्तिकस्यापरतथागतोत्पादो व्यर्थ इत्यदोषो यस्मादव्याहतज्ञानशक्तित्वेऽपि यौगपद्येनापि बहुबुद्धरूपविनेयसत्त्वार्थेषु भगवन्तस्तथागतास्तुल्यकारणवृत्तित्वाच्छिलावस्तब्धमण्डूकोद्धरणेन पृथग्जनभूमिस्थिता इव दयालवः प्रवर्तन्ते। नाप्यपरतथागतोत्पादे पूर्वतथागतज्ञानशक्तिर्व्याहतेति वक्तव्यम्। एकत्र सन्निपत्यापि तद्रूपसन्निपातविनेयजनसम्भवे सत्त्वार्थकरणात्। तथाह्येकस्याव्याहतज्ञानशक्तिसद्भावेनापरेण तत्तुल्यहेतुना तथा न भवितव्यमिति न्याय्यम्। न ह्येकः सूरिर्भूत इत्यपरैस्तत्समाननिमित्तैर्न भवितव्यम्। स्यात् मतिरेकतथागताविनेयत्वे सर्वेषामविनेय इति नैवम्। यस्मादेकस्य भगवतोऽविनेयत्वेन तुल्यसम्भारतया बहूनामपि तथागतानां प्रत्येकमेकैकरूपेणाविनेयोऽपि सन्निर्मितबहुबुद्धरूपविनेयः स्यामिति। तथाविधप्रणिधानादिकारणसमाक्षिप्तत्वेन युगपत्सर्वेषामेव विनेयो भवति। अत एव स्वपरिपाचितसत्त्वविनयासम्भवान्नापि श्रावकैर्वा समानत्वमवसेयम्।

अत एव तद्रूपसन्निपात विनेयजनासम्भवान्नैकस्मिन् समवधानमत एव च नैकलोकधातौ युगपद्बहुतथागतोत्पत्तिः। तत्सम्भवेऽपि न विरोधोऽपगतमात्सर्येर्ष्यादिमलानाम्। तथा हि तैरित्थं प्रणिहितम्।

यथा यथार्थसम्पत्तिर्भव्यानामुपपत्स्यते।
तथा तथावभासोऽपि भूयादस्मत्समाश्रयात्॥

इत्यलमतिप्रसङ्गेन। न्यायोपपन्नतथागतनिर्माणकायपरिनिर्वाणेऽप्यस्थानानुपपत्तिरित्यभिप्रायवान् यदीत्याद्यनुवादपूर्वकमाह। तत्कथं पुनरित्यादि (p. 37, 10)। यद्येवन्न स्थातव्यम्। तदानेन बोधिसत्त्वेन कथं केन पुनः प्रकारेण स्थातव्यं प्रतिपत्तव्यम्। शिक्षितव्यम्। प्रतिपत्त्या संपादयितव्यम्। किंशब्दस्य क्षेपाभिधायित्वान्नैव केनचित्प्रकारेणेत्यर्थः। तद्वचनेनैव परिहारं दापयितुमाह। तत्किं मन्यस इत्यादि। यत्तथागतस्थानं तत् किं त्वं मन्यसे बुध्यसे। यदि स कथयेत्याह। क्वेत्यादि। अपि तूपालप्स्ये त्वेत्यादि। प्रथमपरिवर्ते (p. 37, 10) यदुक्तं तदनेन प्रतिपादितमिति ग्राह्यम्। स्थानशब्दस्य यथारुतत्वेन दोष इत्यभिप्रायात् प्रतिवचनमाह। न क्वचिदित्यादि। ननु गृध्रकूटादौ स्थितोऽपि भगवान् कथं न क्वचित्स्थित इति। तत् कस्य हेतोरित्याशङ्क्याह। अप्रतिष्ठितमानस (p. 37, 15) इत्यादि। यस्माद्बोधिसत्त्वोऽभिसम्बुध्य तत्त्वतो धर्माणामनिदर्शनादप्रतिष्ठितं मानवमानसमस्येत्यप्रतिष्ठितमानसस्तथागतः। तस्मान्न क्वचिदुपलम्भयोगेन स्थित इति पूर्वेण सम्बन्धः। तदेव कथयन्नाह। स नैवेत्यादि।

संस्कृत इति। कामादिके। असंस्कृत इति। तथतादिके। तच न स्थितस्तत्त्वतो वस्त्वनुपलम्भात्। न च ततो व्युत्थित इति। नैव तत्रास्थितो निर्विषयस्य नञोऽप्रयोगात्। संवृत्या स्थानमस्थानं वा प्रज्ञप्तं भगवत इति मतिः। एवमस्माभिरपि पारमार्थिकाभिनिवेशनिषेधेन संवृत्या सर्वत्रावस्थानादिकं विधीयते। यथा त्वयोक्तमतो न सर्वथाऽवस्थानानुपपत्तिरिति तद्वचनेनैव परिहरन्नाह। एवमेवेत्यादि। एवमेवेत्यनन्तरोक्तक्रमेणैवेत्यर्थः। तदेव विभाजयन्नाह। यथेत्यादिना। न स्थितः क्षणिकानित्यवस्त्वभावात्। नास्थितो निर्विषयप्रतिषेधासम्भवात्। न विष्ठितः प्रबन्धानित्यवस्तुनोऽसत्त्वान्न विसदृशीं स्थितिमनुप्राप्तः। नाविष्ठितस्तथैव प्रतिषेधासम्भवात्। एवमनेन शिक्षितव्यमिति (p. 38, 1)। प्रयोगावस्थायां तथा स्थास्यामीति। तथा शिक्षिष्य इति मौलावस्थायामेवमनेन शिक्षितव्यमिति पूर्वेण सम्बन्धः। सुस्थितोऽस्थानयोगेनेति। विशेषाधिगमलाभेन सुष्ठु स्थितो मायापुरुषस्येवानभिनिवेशयोगेन पृष्ठावस्थायामेवमनेन शिक्षितव्यमित्यत्रापि सम्बन्धः। विस्तरेण प्रतिपत्तिमेवं निर्दिश्योपसंहरन्नाह। एवमत्रेत्यादि। तत्र किं भवतीत्यादि। एवम्भावनाधिगताग्रधर्मात्मकेन प्रज्ञापारमिताविहारेण विहरत्यत एव चाविरहितोऽनेन मनसिकारेण भवति। इतिशब्दः प्रकरणसमाप्त्यर्थः। तदयं वाक्यार्थः। यस्मात्तथागतेन बोधिमभिसम्बुध्य तत्त्वतो न केचिद्धर्माः समुपलब्धास्तस्मान्मायास्वभावा एवामी भावाः प्रतिभान्तीति। प्रमाण-

पुरुषा दर्शनकारणोपपन्नानुपलम्भभावनयाऽग्रधर्माधिगमार्थं विस्तरेण स्रोतआपत्तिफलप्रतिपन्नकत्वादिदशभूमिष्वभिनिवेशयोगान्न स्थातव्यमित्येवं भावनीयमिति ।

तथा चोक्तम् ।

दशभूमीः समारभ्य विस्तरास्थानदेशनात् ।
अग्रधर्मगतं प्रोक्तमार्यश्रावकवर्त्मनि ॥
तत्कस्यहेतोर्बुद्धेन बुद्धा धर्मासमीक्षणात् । इति

श्रावकमार्गानन्तरं प्रत्येकबुद्धानां मार्गाभिधाने न्यायप्राप्तेऽपि श्रावकेभ्यः कथं प्रतिविशिष्टास्ते येन तेषां मार्गभेद इत्याशङ्क्य वैशिष्ट्यप्रतिपादनार्थं तावदाह । अथ खलु तत्र पर्षदीत्यादि (p. 38, 7)। यानि तानीति निपातसमुदायत्वेन यानि कानिचित् पूर्वोपश्रुतानीत्यर्थः । यक्षरुतानीति । तेषां यक्षाणां स्वसङ्केतप्रतीतये रुतानि । पदानि रुतसमुदायाः । मन्त्रितानि यावदाविवक्षितार्थपरिसमाप्तिर्महावाक्यानीत्यर्थः । प्रव्याहृतानि । तत्र तत्र कथामार्गे प्रश्नप्रतिवचनानि । तानि विज्ञायन्ते जल्प्यमानानीति । सङ्केतवशादुच्चार्यमाणानि । तानि सार्थकान्यवबुध्यन्ते । न पुनरिदमित्यादि । श्रावकाः परोपदेशसापेक्षाः स्वबोधिं बुध्यन्त इत्यागमः । प्रत्येकबुद्धाः पुनः स्वयं पूर्वश्रुताद्यभिसंस्कारेण परोपदेशं प्रत्यनपेक्षाः स्वबोधिमधिगच्छन्त्यतस्तेषां बुद्धाद्युपदेशैरर्थकमित्येकं वैशिष्ट्यम् । यतस्तस्मात्कारणात् प्रत्येकबुद्धानधिकृत्य यद्भाषणादि न तत् सार्थकं विज्ञायत इति वाक्यार्थः । भाषत इत्यादि व्याख्यातम् । अथवाऽधीष्टदेशना भाष-

णम्। पृष्टप्रतिवचनं प्रव्याहारः। एतद्वेवोभयं सम्मूढानधिकृत्य देशना प्रमत्तानधिकृत्याप्युपदेशना, उपदेशः। अयञ्च वितर्को देवपुत्राणां तथागतानुभावादुत्पन्नोऽवसेयोऽन्यथा न प्रत्येकबुद्धानारभ्यार्यसुभूतिना किञ्चिदुक्तमिति तेषां कथमयं विकल्पः स्यात्। योनिशोवितर्क इत्यनुमत्यर्थमाह। न विज्ञायत इत्यादि। न विज्ञायत इति यदुक्तं तत् साधूक्तमिति शेषः। द्विरभिधानन्तु।

विस्मये च विवादे च कोपे दैन्येऽवधारणे।
प्रसादने प्रहर्षे च वाक्यमेकं द्विरुच्यते॥

इति वचनाद्यथासम्भवं विस्मयावधारणादौ ग्राह्यम्। कथं साधूक्तमित्याह। तथा हीत्यादि (p. 38, 13)। यस्मादश्रोतृसंस्कारकं वाक्यं ब्रुवाणः कथं नोन्मत्तः स्यादिति न्यायेन स्वयम्बोधात्स्वयंभुवां बोधाय न किञ्चिदत्र भाषणादि श्रूयते। तस्मात्तदर्थाय यद्भाषणादि तन्न विज्ञापय इति साधूक्तम्। सालापधर्मदेशनया परान् कुशले श्रावकाः प्रवर्तयन्तीति शब्दोच्चारणधर्मदेशनया श्रोतृभिः क्रियते वक्तृज्ञानसामर्थ्यावबोधः। प्रत्येकबुद्धाः पुनर्ज्ञेयावरणैकदेशग्राह्यविकल्पप्रहाणादशब्दोच्चारधर्मदेशनया स्वाधिगतज्ञानादिसामर्थ्येन परान् दशकुशलादौ प्रवर्तयन्त्यतस्तेषां ज्ञानस्य परानवबोधतया गाम्भीर्यं द्वितीयं वैशिष्ट्यमिति कृत्वा वचनात्मकमपि कार्यलिङ्गभाषणादि न किञ्चिदत्र तज्ज्ञानस्वरूपप्रतिपादनाय सूच्यते। अतद्रूपपरावृत्तवस्तुमात्रप्रसाधनान्निर्दिश्यते। यतस्तस्मादपि कारणान्न विज्ञायत इति साधूक्तम्। प्रत्येकबुद्धानां स्वयम्बोधात् परोपदेशैरनर्थकमित्येवं रूपं वितर्कं परिहारद्वारेण परिहरि-

ष्यत्येवायमार्यसुभूतिरित्यस्माकं चेतो जातं यावत् तमपरि-हृत्यान्यदेव ज्ञानगाम्भीर्यं कथयतीत्याहुर्देवपुत्राः। उत्ता-नीत्यादि। बतशब्दोऽवधारणे। पुद्गलनैरात्म्यनिर्जातत्वेन तीर्थिकानामगोचरत्वाच्छ्रावकज्ञानं दूरम्। तस्माद्दूरतरं मृद्विन्द्रियत्वेन श्रावकानामविषयत्वात् प्रत्येकबुद्धज्ञानम्। क्लेशावरणप्रहाणफलत्वेन श्रावकज्ञानं सूक्ष्मम्। तस्मादपि ज्ञेयावरणैकदेशग्राह्यविकल्पप्रहाणेन सूक्ष्मतरं प्रत्येकबुद्ध-ज्ञानम्। परोपदेशषोडशाकारप्रभावितत्वेन श्रावकज्ञानं गम्भीरम्। तस्माच्च गम्भीरतरं स्वयम्बोधादिदं प्रत्ययता-मात्रप्रभवत्वेन प्रत्येकबुद्धज्ञानम्। सूत्रान्तरेऽप्युक्तम्। "एत एव दशकुशलाः कर्मपथाः स्वयमभिसम्बोधतया गम्भीरा इदं प्रत्ययानुबोधेन च प्रत्येकबुद्धज्ञानं निवर्तयन्ती"ति। प्रविशति तत्पक्षसमाश्रयणात्। तदेवाह। देशयति। भाषत इति।

तथा चोक्तम्।

परोपदेशवैयर्थ्यं स्वयम्बोधात् स्वयम्भुवाम्।
गम्भीरता च ज्ञानस्य खड्गानामभिधीयते॥ ६॥ इति

कथं धर्मदेशना च नामाप्रव्याहारा च येन वचन-कार्यलिङ्गाभावेन ज्ञानगाम्भीर्यं सिध्यतीत्यपि न वक्तव्यम्। यतो नावितर्क्य नाविचार्य वाचं भाषत इत्यालापविक्षेपौ। अतो धर्मदेशनालापमयी महते विक्षेपाय संवर्तते विक्षेपश्च सन्तानक्षोभं गाढमादधातीति मत्वा यथा बुद्धेन भगवता प्राग्बोधिसत्त्वभूतेनैवं प्रणिधानं प्रवर्तितम्। "प्राप्तबुद्धत्वोऽहं चिन्तामणिरिवालापमन्तरेणापि सत्त्वार्थ-क्रियासमर्थो भूयासमि"ति। तथा बुद्धत्वसाम्यात् प्रत्येक-

बुद्धैरतस्तेषामपि स्वबोध्यधिगमावस्थायां पूर्वं प्रणिधानादिसामर्थ्येन यस्मिन्नर्थे येन प्रकारेण यस्य श्रवणेच्छा तस्य विज्ञाने तेनैव प्रकारेणाशब्दोऽपि सोऽर्थः प्रतिभातीत्यशब्दधर्मदेशनोच्यते। सूत्रान्तरेऽप्युक्तम्। "प्रत्येकबुद्धानां कायिकी धर्मदेशना। तथा मनसा शक्राय गाथा विसर्जिते"त्यादि। तथा चोक्तम्।

शुश्रूषा यस्य यस्यार्थे यत्र यत्र यथा यथा।
स सोऽर्थः ख्यात्यशब्दोऽपि तस्य तस्य तथा तथा॥७॥ इति

वैशिष्ट्यमेवाभिधाय विशिष्टानामविशिष्ट एव मार्गोऽन्यथा कारणविशेषानुपपत्तेरिति प्रत्येकबुद्धमार्गं प्रकृतमाह। तेन हीत्यादिना (p. 38, 21)। यस्माद्भवद्भिरेव देवपुत्रैरुक्तम्। दूराद्दूरतरं प्रविशतीत्यादि। तस्मादेव कारणादिदमवगम्यतामिति शेषः। एवं तर्हि नितरां दूराद्दूरतरादिकं प्रविशामीति मतिः। साक्षात्कर्तुकामः प्राप्तुकामः स्थातुकामो निश्चलीभवितुकामः। स नेमां क्षान्तिमनागम्येति। इमां मार्गज्ञतां धर्मनिध्यानक्षमणविषयामप्राप्य स पुद्गलो न सम्भवत्यन्यथाधिगमाभावादित्यनेन च मार्गज्ञतां सर्वमार्गविषयिणीमाह। व्याप्त्यर्थप्रतिपादनेन प्रत्येकबुद्धमार्गाधिकारादिदमुक्तम्। न केवलं ग्राह्यविकल्पस्यैव प्रहाणतः। प्रत्येकबुद्धानां योऽसौ विशिष्टो मार्गस्तत्स्वभावा मार्गज्ञता किन्तर्हि श्रावकादिमार्गस्वभावापीति। पेयालमिति। स नेमां क्षान्तिमनागम्येतिपदं सकृदागामिफलमित्यादिपदत्रयेऽतिदेशनीयमित्यर्थः। ग्राह्यविकल्पस्यैव प्रहाणमिति

वचनाद्ग्राहकविकल्पाप्रहाणं प्रतिपादितम्। "तच्च ग्राह्याभावे तदग्रह" इति न्यायादयुक्तमिति वितर्कयन्त आहुः। किमित्यादि (p. 39, 6)। किंशब्दो वितर्के। किंरूपाः किंस्वभावाः कीदृग्विधग्राहकविकल्पोपेताः प्रत्येकबुद्धयानधर्मभाजो। धार्मश्रवणिकाः प्रत्येकबुद्धा ग्रहीतव्या इति यावत्। परिहारार्थमाह। मायेत्यादि। अयमभिप्रायः। वस्तुधर्मो ह्येष यत् स्वलक्षणे वस्तुनि सति तद्ग्राहकं निर्विकल्पकं ज्ञानस्वलक्षणमुत्पद्यते। तदभावात्तन्नेति। ग्राहकविकल्पस्य पुनरनादिकालीननिरुध्यमानरूपादिग्राहकविकल्पज्ञानसमाक्षिप्तस्वसन्तानवासनाप्रबोधजन्मत्वान्नायं नियमो ग्राह्यविकल्पे सत्येव समुदय इति। तस्मान्मायास्वभावनिर्मितपदार्थसमाना एव ते वितथप्रख्यातिरूपग्राहकविकल्पेन सङ्गतत्वात् प्रत्येकबुद्धाग्राहकत्वेनैवेष्टव्या इति। ननु चैवंविधविकल्पेन ग्राह्यविषयं गृह्णन्तोऽपि कथमलीका इति। तत्कस्य हेतोरित्याशङ्क्याह। तथा हीत्यादि (p. 39, 11)। समाहितासमाहितावस्थायां ते प्रत्येकबुद्धा यथाक्रमं नैव श्रोष्यन्ति न साक्षात्करिष्यन्ति ग्राहकविकल्पाकारेणेति शेषः। विकल्पोऽवस्तुनिर्भासाद्विसंवादादुपप्लव इति मतिः। अमुना च न्यायेन ग्राहकविकल्पाप्रहाणतोऽपि प्रत्येकबुद्धानां मार्गस्वरूपं कथितम्। मायानिर्मितसदृशा इति केनचिदाकारेणेति सादृश्यवचनात् सत्त्वानां मायास्वभावता निराकृतेति प्रसङ्गागतविकल्पार्थमाह। किम्पुनरित्यादि। मायोपमास्ते सत्त्वाः। किन्न ते मायावितथ-

रूपास्ततश्च तात्त्विकसत्त्वास्तिकपरिदीपितं न सम्यक्-निर्देश इति मतिः। मायोपमास्त इत्यादिना परिहार-माह। एवं मन्यते। यथा गजादे रूपेण माया मृच्छ-कलादिभ्यो विवेकेनानुपलभ्यमानत्वान्नान्या। नाप्यनन्या। तथैवं मन्त्राद्यनुपप्लुतलोचनैर्मृच्छकलादीनामदर्शनात्। अतस्तत्त्वान्यत्वाभ्यामनिर्वचनीयत्वेन वस्तुधर्मसमतिक्रमात् पुद्गलादिवत्तत्त्वतोऽस्तीति न शक्यते वक्तुम्। आबाल-जनप्रत्यक्षसिद्धत्वेनानुभवपथमनुप्राप्तत्वाद्विकल्पादिवत् सं-वृत्या च नास्तीति न शक्यतेऽध्यवसातुम्। ततश्च ये ये प्रतीत्यसमुत्पन्नास्ते परमार्थतोऽस्तिनास्तित्वव्यवहारयथा-तिक्रान्तमूर्तयः। यथा माया तथा चामी सत्त्वादयो भावा इति स्वभावहेतुना कस्यचित्प्रसिद्धेनार्थेन प्रसिद्धोऽर्थः साध्यत इति मायात्वेनोपमिताः। न्यायतस्तु पुनस्ते-ऽपि सत्त्वा मायात्मका एवातो न किञ्चित्तात्त्विक-सत्त्वास्तित्वं परिदीपितमिति। मायोपमाः स्वप्नोपमा इति पदद्वयम् प्रबुद्धाप्रबुद्धावस्थाविषयभेदेनोक्तम्। अद्वय-मित्येकस्वभावम्। तदेव कुत इत्याह। अद्वैधीकारमिति (p. 39, 16)। न विद्यते द्वैधीकारो नानात्वं यस्य तत्तथोक्तम्। सर्वोपसंहारेण व्याप्तेः प्रवर्तनादिति मतिः। तदयं वाक्यार्थो यस्मादलीकरूपतया मायोपमास्ते सत्त्वा-स्तस्मान्माया च सत्त्वाश्चाद्वयमेतदद्वैधीकारम्। तथा यस्मात् स्वप्नोपमास्तस्मात् स्वप्नश्च सत्त्वाश्चाद्वयमेतदद्वैधीकारमिति। तामेव व्याप्तिमादर्शयन्नाह। सर्वधर्मा अपीत्यादि। एतद्ग्रहणवाक्यं विवृण्वन्नाह। स्रोतआपन्नोऽपीत्यादि। व्याप्तावेवं प्रतिपादितायां कथं मायोपमो भगवान् सर्वा-

कारगुणसम्पदो हेतुरित्याह। सम्यक्सम्बुद्धोऽप्यार्यसुभूते इत्यादि। सम्यक्सम्बुद्धो रूपकायस्तथागतः। परिहरन्नाह। निर्वाणमपीत्यादि (p. 40, 4)। यच हि नाम निर्वाणमपि प्रतिविशिष्टं धर्मकायमद्वयज्ञानस्वभावं मायास्वप्नसमानं वदामि। तच किं पुनरन्यं धर्मं रूपकायं न वदामि। अपि तु वदाम्येवेत्यर्थः। प्रतिषेधद्वयस्य प्रकृतार्थप्रतिपादकत्वात्। यस्माद्यथोक्तस्वभाव एव भगवानभिमुखीक्रियमाणः सर्वगुणसम्पदो हेतुः प्रमाणबाधितस्वरूपत्वेनान्यथा विपर्यास इति भावः। पुनरपि बहुलतरभावाभिनिवेशात् सत्यधर्माप्रतिपत्तिरित्याह। निर्वाणमपी(p. 40, 6)त्यादि। अन्यथा तीर्थिकानामिव प्रादेशिकशून्यतासद्भावेन भावाभ्युपगमतो मुक्त्यनुपपत्तिरित्यभिप्रायवान् परिहरन्नाह। तद्यदीत्यादि। तच्छब्दो वाक्योपन्यासे। यदीत्यभ्युपगमे। तदुक्तम्। निर्वाणादन्यः कश्चित् प्रतिविशिष्टो धर्मो न सम्भवति। तथाप्यभ्युपगम्योच्यते। यदि निर्वाणादपि कश्चिदन्यो विशिष्टतरो धर्मः सम्भवेत् तदा तमपि धर्मं मायादिसदृशं वदेयमिति। तथाचाऽर्यनागार्जुनपादैरुक्तम्।

रागद्वेषोद्भवस्तीव्रदुष्टदृष्टिपरिग्रहः।
विवादास्तत्समुत्थाश्च भावाभ्युपगमे सति॥
स हेतुः सर्वदृष्टीनां क्लेशोत्पत्तिर्न तं विना।
तस्मात्तस्मिन् परिज्ञाते दृष्टिक्लेशपरिक्षयः॥
परिज्ञातस्य केनेति प्रतीत्योत्पाददर्शनात्।
प्रतीत्य जातञ्चाजातमाह तत्त्वविदां वरः॥ इति

इति हीत्याद्युपसंहारो गतार्थत्वान्न लिखितः। प्रसङ्गागतं निर्दिश्येदानीमाधारतोऽपि प्रत्येकबुद्धानां विशिष्टो मार्ग इति कथनाय प्रश्नयन्नाह। केऽस्या इत्यादि (p. 40, 15)। ग्राह्यग्राहकविकल्पयोर्यथाक्रमं प्रहाणाप्रहाणमित्येवंरूपेणास्याः प्रत्येकबुद्धमार्गात्मकायाः प्रज्ञापारमितायाः कथ्यमानायाः कीदृग्विधगोचकाः पुद्गलाः प्रत्येषका ग्राहका भविष्यन्ति। तथागतानुभावेन विदितार्थत्वादार्यानन्दः कथयन्नाह। ते खल्वित्यादि। अविनिवर्तनीया इति निर्वेधभागीयाधिगमेनावैवर्तिकाः प्रत्येकबोधौ त एव स्वबोध्यभिलाषाद्बोधिसत्त्वाः। कायिक्या धर्मदेशनयाऽबुद्धकबुद्धक्षेत्रे सत्त्वार्थकरणाभिप्रायान्महासत्त्वाः। दृष्टिसम्पन्ना वेति। मध्यप्रज्ञादृष्टिसमुपेताः। अर्हन्तो वा क्षीणास्रवा इति प्रहीणस्वदर्शनमार्गावरणत्वेन पूजार्हाः। अनेन च पदत्रयेण प्रत्येकबोधौ यथाक्रमं समुदानीतगोचका धर्मताप्रतिलब्धगोचकास्त एव नियतगोचकाः पुद्गला इत्याख्यातम्। सर्वत्र च वाशब्दः परस्परविकल्पापेक्षया द्रष्टव्यः। पुनरप्यार्यसुभूतिरन्यथा प्रतिपादयन्नाह। नास्या इत्यादि। ननु स्वमार्गोपदेशपूर्वकं प्रत्येकबोधिमधिगच्छन्तोऽपि प्रत्येकबुद्धाः कथं न केचित् प्रत्येषिका इति। तत्कस्य हेतोरित्याशङ्क्याह। तथाहीत्यादि (p. 41, 1)। अत्रेति प्रत्येकबुद्धमार्गाधिगमकाले परोपदेशैरर्थक्यात् स्वयंबोधेन प्रत्येकबुद्धानामिति भावः। संक्षेपकथनेन विस्तरार्थसूचनान्न कश्चिदर्थः सूच्यते। विस्तरकथनेन संक्षिप्तार्थपरिदीपनान्न परिदीप्यते। यथा-

वस्थितस्वरूपनिर्देशान्न प्रज्ञप्यते। उपसंहारार्थमाह। तद्यथैवेत्यादि। तस्माद्येनैव कारणेन नैरर्थक्येन सूचनादि न क्रियते। तेनैव कारणेन कश्चित् प्रत्येषको न भविष्यति। निर्दिश्यमानाया एवाभावादिति भावः। यथाऽविद्यमानस्वभावमपि निर्मितपुष्पं प्रतिनियतदेशादिरूपेणाविचारैकरमणीयतया प्रतिभासते तद्वद्वस्तुभूताधारमन्तरेणापि प्रतिनियताधिगमधर्मप्राप्तिरिति सूचनायाऽऽधाराधिकारे निर्मितपुष्पप्रकारोपन्यासार्थमाह। अथ खलु शक्रस्येत्यादि। अस्य धर्मपर्यायस्येति। प्रत्येकबुद्धमार्गस्यास्य दशकुशलादिकर्मस्वभावस्य धर्मपर्यायस्य। यन्नुशब्दोऽवधारणे पूजार्थमेवेत्यर्थः। अभिनिर्मायेति भावनाबलादुत्पाद्य चित्तोत्पादानन्तरं तथैव कृतवानित्याह। अथ खलु शक्र (p. 41, 9) इत्यादि। अभ्यवकिरदिति। आभिमुख्येन समन्तात् क्षिप्तवान्। इन्द्रमनुव्याहरणायेति। अनुशब्दो लक्षणार्थे तद्योगेन चेन्द्रशब्दात् कर्मविभक्तिः। एतदुक्तम्। "इन्द्रवचनादुत्तरकालं निर्मितपुष्पतत्त्वकथनव्याजेनाधारस्वरूपस्य प्रतिपादनाय कथ्यमानार्थानुकारि चित्तमभूदि"ति। इमानीति सम्प्रत्यनुभूयमानानि। त्रयस्त्रिंशग्रहणं निजावासत्वात्तच्च स्वोपलम्भयोग्यदेशोपलक्षणम्। दृष्टपूर्वाणीति। अनुभूतपूर्वाणि। किमिमान्यथ सर्वाण्येव पुष्पाण्यदृष्टपूर्वाणि नेत्याह। यानीत्यादि (p. 41, 15)। यद्येवं किं स्वभावानि तर्हि तानीत्याह। निर्मितान्येतानि पुष्पाणीति। एतदुक्तम्। "न मदुपलम्भयोग्यदेशेषु प्रचरन्ति सन्ति, दृष्टपूर्वाणि

नाप्यस्मद्दर्शनपथातिक्रान्तदेशादानीतानि तथाविधशक्तिवैकल्यात्तस्मान्मनोमयानि निर्मितान्येतानि पुष्पाणीति । तदेव कथयन्नाह । नैतानीत्यादि । तत्र वृक्षाः पुष्पफलोपगाः मल्लिकाद्या गुल्माः । अतिमुक्तकादयो लताः । बुद्धानुभावेन विदितवितर्कत्वात् परिहरन्नाह । अनिर्जातानीत्यादि । मनसः सकाशात् प्रतिभासमानान्यपि कथमनिर्जातानीति । तत्कस्य हेतोरित्याशङ्क्याह । न हीत्यादि (p. 41, 19) । यस्मान्न मनोनिर्जातानि तत्त्वतः कानिचित्पुष्पाणि ग्राह्यग्राहकभावस्यालीकत्वादिति शेषः । नापि वृक्षादिनिर्जातानि भवन्तीव निषिद्धत्वात् । अनिर्जातान्येतानि पुष्पाणीति वचनेन पुष्पाणां स्वरूपमप्रतिषिद्धं जन्मनिषेधात्तर्हि नित्यत्वमभ्युपगतं तच्चायुक्तमित्याह । यत्त्वमित्यादि । लतानिर्जातानीत्यत्र न वक्तव्यमिति शेषः । कुत इत्याह । यत्कौशिकेत्यादि (p. 42, 1) । यस्माद्यदनिर्जातन्न तत्पुष्पम् । नित्यस्य क्रमयौगपद्याभ्यामर्थक्रियाविरहेण स्वरूपासम्भवत्वादिति मतिः । तत्र ग्राह्यविकल्पप्रहाणेन प्रत्येकबुद्धाधिगमं श्रावकेभ्यो विशिनष्टि ग्राहकविकल्पप्रहाणाभावेन च प्रत्येकबुद्धेभ्योऽनुत्तरबुद्धाधिगमम् । आधारेण चाधिगमस्यासाधारण्यमिति विशिष्टः प्रत्येकबुद्धानां मार्गो यथोक्तश्रावकचतुःसत्याकारानुपलम्भभावनया यथावस्तु प्रतीत्यसमुत्पादानुगतया बोधिसत्त्वेन परीज्ञेयः । तथा चोक्तम् ।

ग्राह्यार्थकल्पनाहानाद्ग्राहकस्याप्रहाणतः ।
आधारतश्च विज्ञेयः खड्गमार्गस्य सङ्ग्रहः ॥ ८ ॥ इति

निर्वेधभागीयाधिगमे सति यथोक्तप्रत्येकबुद्धमार्ग इति निर्वेधभागीयार्थमाह। गम्भीरप्रज्ञो बतायामित्यादि। आधारतत्त्वार्थकथनेनैवोष्मार्थप्रतिपादनाद्गम्भीरप्रज्ञः। नामपदप्रज्ञप्तिं विज्ञानादिस्कन्धप्रज्ञप्तिं श्रुतमयज्ञानार्थं ग्रन्थार्थकथनान्निर्दिशति। संवृत्याभ्युपगमस्याविरोधाद्धर्मतया न विरोधयति। चिन्तामयज्ञानार्थं युक्त्या स्थिरीकरणादुत्तानीकरोति। भावनामयज्ञानार्थं ध्यानक्रमोपदेशादुपदिशति। एतदुक्तम्। "रूपादिसाङ्केतिकधर्मप्रज्ञप्तेरविरोधेन धर्मतायाः प्रतिपादनमि"त्येवं सर्वधर्मालम्बने सत्यूष्मगतमुत्पद्यत इति। निर्मितपुष्पस्वरूपाख्यानेनैव प्रतिपादनाद्गम्भीरप्रज्ञ इति। तथा चोक्तम्।

प्रज्ञप्तेरविरोधेन धर्मतासूचनाद्गतिः।

ऊष्मगम्

इति युक्तरूपमिति निश्चित्य स्वयमेवात्मविकल्पस्य स्वहस्तमाह। एवमेतदित्यादिना। एवञ्चाचेति निर्मिताजातपुष्पवत् प्रत्येकबुद्धमार्गे शिक्षितव्यम्। साधूक्तत्वेनानुमत्यर्थमाह। एवमेतत् कौशिके(p. 42, 10)त्यादि। ततः किं भवतीत्याह। एवं शिक्षमाण इत्यादि। न क्वचिदुपलम्भयोगेन शिक्षत इति समुदायार्थः। अष्टभूमिष्विति। अष्टमकादिभूमिक्लेशज्ञेयावरणप्रहाणभेदेन बुद्धत्वं सर्वज्ञत्वं वेति द्वयमुक्तम्। तत्र शिक्षतेऽविपर्यासशिक्षया नियमेन तथागतत्वप्रापणात्। बुद्धत्वादिशिक्षा च सर्वधर्मपरिज्ञानपूर्विकेत्याह। यो बुद्धत्व इत्यादि। प्रसङ्गागतं निर्दिश्योष्मानन्तरं मूर्धार्थं शिक्षत इत्याह। योऽप्रमेयेष्वित्यादि।

विवृद्धिरुपचयः परिहाणमपचयः । एतदुक्तम् । "रूपादेः परमार्थतो न हानिवृद्ध्यर्थं शिक्षणमि"त्येवं सर्वधर्मालम्बने मूर्धगतमुत्पद्यत इति ।

मूर्धगं रूपाद्यहानादिप्रभावितम् ॥ ९ ॥ इति

मूर्धानन्तरं क्षान्त्यर्थं शिक्षत इत्याह । यो न रूपस्ये- (p. 42, 18)त्यादि परिग्रहः स्वीकारः । त्यजनमुत्सर्गः । तदर्थमाध्यात्मादिशून्यताबलेन न शिक्षत इत्यर्थः । पञ्चविंशतिसाहस्रिकायाञ्चोक्तम् । "रूपस्य यावत् सर्वाकारज्ञताया अध्यात्मशून्यतां यावदभावस्वभावशून्यतामुपादायापरिग्रहत्वेने"ति । एतदुक्तम् । "रूपादेरध्यात्मबहिर्धादिशून्यतामुपादायापरिग्रहणादिकमि"त्येवं सर्वधर्मालम्बने क्षान्तिरुत्पद्यत" इति । तथा चोक्तम् ।

अध्यात्मशून्यताद्याभी रूपादेरपरिग्रहात् ।
क्षान्तिः

इति क्षान्त्यनन्तरमग्रधर्मार्थं शिक्षत । इत्याह । नापि कस्यचिदित्यादि (p. 43, 5) । परिग्रहायेति । परिगृह्यतेऽनेनेति परिग्रहः । विधानं प्रतिषेधश्च । तदेव दर्शयन्नाह । नोत्पादाय नान्तर्धानायेति । कस्यचिद्धर्मस्येति । सामान्याभिधाने सत्यपि ज्ञेयरूपस्यैव ग्रहणमिति जडजनाशङ्कावारणार्थमाह । यो न कस्यचिद्धर्मस्येत्यादि (p. 43, 10) । सर्वज्ञताया अपीति । बुद्धभूमेरपि सर्वत्रैवाभिनिवेशो बन्धनमिति भावः । यथोक्तशिक्षायां को गुण इत्याह । एवमित्यादि । एतदुक्तम् । "रूपादेरनुत्पादनिरोधाद्या-

कारैः शिक्षणमि"त्येवं सर्वधर्मालम्बने ऽग्रधर्मता भवतीति। तथा चोक्तम्।

रूपाद्यनुत्पादाद्याकारैरग्रधर्मता ॥ १० ॥ इति

सर्वधर्मानुपलम्भतत्त्वैकरसत्वाद्बोधिसत्त्वस्य का सर्वज्ञतेति कांक्षा प्रश्नयन्नाह। य आयुष्मन् सुभूते (p. 43, 15) इत्यादि। वाक्यावसाने कथं दानादिपारमितां विनेति शेषः।

तथ्यसंवृतिसोपानमन्तरेण विपश्चितः।
तत्त्वप्रासादशिखरारोहणं नहि युज्यते ॥

इति न्यायाद्दानादिसपरिवारा रत्नचूडोक्ता सर्वधर्मशून्यताऽभ्यसनीयेत्यभिप्रायवान्। परिहारार्थमाह। एवमेतदायुष्मञ्छारिपुत्रेत्यादि। प्रत्येकबुद्धदर्शनमार्गानन्तरमैहिकामुत्रिकैर्गुणैर्युक्तो बोधिसत्त्वानां मार्गो वक्तव्य इत्याह। प्रज्ञापारमितायंशारिपुत्रेत्यादि (p. 44, 1)। प्रज्ञापारमिता बोधिसत्त्वानां दर्शनमार्ग इत्यर्थः। स समासतो लौकिकस्याग्रधर्मस्य समनन्तरमनुपलम्भः समाधिः। प्रज्ञा चात्र ससंप्रयोगा वेदितव्या। प्रभेदतः पुनस्तथैव दुःखे धर्मज्ञानक्षान्तिर्धर्मज्ञानमन्वयज्ञानक्षान्तिरन्वयज्ञानम्। एवं समुदये निरोधे मार्गे प्रतिपत्तव्यमित्येते षोडशचित्तक्षणा दर्शनमार्गः। चित्तक्षणः पुनर्ज्ञेयज्ञानोत्पत्तिपरिसमाप्तितो ग्राह्यः। केचित्

अदृष्टदृष्टेर्दृङ्मार्गस्तत्र पञ्चदश क्षणाः।

इति वर्णयन्ति। तदयुक्तम्। तथाहि प्रयोगमार्गे दुःखसत्याधिपतेर्यस्य धर्मस्य पूर्वविचारणामधिपतिं कृत्वा

प्रत्यात्मं दुःखसत्यानुभाविज्ञानमनास्रवं येन दुःखदर्शनप्रहातव्यं क्लेशं प्रजहाति। तदुच्यते दुःखधर्मज्ञानक्षान्तिः। येन ज्ञानेन क्षान्त्यनन्तरं विमुक्तिं साक्षात्करोति तदुच्यते दुःखधर्मज्ञानम्। दुःखधर्मज्ञानस्यानन्तरं दुःखे धर्मज्ञानक्षान्तौ दुःखधर्मज्ञाने चान्वय एष आर्यधर्माणामिति प्रत्यात्मं यत्प्रत्यक्षानुभाविज्ञानमनास्रवं तदुच्यते दुःखान्वयज्ञानक्षान्तिः। येन ज्ञानेन तामन्वयज्ञानक्षान्तिमवधारयति तदुच्यते दुःखेऽन्वयज्ञानम्। एवमवशिष्टेष्वपि सत्येषु यथायोगं क्षान्तयो ज्ञानानि च वेदितव्यानीति षोडशक्षणिक एव दर्शनमार्गो युक्तः। पञ्चदशक्षणिकत्वे तु मार्गेऽन्वयज्ञानक्षान्तेरवधारणं न स्यात्। अदृष्टदर्शनाभावेनान्त्यो मार्गेऽन्वयज्ञानक्षणो न दर्शनमार्ग इति चेत्। यद्येवं दुःखादिसत्यत्रयेऽप्यपूर्वदर्शनवैकल्याद्न्वयज्ञानक्षणो न दर्शनमार्ग इति द्वादशक्षणिक एव स्यात्। न चैतदभ्युपगमनमिति यत्किञ्चिदेतत्। तथा चोक्तम्।

क्षान्तिज्ञानक्षणैः सत्यं सत्यं प्रति चतुर्विधैः।
मार्गज्ञतायां दृङ्मार्गः सानुशंसोऽयमुच्यते॥ ११॥ इति

तत्र धर्मज्ञानक्षान्त्या धर्मज्ञानेन च ग्राह्यावबोधः। अन्वयज्ञानक्षान्त्याऽन्वयज्ञानेन च ग्राहकावबोधः। सर्वेष्वेव क्षान्तिज्ञानेष्वनिमित्तविहारी योगी वेदितव्यः। अविकलकारणस्य प्रहातुमशक्यत्वाद्दुःखदर्शनप्रहातव्यकाले समुदयः प्रहीणः। अत एव निरोधः सक्षात्कृतस्तस्य चान्यथानुपपत्त्या मार्गो भावितः। समुदयादिष्वप्येवमित्येवंकार्याभिसमयादेकक्षणाभिसमयो महायाने दर्शनमार्गो

द्रष्टव्यः । प्रतिसत्यं पुनर्विपर्यासनिराकरणेन प्रतिवेधाभिसमयतः । षोडशभिरेव क्षणैरभिसमीयते । अतः प्रतिपन्नकत्वादिव्यवस्थासु व्यवस्थेत्येके । तात्त्विकभावाभ्युपगमविपर्याससमुत्थः सत्कायादिदृष्टिगणो रागादिक्लेशसमूहश्च । मुक्तिस्त्वनुपलम्भदृष्टेस्तत्परिकर्मभूतत्वेन तदर्थैव परिशिष्टाकारभावनेति यथोदितविधिना निःस्वभावा निरात्मानः शून्या इति वा सर्वधर्मान् भावयतो भावनाबलनिष्पत्तौ ।

एकस्यानंशरूपस्य प्रत्यक्षस्य सतः स्वयम् ।
कोऽन्यो न दृष्टो भागः स्याद्यः प्रमाणैः परीक्ष्यते ॥

इति न्यायात् सर्वाकारस्वरूपप्रतिवेधकारिज्ञानमनास्रवं सर्वधर्मविषयमुत्पद्यते । अतः प्रतिवेधाभिसमयादेवैकक्षणाभिसमयो दर्शनमार्ग इत्यपरे। नन्वेकस्मिन्नेव क्षणे सर्वाकारस्य प्रतिविद्धत्वादाकारान्तरेण दर्शनमार्गे भावनान्तरानुपपत्तेः प्रतिपन्नकत्वादिव्यवस्था कथमिति श्रेयो निर्याणमार्गानुसारिणां मतिः। स्यादेतन्नो चेद्भ्रान्तिनिमित्तेन संयोज्येत गुणान्तरम् । शुक्तौ वा रजताकारो रूपसाधर्म्यदर्शनात् । यावता केनचिद्भ्रान्तिनिमित्तेन समारोपितमाकारान्तरं विद्यत इति। तद्विपर्यासं सप्रभवक्लेशसहायमुन्मूलयितुमाकारान्तरेण भावनान्तरसम्भवादष्टमकादिव्यवस्था सुस्थिता। अनेनैव चाभिप्रायेण न्यायबलादेकक्षणाभिसमयोऽपि दर्शनमार्गः षोडशलक्षणाभिसमयत्वेनोक्तः। ततश्च सर्वाकारस्वरूपग्राहित्वेऽपि विज्ञानस्य यस्मिन्नंशे ऽभ्यासपाटवादिना समारोपिताकारनिराकरणे सामर्थ्यम् । तत्रैव तस्य तत्प्रतिबद्धावरणप्रहाणात्

प्रामाण्यं नान्यच्च क्षणिकत्वादिवत्। एवमार्याणां पृथग्जनेभ्यः को विशेष इत्यपि न वक्तव्यम्। यावन्मात्राकारनिराकरणे तेषां ज्ञानमपगतभ्रान्तिनिमित्तम्। तावन्मात्रेणैतेषां विशेषादित्यलमतिप्रसङ्गेन। कुतो गवेषितव्येति। कस्य निर्देशात् प्रतिपत्तव्या भावयितव्येत्यर्थः। प्रसङ्गागतवचनाच्च निरूपणादिद्वारेण तथागतानुभावादेवान्यः कश्चित् क्वचिन्निर्दिशति। मुख्यतः पुनर्भगवता प्रज्ञापारमितोपदेशे सुभूतिरेवाधिष्ठित इत्यभिप्रायवानाह। प्रज्ञापारमिता कौशिकेत्यादि (p. 44, 3)। परिवर्तादिति निर्देशात्। विस्मृततथागताधिष्ठानत्वेनाह। कस्यैष इत्यादि। आर्यसुभूतेरन्यथा पूर्ववत् सामर्थ्यमपश्यन्नाह। तथागतस्येत्यादि। तथागतगौरवेणात्मनो निरभिमानतां प्रकटयन्नाह। यत्कौशिकेत्यादि (p. 44, 11)। इदानीमाकारकथनेन दर्शनमार्गं प्रतिपादयितुमाह। यदपीत्यादि।

प्रज्ञापारमिता ज्ञानमद्वयं सा तथागतः।

इति वचनात् प्रज्ञापारमिताच्च तथागतः।

यः प्रतीत्यसमुत्पादः शून्यता सैव ते मता।

इति न्यायेन रूपादितथता रूपादिशब्देनोक्ता। आधारभावोऽपि विवक्षापरतन्त्रतया ऽवधिभावेनेत्यतोऽयमर्थो भवति। रूपादितथतायामाधारभूतायामाधेयभावान्न तथागतः पर्येषितव्यो नाप्यन्यत्रेति। अस्योपलक्षणार्थत्वादिदमपि ज्ञेयम्। न तथागते रूपादितथता नाप्यन्यत्रेति। इदञ्च पञ्चविंशतिसाहस्रिकायां स्पष्ट-

मेवोक्तम्। "न कौशिक रूपतथतायां तथागत उपलभ्यते। न तथागते रूपतथता। न चान्यच रूपतथतायास्तथागतो विद्यते। न तथागतादन्यच रूपतथते"त्यादि। तदुभयव्यतिरिक्तपरधर्माभावात् कथं रूपादावन्यच च प्रज्ञापारमिता न गवेषितव्येति। तत्कस्य हेतोरित्याशङ्क्याह। तथाहीत्यादि। अयमच वाक्यार्थः। रूपादितात्त्विकमाधारभूतं न प्रज्ञापारमिताविशुद्धता विपर्यस्तत्वात्। अतो रूपाद्यविशुद्धमाधारात्मकं विशिष्टकारणं सुविशुद्धस्य तथागतस्य न भवतीति। न रूपादौ प्रज्ञापारमिता गवेषितव्या। तद्व्यतिरिक्तान्यधर्मस्य तात्त्विकत्वे तथैव विपर्यास इति नाप्यन्यच। किन्तु रूपादीनामयथार्थताप्रतिपत्तित एवेति। ततश्चेदमुक्तम्भवति। परमार्थतयैकत्वेन रूपादितथताबुद्धयोराधाराधेयभावो न विद्यत इति। अतस्तयोः पर्यायेणावस्थितेरननुज्ञानमित्येवं सर्वधर्मालम्बने दुःखे धर्मज्ञानक्षान्तिरुत्पद्यत इति। एकाकारश्रवणे सत्युद्घटितज्ञतया दुःखधर्मज्ञानादिक्षणचतुष्टयस्याकारान् कथयन्नाह। महापारमितेयमित्यादि (p. 45, 1)। सम्यङ्निर्देशेनानुमत्यर्थमाह। एवमेतत् कौशिकेत्यादि।

तदतद्रूपिणो भावास्तदतद्रूपहेतुजाः।

इति न्यायाद्रूपादिकारणमहत्त्वाद्यनुपपत्तौ तदालम्बननिर्जातायाः कथं प्रज्ञापारमिताया महत्त्वादिकमिति। तत्कस्य हेतोरित्याशङ्क्याह। रूपमहत्तया हीत्यादि (p. 45, 9)। उत्पादस्थितिविनाशानां तत्त्वेनासत्त्वाद्रूपादीनां महत्ता। विकृतिलक्षणरूपादीनामविद्यमानत्वेन

परिच्छेदकप्रमाणानुपलम्भादप्रमाणता। रूपिणामापरमाणुगतं संस्थानं परिमाणम्। अरूपिणां तल्लक्षणं परिमाणम्। तस्याकाशवद्रूपादीनां नैःस्वाभाव्येनानुपलम्भादपरिमाणता। मायोपमत्वेन रूपादीनां पूर्वान्तापरान्ताभावादनन्तता। कारणमहत्त्वादिना कार्यमहत्त्वादिकमावेद्य तत्राभिनिवेशो बन्धनमित्याह। एवं महे-(p. 45, 19)त्यादिनाऽनभिनिविशत इति सर्वत्र सम्बन्धः। ततः किं भवतीत्याह। तस्मादित्यादि। एतदुक्तम्। "रूपादीनां धर्मधातुस्वभावतया महत्ता तथैव तेषामप्रमाणता। पूर्ववदाकाशापरिमाणतया तेषामपरिमाणता रूपादेर्निःस्वभावत्वेन शाश्वतोच्छेदाद्यन्ताभावादनन्ततेत्येवं सर्वधर्मालम्बने यथाक्रमं दुःखे धर्मज्ञानम्। दुःखेऽन्वयज्ञानक्षान्तिः। दुःखेऽन्वयज्ञानम्। समुदये धर्मज्ञानक्षान्तिरुत्पद्यत" इति। अनन्ततार्थमेव समुदये चतुराकारप्रतिषेधमुखेन निर्दिशन्नाह। आरम्बणानन्तये(p. 46, 1)त्यादि। एतद्ग्रहणकवाक्यं विवृण्वन्नाह। कथं पुनरित्यादि। अन्तः पूर्वान्तो हेतुः। सत्ताकालो मध्ये। पर्यवसानमपरान्तो विनाशः। तत इति पूर्वान्ताद्यभावात्। उपसंहरन्नाह। अनेन कौशिकेत्यादि। पर्यायनिर्देशः। एवं प्रथमारम्बणानन्ततया हेत्वाकारं प्रतिषिध्य समुदयाकारप्रतिषेधार्थं द्वितीयारम्बणानन्ततां कथयन्नाह। पुनरपरमित्याह। पूर्वान्तापरान्तरहितत्वेनानन्ताः। सत्ताकालः परि समन्तादन्तद्वयभावेन क्षिप्तत्वात्। पर्यन्तस्तदभावादपर्यन्ताः।

तदेवाह । न तेषामित्यादिना । ननु यदन्वयव्यतिरेकानुविधायि यत्कार्यं तत्तस्य हेतुरिति पूर्वान्तो दृश्यते । अन्तक्षणदर्शिनां निश्चयादपरान्तोऽपि । प्रतीयमानसत्ताकं तु मध्यं नितरामेवेति । तत्कथमादिमध्यपर्यवसानानि नोपलभ्यन्त इति । तत्कस्य हेतोरित्याशङ्क्याह । नोपलभ्यते (p. 46, 12) । साकारनिराकारज्ञानाभ्यां न्यायत इति शेषः । अनेनापीति । न केवलं पूर्वोक्तपर्यायेणेत्यर्थः । आरम्बणान्ततामेवं द्विधा निर्दिश्य सत्त्वानन्ततां वक्तुमाह । सत्त्वोऽनन्तोऽपर्यन्त इति । तथैव तत्कस्य हेतोरित्याशङ्क्याह । न हीत्यादि । पूर्ववदत्राप्यध्याहारः । प्रथमं सत्त्वानन्ततया प्रभवाकारप्रतिषेधः कृतः । अनादिकालाभिसंवर्धितभावाभिनिवेशेन यथोक्तसत्त्वानन्ततामनवगच्छन् द्वितीयसत्त्वानन्ततां प्रतिपादयितुमाह । कथमित्यादि । कथमिति क्षेपेण । नैव पूर्वान्ताद्यभावेन । सत्त्वानन्ततयानन्तपारमिता । किन्तर्हि संख्यादिसम्बन्धादिति मतिः । विदिताभिप्रायत्वेनाह । न कौशिकेत्यादि । गणनाऽयोगेन वेति । एकत्वादिसंख्या गणना तयासहायोगोऽसम्बन्ध इत्याकारप्रश्लेषो द्रष्टव्यः । संख्यातीतत्वेनेत्यर्थः । गणनाबहुत्वेन वेति । यथा षष्टिस्थानगता संख्याऽसंख्योच्यते तद्वदनन्तसंख्यायोगेन गणनाप्राचुर्येणेति यावत् । यद्युचितरूपेणापि प्रकारद्वयेन सत्त्वानन्तता न भवति केन पुनस्तर्हि प्रकारेणेत्याह । कथन्तर्हीत्यादि । तद्वचनेन प्रतिपादयितुमाह । तत् किं मन्यस (p. 47, 1) इत्यादि । तथागतानुभावेन विदितधर्मतत्त्वस्वरूप-

त्वादाह। नैतदित्यादि। स्वरूपधारणाद्धर्मस्य न सत्त्व इत्यधिवचनम्। तत्त्वतो हेतुमद्धर्मस्यासत्त्वात्। निर्विषयस्य प्रतिषेधासम्भवान्नाधर्मस्यापि। कथं तर्हि सत्त्व इति व्यवहारोऽतिप्रतीत इत्याह। आगन्तुकमेतदित्यादि। हेतुसमुदयप्रभवप्रत्ययाकारनिषेधादागन्तुकमित्यादि। पदचतुष्टयं प्रक्षिप्तमध्यारोपितं संवृतिमात्रमिति यावत्। एवं हेत्वादिनिषेधेऽहेतुकसत्त्वास्तित्वं कदाचित् प्रतिपद्यत इति पृच्छन्नाह। तत् किं मन्यस इत्यादि।

नित्यं सत्त्वमसत्त्वं वाऽहेतोरन्यानपेक्षणात्।
अपेक्षातो हि भावानां कादाचित्कत्वसम्भवः॥ इति

न्यायेनानित्यवस्तुसत्त्वप्रतिभासादाह। नो हीदमार्यसुभूत इति। तद्वचनमिदानीमनन्ततार्थे योजयन्नाह। यच्चेत्यादि (p. 47, 10) यच्च संवृतिमात्रेण काचित्तात्त्विकी सत्त्वपरिदीपना कृता तत्र का सत्त्वानन्तताऽगणनादिसम्बन्धान्नैव काचिद्गण्यमानस्यैवासत्त्वादिति मतिः। तदेवं कथयन्नाह। सचेत् कौशिकेत्यादि। अनन्तविज्ञप्तिघोषेणेति। अनन्तसत्त्वधातुविज्ञपनशब्देन। गम्भीरनिर्घोषेणेति दीर्घकालानुबन्धिना। एतच्च पदद्वयं स्वरेणेत्यस्य विशेषणम्। स्वरश्च ताल्वादिव्यापारो ग्राह्यः। कल्यानपीति। अपिशब्दान्न केवलं स्वल्पकालम्। तत्रेति संवृतिमात्रेऽथवा वाचि सत्यामिति भावः।

विवक्षापरतन्त्रत्वान्न शब्दाः सन्ति कुत्र वा।
तद्भावादर्थसिद्धौ तु सर्वं सर्वस्य सिध्यति॥

इत्यभिप्रायवानाह । नो हीदमार्यसुभूत इति । ननु यथावस्तुशब्दप्रयोगाद्विवक्षापरतन्त्रत्वासिद्धेः । कथन्नैवेदमिति। तत्कस्य हेतोरित्याशङ्क्याह। आदिशुद्धत्वादित्यादि। प्रथमत एव कारणानुविधानादिदोषैरदुष्टत्वादिशुद्धत्वम् । निर्हेतुकस्वरूपधारणदोषवैकल्यादादिपरिशुद्धत्वम् । एतदुक्तम्। "सद्धेतुकनिर्हेतुकसत्त्वस्यासत्त्वे कथं यथावस्तुशब्दप्रयोगो येन विवक्षापरतन्त्रत्वासिद्धिरि"ति। अन्ये त्वन्यथा व्याचक्षते। व्यवहारार्थं समयः क्रियते न व्यसनितया। व्यवहारश्च सामान्यलक्षणस्यावस्तुत्वात् स्वलक्षणेनाध्यवसायाद्भवति। अतो यत्र स्वलक्षणे सङ्केतः कृतो न तेन व्यवहारस्तत्कालाननुपायित्वादिति शब्दवाच्यकल्पनाकलङ्कानङ्कितरूपत्वादादिविशुद्धत्वम्। येन च व्यवहारो न तत्र सङ्केतः कृतस्तस्य प्रागदृष्टत्वादिति। तथैव दोषानानुलिप्तत्वादादिपरिशुद्धत्वम्। तस्माद्व्यवहारार्थं यथावस्तुशब्दप्रयोगासम्भवान्न विवक्षापरतन्त्रत्वासिद्धिरिति। एवं हि तत्त्वतो वाच्यत्वं निराकृतं न तु वस्तुरूपम्। ततश्चोद्भावनासंवृत्या गणनाऽयोगादिना सत्त्वानन्तता परिदीपितेति शक्राभिप्राय एव व्याख्यात इत्यपरे नानुमन्यन्त। अनेनापीति। न केवलं पूर्वोक्तसत्त्वानन्तताप्रकारेणेत्यर्थः। प्रकारान्तरासम्भवेनावधारयन्नुपसंहारार्थमाह। एवञ्च पुनरित्यादि। चशब्दोऽवधारणे। द्वितीयसत्त्वानन्ततया प्रत्ययाकारनिषेधः कृतः। न भगवतां धर्मदेशना विकलेत्याह। अथ खलु सेन्द्रका इत्यादि। ब्रह्मासहालोकधातुनायकः। प्रजा-

पतयो लोकपालाः। ऋषयो विश्वामित्रप्रभृतयः। कियन्मात्रेण यथोक्तदेशनया ग्राह्यग्राहकनैरात्म्यं प्रतिविध्योपेत्य दानमुदानमधिगमहर्षवचनमुदानयन्ति स्मोदीरितवन्तः। तदेवाह। अहो धर्म इत्यादिना। कल्याणमित्रतयाऽऽर्यसुभूतिं शक्रादयः स्तुतवन्त इत्याह। यस्तथागतस्ये(p. 48, 3) त्यादि। प्रादुर्भवत्यनेनास्मादिति वा प्रादुर्भावो दर्शनमार्गः। सुभाषितेनेति निर्दोषकथनपरेण सम्बन्धतः सूच्यते। स्वलक्षणतो देश्यते। सामान्यलक्षणतः प्रकाश्यते। तदुभयतः प्रभाव्यते। तथागतानुभावादेव समुदये द्वितीयक्षणाकारञ्च भावितवन्त इत्याह। तथागतं तमित्यादि। नियमेन तथागतपदप्राप्तेरिति मतिः। अद्याग्रेणेति। अद्यारभ्येत्यर्थः। अनयेति दर्शनमार्गात्मिकया। अविरहितः प्राप्तापरिहाणितः। विहरिष्यत्यनधिगतार्थाधिगमयोगतः। एतदुक्तम्। "प्रज्ञापारमितायां स्थितस्य वस्तुतो धर्मधातुस्वभावतया रूपादीनां तथागतत्वावधारणमित्येवं सर्वधर्मालम्बने समुदये धर्मज्ञानमुत्पद्यत" इति। बोधिसत्त्वावस्थायामस्यार्थस्यानुभूतपूर्वत्वेन स्वहस्तयन्नाह। एवमेतदित्यादि। तदेवानुभूतपूर्वत्वमाह। यदेत्यादिना। राज्ञो नगरी राजधानी। अन्तरापणमापणकवीथी। माणवेति कुलपुत्रवत्सामान्यामन्त्रणाभिधानम्। तदानीमेवं भगवतः संज्ञा। अनागतः कालोऽनागतोऽध्वा। असंख्येयैः कल्पैरिति षष्टिस्थानगता संख्याऽसंख्येयोच्यते। तत्संख्यावच्छिन्नैः कालैरित्यर्थः। शास्तृत्वसम्पदा विशेषयन्नाह। शाक्यमुनिरित्यादि। शाक्यकुले

जन्मग्रहणात्। सर्वाकारकुशलेभ्यः संयमितात्मभावत्वेन कायवाङ्मनो मौनेययोगाच्च शाक्यमुनिः। मौनेययोगेन शास्तृत्वसम्पदो विबन्धकदेवपुत्रमारभङ्गं दर्शयति। तद्भङ्गेन प्रथमतः शास्तृत्वसम्पदो लाभात्। तथागतोऽर्हन् सम्यक्सम्बुद्ध इत्येभिस्त्रिभिः पदैः शास्तृत्वसम्पदं दर्शयति। सा च शास्तृत्वसम्पद्द्विधा। वक्तृत्वलक्षणा प्रतिपत्तृत्वलक्षणा च। तत्र यथैव ते धर्मा व्यवस्थितास्तथैव गदनात्तथा धर्मदैशिकत्वाद्वक्तृत्वसम्पदुक्ता। प्रतिपत्तृत्वलक्षणा च ज्ञानप्रहाणसम्पद्भेदेन द्विविधा। तत्रारीन् हतवानर्हन्नित्यनेन प्रहाणसम्पदुक्ता। अरयश्च रागादयः क्लेशाः सर्वकुशलधर्मोपघातार्थेन। इयञ्च प्रहाणसम्पत् पूर्वमुक्ता। तत्पूर्वकत्वाज्ज्ञानसम्पदः। सम्यगविपरीतं समन्ताद्धर्मावबोधात् सम्यक्सम्बुद्ध इत्यनेन ज्ञानसम्पदुक्ता। अविपरीतसर्वज्ञज्ञानाधिगमयोगात्। तदेवमविपरीतधर्मदैशिकत्वेन सर्वक्लेशप्रहाणेन सर्वाकारधर्मावबोधेन च शास्तृत्वसम्पदसाधारणा परिपूर्णा च भगवतः कथिता। तथाहि न बाह्यानामविपरीतधर्मदैशिकत्वप्राप्तिः। सर्वक्लेशाप्रहाणात्। तस्मादेते न भूतशास्तारः। श्रावकप्रत्येकबुद्धास्तु यद्यपि भूतशास्तारः सर्वक्लेशप्रहाणान्न तु सर्वाकारशास्तारः सर्वाकारसर्वधर्मानवबोधात्। भगवान् पुनर्यथोक्तन्यायेन भूतशास्ता सर्वाकारशास्ता चेति प्रतिपादितम्। येन सा शास्तृत्वसम्पल्लभ्यते तद्दर्शयति। विद्याचरणसम्पन्न इति। अनेन शास्तृत्वसम्पदः प्राप्तिहेतुं दर्शयति। तत्र विद्या सम्यग्दृष्टिः। सम्यक्सङ्कल्पादीनि शेषाण्यङ्गानि चरणम्। यतः सम्यग्दृष्ट्या तत्त्वं दृष्ट्वा

सम्यक्सङ्कल्पादिभिश्चरणभूतैर्गच्छत्यन्यथाऽपश्यन्नचरणो गन्तुमसमर्थ इति भावः । ताभ्यां सम्पन्नो युक्तः । अधिप्रज्ञं वा शिक्षा विद्या । अधिचित्तमधिशीलं शिक्षाचरणम् । प्रज्ञायाः पूर्वपरिकर्मभूतत्वेन पुरश्चरणं चरणमिति कृत्वा विद्यायास्तु पूर्वग्रहणं तत्परिशुद्धा शीलसमाध्योः परिशुद्धितः । तथा हि प्रज्ञया चक्षुषेव पश्यंस्ताभ्याञ्च शीलसमाधिभ्यां चरणाभ्यामिव गच्छन् गन्तव्यमनुप्राप्नोतीति विद्याचरणशब्देन तिस्रः शिक्षा निर्दिश्यन्ते । सा च तादृशी द्विविधापि शास्तृत्वसम्पत् । तां सुगतः इत्यनेनाचष्टे । तथा हि लोकोत्तरेण मार्गेण शोभनं ज्ञानप्रहाणसम्पदं गतः । सुगतः सुरूपवत् । अपुनरावृत्त्या वा सुष्ठुगतः सुगतः सुनष्टज्वरवत् । निःशेषं वा गतः सुगतः सुपरिपूर्णघटवत् । अर्थत्रयञ्चैतद्बाह्यवीतरागशैक्षाशैक्षेभ्यो विशेषणार्थम् । तथा ह्यात्मविपर्यासेन बाह्यवीतरागा न शोभनं गताः । शैक्षास्तु संसारे पुनर्जन्मग्रहणान्न सुष्ठुगताः । अशैक्षाः पुनः सर्वज्ञेयेषु ज्ञानविबन्धान्न निःशेषं गताः । अस्याश्च शास्तृत्वसम्पदो द्विविधं कर्मेति । प्रथमं भव्याभव्यलोकावलोकनं कर्म दर्शयति । लोकविदिति भव्याभव्यलोकपरिज्ञानादसौ लोकविदित्युच्यते । तथा हि भगवांस्त्रिःकृत्वो रात्रेस्त्रिःकृत्वो दिवसस्य बुद्धचक्षुषा लोकं व्यवलोकयति को हीयते को वर्धत इत्यादिभिराकारैर्द्वितीयं भव्यविनयनं कर्म दर्शयति । अनुत्तरः पुरुषदम्यसारथिरिति । भव्याभव्याल्लोकान् व्यवलोक्य भगवान् ये पुरुषा एव दम्या दमनार्हा दमयितुं वा शक्या भव्यास्तान् विनयति । तेषां सारथिभावगमनात् ।

विनयनं हि सारथिभावः। असन्मार्गादपनीय सन्मार्गे प्रतिष्ठापकत्वाद्गुणविशेषाधायकत्वाच्चाश्वादिसारथिवत्। अनुत्तरग्रहणं सारथिभावविशेषणार्थम्। दुर्दमानामपि केषाञ्चित् पुरुषदम्यानां तीव्ररागद्वेषमोहमानानामार्य-सुन्दरानन्दाङ्गुलीमालोरुविल्वाकाश्यपमहाराजकप्फिण-प्रभृतीनां विनायक इति प्रदर्शनार्थम्। तच्च भव्य-विनयनं कर्म यत्र स्थितं तद्दर्शयति। शास्ता देवानाञ्च मनुष्याणाञ्चेति। यद्यपि भगवानविशेषेण सर्वसत्त्वानां स्वर्गापवर्गमार्गोपदेशेन शास्ता। तथापि यत्र त्वार्यसत्य-दर्शनं श्रामण्यफलप्राप्तिश्च प्रज्ञायते तत्र मुख्यतो यथार्थानु-शासनं भगवतः शास्तृकर्मस्थितिः। तस्य च देवमनुष्या भाजनम्। अतः शास्ता देवानाञ्च मनुष्याणाञ्चेत्युच्यते। यच्चैतद्गुणमाहात्म्यं स बुद्धो भगवानिति स्वरूपकथनम्। तत्र सकलपदार्थावबोधेन प्रकृष्टा बुद्धिरस्येति बुद्धः। अकार-प्रत्ययोऽत्रार्श आदेराकृतिगणत्वेन कार्यः। प्रकृष्टा च बुद्धिर्नवभिराकारैः सर्वज्ञज्ञानेन। अयत्नज्ञानेन। अनुप-दिष्टज्ञानेन। सवासनक्लेशावरणप्रहाणज्ञानेन। निखिल-ज्ञेयावरणप्रहाणज्ञानेन। सर्वाकारसर्वसत्त्वार्थकरणशक्त्या। करुणासम्पत्त्या। अक्षयतासम्पत्त्या। अतुल्यसम्पत्त्या च। समग्रैश्वर्यादियोगेन भगवान्। पुनरपि ते देवपुत्रास्तथा-गतानुभावेन समुदये तृतीयक्षणाकारं प्रतिपादितवन्त इत्याह। आश्चर्यमित्यादि। तत्त्वेनानुत्पादरूपापि संवृत्या प्रज्ञापारमिता सर्वज्ञतायाः समुत्पादिकेति सर्वबाल-जनातिक्रान्तत्वादाश्चर्यम्। श्रावकादिभ्यो विशेषतः पर-

माश्चर्यम्। यावद्वचनेन दुःखे धर्मज्ञानक्षान्त्यादेरुपादानं सर्वज्ञतायेति समुदये ऽन्वयज्ञानक्षान्तेः। आहारिकेति। अनुद्ग्रहानुत्सर्गयोगेनोत्पादिका। अनुपरिग्राहिकेति। सर्वान्तरायकरधर्मानवकाशयोगेनोपस्तम्भकारिका। तथा च मध्यमायां जिनजनन्यामुक्तम्। "आश्चर्यं भगवन् यावत् प्रज्ञापारमिता सर्वाकारज्ञताया आहारिका ऽनुपरि-ग्राहिका। अनुद्ग्रहानुत्सर्गयोगेने"त्यादि। एतदुक्तम्। "धर्म-धातुस्वभावतया प्रज्ञापारमितायां स्थितस्य बोधिसत्त्वस्य सर्वधर्माणां नोद्ग्रहत्यागभावनादिकमिति। सर्वधर्मालम्बने समुदयेऽन्वयज्ञानक्षान्तिरुत्पद्यत" इति॥

अभिसमयालङ्कारालोकायां प्रज्ञापारमिताव्याख्यायां शक्रपरिवर्तो नाम द्वितीयः॥

---

समुदये चतुर्थक्षणाकारं प्रतिपादयितुं प्रत्यात्मवेद्यत्वेन कांश्चित्कामावचरादीन् देवपुत्रान् साक्षिणः कृत्वा कांश्चिदामन्त्रितवानित्याह। यो हीत्यादि (p. 49, 10)। कुलपुत्रः कुलदुहितेति शब्दः पूजावचनः। स्त्रीपुरुषयोरुपादानं शण्डोद्भूतमुष्कादीनामधिगमनिरासज्ञापनार्थम्। वर्णविशेषानङ्गीकरणं चातुर्वर्ण्यविशुद्धिज्ञापनार्थम्। पुत्रदुहित्रभिधानं प्रव्रजितजनप्रतिरूपालापज्ञापनार्थम्। कुलग्रहणमन्वयसम्पन्नस्य सद्धर्मेऽधिकारज्ञापनार्थम्। पुनर्वा ग्रहणमुपपद्यापरपर्यायवेदनीयभागधेयापराधादकुलीनस्यापि भव्यस्याचाधिकारज्ञापनार्थमित्यार्यविमुक्तिसेनः। इमामिति समुदयेऽन्वयज्ञानात्मिकाम्। तत्र मारो देवपुत्रमारः कामदेवः। तत्पाक्षिका देवपुत्रा मारकायिका देवताः। समुत्पन्नावतारदर्शनादवतारप्रेक्षिण्यः। अनागतावतारपर्येषणादवतारगवेषिण्यः। अवतारो दोषः। छिद्रमिति यावत्। नापीति। अपिशब्दः पूर्वापेक्षया समुच्चये। मनुष्यगतिसङ्गृहीताः सत्त्वा मनुष्याः। यक्षादयोऽमनुष्याः। विद्यमानेऽप्यायुषि कथञ्चित्प्रत्ययसान्निध्यान्मरणं विषमापरिहारेण कालक्रिया। सर्वं चैतन्न भवति। मैत्र्यादिभिः सुपरिभावितचित्तसन्ततित्वादिति मतिः। तथाहि मध्यमायां जिनजनन्यामुक्तम्। "मैत्रीकरुणामुदितोपेक्षाणामनुपलम्भयोगेन भावित्वान्मनुष्यामनुष्याद्यनवतारलाभेने"त्यादि। एतदुक्तम्। "निःस्वभावाधिमोक्षपूर्वकं चतुरप्रमाणं विभावनीयमित्येवं सर्वधर्मालम्बने समुदयेऽन्वयज्ञानमुत्पद्यत" इति। अत एवोक्तमार्यविमुक्ति-

सेनेन। "अष्टमे हि दर्शनमार्गक्षणे प्रयोजनं बोधिसत्त्वस्य प्रमाणैरितरथा हि नवमे क्षणे सत्त्वधातुनिरपेक्षो निरोधे यतेदि"ति। निरोधे प्रथमक्षणाकारार्थमाह। पुनरपरमित्यादि (p. 49, 17)। सम्प्रस्थिताः प्रणिधानाद्याश्रयेन प्रवृत्ताः। इयमिति दर्शनमार्गप्रतिपादिका। तं कुलपुत्रमिति अधिगतनवमक्षणदर्शनमार्गश्रवणाद्यर्थम्। समीपीभवनमुपसङ्क्रमितव्यम्। मंस्यन्ते (p. 50, 1) ज्ञास्यन्ति। स एव सुपरिभावितत्वात् सर्वशून्यतानामधिगतार्थत्वेन परीतोपदेशेन शक्त इति मतिः। उद्गृह्णत इत्यादि। उत्तरोत्तरविशेषाधिगमहेतुभूतं विशिष्टमुद्ग्रहणादि कुर्वत इत्यर्थः। श्रोष्यन्तीमां प्रज्ञापारमितामिति पूर्वेण सम्बन्धः। श्रवणञ्च निरोधसत्याभिसमयसंवृत्याधिपत्याद्देशनाश्रवणाकारप्रतिभासनम्। अतोऽभिसमयाहितशक्तिकस्य वाच्युत्थितस्यान्तिकादिति वेदितव्यम्। एकानुशंसाकथनेन निरोधाकारं निर्दिश्यापरानुशंसाकथनेन तमेवाकारं द्रढयन्नाह। न च खल्वित्यादि। चशब्दः समुच्चये न केवलं पूर्वोक्तानुशंसोऽयमपर इत्यर्थः। ग्रामाद्धनुःपञ्चशतातिक्रान्तं स्थानमरण्यं गतः संप्राप्तः। एकवृक्ष एव यक्षाद्यधिष्ठितत्वेन भयहेतुः। अतस्तन्मूलं वृक्षमूलम्। मनुष्यादिरहितं गृहं शून्यागारम्। अच्छन्नमभ्यवकाशम्। महाजनो येन गतः स पन्थाः। उत्पथो यथोक्तविपरीतो मार्गः। अरण्यादूर्ध्वमटवी। तत्र तत्रारण्यादावुपसंक्रामतो गच्छतः तदेव चतुर्भिरीर्यापथैः कथयन्नाह। चङ्क्रम्यमाणस्येत्यादि। निपन्नः शयितः। अनिष्टोपनिपाताशङ्का भयम्। तत्प्रतीकारा-

प्रतिपत्तिः स्तम्भितत्वम्। अभूत्वा भावाद् भविष्यति। प्रबन्धप्रवृत्त्या उत्पत्स्यते। नेतिपूर्वेण सम्बन्धः। सर्वशून्यतानां सुपरिभावितत्वादिति मतिः। अन्यचाप्युक्तम्। "शून्यतापरिगतो बोधिसत्त्वः सर्वभयविगतो भवती"त्यादि।

एतदुक्तं "रूपादेर्निजरूपा प्रकृत्येव शून्यतेत्येवं सर्वधर्मालम्बने निरोधे धर्मज्ञानक्षान्तिरुत्पद्यत" इति। निरोधे द्वितीयक्षणार्थमाह।

अथ खलु चत्वार (p. 50, 11) इत्यादि। महाराजानो विरूढकाद्याः। तात्त्विकयानत्रयसत्त्वोपलम्भमन्तरेणापि संवृत्या श्रावकादियानत्रये सत्त्वान् विनयतीत्याश्चर्यम्। अनेन च सत्यद्वयसमाश्रयेण सर्वाकारसत्त्वार्थप्रतिपादनेन समर्थकारणनिर्देशेन प्रज्ञापारमितोद्ग्रहणादीनां बुद्धत्वमेव फलमावेदितमिति ग्राह्यम्। ततश्चैतदुक्तम्। "धर्मधातुपरिणामितकुशलमूलानां फलं तथागतत्वस्य प्रापणमित्येवं सर्वधर्मालम्बे निरोधे धर्मज्ञानमुत्पद्यत" इति। वयमित्यादि। एतच्च प्रज्ञापारमिताया माहात्म्यज्ञापनाय। आत्मनः शासनोपकारकत्वज्ञापनाय भगवति कृतज्ञत्वज्ञापनाय चोक्तम्। "दृष्टधर्मवेदनीयमुपपद्यवेदनीयमपरपर्यायवेदनीयञ्च त्रिविधमशुभं कर्मे"ति। तत्कृतोपद्रवप्रतीकारेण रक्षावरणगुप्तयो यथाक्रममुक्ताः। अथवा दैवी विपद्यत्राशुभस्यैव व्यापारोऽवगम्यते नापरस्य। यथा मरकदुर्भिक्षवज्राशन्यादिपातः। मानुषी विपद्यत्र प्राणिनां व्यापारः प्रतीयते विद्यमानोऽपि दैवस्य नावगम्यते। यतो न कर्मणा विना किञ्चिदप्यस्ति फलं

यथा निष्पन्नेऽपि शस्यादौ परचक्रोपद्रवकृतो दुर्भिक्षादिः। दैवमानुषौ विपर्यचोभयस्य व्यापारः प्रतीयते। एतावच्च कर्म दैवं मानुषञ्च। यथोक्तम्। "दैवमानुषं हि कर्म लोकं यापयती"ति तत्प्रतीकारेण रक्षावरणगुप्तयो यथाक्रममुक्ताः। संविधास्याम इति करिष्यामः। निरोधे तृतीयक्षणार्थं सम्बन्धमारचयन्नाह। आश्चर्यं भगवन्नित्यादि (p. 51, 5)। इमाननन्तरोक्तानियतो रक्षावरणगुप्तिसंख्यावच्छिन्नान् दृष्टधार्मिकान् प्रत्युत्पन्नजन्मसङ्गृहीतान् गुणाननुशंसान् प्रतिलभते प्रयोगावस्थायाम्। परिगृह्णाति पृष्ठावस्थायाम्। एवं सम्बन्धमावेद्याकारार्थं प्रश्नयन्नाह। किं पुनरित्यादिना। किं पुनः प्रज्ञापारमितायामुद्गृहीतायां दानाद्याः पञ्चपारमिताः संगृहीता भवन्तीति वक्तव्ये षट्पारमितावचनम्। मुख्यया प्रज्ञापारमितया गौणस्वभावया अपि प्रज्ञापारमितायाः संग्रहादित्यभिप्रायेणोक्तम्। सर्वधर्माविपरीतावबोधे हि मुख्या प्रज्ञापारमिता जायते। अतस्तयैव सर्वव्यवदानधर्माणां संग्रहादित्यभिप्रायवान् भगवानाह। एवमेतदित्यादि। एतदुक्तम्। "प्रज्ञापारमितया सर्वाकारप्रतिपक्षाणां सङ्ग्रह इत्येवं सर्वधर्मालम्बने निरोधेऽन्वयज्ञानक्षान्तिरुत्पद्यत" इति निरोधे चतुर्थक्षणाकारं निर्दिशन्नाह। पुनरपरमित्यादि। शृण्वित्यादि व्याख्यातम्। अथवा यस्मादादित एव भक्तिहेतुतया तावत्कल्याणं तस्मात् साधु शृणु। यतश्च मध्ये पुष्टिहेतुत्वात् कल्याणं तत सुष्ठु शृणु। येन च पर्यवसाने मुक्तिहेतुतया कल्याणं तेन योनिशो मनसिकुरु। अथवा

मृदुमध्यादिमात्राणां दोषाणां प्रतिपक्षत्वाद्यथाक्रमं साध्वादिवचनम् । यदि वा व्यञ्जनार्थोभयावधारणाद्यथासंख्यं साध्वादिवचनम् । धर्ममित्यादि । सूत्रादिधर्मं विरुद्धं गृहीतव्यं विगृहीतव्यं मनसा ततो वचसा विरुद्धं वदितव्यं विवदितव्यम् । एवंप्रकारद्वयेन विरोधयितव्यं विघाटयितव्यम् । यदि वा व्यञ्जनार्थोभयविघाटघटनाद्विगृहीतव्यमित्यादिपदत्रयं मंस्यन्त इत्यस्यानन्तरं जिनजननीभावनाभिरतं बोधिसत्त्वमारभ्येत्यध्याहार्यम् । यतस्तस्यैवानुशंसाकथनमधिकृतमनन्तरञ्च वक्ष्यति । तस्य तान्युत्पन्नोत्पन्नान्यधिकरणान्यन्तर्धास्यन्तीत्यादि । अन्तर्धास्यन्त्यदृश्या भविष्यन्ति यतो न स्थास्यन्ति । युक्त्या स्थितिं न प्रतिलप्स्यन्ते । अत एव तेषामभिप्राया मनोरथा न परिपूरिं निष्पत्तिं गमिष्यन्ति । ननूत्पन्नो वितर्कः प्रतिसमाधानमन्तरेण कथमन्तर्धास्यतीति । तत्कस्य हेतोरित्याशङ्क्याह (p. 52, 2) । एवं ह्येतदित्यादि । अनेनैतदुक्तम् । धर्मतैषा यदुत प्रज्ञापारमिताभावकपुद्गलाधिष्ठानात् । स्वत एव तेषां प्रतिसमाधानमुत्पद्यत इति । उद्ग्रहीष्यतीत्यादि । व्याख्यातम् । अथवा संग्रहश्रवणाद्ग्रहीष्यति । मनसिकारणाद्धारयिष्यति । पुस्तकपठनाद्वाचयिष्यति । ग्रन्थार्थग्रहणात्पर्यवाप्स्यति । प्रत्यक्षानुमानागमाविरुद्धार्थकथनाद्यथाक्रमं प्रवर्तयिष्यति देशयिष्यत्युपदेक्ष्यति । कल्पितादित्रिविधपदार्थानुत्पाददेशकत्वेन वा । पाठमात्रोपदेशादुद्देक्ष्यति । पूर्वरात्रादिकरणात् स्वाध्यास्यति । बोधिपरिणामनाद्याशयभेदादेतान्युद्ग्रहणादीनि सम्यग्विधेयानि । अधिकरणा-

नीति विवादस्थानानि । उपसंहरन्नाह । इममपीत्यादि । न केवलं वक्ष्यमाणं गुणमित्यपिशब्दः । एवं प्रज्ञापारमितायाः सर्वोपद्रवप्रशमनतेजोबलत्वं प्रतिपाद्य दृष्टान्तेनापि समर्थयन्नाह । तद्यथापि नामेत्यादि (p. 52, 11) । क्वचित्पाठः परिकल्पमुपादायेति सम्भवत्कारणविशेषात् कार्यविशेषमधिकृत्य । अनेन दुर्लभत्वमाख्यातम् । स्थावरादिविषापनयनात् । सर्वविषप्रशमनीति स्वरूपं कथितम् । आशीविषेण जन्तुनेति । दंष्ट्राविषेण प्राणकेण । बुभुक्षितेनेत्यादि । बुभुक्षितः क्षुधा परिपीडितोऽपि कश्चिद्देवताराधनप्रवृत्तवन्नाहारप्रयोजनमिति तद्व्यवच्छेदार्थमाह । आहारार्थीति वचनम् । तथाविधोऽपि धैर्यमालम्ब्याहारं पर्येषत इति तद्व्युदासेनोक्तमाहारगवेषीति । प्राणकजातो जन्तुरिति सत्त्वसंख्यातो मण्डूकादिरित्यर्थः । गन्धेनेति तद्गतामिषादिगन्धेन । अनुबध्नीयादिति । बुद्ध्या भक्ष्यत्वेन स्वीकुर्यात् । अनुगच्छेदिति । पश्चात्पृष्ठतो यायात् । प्रत्युदावर्तेतेति निवृत्तिं कुर्यात् । ननु यत्र प्राणकगन्धेन न निवर्तेत् तत्र कथमोषध्या गन्धेन प्रत्युदावर्तेतेति । तत् कस्य हेतोरित्याशङ्क्याह । तथाहीत्यादि । अयं वाक्यार्थः । सांवृतेऽपि कार्यकारणभावे तस्या एवौषध्याः स तादृशो भैषज्यगुणो यस्तस्याशीविषस्य तद्विषमभिभवति नान्यस्येत्येवं बलवती हि सा औषधी । भेदेऽपि नियताः केचित् स्वभावेनेन्द्रियादिवदिति । एतदुक्तम् । "प्रज्ञापारमितयैव बाह्याभ्यन्तरोपद्रवप्रशमनमित्येवं सर्वधर्मालम्बने निरोधेऽन्वयज्ञानमुत्पद्यत" इति । मार्गे प्रथमक्षणाकारं वक्तुमाह ।

एवमेवमित्यादि । यानि तानीति निपातसमुदायो यानि कानिचिदित्यर्थे वर्तते । तेजसेत्यादि (p. 53, 1) । प्रज्ञापारमितायाः सामर्थ्यमेव तेजो बलस्थामबलाधानानि यथाक्रमं प्रयोगदर्शनभावनाविशेषमार्गनिर्दिष्टानि । तत एवेति । यत्रैवोत्पत्स्यन्ते तत्रैवेत्यर्थः । उपरंस्यन्ति । उपशमिष्यन्ति । न विवर्धिष्यन्त इति यथाक्रमं श्रुतचिन्ताभावनाकाले वेदितव्यम् । प्रयोगाद्यवस्थासु वा ग्राह्यम् । तदेव कथयन्नाह । यत इत्यादि । यतो यत इति । यत्र यत्रैवाधिकरणस्थान इत्यर्थः । निरोत्स्यन्ते ऽन्तर्धास्यन्ति न स्थास्यन्तीति पदत्रयमुपरंस्यन्तीत्यादिपदत्रयार्थम् । ननूत्पन्नो वितर्कः परप्रतिसमाधानमन्तरेण कथन्न भवतीति । तत्कस्य हेतोरित्याशङ्क्य पूर्ववत्परिहारार्थमाह । प्रज्ञापारमिता हीत्यादि । रागादीनामित्यादिशब्दाद्द्वेषादीनां यावदित्यनेन स्मृत्युपस्थानाभिनिवेशादेः परिग्रहः । निर्वाणग्राहस्येति । सोपधिनिरुपधिनिर्वाणाभिनिवेशस्य । समुदाचरन्निर्वाणाभिनिवेशादेरुन्मूलनादुपशमयित्री । अथवा रागादिवासनासमुद्घातान्न विवर्धिका । एतदुक्तम् । “प्रज्ञापारमिताभावनैव रागादिनिर्वाणाभिनिवेशस्य शान्तिरित्येवं सर्वधर्मालम्बने मार्गे धर्मज्ञानक्षान्तिरुत्पद्यत” इति । मार्गे द्वितीयक्षणार्थमाह । चत्वारश्चेत्यादि । रक्षावरणगुप्तयो व्याख्याताः । यदि वाधिदैविकमाधिभौतिकमाध्यात्मिकञ्चान्तरायमधिकृत्य यथाक्रमं रक्षावरणगुप्तयो ज्ञेयाः । आपद्वा त्रिधा स्वप्रत्ययजा परा सत्त्वसंख्यातप्रत्ययजा परसत्त्वसंख्यातप्रत्ययजा च ।

तस्याः प्रतीकारेण रक्षावरणगुप्तयो यथाक्रममवसेयाः। एतदुक्तम्। "प्रज्ञापारमितोद्ग्रहणादिप्रवृत्तस्य तथागतादिभ्यः सर्वथा सर्वरक्षावरणगुप्तयो भवन्तीत्येवं प्रज्ञापारमितया सर्वधर्मालम्बने मार्गे धर्मज्ञानमुत्पद्यत" इति। मार्गे तृतीयक्षणार्थमाह। पुनरपरं कौशिकेत्यादि। आदेयवचश्चेति कृपया स्वयं प्राणातिपातादिविरतिपूर्वकं सर्वाकारज्ञतायां स्थित्वाऽन्येषां तत्र प्रतिष्ठापनात्। स्वयंप्रस्थितानाञ्च वर्णवादतत्समनुज्ञत्वादादेयवाक्य इत्ययमर्थो ऽवसेयोऽन्यथोपादेयवचनत्वासम्भवात्। पञ्चविंशतिसाहस्रिकायामप्युक्तम्। "आत्मना च प्राणातिपातात्प्रतिविरतो भविष्यतीत्यारभ्य यावत्—परेषां वर्णवादी तत्समनुज्ञो भविष्यति" इत्येवं स आदेयवाक्यो भविष्यतीत्यादि श्रोत्रसुखकारित्वान्मृदुवचनः। यावतैवार्थो भवति तावन्मात्राभिधानान्मितवचः। संक्षेपोक्तिकुशलत्वादप्रकीर्णवचनः। न च क्रोधाभिभूतो न च मानाभिभूत इति। प्रत्युपस्थितेऽपकारनिमित्ते प्रतिघांशिकश्चेतस आघातः क्रोधः। सत्कायदृष्टिसन्निश्रयेण चित्तस्योन्नतिर्मानः। ननु प्रतिपक्षं विना दोषापगमाभावे कथं तस्यैवं गुणोदय इति। तत्कस्य हेतोरित्याशङ्क्याह। तथा हीत्यादि (p. 53, 16)। प्रज्ञापारमितैव सर्वदोषाणां प्रतिपक्षः। स च तेन भावित इति मतिः। प्राणातिपातविरत्यादौ प्रतिस्थापनात्परिदमयति। मितवचनादिना सर्वसत्त्वविषये प्रह्वीकरणात्परिणमयति। उपनाहमिति। वैरानुशयस्यानुत्सर्गः। प्रतिघांशिक एवोपनाहः। व्यापादमिति। सत्त्वेषु दुःखेषु दुःखस्थानीयेषु च धर्मेष्वाघातो व्यापादः।

अनुशयमिति (p. 54, 1)। द्वेषाङ्गिको वैरप्रबन्धोऽनुशयः। एतदुक्तम्। "प्रज्ञापारमितापरिग्रहबलादेव बुद्धत्वाभिलाषिणा स्वयं प्राणातिपातविरत्यादिपूर्वकं सर्वाकारज्ञतायां स्थित्वा तत्रैव परेषां स्थापनं कार्यमित्येवं सर्वधर्मालम्बने मार्गेऽन्वयज्ञानक्षान्तिरुत्पद्यत" इति। मार्गे चतुर्थक्षणाकारं वक्तुमाह। एवं चरत इत्यादि। एवं चरतो मार्गेऽन्वयज्ञानक्षान्त्या विहरतः। संस्तुते वस्तुनि चेतसोऽसम्प्रमोषः स्मृतिः। अद्वेषः सर्वसत्त्वेष्वेकपुत्रप्रेमाकारतो मैत्री। आभ्यां दानादिसर्वकुशलस्यानुपलम्भयोगेन सर्वसत्त्वासाधारणतयाऽनुत्तरायां सम्यक्सम्बोधौ परिणामनाद्वयमुक्तम्। मैत्र्या व्यापारमेवाह। तस्यैवम्भवतीत्यादिना। परिभेत्स्यन्त इति व्यापादसमुदाचारेण चक्षुरादीनां विक्रियापादनात्। धक्ष्यत इति स्वरूपप्रच्युत्या दग्धो भविष्यति। वशमिति तदायत्तताम्। एतदुक्तम्। "दानादीनामक्षयं कर्तुमिच्छता सम्यक्सम्बोधौ परिणामनं स्मृत्यादिबलेन कार्यमित्येवं सर्वधर्मालम्बने मार्गेऽन्वयज्ञानमुत्पद्यत" इति। यथोक्तैरेवाकारैरन्यापदेशनिर्दिष्टैः षोडशक्षणा समुत्पद्यन्त इति नात्र विप्रतिपत्तिः। तथाचोक्तम्।

आधाराधेयताऽभावात्तथताबुद्धयोर्मिथः।
पर्यायेणाननुज्ञानं महत्ता सा ऽप्रमाणता ॥ १२ ॥
परिमाणान्तताऽभावो रूपादेरवधारणम्।
तस्यां स्थितस्य बुद्धत्वेऽनुग्रहात्यागतादयः ॥ १३ ॥
मैत्र्यादि शून्यता प्राप्तिर्बुद्धत्वस्य परिग्रहः।
सर्वस्य व्यवदानस्य सर्वाधिव्याधिशातनम् ॥ १४ ॥

निर्वाणग्राहशान्तत्वं बुद्धेभ्यो रक्षणादिकम् ।
अप्राणिवधमारभ्य सर्वाकारज्ञतानये ॥ १५ ॥
स्वयं स्थितस्य सत्त्वानां स्थापनं परिणामनम् ।
दानादीनाञ्च सम्बोधाविति मार्गज्ञताक्षणाः ॥ १६ ॥ इति

अस्यापि दर्शनमार्गस्य सर्वाकारज्ञतायामुक्तं निर्वेधभागीयं ग्राह्यम् । यद्येवं तत्रापि प्रमुदितादिभूम्यभिधाने बोधिसत्त्वानां दर्शनादिमार्गस्य प्रतिपादनात्किमर्थं पुनरुपादानमिति चेत् । उच्यते । निःशेषहेतुफलाधिगमापेक्षया तथागतानां सर्वाकारज्ञतेत्यभिधानाज्जिनपुत्राणां तदुक्तो मार्गो न भवतीत्याशङ्कावारणार्थम् । तत एव हेतुमात्रमपकृष्य पृथग्जिनात्मजानां दर्शनादिमार्गात्मिका मार्गज्ञता व्यवस्थाप्यते । एवन्तु विद्वद्भिर्निरूपयितव्यम् । किङ्कारिकानुसारेणाकारा ग्रन्थार्थानुगमेन योजिता न वेति । तत्र आर्यविमुक्तिसेनादिव्याख्यामालोक्य स्वशक्त्या प्रतिपादिता एव । केचिदर्थान्तराभिसन्धिना यथोक्तेन ग्रन्थप्रबन्धेनाकारार्थमनुक्त्वा दर्शनमार्गषोडशक्षणोपलक्षणमेव केवलमनुक्तमिति वर्णयन्त्येवमुक्तानुक्तनिर्वेधभागीयाद्यर्थप्रतिपादनपरेषु ग्रन्थेषु द्रष्टव्यमिति । तैर्भावनानुक्रमाद्यनिर्देशात्काचिदभिसमयानुपूर्वी न प्रतिपादिता । अभिसमयालङ्कारकारिकार्थश्च कथं व्याख्येय इत्यपरे । भावाभिनिवेशमूला हि रागादिक्लेशगणास्तद्विरुधश्च नैरात्म्याभ्यास इत्यतस्तं विना कथं दुःखधर्मज्ञानक्षान्त्यादिरिति चेत् । नैवं, यस्माद्यथोदितविधिना नैरात्म्यसंसूचनपराः सर्व एवामी षोडशाकाराः सन्निहितविनेयजनहिताधारचिकीर्षया त्वेवं यथाभिहितनानाप्रकार-

रूपेण निर्दिष्टाः सन्तोऽपि एवमभ्यस्यमानाः प्रतीत्यसमुत्पादधर्मतया दर्शनमार्गोत्पादका भवन्तीत्यवसेयमेवमन्यत्रापीति । दर्शनमार्गानन्तरं भावनामार्गाभिधाने सति स्वल्पवक्तव्यत्वेन फलनिम्नत्वेन च विनेयप्रवृत्तेर्भावनामार्गस्य कारित्रं तावत्कथयन्नाह । आश्चर्यं भगवन्नित्यादि । प्रज्ञापारमितेति वक्ष्यमाणो भावनामार्गः । परिदमनाय प्रत्युपस्थितेति । सर्वप्रकारक्लेशस्वविधेयीकरणात्सर्वतो दमनार्थेन परिदमननिमित्तमभिमुखीभूतेति प्रथमं दमनकारित्रम् । अनुनामायेति । दमनानन्तरविशिष्टे कियन्मात्रेणाधिगमेऽहंमानप्रतिषेधेनात्मोत्कर्षनिषेधात्सर्वतो नमनार्थेन परिणमनायेति द्वितीयं नमनकारित्रम् । ततोऽनन्तरं सर्वप्रकारक्लेशाभिभव इति तृतीयक्लेशनिर्जयकारित्रार्थमाह । पुनरपरं कौशिकेत्यादि । एवमुद्गृह्णन्निति । वक्ष्यमाणभावनामार्गक्रमेण । संग्राम इत्यादि । भावनाप्रहातव्यैः क्लेशैः सह विग्रहे वर्तमानैरिति । अधिमात्राधिमात्रादिप्रथमत्रिकविपक्षस्य मृदुमृद्वादिप्रथमप्रकारप्रतिपक्षाधिगमेन संग्रामशिरस्युत्कलितः समारूढो भवति । अवतरत इत्यादि पदत्रयं यथासङ्ख्यं मध्याधिमात्रादिद्वितीयत्रिकविपक्षस्य मध्यमृद्वादिप्रकारप्रतिपक्षाधिगमयोगतो वाच्यम् । सङ्ग्राममध्यगतस्येति मृद्वधिमात्रविपक्षस्याधिमात्रमृदुप्रतिपक्षलाभेन । तिष्ठत इति मृदुमध्यविपक्षस्याधिमात्रमध्यप्रतिपक्षाभिसमयात्सङ्ग्रामे स्थितस्य । निषण्णस्येति मृदुमृदुविपक्षस्याधिमात्रप्रतिपक्षसमत्वागमात्सङ्ग्रामे समुपविष्टस्य । सर्वेणैवैतेन नव-

प्रकारविपक्षप्रतिपक्षहानोपादानेन भावनामार्गस्यापुनः-कर्तव्यतामाह । अस्थानमित्यसम्भवः । तदेव कथयत्य-नवकाश इति । पर्यायवचनं किमर्थमिति चेदुच्यते । तदा चायत्याञ्च कस्यचित्कथञ्चिदर्थावबोधार्थम् । तेनैव चार्थाभिधाने पूर्वश्रुतानामेवावगीतता स्यादिति तद्दोष-परिहारेण पूर्वकालं विक्षिप्तानां पश्चादागतानाञ्च तदर्थश्रवणार्थम् । दुर्मेधसां पुनःपुनस्तदर्थलक्षणार्थम् । एकशब्दानेकार्थतयाऽर्थान्तरकल्पनाव्युदासार्थम् । अन्यच्च निर्घण्टवत्ताभिः संज्ञाभिस्तदर्थसम्प्रतिपत्त्यर्थम् । धार्म-कथिकानामर्थोपनिबन्धनप्रायणयोः कौशलोपसंहारार्थम् । आत्मनो धर्मप्रतिसंविदुद्भावनार्थम् । परेषाञ्च तद्बीजा-धानार्थमिति पर्यायदेशनानामष्टौ प्रयोजनान्येवं सर्वत्र वाच्यम् । यत्तस्येति । यदिति निपातो य इत्यर्थे वर्तते । यो जीवितान्तरायः सो ऽनवकाश इति वाक्यार्थः । जीविता-न्तराय इति विज्ञानप्रबन्धोच्छित्तिः । आध्यात्मिकोपद्रवविग-मानन्तरं बाह्योपद्रवोपशम इति । परोपक्रमाविषह्यत्वम् । चतुर्थं कारित्रमाह । परोपक्रमेणेत्यादिना (p. 55, 3) । परो मनुष्यादिस्तस्योपक्रमः खड्गादिप्रहारदानम् । एत-दुद्देशपदं निर्देशेन विभजन्नाह । सचेत्पुनरित्यादि । उद्देशवचनानां निर्देशात्पृथगभिधेयार्थो नास्तीति किमर्थ-मुद्देशवचनमिति चेदुच्यते । समासेन विस्तरावधारणार्थं सूत्रेण वृत्त्यर्थावधारणवत् । उद्घटितज्ञानानां विनेयाना-मनुग्रहार्थम् । अन्येषामायत्यामुद्घटितज्ञताहेतूपचयार्थम् । आत्मनः समासव्यासनिर्देशवशितासन्दर्शनार्थम् । अन्येषां

तथाभ्यासेन तद्बीजावरोपणार्थञ्चेत्याचार्यवसुबन्धुः । संक्षिप्तमात्रे समाहितं चित्तं योगिनां तद्विस्तरार्थे सर्वत्र कथं समाहितं स्यादित्येतदर्थं निर्देशदेशना । तथा विस्तरमात्रे समाहितं चित्तं योगिनां तत्संक्षिप्तार्थे सर्वत्र कथं समाहितं स्यादित्येतदर्थमुद्देशदेशनेत्यागमः । एवं सर्वत्र प्रतिपत्तव्यम् । शस्त्रं चक्रादिकम् । पाषाणादिकमन्यत् । ननु तद्देशक्षेपणसामर्थ्यवता पुरुषेण क्षिप्तं शस्त्रादिकमन्तरा विरोधोपनिपाताभावे कथं न शरीरे निपतेदिति । तत्कस्य हेतोरित्याशङ्क्याह । महाविद्येयमित्यादि । अयमभिप्रायः । मातुरभ्यासमानाया एवं महाविद्यादिस्वभावायाः सामर्थ्येनानन्तरा गुरुत्वधर्मविरोधोपनिपातान्न तद्देहमनुप्राप्नोति शरादिकमिति । महत्त्वादिगुणयोगान्महाविद्येत्यादिपदत्रयं प्रयोगाद्यवस्थासु । अधिमुक्त्यादिमनस्कारैरधिकाभावादनुत्तरा निर्हारतया समाभावादसमा । अत्यन्तविशुद्ध्या सन्तानान्तरेणासमेन समत्वादसमसमा । महाविद्यादित्वमेवास्याः कथमिति । तत्कस्य हेतोरित्याशङ्क्याह । अत्र हि कौशिकेत्यादि (p. 55, 10) । एतदुक्तम् । "यस्मात्प्रज्ञापारमितायां मैत्र्यादिपूर्वकं शिक्षमाणो न कस्यचिद्व्यापादाद्यर्थं शिक्षते । अतो हिंसादिकस्याल्पायुष्कत्वादिहेतोरपनयनान्महाविद्यादिस्वभावे"ति । नात्मव्याबाधाय चेतयत इति । मारणादिनिमित्तमात्मनो न यतते । सर्वोपद्रवविगमानन्तरं सम्यक्सम्बोधिकारित्रं पञ्चममाह । अत्र हीत्यादिना । सम्यक्सम्बोधिमभिसम्भोत्स्यत इति तत्त्वाधिगमं साक्षात्करिष्यति । सर्वज्ञज्ञानञ्च प्रतिलप्स्यत इति तत्त्वाधिगमादुत्तरकालं

सर्वधर्मविषयज्ञानमधिगमिष्यति। तदेव कथयन्नाह। तेन सोऽनुत्तरामित्यादि। चित्तानीत्युपलक्षणात्सर्वधर्मपरिग्रहः। व्यवलोकयिष्यतीति ज्ञास्यति। ननु सर्वमेव योगिज्ञानमनालम्बनमिष्यते। तत्कथं सर्वधर्मान् विज्ञास्यतीति। तत्कस्य हेतोरित्याशङ्क्याह। अत्र कौशिकेत्यादि। प्राप्तमानन्तर्यमार्गेण स वासनावरणद्वयप्रहाणात्। ज्ञातं विमुक्तिमार्गेण सर्वाकारज्ञताधिगमयोगात्। साक्षात्कृतं शुद्धलौकिकज्ञानेन निश्चयात्। एतदुक्तम्। "यथाहि सत्यस्वप्नदर्शिनो ज्ञानं परमार्थतोऽविषयमपि प्रतिनियतविषयाकारं लिङ्गागमानपेक्षञ्चाश्रयविशेषवशादुत्पद्यमानमुपदर्शितार्थप्रापकत्वेनाविसंवादि भवति। तथा योगिज्ञानं प्रज्ञापारमितायोगाभ्यासबलेन यथैव तदभूद्भवति भविष्यति चातीतं वर्तमानमनागतं वस्तुपरेण परिकल्पितं, तथैवोपदर्शितविविधाकारप्रकारप्रभेदप्रपञ्चं बहिरिव परिस्फुरद्रूपं स्फुटप्रतिभासं लिङ्गागमानपेक्षमविसंवादितयोत्पन्नं प्रत्यक्षं प्रमाणमिष्यते। अतश्चैवं भगवतः सर्वत्र साक्षाद्दर्शित्वाभ्युपगमाद्यन्न प्राप्तं न विज्ञातं साक्षात्कृतं, तदभावेन सर्वज्ञज्ञानमुच्यते। यतो भ्रान्तिनिवृत्तावप्याकारनिवृत्तेः प्रतिबन्धाभावेनासम्भव" इति मध्यमकनयानुसारेणार्यनागार्जुनपादप्रभृतयः। अज्ञातिशययोगेन पुण्यमहत्वाद्यच्च स्थाने तथागतादीनामधिगमो जातस्तत्पूज्यमिति बोधिकारित्वानन्तरं प्रज्ञापारमिताधारदेशपूज्यताकारित्वं षष्ठं वक्तुमाह। पुनरपरं कौशिक यत्रेयमित्यादि। अन्तश इत्यागत्या पूर्वकर्म-

विपाकमिति । प्रतिपक्षाभ्यासं विना नियतवेदनीयं कर्मविपाकम् । इदमेवार्थतत्त्वं दृष्टान्तेन द्रढयन्नाह । तद्यथापि नामेत्यादि (p. 56, 7) । बोधेर्मण्डः सारोऽस्येति भूप्रदेशः । पर्यङ्काक्रान्तो बोधिमण्डस्तं गतास्तत्पर्यन्तमाश्रिताः । बोधिमण्डपरिसामन्तो विदिक्स्थितवज्रकीलचतुष्टयान्तर्गतो भूमिभागः । बोधिमण्डो व्याख्यातः । तदभ्यन्तरं मध्यस्थानम् । भूमिप्रविष्टस्य मूलस्य परिसामन्तग्रहणेनोपादानात्तद्विनिर्गतो वृक्षभागो वृक्षमूलम् । न ते शक्या इति । न ते योग्या विषया इत्यर्थः । विहेठयितुं विभेत्तुम् । व्यापादयितुं विद्वेषयितुम् । आवेशयितुम् । भूतग्रहादिप्रवेशयितुम् । ननु विहेठाद्युत्पत्तिप्रतिघाते स्थानस्य व्यापाराभावात्कथं तत्र विहेठादि कर्तुं न शक्यत इति तत्कस्य हेतोरित्याशङ्क्याह । तत्र हीत्यादि । अयं वाक्यार्थो ये सर्वसत्त्वानामर्थाय मृदुमध्याधिमात्रव्यापादप्रतिपक्षेण मैत्रीप्रभेदमभयमवैरमनुत्त्रासं स्वयं सत्कृत्य निरन्तरं दीर्घकालं भावयन्ति । परांश्चाधिकृत्य प्रकाशयन्ति । तेषां त्रैकालिकबुद्धानां तत्रोत्पादेन तत्स्थानं विशिष्टमेव जातमतोऽचिन्त्यत्वाद्धेतुप्रत्ययसामग्र्या भूभागमाहात्म्यात्कारणविगुणोत्पत्त्या विहेठादिकार्यं न शक्यते तत्र कर्तुं प्रतीत्यसमुत्पादधर्मताबलादिति । एवं दृष्टान्तमावेद्य दार्ष्टान्तिकमर्थमावेदयन्नाह । एवमेवेत्यादि (p. 56, 14) । पूर्ववदभिप्रायेण । तत्कस्य हेतोरित्याशङ्क्याह । तथैव स्थानमाहात्म्यप्रतिपादनद्वारेण परिहरन्नाह । अनयैव हीत्यादि । चैत्यभूतो वन्दनादिना पुण्योपचयहेतुत्वात् । पितेव पितृभूत

इत्युपमा वाचकभूतशब्दस्योपादानादन्यचैत्यसमानत्वेन चैत्यभूतः स पृथिवीप्रदेश इत्येके। यत्र हि नाम पुद्गलनैरात्म्यद्योतिकया ये धर्मा हेतुप्रभावा इत्यादिगाथयाधिष्ठितो भूभागः स्तूपो मतस्तत्र समस्तवस्तुनैःस्वाभाव्यप्रकाशिकाया मातुरुद्ग्रहणादिनोपेतः स्तूपो नितरामेवेत्यतः। साक्ष्येव साक्षिभूत इति तत्स्वभावत्वे चैत्यमेव चैत्यभूत इति चन्द्रगोमी। वन्दनीयो नमस्कारणात्। माननीयो गुणानुस्मरणेन बहुमानात्। मृदुमध्याधिमात्रपूजाभिर्यथाक्रमं पूजनीयोऽर्चनीयोऽपचायनीयः। श्रीपट्टबन्धादिना विशेषपदस्थापनात् सत्करणीयः। सर्वथाऽनुल्लंघनीयत्वेन गुरुकरणीयः। त्राणं सर्वोपद्रवनिवारणतया। शरणं तदाश्रयप्रयोगाबन्ध्यत्वपदस्थानतया। लयनमनवद्यरतिवस्तुतया। परायणं परमार्थत्वगमनपदस्थानतया। यथोक्तनीत्या षड्विधमेव कारित्रमवगन्तव्यम्।

तथा चोक्तम्,—

सर्वतो दमनं नामः सर्वतः क्लेशनिर्जयः।

उपक्रमाविषह्यत्वं बोधिराधारपूज्यता॥ १७॥ इति

कारित्रानन्तरं भावनामार्गो वक्तव्यः। स च सास्रवानास्रवभेदेन द्विविधः। तत्र सास्रवोऽधिमुक्तिपरिणामनानुमोदनामनस्कारलक्षणस्त्रिविधः। अनास्रवः पुनरभिनिर्हारोऽत्यन्तविशुद्धिस्वभावो द्विविधः। अतो यथाविमोक्षं दृष्टकुशलधर्माधिष्ठाना भावनामार्गाधिकारादादावसाक्षात्क्रियारूपाऽधिमुक्तिर्वक्तव्या। सापि स्वार्था स्वपरार्था परार्था चेति मूलभेदेन त्रिविधा सती मृदुमध्याधिमात्रभेदेन प्रत्येकं भेदात् त्रिकत्रिभिर्नवधा भवति। तद्यथा

मृद्वी मध्याधिमात्रा च स्वार्थाधिमुक्तिरेवं स्वपरार्थाधिमुक्तिः परार्थाधिमुक्तिश्च। एवमेषापि नवप्रकारा मृदुमृद्वादिप्रकारभेदेन प्रत्येकं भिद्यमाना नवभिस्त्रिभिरधिमुक्तिः सप्तविंशतिप्रकारा भवति। तद्यथा। मृदुमृदुः। मृदुमध्यः। मृद्वधिमात्रः। मध्यमृदुः। मध्यमध्यः। मध्यधिमात्रः। अधिमात्रमृदुः। अधिमात्रमध्यः। अधिमात्राधिमात्रः। इति स्वार्थाधिमुक्तेर्नवप्रकारास्तथा स्वपरार्थाधिमुक्तेः परार्थाधिमुक्तेश्च वेदितव्याः। तत्र स्वार्थाधिमुक्तेर्मृदुमृदुप्रकारमधिकृत्याह। एवमुक्ते शक्र इत्यादि (p. 57, 5)। दिव्याभिरिति मनोनुकूलाभिः। मुक्तकुसुमं पुष्पम्। धूपः सहजसांयोजिकादिः। गन्धो मलयादिजः। सर्वर्तुपुष्पै रचिता माला माल्यम्। शरीरोद्वर्तनप्रकारो विलेपनम्। सुवर्णादिवालुकचूर्णः। वस्त्रं चीवरम्। सितातपत्रादि छत्रम्। गरुडाद्यङ्कितो ध्वजः। वज्राद्यङ्किता घण्टा। चिह्नरहिता पताका। बहुविधाभिरिति। अनेकप्रकारखाद्यभोज्यादिभिः। शरीराणि रूपकाया इत्येके। धातव इत्यपरे। प्रतिष्ठापयेद्विन्यसेत्। परिगृह्णीयादिति। ममत्वेन स्वीकुर्यात्। धारयेदिति। चिरस्थितीकुर्यात्। तांश्चेति स्तूपान्न केवलञ्च शब्दाच्छरीराणि। तद्वचनेनैव मातुः पूजायामधिकं पुण्यमिति प्रतिपादयितुं शक्रं प्रतिप्रश्नयन्नाह। तेन हीत्यादि। सर्वज्ञतात्मभावोऽभिनिर्वर्तित इति। सर्वज्ञज्ञानाधिगमयोग्यशरीरस्वभावो निष्पादितः। कतमस्यां प्रतिपदीति। कतमस्मिन् मार्ग इत्यर्थः। प्रज्ञापारमितां विना विपर्यासाविनिवृत्त्या मुक्त्यनुपपत्तिरित्यभिप्रायवानाह। इहैव भगवन्नित्यादि (p. 58, 1)।

वज्रोपमेष्वग्रजप्राप्त्या योग्यतास्वभावया प्रतिलब्धा। ततोऽनन्तरमभिसम्बुद्धा। अथवाऽनुत्तरा सम्यक्सम्बोधिरभिसम्बुद्धा। ततः सर्वज्ञता प्रतिलब्धेति योज्यम्। तच्चानुत्तरा बोधिः स्वार्थसम्पत्। सर्वज्ञता परार्थसम्पत्। तद्वचनेनैवेदानीं परिहरन्नाह। तस्मात्तर्हीत्यादि। आत्मभाव एव शरीरं तस्य वा शरीरं शिलापुत्रकस्येव शरीरमिति न्यायात्। तदेव प्रतिलभ्यत इति प्रतिलम्भस्तेन तथागत इति न संख्यां गच्छति। सर्वेषां तथागतत्वप्राप्तिरिति मतिः। कथं तर्हि तथागतः इत्याह। सर्वज्ञतायामित्यादि। अपरमपि गुणमाह। येयं कौशिक इत्यादि। सर्वज्ञज्ञानाश्रयभूत इति। अन्येषां सर्वज्ञज्ञाननिष्पत्तिं प्रति हेतुभूतः। तदेव कथयन्नाह। एनमित्यादि। एनमात्मभावशरीरप्रतिलम्भम्। प्रभावनेति प्रकाशना। बुद्धो रूपकायादिस्वभावः। सूत्राद्यात्मको धर्मः। आर्यविनिवर्तिकादिबोधिसत्त्वसमूहः सङ्घः। परिनिर्वृतस्यापीति। अपिशब्दात्तिष्ठतः। विस्तरेण निर्दिश्यैवमुपसंहरन्नाह। तस्मात्तर्हि कौशिकेत्यादि। ननु सर्वप्रतिविशिष्टत्वे तथागतस्य कथं कारणत्वेऽपि मातुः पूजायामधिकं पुण्यमिति। तत्कस्य हेतोरित्याशङ्क्याह। सर्वज्ञज्ञानस्य हीत्यादि। अयं वाक्यार्थः। "प्रज्ञापारमिता ज्ञानमद्वयं सा तथागत" इति न्यायान्मुख्यतो धर्मकायस्तथागत एव प्रज्ञापारमिताऽतस्तद्द्योतिकाया मातुः पूजया सर्वज्ञज्ञानस्य धर्मकायस्य पूजनाद्बहुतरं पुण्यं प्रसवति। रूपकायप्रतिबिम्बतथागतपूजायां तु प्रतिविशिष्टधर्मकाया-

सङ्ख्यान्नाधिकं पुण्यमिति। लिखित्वा पूजयतो बहुतरं पुण्यं निर्दिश्य लिख्यमानायामपि तथैव प्रतिपादयन्नाह। यः कुलपुत्रो वेत्यादि (p. 59, 1)। पूर्ववत् तत्कस्य हेतोरित्याशङ्क्य। तथैव परिहरन्नाह। सर्वज्ञज्ञानस्य हीत्यादि। द्वितीयं मृदुमध्यप्रकारं प्रतिपादयितुं प्रश्नयन्नाह। य इमे भगवन्नित्यादि। न ज्ञास्यन्तीति पुण्यसम्भारानवगमात्। महार्थिकेति। महानर्थः पुण्यसम्भारः तन्निष्पादनात्तदर्थिका। न वेत्स्यन्तीति। ज्ञानसम्भारानवबोधात्। ज्ञानसम्भारो महानुशंसस्तद्धेतुत्वेन महानुशंसा। महाफला महाविपाकेति। पुण्यज्ञानसम्भारयोर्यथाक्रमं विपाकनिष्यन्दफले रूपकायधर्मकायौ तन्निष्पादनादेवमुक्तम्। न च वेदयिष्यन्तीति। पुण्यज्ञानफलाप्रतिपत्तेः। न च पुनः श्रद्धास्यन्तीति कर्मफलादौ सम्प्रतिपत्तिविगमात्। तद्वचनेनैव प्रश्नं परिहृत्य मृदुमध्यप्रकारप्रतिपादनार्थं प्रतिप्रश्नयन्नाह। तत्किं मन्यसे कौशिक कियन्त इत्यादि। अवेत्य प्रसादेनेति। अवगम्य गुणसम्भावनापूर्वकः प्रसादोऽवेत्य प्रसादो विचिकित्साप्रहाणादित्येके। दृष्टतत्त्वस्य श्रद्धा त्रिषु रत्नेष्वार्यकान्तञ्च शीलं चतुर्थमवेत्य प्रसाद इत्यन्यः। उत्तरोत्तरपुण्यमहत्त्वादिकार्यं विशिष्टवीर्यातिशयादियोगादिति मत्वा साधूक्तत्वेनानुमतिमाह। एवमेतत् कौशिकेत्यादिना (p. 60, 3)। अनेनायमर्थः कथितः। यथा वीर्यातिशयादिवैकल्यादवेत्य प्रसादलाभिनोऽधिगममहत्त्वावबोधेऽप्यल्पकास्तथा प्रज्ञापारमितापूजादि-

कारिणोऽल्पका इति तद्वचनेन प्रतिपादितमिति ग्राह्यम् । अन्यथा शक्रप्रश्नवचनेन न किञ्चिदुक्तं भवेदिति । अल्पतरतमादिप्रतिपादनेनानन्तरार्थं विस्तारयन्नाह । तेभ्यः कौशिकाल्पेभ्य इत्यादि । चित्तोत्पादं बृंहयन्तीति ।

सहोदयाच्चित्तवरस्य धीमतः
सुसंवृतं चित्तमनन्तदुष्कृतात् ।
क्लेशाच्च दुःखाच्च बिभेति नासौ
सम्पत्तिकालेऽपि विपत्तिकाले ॥

इत्यादिगुणमनुस्मृत्य प्रतिपत्त्योपस्तम्भयन्ति । उपबृंहयित्वेति सुक्तान्तप्रयोगः । आरब्धवीर्या इति । उत्तप्तवीर्याः । योगमिति । ध्यानबलाच्चित्तैकाग्रतां चरन्तीति तत्त्वावबोधेनानुतिष्ठन्ति । अविनिवर्तनीयायामिति । अचलायाम् । अध्याशयसम्पन्नानामिति ।

आयतो विपुलो हृष्ट उपकारपरो महान् ।
कल्याणश्चैवमाधिक्याच्छयो ह्यध्याशयः सताम् ॥ इति

विशिष्टेनाध्याशयेन युक्तानाम् । ते चेति (p. 61, 2) श्रोतारः । पुनरप्यत्यन्ताल्पत्वं प्रतिपादयन्नाह । सन्ति खलु पुनरित्यादि । ननु समानाभिप्रायेण सर्वेषां प्रवृत्तौ कथमेको द्वौ वाऽवतिष्ठेयातामिति । तत्कस्य हेतोरित्याशङ्क्याह । दुरभिसम्भवा हीत्यादि । दुरभिसम्भवा दुरभिगम्या । चतुर्विधनिर्वेधभागीयेषु दर्शनभावनाविशेषमार्गेषु च वीर्यातिशयवैकल्याद्धीनवीर्यैरित्यादिपदसप्तकार्थो यथाक्रमं वाच्यः । एतदुक्तम् । "वीर्यातिशयासम्भवात् प्रथमत-

स्तुल्याभिप्रायेण प्रवृत्तावपि न सर्वेऽनुत्तरसम्यक्सम्बोधिभाज" इति। तृतीयं मृद्वधिमात्रप्रकारं कथयन्नाह। तस्मात्तर्हीत्यादि। क्षिप्रमित्याशु। सुखमित्यनायासम्। अभीक्ष्णमिति पुनः पुनः। ननु तथागतत्वार्थिना बोधिसत्त्वचर्यायां शिक्षितव्यम्। तत्कथं प्रज्ञापारमितायां शिक्षाऽस्याभिधीयत इति। तत्कस्य हेतोरित्याशङ्क्याह। तथाहि स एवमित्यादि। अयं हि वाक्यार्थः। यस्मात् पूर्वं भगवान् बोधिसत्त्वचर्यां चरन् प्रज्ञापारमितायां शिक्षितोऽनुपलम्भयोगेन चर्यानिष्पादनार्थं तथा मया सर्वबुद्धगुणावाप्तिहेतुत्वेन प्रज्ञापारमिता प्रतिसर्तव्या। अन्यथोपलम्भाद्बोधिसत्त्वचर्याणामनिष्पत्तेर्न बोध्यधिगम इति स बोधिसत्त्वो ज्ञास्यतीति। चतुर्थं मध्यमृदुप्रकारमावेदयन्नाह। तस्मात्तर्हि कौशिकेत्यादि। कोटिश इति (p. 62, 2) कोटिं कोटिं कोटिशः। सप्तरत्नमयानि।

सुसारगल्ववैदूर्यरूप्यस्फटिकहाटकम्।
सह लोहितमुक्ताभिरश्मगर्भैश्च वर्ण्यते॥
रत्नं सप्तविधं सर्वं प्राधान्यादथवाऽपरे।
तद्भेदा मणयः सर्वे वर्णसंस्थानलेशतः॥

इति वचनादेतानि सप्तरत्नानि। तन्मयास्तत्स्वभावाः। तथागतधातुगर्भानिति। तथागतधातुमध्यान्। तन्निदानमिति तद्धेतुकम्। क्वचित्ततो निदानमिति पाठः। तत्रायमर्थो धातुगर्भस्तूपपूजातस्तस्याः सकाशान्निदानं बुद्धत्वप्राप्तेः कारणं बहुपुण्यं प्रसवेदिति। बहुपुण्यमिति यदि नामाभिधर्मसमुच्चये नामभेदः कृतः "कामप्रतिसंयुक्तं

कुशलं पुण्यम् । रूपारूप्यप्रतिसंयुक्तमानिञ्ज्यमि"ति । तथाप्यत्र सामान्येन कुशलं पुण्यं ज्ञेयं रूपधातावप्यस्यार्थस्य सम्भवात् । बहु भगवन् बहु सुगतेति । पुनर्बह्विति निर्दिष्टमतिवैपुल्यसिद्धये । सुगतेति तु विज्ञेयं सम्भ्रमादिविशेषतः । अभिश्रद्दधदिति । अभिसम्प्रत्ययं कुर्वाणः । अवकल्पयन्निति । मनस्यध्यारोपयन् । अधिमुच्येति । अधिमुक्तिमनस्कारेणालम्ब्य प्रसन्नचित्त इति भद्रतादर्शनादभिमुखचित्तः । बोधाय चित्तमुत्पाद्येति । अनुत्तरसम्यक्सम्बोधिनिमित्तं बोधिसत्त्वसंवरग्रहणाद्विशिष्टं चित्तं कृत्वा । अर्थमस्या विवृणुयादिति । अर्थमेवोद्धृत्य केवलं कथयेत् । मनसान्ववेक्षेतेति । परस्पराव्याहतं निरूपयेत् । यथाधिकयेत्यादि । येन मध्यमृद्वादिना प्रकारेणाधिकयाऽधिमुक्त्या सम्प्रयुक्ता या प्रज्ञा सापि यथाधिकतयात्र प्रज्ञापारमितायां परिमीमांसां परीक्षामापद्येत कुर्यात् । सद्धर्मचिरस्थितिहेतोस्तन्निमित्तम् । तदेवाह । सा बुद्धनेत्रीत्यादि । बुद्धानां नेत्री नायिका माता प्रज्ञापारमितैव । अस्याः पुस्तकवैकल्येन पाठस्वाध्यायाद्यसम्भवात् समुच्छेदो माभूत् । तथा मातरं विना सद्धर्मस्यागमाधिगमस्यान्तर्धानं माभूत् । बोधिसत्त्वानाञ्च जननीपुस्तकसद्भावेनानुग्रहोपसंहारः श्रवणादिलक्षणः कृतो भविष्यति नेत्र्यवैकल्येन । यत इति शेष इति तस्मात् स्थापयेदिति पूर्वेण सम्बन्धः । न केवलं स्थापयेदपि तु यथोक्तेनैवाशयेन संस्कारादिकं कुर्यादित्याह । तासैनामित्यादि । सर्वेण चैतेन । श्रवणादिना दशधा धर्मचरितमुक्तम् ।

पूजना लेखना दानं श्रवणं वाचनोद्ग्रहः ।
प्रकाशनाथ स्वाध्यायश्चिन्तना भावना च तत् ॥
अमेयपुण्यस्कन्धं हि चरितं तद्दशात्मकम् ।
विशेषादक्षयत्वाच्च परानुग्रहतोऽसमात् ॥

इति वेदितव्यम् । पञ्चमं मध्यमध्यप्रकारमधिकृत्याह । तिष्ठन्तु खलु पुनः कौशिक कोटिश इत्यादि (p. 63, 1) । जम्बूद्वीपमिति ।

जम्बूद्वीपो द्विसाहस्रस्त्रिपार्श्वः शकटाकृतिः ।
सार्धं त्रियोजनं त्वेकम् ।

षष्ठं मध्यमध्याधिमात्रं वक्तुमाह । तिष्ठतु खलु पुनः कौशिकायं जम्बूद्वीप इत्यादि (p. 64, 2) । चातुर्महाद्वीपके लोकधाताविन्यादि ।

लक्षषोडशकोद्वेधमसंख्यं वायुमण्डलम् ॥
अपामेकादशोद्वेधं सहस्राणि च विंशतिः ।
अष्टलक्षोच्छ्रयं पश्चाच्छेषं भवति काञ्चनम् ॥
तत्र मेरुश्चतूरत्नः सप्तहैमास्तु पर्वताः ।
प्रथमतो युगन्धर ईषाधारः खदिरकः ॥
सुदर्शनोऽश्वकर्णश्च विनतको निमिन्धरः ।
ततो द्वीपाश्च चत्वारो दक्षिणादिदिगाश्रिताः ॥
जम्बूद्वीपो द्विसाहस्रस्त्रिपार्श्वः शकटाकृतिः ।
सार्धं त्रियोजनं त्वेकं प्राग्विदेहोऽर्धचन्द्रवत् ॥
पार्श्वत्रयं तथास्यैकं सार्धत्रिशतयोजनम् ।
गोदानीयः सहस्राणि सप्त सार्धानि मण्डलः ॥

योजनाष्टसहस्राणि चतुरस्रः कुरुः समः।
द्वीपानामन्तरालेषु यथासंख्यं मता इमे॥
देहा विदेहाः कुरवः कौरवाश्चामरावराः।
अष्टौ तदन्तरद्वीपाः शाठा उत्तरमन्त्रिणः॥

चतुर्द्वीपकरन्ध्रार्थश्चक्रवाडस्ततः पुनः।
सीमाबन्धवदायसो जातः स कृष्णपर्वतः॥
सर्वे चैते सहद्वीपा जले ऽशीतिसहस्रके।
मग्ना ऊर्ध्वञ्जलान्मेरुः भूयोऽशीतिसहस्रकः॥
अर्धार्धहानिसंयुक्ताः समोच्छ्रायघनाश्च ते।
सीताः सप्तान्तराण्येषामाद्याशीतिसहस्रिका॥
अभ्यन्तरः समुद्रो ऽसौ त्रिगुणः स तु पार्श्वतः।
अर्धार्धेनापराः सीताः शेषं बाह्यो महोदधिः॥
मेरोरूर्ध्वं विमानानीति चतुर्द्वीपकः स्मृतः।

चतुर्द्वीपक एव लोकधातुश्चातुर्द्वीपकः।

सप्तममधिमात्रमृदुमाह। तिष्ठन्तु खलु पुनः कौशिक चातुर्महाद्वीपक इत्यादिना (p. 65, 1)। साहस्रे चूडिके लोकधाताविति।

चातुर्द्वीपकचन्द्रार्कमेरुकामदिवौकसाम्।
ब्रह्मलोकसहस्रञ्च साहस्रश्चूडिको मतः॥

अष्टममधिमात्रमध्यं वक्तुमाह। तिष्ठन्तु खलु पुनः साहस्रे चूडिक इत्यादि (p. 66, 1)। द्विसाहस्रे मध्यमे लोकधाताविति।

तत्सहस्रं द्विसाहस्रो लोकधातुस्तु मध्यमः।

नवममधिमात्राधिमात्रं निर्दिशन्नाह। तिष्ठन्तु खलु पुनः कौशिक द्विसाहस्र इत्यादि (p. 67, 3)। त्रिसाहस्रे महासाहस्र इति।

तत्सहस्रं त्रिसाहस्रो लोकधातुरनुत्तरः।
महाचक्रपरिक्षिप्तः समसंवर्तसम्भवः॥

अक्षिप्तताहंमानवासनत्वेन प्रथमतः स्वार्थाधिमुक्तेर्नवप्रकारान् निर्दिश्येदानीं स्वपरार्थाधिमुक्तेः प्रथमं मृदुमृदुप्रकारार्थमाह। तिष्ठन्तु खलु पुनः कौशिक त्रिसाहस्रेत्यादि (p. 68, 3)। अपूर्वाचरममिति। न पूर्वन्न पश्चाद्युगपदित्यर्थः। एतयैवंरूपया पुण्यक्रिययेति। अनन्तरोक्तया सप्तरत्नमयतथागतधातुगर्भस्तूपसत्कारादिस्वभावया पुण्यचेतनया।

धर्मतो बुद्धा द्रष्टव्याः धर्मकाया हि नायकाः।

इतिवचनाद्धर्मतास्वभावप्रज्ञापारमितापूजायां सर्वबुद्धपूजनाद्बहुतरं पुण्यमिति मत्त्वा केषाञ्चिदर्थकरणाय स्वावबोधमाह। एवमेतद्भगवन्नेवमेतत्सुगतेति (p. 69, 13)। एतदेव कथयन्नाह। प्रज्ञापारमितां हीत्यादि। प्रकारान्तरेण यथोक्तमेव मृदुमृदुभेदमुदीरयन्नाह। तिष्ठन्तु खलु पुनर्भगवन्नित्यादि। पर्यायेणेति निर्देशेन। सर्ववाद्यैरिति (p. 70, 2)। वीणावंशादिदशवाद्यसहस्रैः। सर्वगीतैरिति संस्कृतप्राकृतादिगीतिकाभिः। सर्वनृत्यैरिति शृङ्गारवीरबीभत्सादिभिः। सर्वतूर्यताडावचरैरिति। शङ्खादिध्वनयः सर्वतूर्याः। करतालवाद्यविशेषास्ताडावचराः। साधूक्त-

त्वेनानुमत्यर्थमाह। एवमेतत् कौशिकेत्यादि। बहुतरमित्यादिपदत्रयं प्रयोगाद्यवस्थासु। धर्मसम्भोगनिर्माणकायनिष्पादनाच्चाचिन्त्यमित्यादिपदत्रयार्थो यथाक्रमं वाच्यः। ननु तथागतस्य सर्वप्रतिविशिष्टत्वे कथं मातुः पूजायामधिकं पुण्यमिति। तत्कस्य हेतोरित्याशङ्क्याह। प्रज्ञापारमिता निर्जाता हीत्यादि (p. 71, 5)। नन्वस्यार्थस्य पूर्वोक्तत्वेनापूर्वमत्र वाच्यम्। न किञ्चित्तत्किमर्थमस्योपन्यास इति चेत्। उच्यते। यद्यप्येवं तथापि येन प्रकारेण श्रोतृजनान्तरस्य चित्तं साशङ्कमुत्पद्यते तस्य पूर्वोक्तेनापि क्रमेण निषेधनं क्रियत एव। यतो नास्त्ययं नियमोऽन्यत्रोक्तमुत्तरं चोद्यञ्चैकस्यापरस्य तदेव चोद्यमुत्तरञ्च न भवतीति। तस्मात् पुनरुक्तत्वं नाशङ्कनीयम्। एवमन्यत्रापि वाच्यम्। कलां नोपैतीति (p. 72, 3)। अवस्थाभागं न प्रतिपद्यते। सङ्ख्यामिति। यथानिर्दिष्टसंख्याव्यतिरेकेण न्यूनसंख्याम्। कलामपीति पुनः कलां सूक्ष्मप्रभावम्। गणनामिति जातिविवक्षां वा। उपमामिति। सदृशावस्थाम्। औपम्यमिति। यस्य गुणस्य हि भावाद्द्रव्ये शब्दनिवेशस्तदभिधाने त्वतलाविति वचनात्। उपमागुणमौपम्यम्। उपनिसामिति। अतिकृशताम्। उपनिषदमिति हेतुभावम्। न क्षमत इति न प्रतिपद्यते। एतेन च कलादिरूपाप्रतिपत्तिवचनेन प्रज्ञापारमितातथागतधातुगर्भस्तूपपूजापुण्ययोर्दूरान्तरत्वमावेदितम्। अवयव्यणुरूपादीनामेव कलादित्वव्यवस्थापनादिति ग्राह्यम्। द्वितीयं मृदुमध्य-

प्रकारार्थमाह । उद्गृह्णीष्व मार्ष प्रज्ञापारमितामिति । महानुभावत्वेन क्षमादिसम्पन्नः शक्र इति तस्यामन्त्रणं मार्षेति देवपुत्राणां साधूक्तत्वेन तदेव भगवानाह । उद्गृहाण त्वमित्यादिना । ननु सांदृष्टिकप्रयोजनमन्तरेण किमर्थं प्रज्ञापारमिता गृह्यत इति कस्यचिद्वितर्क इति । तत्कस्य हेतोरित्याशङ्क्याह । यदा हीत्यादि । एवंरूपाः समुदाचारा इति वक्ष्यमाणा वितर्काः । योधयिष्याम इति । एतदेव कथयति । संग्रामयिष्याम इति । समन्वाहरेरिति मनसा, स्वाध्यायेरिति वचसा । सांदृष्टिकानुशंससन्दर्शनाज्जात-प्रसादत्वेन स्तुत्यर्थमाह । महाविद्येयमित्यादि (p. 73, 1) । साधूक्तत्वेनानुवादार्थमाह । एवमेतदित्यादि । ननु महा-विद्यादित्वं भगवत्याः कुत इति । तत्कस्य हेतोरित्याशङ्क्याह । इमां हि कौशिकेत्यादि । इदमत्र समासतोऽर्थतत्त्वम् । सर्वावरणविषप्रशमनेनातीततथागतार्थकरणान्महाविद्या । अनागताप्रमाणतथागताभिसंबोधहेतुत्वादप्रमाणा । अपरिमाणकार्यकरणसमर्थप्रत्युत्पन्नसर्वतथागताभिसंबोध-निमित्तत्वादपरिमाणा । पञ्चकषायोच्छेदकाले क्लिष्टे च लोकधातौ शाक्याधिराजस्य तत्त्वाधिगमहेतुत्वात् संसारो-त्तारणार्थेन निरुत्तरा । दशकुशलादेरचिन्त्यज्ञानपर्यन्तस्य लोकप्रभावनां प्रति सर्वप्रतिविशिष्टहेतुत्वेनानुत्तरा । मातु-र्निष्यन्ददेशनाधर्मसामर्थ्येन बोधिसत्त्वास्तथागतानुत्पादेऽपि प्रज्ञोपायकौशल्येन दशकुशलादिकं लोके प्रभावयन्तीति कृत्वा समाभावादसमा । तथागतसद्धर्मान्तर्धाने जिन-जननीप्रभावेन लोके धर्मचर्यादिप्रवर्तनादसमैस्तथागतैः

सह समत्वादसमसमेति। यथोक्तमेव व्याख्यानं युक्तरूप-मन्यथा महाविद्यादित्वं यद्भगवत्यास्तत् कस्य हेतोरित्याशङ्क्याह। इमां हीत्यादि। ग्रन्थेन परिहाराप्रतिपादनान्न किञ्चिदुक्तं स्यात्। ततश्च यैर्महासुरादिपराजयमहार्थसिद्धिफलप्रदत्वान्महाविद्येयं भगवन् यदुत प्रज्ञापारमितेत्यादिग्रन्थः प्रथमतो व्याख्यातस्तैः प्रकरणार्थो न लक्षित इति लक्ष्यते। महाविद्यादित्वमन्यचान्यथा व्याख्यातमतो यथोक्तव्याख्यानं ग्रन्थानुगतमपि न सङ्गतमिति न मन्तव्यम्। सामयिकत्वाच्छब्दानामित्यलं प्रसङ्गेन। प्रकृतमेव पद-व्याख्यानमभिधीयते। विद्यामागम्येति (p. 73, 14)। प्रज्ञापारमितां प्राप्य। एते हीत्यादि। साम्प्रतमिदानीमित्यर्थः। दशकुशलाः कर्मपथा इति (p. 74, 3)। प्राणातिपातादत्तादानकाममिथ्याचारमृषावादपैशुन्यपारुष्यसम्भिन्नप्रलापाभिध्याव्यापादमिथ्यादृष्टिविरतयो दशकुशलाः कर्मपथाः। चत्वारि ध्यानानीति। समापत्तिजानि रूपधातुस्वभावानि चत्वारि ध्यानानि। तत्र प्रथमध्यानं वितर्को विचारः प्रीतिः सुखं चित्तैकाग्रता चेति पञ्चाङ्गम्। द्वितीयमध्यात्मसम्प्रसादः प्रीतिः सुखं चित्तैकाग्रता चेति चतुरङ्गम्। तृतीयमुपेक्षा स्मृतिः सम्प्रजन्यं सुखं चित्तैकाग्रता चेति पञ्चाङ्गम्। चतुर्थध्यानमुपेक्षापरिशुद्धिः स्मृतिपरिशुद्धिरदुःखासुखा वेदना चित्तैकाग्रता चेति चतुरङ्गम्। बोध्यङ्गसम्प्रयुक्तानीति। अनास्रवाणि प्राधान्यादित्येके। प्रज्ञोपायपरिग्रहबलात्सास्रवाण्येव बोधेरङ्गानि कारणानि सम्प्रयुक्तानि

तुल्यं प्रवृत्तानीत्यपरे वर्णयन्ति। प्रभाव्यन्त इति प्रज्ञायन्ते। चत्वार्यप्रमाणानीति। मैत्रीकरुणे सर्वथाऽद्वेषस्वभावे सत्त्वेषु यथाक्रमं सुखदुःखसंयोगवियोगेच्छे। मुदिता सम्यक्सम्प्रतिपत्तिषु सत्त्वेषु सौमनस्यलक्षणं प्रामोद्यम्। उपेक्षा तु मित्रामित्रेष्वनुनयप्रतिघविरह इत्येतान्यप्रमाणसत्त्वालम्बनत्वादप्रमाणानि। चतस्र आरूप्यसमापत्तय इति। अनन्तमाकाशमिति। अनन्तं विज्ञानमिति। नास्ति किञ्चनेति। संज्ञा गण्डः शल्यमासंज्ञिकं मोहः। एतच्छान्तमेतत्प्रणीतं यदुत नैव संज्ञानासंज्ञायतनमित्येवं मनसिकारैर्यथाक्रममाकाशविज्ञानाकिञ्चन्य-नैवसंज्ञानासंज्ञायतनाख्यानि। विभावितरूपसंज्ञत्वेन रूपाभावादरूपा एवारूप्याः कायचित्तसमतापादनाच्चतस्रः समापत्तयः। षडभिज्ञा इति। ऋद्धिर्दिव्यचक्षुर्दिव्यश्रोत्रं परचित्तज्ञानं पूर्वनिवासानुस्मृतिराश्रवक्षयज्ञानमिति षडभिज्ञाः। बोधिपक्षा धर्मा वक्ष्यन्ते। संक्षेपेणेत्यादि। समासेन चतुरशीते रागादिचरितानामेकैकचरितप्रतिपक्षो यावता ग्रन्थेन परिसमाप्यते तावान् ग्रन्थराशिर्धर्मस्कन्ध इति चतुरशीति धर्मस्कन्धसहस्राणि। बुद्धज्ञानमित्यादि। सर्वज्ञेयावबोधेनातिशयबुद्धिसद्भावाद्बुद्धाः परोपदेशमन्तरेण स्वयम्बोधात्, स्वयम्भुवस्तेषां ज्ञानमिति तथोक्तम्। तच्च सर्वचिन्ताविषयातिक्रान्तशक्तिरूपत्वादचिन्त्यज्ञानम्। पूर्वश्रुतेनेत्यादि। सर्वोऽयं देशनाधर्मो धर्मधातुनिःष्यन्दः प्रज्ञापारमितानिःष्यन्दः। प्राग्बुद्धोत्पादकाले श्रुतः। अनुकम्पामिति कृपाम्। इममिति। सहाख्यं लोकधातुम्। अबुद्धकबुद्ध-

क्लेशोपलक्षणञ्चेदम् । बोध्यङ्गविप्रयुक्तानीति । तथागतानुत्पादे तत्रत्यानां बोध्यधिगमाभव्यत्वादित्येके । प्रज्ञोपायविकलत्वेनेत्यपरः । आस्रवक्षयज्ञानस्य तदानीमसम्भवात्पञ्चाभिज्ञाग्रहणमत्र कृतम् । दृष्टान्तेनापि मातुर्माहात्म्यं दर्शयन्नाह । तद्यथापीत्यादि । ओषधी तारा इति । ओषध्यश्च व्रीह्यादयस्ताराश्च शुक्रबृहस्पतिप्रभृतय इति । तथोक्ताः । ओषध्य एव वा काश्चिन्निशि तारा इवावभासमानास्तथोच्यन्ते । तासाञ्चन्द्ररश्मिभिराप्यायनात् कायपरिपुष्टिः प्रभावातिशयश्चोत्पद्यते इति यथाक्रममाह । यथाबलं यथास्थाममिति । अकारान्तोऽप्यौणादिकः स्थामशब्दो ग्राह्यः । अवभासयन्तीति (p. 75, 2) स्वभावं दर्शयन्ति । नक्षत्राणि चेति पुष्यादयः । दार्ष्टान्तिकमर्थमाह । एवमेवेत्यादिना । अत्ययेनेति परिनिर्वाणेन । धर्मचर्येत्यादि । सूत्रादिधर्मलिखनाद्यभियोगो धर्मचर्या । स्वपरात्मसमताऽभ्यासः समचर्या । रागाद्युपक्लेशप्रहाणये प्रतिपक्षभावनाऽसमचर्या । चतुःसङ्ग्रहवस्त्वादिसेवनं कुशलचर्या । प्रज्ञायत इति प्रवर्त्यते । प्रभाव्यत इत्यभ्यस्यते । प्रयोगाद्यवस्थाभेदेन बोधिसत्त्वनिर्जातेत्यादिपदत्रयम् । उपायकौशल्यमिति । व्याख्यातम् । अथवा शून्यतोरूकरुणे तज्जे च कर्मणि नैपुण्यम् । प्रकारान्तरेणापि मातुर्माहात्म्यमाह । पुनरपरमित्यादिना । मनसि कुर्वतामिति । संक्षेपेण समुदायरूपालम्बनात् । समन्वाहरतामिति विस्तरेण प्रत्येकावयवाभिमुखीकरणात् ।

आवर्त्यते स एवार्थः पुनरर्थान्तराश्रितः ।

इति वचनान्न ते विषमापरिहारेण कालं करिष्यन्तीत्यादिवचनं न पुनरुक्तमाशङ्कनीयम्। तथाहि पूर्वं दर्शनमार्गाधिकारेणोक्तमधुना तु भावनामार्गाधिकारेणेति विशेषः। राजमहामन्त्रितो वेति सम्यग्नीतिमार्गोपदेष्टा महामन्त्री। राजमहामात्र इति। हस्तिशिक्षकनायको महामात्रः। उपसंक्रामेयुरिति (p. 76, 3)। समीपीभवेयुः। यथापि नामेति निपातो यस्मादर्थे वर्तते। को हि नाम धातूपसर्गनिपातानां नियतमर्थं निर्देष्टुं क्षम इति वचनात्। एतदुक्तम्। "यस्मात् प्रज्ञापारमितापरिगृहीतस्तस्मात्तया परिगृहीतत्वान्न तेऽवतारं प्रतिलप्स्यन्त" इति। आलपितुकामतेति। आयातमात्रतावचनेनामन्त्रयितुकामता। अभिभाषितुकामतेति। उत्तरोत्तरकथाप्रबन्धेन वक्तुकामता। प्रतिसंमोदितव्यञ्च ते मंस्यन्त इति। राजादयः चीवरपिण्डपाताद्युपस्तम्भेन तं जिनजनन्यभियुक्तं मुदितं कर्तव्यं मंस्यन्ते। नन्वक्षयिताहंमानवासनानामालपितुकामतादेः किं निमित्तमिति। तत्कस्य हेतोरित्याशङ्क्याह। इयं हीत्यादि। प्रज्ञापारमितेति। तद्भावको बोधिसत्त्वः प्रज्ञापारमिताशब्देनोक्तस्तस्यैवानुशंसानिर्देशाधिकारात्। मैत्रोपसंहारेणेति। मित्रस्येदं कार्यं मैत्रं तस्य ढौकनमुपसंहारः। स च मायादिनापि स्यादित्याह। मैत्रचित्ततयेति। हितचित्ततयेति यावत्। करुणोपसंहारेणेति। करुणाकार्यमत्रोपचारात्करुणा तत्प्रत्यर्पणं करुणोपसंहारः। दुःखापनयनचित्ततया। एतदुक्तमार्यरत्नचूडे। "करुणा-

दिपरिवारा प्रज्ञापारमिता भावनीये”ति वचनात्तद्भावको मैत्र्यादिसामर्थ्यादालपितुकामतादि राजादीनामिति। तथा चोक्तम्। “अन्यच मैत्र्याद्यभियुक्तस्य हि बोधिसत्त्वस्य सर्वे देवमनुष्याः सुप्रसन्ना भवन्ती”त्यादि। तस्मात्तर्हीति। तर्हिशब्दोऽवधारणे यस्माद्बह्वनुशंसा प्रज्ञापारमिता तस्मादेव कारणादित्यर्थः। व्याडेत्यादि। व्याडाः क्रूरग्रहा यक्षादयः। सरीसृपाः सर्पास्तत्प्रधानं कान्तारं दुर्गस्थानं तन्मध्यं गताः प्राप्ताः। स्थापयित्वा पूर्वकर्मविपाकेनेति। असम्भवत्प्रतिपक्षवेदनीयकर्मविपाकेनावतारं स्थापयित्वा त्यक्त्वेति पूर्वेण सम्बन्धः। कालान्तरानुशंसादेशनायां सन्देहवतामिदानीं सम्प्रत्ययोत्पादनार्थमाह। अथ खल्वन्यतीर्थ्यानामित्यादि। तीर्थिकप्रव्रज्यया प्रव्रजिताः परिव्राजकाः। उपारम्भाभिप्रायाणामिति। विहेठाभिप्रायाणाम्। तस्यां वेलायामिति। तस्मिन् काल इत्यर्थः। तेषां चित्तानि व्यवलोक्येति। भगवदनुज्ञायैव तेषां विहेठनाचित्तानि ज्ञात्वा निवर्तनार्थं प्रज्ञापारमितां शक्रः प्रवर्तितवानिति ज्ञेयम्। तथा चानन्तरमेवं वक्ष्यति। मया च शक्रस्य देवानामिन्द्रस्याभ्यनुज्ञातमिति (p. 77, 21)। यावन्माच इति प्रदेशः। उद्गृहीत इति सम्बन्धः। तेनैव द्वारेणेत्यादि (p. 77, 9)। येनैव द्वारेण काष्ठादिसंस्कृतेन मार्गेण च विशिष्टभूप्रदेशेनागतास्तेनैव गता इत्यर्थः। अविदितभगवदधिष्ठानत्वेनाह। किमत्र कारणमित्यादि। नास्ति बुद्धानां भगवतामज्ञातमित्याह। अथ

खलु भगवानायुष्मत इत्यादि । निवर्तनार्थमिति । प्रतिनिवृत्यर्थम् । नित्यसमाधानवैकल्यात् कथमीदृशं स्मरणं शक्रस्येत्याशङ्कायामाह। मया चेत्यादि। एषां प्रतिनिवृत्त्यर्थं प्रज्ञापारमितां प्रवर्तयेत्यनुज्ञातमभ्यनुज्ञानं शक्रस्य कृतम् । ननु महाकरुणोऽपि भगवान् कथं प्रतिहतचित्तान्नानुगृह्णातीति । तत्कस्य हेतोरित्याशङ्क्याह । नाहमित्यादि । शुक्लं धर्ममिति । तेषां मध्ये ऽन्यतमस्यैकस्यापि सद्धर्मश्रवणसंवर्तनीयं शुभकर्म न समनुपश्याम्यतो नानुग्रहं करोमि । न तु प्रतिघवशादिति मतिः । प्रतिहतचित्ता इति विद्विष्टचित्ताः । पुनरपि प्रत्ययोत्पादनार्थमाह । अथ खलु मारस्येत्यादि (p. 78, 3)। तत्र मारो देवपुत्रमारः। चतस्रः पर्षद् इति। भिक्षुभिक्षुण्युपासकोपासिकाः। नियतमत्रेति। अवश्यमस्यां पर्षदि । विचक्षुःकरणायेति । विघ्नकरणाय । चतुरङ्गबलकायमिति । अश्वः सह चतुर्भिः पदरक्षकैरयमेकाङ्गो बलकायः। हस्ती सहाष्टाभिरयं पूर्वकेण सह द्व्यङ्गः। रथः षोडशभिः सह पूर्वकाभ्याञ्चायं त्र्यङ्गः। षोडशपदातयः पूर्वकैः सहायं चतुरङ्गो बलकायः। सर्वन्यूनः। तस्य पुनर्मारस्यैवंक्रमेण महान् बलकायोऽवसातव्यः। व्यूह इति समूहः। दीर्घरात्रमिति दीर्घकालम्। लब्धसम्प्रत्ययाः पूजादिकं कृतवन्त इत्याह। अथ खलु त्रयस्त्रिंशेत्यादि (p. 79, 3)। विहायसेत्याकाशेन चिरस्येति चिरेणेत्यर्थः। उपावृत्तेति उपागता। अवरकेणेति स्वल्पेन तन्मात्रेणेत्यर्थः। पूर्वजिनकृताधिकारा इति। पूर्वबुद्धेषु कृतोऽधिकारः पार-

मिताव्यापारः श्रवणादिलक्षणो यैस्तथोक्ताः। पूर्वबुद्धैर्वा कृतो दत्तोऽधिकारो नियोगः श्रवणादिस्वभावो येषां ते तथा। कः पुनर्वाद इति। कः पुनः सन्देहः। श्रोत्रावभासगमनप्रतिविशिष्टत्वादुद्ग्रहणादेरिति मतिः। तथत्वाय शिक्षिष्यन्त इत्यादि। तथाभावस्तथत्वमनन्यथात्वेनात एव निर्देशाद्ध्रस्वत्वम्। तन्निमित्तं शिक्षिष्यन्त इत्यादिपदत्रयं प्रयोगाद्यवस्थासु वाच्यम्। तथागतपर्युपासिता इति। तथागताः परिवारप्रदानेन तदुक्तश्रवणेन च पूजादिभिश्च पर्युपासिता यैस्ते तथोक्ताः। निष्ठान्तं पूर्वं निपततीति व्यभिचारलक्षणत्वात्। पर्युपासितशब्दस्य न पूर्वनिपातः। ननु तथागतपर्युपासनादिना मातुः श्रवणादेरगृहीतसम्बद्धत्वात्कथं तेन तस्यानुमानमिति। तत्कस्य हेतोरित्याशङ्क्याह। अतो हीत्यादि (p. 80, 1)। प्रज्ञापारमितातः सर्वज्ञता बुद्धत्वं प्रभाव्यते समुत्पाद्यते। अत एव ततो गवेषितव्या कारणमन्तरेण कार्यासम्भवात्। तदेव दृष्टान्तेन कथयन्नाह। तद्यथापि नामेत्यादि। एतदुक्तम्। "कारणं विना कार्यायोगेन प्रज्ञापारमितातस्तत्प्रभवत्वेन यस्मात्तथागतत्वं गवेषितव्यं, तस्मान्मातुः श्रवणादिकं नियमेन वासनापरिपुष्टिबीजधानतया तथागतपदप्रापकं भवति। तच्चेदमीदृशं श्रवणादिकं क्वचित्कादाचित्कतया विशिष्टकारणाय च जन्मकं स्वकारणं विशिष्टमेव तथागतपर्युपासनादिकमनुमापयति। कार्यकारणयोर्यस्मादयं धर्मो व्यवस्थितः। तदतद्रूपहेतुत्वात्तदतद्रूपहेतुज" इति। अधिपतित्वेन साधूक्तमिति शक्रमनुवदन्नाह। एवमेतत्

कौशिकेत्यादि। तृतीयं मृद्वधिमात्रं कथयन्नाह। न भगवान् दानपारमिताया इत्यादि। वर्णमित्यनुशंसम्। समासव्यासभेदाद्भाषते नेति सम्बन्धः। न परिकीर्तयतीति। नाममात्रोच्चारणादिति ज्ञेयम्। नामधेयञ्च परिकीर्तयतीति। बहुधा नामोच्चारणात्। "बोधिचित्ताश्रयत्वादाश्रयपरमतया। सकलवस्तुसमुदाचाराद्वस्तुपरमतया। सर्वसत्त्वहितसुखाधिकारत्वादधिकारपरमतया। निर्विकल्पज्ञानपरिग्रहादुपायकौशल्यपरमतया। अनुत्तरसम्यक्संबोधिपरिणतत्वात् परिणामपरमतया। क्लेशज्ञेयावरणनिवारणसमुदागमाद्विशुद्धिपरमतया च प्रत्येकं दानादिपारमितानां लक्षणमि"त्यार्यासङ्गः। अभ्युपगमार्थमाह। एवमेतदानन्देत्यादि। षडेव पारमिता बुद्धत्वे कारणं तत् कथमेकस्याः प्राधान्यनिर्देश इति। तत्कस्य हेतोरित्याशङ्क्याह। प्रज्ञापारमिता हीत्यादि। यस्मात् त्रिमण्डलविशुद्ध्या दानादीनां सर्वज्ञतायां परिणामेनादौ प्रवृत्तत्वात् पूर्वङ्गमाः तस्मात्तद्वर्णं भाषे नामधेयञ्च परिकीर्तयामीति। पूर्वेण सम्बन्धः। तद्वचनेन यथोक्तमर्थं प्रतिपादयितुमाह। तत्किं मन्यस इत्यादि। अपरिणामितं दानं सर्वज्ञतायामिति। अनुपलम्भयोगेन सर्वसत्त्वार्थं बुद्धत्वायानियातितं प्रज्ञापारमितयेति शेषः। तथाभूतप्रदानस्य फलोपभोगेन क्षयान्न प्रकर्षगमनमिति प्रश्नादेव गृहीतार्थः। शास्तृभावानुकारिधीः प्राह। नो हीदमिति। शीलादिष्वतिदिशन्नाह। तत् किं मन्यस इत्यादि। व्यतिरेकमुखेनैवं प्रज्ञापरिग्रहबलाद्दानादीनां पारमितारूपतां निर्दिश्य

प्रज्ञायाः पारमितास्वभावं प्रतिपादयितुमाह। तत्किं मन्यसे त्वमानन्द अचिन्त्या सेत्यादि (p. 81, 4)। वस्तुनोऽनुपलम्भेनाचिन्त्यफलत्वादाह। एवमेतद्भगवन्नित्यादि। औपलम्भिकपृथग्जनैश्चिन्तयितुमशक्यत्वादचिन्त्या श्रावकाद्यविषयत्वात् परमाचिन्त्या मातुः पारमितार्थमुपसंहरन्नाह। तस्मात्तर्ह्यानन्द परमेत्यादि। पूर्वङ्गमार्थं निगमयन्नाह। तस्मात्तर्ह्यानन्द सर्वज्ञतापरिणामितकुशलमूलत्वादित्यादि। दानादीनां बुद्धत्वे नयनान्नायिका। सर्वोपद्रवनिराकरणात् परिणायिका। अनेन योगेनेत्यादि। यथोक्तन्यायेन दानादीनामन्तर्गमात् प्रज्ञापारमितायां परिकीर्तितायां षट्पारमिताकीर्तनान्नैकस्या एव जिनजनन्या निर्देश इत्यर्थः। यत्तु प्रागुक्तं "प्रज्ञापारमिताया एवाहमित्यादि" तत् प्राधान्यादित्यदोषः। एतदेव दृष्टान्तेन स्पष्टयन्नाह। तद्यथापि नामानन्द महापृथिव्यामित्यादि। विरोहन्तीति वृद्धिं गच्छन्तीति। दार्ष्टान्तिकमर्थमाह। एवमेवानन्देत्यादिना। चतुर्थं मध्यमृदुमधिकृत्याह। न तावदिमे भगवन्नित्यादि (p. 82, 3)। प्रज्ञापारमितायाः सर्वे गुणा इति समस्ताया मातुरमी सर्वे गुणा न भवन्ति। तस्या गुणात्यन्तप्राचुर्यादिति मतिः। कस्यास्तर्ह्यमी गुणा इत्याह। अथ हि मयेत्यादि। भगवतोऽन्तिकादस्या यः प्रदेशो मयोद्गृहीतः स चानन्तरमेवान्यतीर्थादिनिराकृतौ प्रवर्तितस्तस्यामी गुणा इत्यर्थः। सम्यक् कथनात् साधुकारमाह। साधु साधु कौशिकेति। किन्तु तावन्मात्र-

प्रदेशात्मिकामपि प्रज्ञापारमितां यः केवलमुद्ग्रहीष्यत्येव यावत् केवलं स्वाध्यास्यत्येव न तस्यैव केवलममी गुणा भविष्यन्त्यपि तु योऽपि लिखित्वा पूजापूर्वकं पुस्तकमात्रं धारयेत्तस्याप्यनन्तरगुणान् वदामीत्याह। न खलु पुनः कौशिक केवलमित्यादि। अनुशंसश्रवणेन जातबहुमानत्वादाह। अहमपि भगवन् तस्येत्यादि (p. 83, 1)। कः पुनर्वाद इति। लिखित्वा विशिष्टोद्ग्रहणादिकारिणः कः सन्देहो यदहं रक्षादिकं करिष्यामीत्यर्थः। तथैव साधु साधु कौशिकेति साधुकारं दत्त्वा पञ्चमं मध्यमध्यं वक्तुमाह। तस्य खलु पुनः कौशिकेत्यादि। प्रतिभानमुपसंहर्तव्यमिति। युक्तमुक्ताभिधानमुत्पादयितव्यम्। छन्द इति वक्तुकामता। प्रकारान्तरेणाप्यनुशंसार्थमाह। पुनरपरं कौशिकेत्यादि (p. 84, 3)। नावलीनचित्ततेति न स्तम्भितचित्तता। मा खल्वित्यादि। मा कश्चिन् मां विहठेनाभिप्रायः पर्यनुयुञ्जीत चोद्यं कुर्वीतेत्येवमवलीनचित्तता न भविष्यति। ननु सम्भवत्प्रज्ञादिप्रकर्षत्वे पुंसां चेतोगुणापरिज्ञाने कथमेवं न भवतीति। तत्कस्य हेतोरित्याशङ्क्याह। तथाहि तस्येत्यादि। एतदुक्तम्। "वस्तूपलम्भजनितं पर्षच्छारद्यादिभयम्। तस्य प्रज्ञापारमितापरिग्रहबलादेव कर्मकर्तृक्रियोपलम्भाभावान्न भवती"ति। षष्ठं मध्याधिमात्रं वक्तुमाह। प्रियो भविष्यतीत्यादि। तत्र हितसुखकारि मित्रम्। अमात्यो मन्त्रिमुख्यः। मातापितृपरम्परया सम्बद्धो जनो ज्ञातिः। एकमातापितृजनितो

आचादिः सालोहितः। शाक्यपुत्रीयाः श्रमणाः। सप्तम-मधिमात्रमृदुं निर्दिशन्नाह। प्रतिबलाश्चेत्यादि। बाहु-श्रुत्यादियोगात् प्रतिबलः। प्रज्ञासम्पदा समन्वागमा-च्छक्तः। सह धर्मेण निग्रहायेति। तेषां वचनेन तिरस्कर-णायेत्येकः। तदुक्तसाधनधर्मदूषणात् साध्यधर्मेण सह तेषां निराकरणायेत्यपरः। प्रत्यनुयोगश्चोद्यम्। तस्य व्याकरणं सम्यक्परिहरणम्। तत्र समर्थो योग्य इत्यर्थः। अष्टम-मधिमात्रमध्यं प्रतिपादयन्नाह। यत्र खलु पुनरित्यादि (p. 85, 3)। तत्र दूराद्दर्शनेन प्रेक्षिष्यन्ते। अञ्जलिकरणा-द्वन्दिष्यन्ते। समीपमागत्य पञ्चमण्डलकेन प्रणामान्नमस्क-रिष्यन्ति। प्रतिनियतोपादानादियन्त एवेति कदाचिद्बुद्धिः स्यादित्याह। मा तेऽत्र कौशिकेत्यादि। पेयालमिति। अनुत्तरायां सम्यक्संबोधौ ये संप्रस्थितास्तेऽपि तत्रागन्तव्यं मंस्यन्त इत्यादिपदमतिदेशनीयमित्यर्थः। तत्र ब्रह्म-कायिकादयस्त्रयः प्रथमध्यानसङ्गृहीताः। परीत्ताभा-दयस्त्रयोऽपि द्वितीयध्यानजाः। परीत्तशुभादयस्त्रिविधाः पुनस्तृतीयध्यानस्थाः। अनभ्रकादयोऽष्टौ चतुर्थध्यान-भूमिकाः। असंज्ञिसत्त्वास्तु बृहत्फलैकदेशिनः। अधिक-पुण्यप्रसवार्थमुपायकौशलञ्च शिक्षयन्नाह। एवञ्च कौशिक तेन कुलपुत्रेणेत्यादि। इत इत्यस्मादित्यर्थः। तथैव कस्यचिन्मन्दमतेराशङ्कामाशङ्क्याह। मा तेऽत्र कौशिकैवं भूदिति (p. 87, 9)। तदेव हारकपर्यवसाने कथयति। न तत्र कौशिकैवं द्रष्टव्यमिति। तत्राप्रहीणकामरागानुशयाः कामधातुजाः कामावचराः प्रहीणकामरागानुशया रूप-

रागाभिनिविष्टा रूपधातुजा रूपावचराः । नवममधिमात्राधिमात्रार्थमाह । तस्य खलु पुनः कुलपुत्रस्य वेत्यादि (p. 88, 18) । तत्रेतरजनावासो गृहम् । भिक्षूणां वासस्थानं लयनम् । इष्टकादिघटितविशिष्टसंस्थानमीश्वरगृहं प्रासादः । मनुष्याद्युपद्रवाभावात्सुरक्षितः । कस्माद्गृहादिसुरक्षितमित्याशङ्क्याह । यत्र हीत्यादि । नामशब्दः प्रसिद्धवचनः । महौजस्का महानुभावाः । तदुक्तम् । "यस्मादेवं प्रसिद्धा महौजस्का यत्र गृहादावागन्तव्यं मंस्यन्ते । तस्मात्तद्गृहादि तेषामनुभावेन सुरक्षितं भविष्यती"ति । दुष्कुहकसत्त्वधातोरभिसम्प्रत्ययार्थं पृच्छन्नाह । कथं भगवन्नित्यादि (p. 89, 3) । यथाभव्यतया निमित्तमाह । स चेत्कौशिकेत्यादिना । तत्रौदारमवभासं सञ्जानीत इति । महान्तं रश्म्यालोकं तत्र गृहादाववगच्छति पश्यतीति यावत् । निष्ठेति निश्चयः । आगत इत्युपचारप्राप्त्या । उपसंक्रान्त इति गृहादन्तःप्रवेशात् । अमानुषं गन्धं घ्रास्यतीति । मनुष्यलोकातिक्रान्तं विशिष्टं गन्धं घ्राणविज्ञानेनानुभविष्यति । अनाघ्रातपूर्वमिति । अननुभूतपूर्वम् । सर्वपापाकरणादध्यात्मशुद्ध्या चौक्षसमुदाचारः । विविक्तवस्त्राद्युपभोगेन बाह्यपरिशुद्ध्या शुचिसमुदाचारः । आत्तमनस्का इत्यादि (p. 90, 6) । मृदुमध्याधिमात्रसौमनस्ययोगाद्वेदितव्यम् । प्रीतिरेव सौमनस्यं तज्जातं येषामिति ते तथोक्ताः । अध्युषिता इति । पूर्वस्थिताः । अपक्रमितव्यमिति गन्तव्यम् । कथं पूर्वस्थितानां यत्नमन्तरेणापसरणमिति । तत्कस्य हेतोरित्याशङ्क्याह । तेषामेव हीत्यादि ।

श्रियश्चेत्यादिपदत्रयम् । मृदुमध्याधिमात्रमहानुभावत्वख्यापनार्थम् । एतदुक्तम् । "महौजस्कानामेव सामर्थ्येनापसरणान्न यत्नापेक्षे"ति । अभीक्ष्णमिति पुनःपुनः । प्रसादबहुल इति । अभिसम्प्रत्ययदर्शनादभिवर्धमानश्रद्धः । पूर्वं सामान्येन सर्वत्र शुचिचौक्षसमुदाचारतां निर्दिश्य विशेषेण तात्पर्यार्थमाह । तेन खलु पुनरित्यादि । परिसामन्तक इति परिसामन्तादित्यर्थः । न कायक्लमथ इति । देशान्तरगमनादिना न कायखेदः । न चित्तक्लमथ इति । पिण्डपातवैकल्यान्न चित्तखेदः । तापाद्युपद्रववैकल्यात् स सुखमेव शय्यां कल्पयिष्यति । चङ्क्रमणादिकाले कण्टकादिभिरनुपद्रवात्सुखञ्च प्रतिक्रमिष्यति । सङ्गीयमानानिति (p. 91, 6) परस्परं ग्रन्थार्थनिर्णयात् । एवं सर्वज्ञतेति । सर्वधर्मानुपलम्भेन बुद्धत्वम् । एवं बुद्धक्षेत्रमिति । अपगतक्षुत्पिपासापाषाणकण्टकादित्वेन यथाक्रमं सत्त्वभाजनभेदाद्द्विविधम् । ओजःप्रक्षिप्तं च कायसुखमिति । काये यद्बलं वाचि यत्तेजो मतौ या ऽतितीक्ष्णता तदेतत्त्रयमोजःप्रक्षिप्तं यस्मिन्निति । तत्तथोच्यते । या तु कायश्रुतिः सा मुख्ये काये कायाश्रिते च वचसि मतौ च गुणकल्पनया वेदितव्या । लघु लघ्वेव चेति । अपगतगुरुकञ्च कायसुखमिति पूर्वेण सम्बन्धः । आहारगृद्धेति । आहाराकाङ्क्षया युक्तेति शेषः । योगाचारस्येति (p. 92, 1) समाधिविशेषानुष्ठानपरस्य मनसिकारपरिस्पन्दितेनेति । मैत्र्यादिभावनोपबृंहितेन । ननु योगाचारस्य ध्यानाहारत्वान्न कवडीकाहारे बलवती गृद्धिरस्य

तु लिखित्वा मातरं पूजापूर्वकं स्थापयतः। कथमिति। तत्कस्य हेतोरित्याशङ्क्याह। एवं ह्येतत् कौशिकेत्यादि। यथापि नामेति निपातो यस्मादर्थे वर्तते। तदुक्तम्। "प्रज्ञापारमिताध्यानपरिनिष्पत्तये लिखनादिष्वनुयुक्तत्वेन तस्य कायेऽमनुष्या ओज उपसंहर्तव्यं मंस्यन्त" इति। यस्माद्धर्मतैषा तस्मादोजःप्रक्षिप्तत्वेन कृताहारकृत्यवान्मृदुका चास्याहारगृद्धिर्भविष्यतीति। स्वपरसमतया स्वपरार्थाधिमुक्तेर्नवप्रकारान्निर्दिश्य परार्थाधिमुक्तेः प्रथमं मृदुमृदुप्रकारार्थमाह। इमां प्रज्ञापारमितां लिखित्वा पुस्तकगतां कृत्वा पूजापूर्वङ्गमं स्थापयेत्पूजयेन्नोद्गृह्णीयादित्यादि। अयमेव ततः स कौशिकेति। वक्ष्यमाणो यः पुद्गलः सोऽयमेव ततोऽनन्तरोक्तादनुग्रहादिकारिणः सकाशादित्यर्थः। उपसंहरन् पुनराह। अयमेव ततः स कौशिकेत्यादि। बोधाय चित्तमुत्पादयितव्यमिति (p. 93, 7)। अस्य प्रज्ञापारमिताधिकारे कः प्रसङ्ग इति न वक्तव्यम्। यतः शून्यताकरुणागर्भमेव बोधिचित्तं मुख्यतः प्रज्ञापारमिता। सत्कृत्याध्याशयेन श्रोतव्येति। अपनीतावगुण्ठनिकादिना नीचासनस्थेन विक्षेपदोषं परिहृत्य मोक्षकामाशयेन सद्धर्मः श्रोतव्यः। अन्तशः पुस्तकगतामपि कृत्वा स्थापयितव्येति। अस्यार्थस्य प्रथमत एव स्वार्थाधिमुक्तिहारकप्रारम्भे कथितत्वात् किमर्थमुपादानमिति न मन्तव्यम्। यतस्तत्र स्वार्थपरस्य स्थापनमुक्तमत्र तु परार्थपरस्येति विशेषः। तथा चानन्तरं वक्ष्यति। सद्धर्मचिरस्थितिहेतोरित्यादि।

अभिसमयालङ्कारालोकायां प्रज्ञापारमिताव्याख्यायामप्रमेयगुणधारणपारमितास्तूपसत्कारपरिवर्तो नाम तृतीयः॥

द्वितीयं मृदुमध्यमधिकृत्याह। स चेत् कौशिकायं ते जम्बूद्वीप इत्यादि (p. 94, 2)। सर्वभूभागव्यापनात्परिपूर्णः शिखापर्यन्तकरणाच्चूडिकाबद्धः। तथागतशरीराणामिति। कर्तरि षष्ठी तैरित्यर्थः। प्रवार्यमाण इति। यमिच्छसि तं भागं गृहाणेत्यभिधीयमानः। कस्माद्विशिष्टं रूपकायं तथागतं परित्यज्य प्रज्ञापारमितापरिग्रह इति। तत्कस्य हेतोरित्याशङ्क्याह। यथापि नामेत्यादि। यस्मात्तथागतनेत्र्यां प्रज्ञापारमितायां चित्रीकारो भक्तिविशेषो विद्यते। नेमामेव परिगृह्णीयामिति पूर्वेण सम्बन्धः। चित्रीकार एवास्यां कुत इत्याह। एतद्धीत्यादि। यस्मादेतद्भूतार्थिकं पारमार्थिकं शरीरं धर्मकायस्तस्य मुख्यतो द्योतनात्प्रज्ञापारमिता तथोक्ता। तस्मादत्रैव चित्रीकार इति मतिः। भूतार्थिकत्वमेव धर्मकायस्य कुतो यस्य द्योतनात्प्रज्ञापारमितायां चित्रीकार इति। तत्कस्य हेतोरित्याशङ्क्याह। उक्तं ह्येतद्भगवतेत्यादि। यस्मादुक्तं प्रदेशान्तरे भगवता धर्मकाया मायोपमाद्वयज्ञानस्वभावाः प्रज्ञापारमितात्मका बुद्धा भगवन्त इत्यनेन दृष्टान्तो निर्दिष्टः। अथ मतं स्वसंवेदनतः पूर्वक्षणभाविज्ञानमात्मानं परिच्छिनत्त्येवमुत्तरक्षणभाव्यपि। तदिदमस्मादनन्तरमित्यवेत्य कारणमिदं कार्यमित्यवगच्छति। अन्यथानन्तर्यनियमो न घटते घटमानो वाऽतिप्रसङ्गदोषं विदध्यादतः कार्यकारणभावरूपेण निश्चितत्वात्कथं मायोपमाद्वयज्ञानात्मका बुद्धा भगवन्त इति। तदयुक्तमिदमस्मादनन्तरमिति यतो न स्वसंवेदनात् सिध्यति। तस्या विकल्पितविषयत्वान्नापि

ज्ञानान्तरेण सिद्धिकल्पना युक्ता। निराकारेण साकारेण वा परिच्छेदायोगात्। परिच्छेदे वाऽर्थान्तरं ज्ञानस्य विषयः प्राप्नोति। स च नेष्टो भवद्भिर्ग्राह्यत्वानुपपत्तेः। न च तेनैव ज्ञानद्वयेनानन्तर्यनियमः परिच्छिद्यते। द्वयोरपि तयोर्निरुद्धत्वात्। स्यादेतत्स्वसंवेदनादेव पूर्वके ज्ञाने गृह्यमाणे कार्यं प्रत्यानन्तर्यं कारणात्मकं गृहीतं तथोत्तरस्मिन्नपि ज्ञाने गृह्यमाणे कार्यात्मकं गृहीतमेवानन्तर्यं कार्यकारणात्मकस्यानन्तर्यस्य तदभिन्नस्वभावत्वादिति। नैतदेवम्। यस्माज्जन्यजनकभावसम्बन्धोल्लेखेन वस्तुद्वयग्रहणात्कार्यकारणभावो विनिश्चितो न त्वानन्तर्यमात्रग्रहणात्। इतरथाहि घटग्रहणानन्तरं घटग्रहणे सति तद्गतानन्तर्यमात्रपरिच्छेदात्कार्यकारणभावः स्यात्। न च स्वसंवेदनस्याविकल्पकत्वेन पूर्वापरीभूतवस्तुसम्बन्धोल्लेखेन ग्रहणमस्ति। तस्मादिदमस्मादनन्तरम्भवतीति परिच्छेदाभावे कार्यकारणभावो निश्चितो न युक्तोऽतिप्रसङ्गात्। अस्मादनन्तरमिदं भवतीति विकल्पोऽपि नोपपद्यते। अनुभवनिश्चयाभावात्क्षणिकत्वादिविकल्पवदिति। मा खलु पुनरिमं लक्षणव्यञ्जनोज्ज्वलं शोभनं कायं सत्कायं हे भिक्षवः परमाणुसञ्चयस्वभावं मन्यध्वमिति साध्यधर्मः कथितः। धर्मकायपरिनिष्पत्तितो मायोपमाद्वयसाक्षात्क्रियानिष्पत्त्या निष्पन्नं मां द्रक्ष्यथेत्यनेन हेतुरुक्तः। एष च तथागतकायो भूतकोटिप्रभावितो धर्मकायपरिनिष्पत्त्या निष्पन्नो यदुत प्रज्ञापारमितातत्स्वभाव इत्यनेन पक्षधर्मोपसंहारः कृतः। एतदुक्तम्। "यो मायोपमाद्वयज्ञानभावनापरिनिष्पत्त्या निष्पन्नः स धर्मकायस्तद्यथा पूर्वबुद्धा भगवन्तः। यथोक्त-

ज्ञानभावनापरिनिष्पत्त्या निष्पन्नश्चैष तथागतकाय" इति स्वभावहेतुः। अर्थस्यात्यन्तपरोक्षत्वेन साकारज्ञानादिभिश्च ग्रहीतुमशक्यत्वाद्द्वयं ज्ञानं स्वसंवेदनप्रत्यक्षसिद्धं स्वप्नादि-प्रत्ययवदर्थाकारोपरक्तं भावनीयमिति स्थितम्। तस्या-प्युदितविधिनैकानेकस्वभावविरहात्तत्त्वतो निःस्वभावत्वेन मायोपमत्वं निश्चितम्। अतोऽस्य मनसो भावनाबलात् स्फुटप्रतिभासित्वं यत्तदेव तथागतत्वमिति नासिद्धो हेतुः। सपक्षे भावान्न विरुद्ध इत्यभ्युपगतपूर्वबुद्धधर्मकायं प्रत्येष दृष्टान्तोऽन्यस्य पुनर्धर्मकायत्वाभावे प्रमाणाबाधितयथोक्त-ज्ञानभावनापरिनिष्पत्त्या निष्पन्नत्वविरहाच्चक्रवर्त्यादिव-द्विपर्यासप्रसङ्गः। अविपर्यस्तश्चेष्यते तथागत इति विपर्यये बाधकं प्रमाणम्। परमाणूनामयोगान्नानैकान्तिकता च हेतोः। तस्माल्लक्षणव्यञ्जनोज्ज्वलो योऽयं रूपकायस्तथा-गतो भव्यसत्त्वैः समीक्ष्यते नासौ तात्त्विको धर्मकायः शास्ता किन्तु परमविमलानन्तगुणराशिधर्मकायाधिपत्यादेव तेषां स्वज्ञानं तथाभूतरूपकायाकारेण प्रतिभासते। येन ते ऽविदितस्वज्ञानतथागतप्रतिभासरूपा बाह्योऽयं भगवा-निति शास्तृबुद्ध्या विकल्पयन्तो दर्शनवन्दनादिभिरभ्युदय-निःश्रेयसभाजो भवन्ति क्रमेण। मिथ्याप्रतिभासिनोऽपि हि विकल्पस्य पारम्पर्येण हितहेतुत्वं दृष्टमेवानित्यत्वादि-विकल्पवद्वस्तुसम्बन्धान्न तु क्षिप्रम्। यस्माद्यावद्भावाभि-निवेशेन ज्ञेये विज्ञानं समुपजायते तावदतस्मिंस्तद्ग्रहाद्भ्रा-न्तमेव तद्विज्ञानं तत्त्वदर्शनाद्दूरीभवति। तस्माद्यथा माया-कारो भाववत्प्रतिभासमानेष्वपि हस्त्यादिषु स्वनिर्मितेषु भावरूपतया सत्या एत इति नाभिनिविशते। तथा

बहुशो बहुधोपायं कालेन बहुनाऽनभ्यस्तमहायानस्वरूपेणाप्यादिकर्मिकेण सता क्षिप्रं ताथागतीमवस्थामवाप्तुमिच्छता तथागताधिपत्यभाविनि स्वज्ञानप्रतिबिम्बके रूपकायतथागते जगद्गुरावभिनिवेशयोगेन प्रतिपत्तिसारा श्रद्धा विधेयेति। तदेव कथयन्नाह। न खलु पुनर्मे भगवन् इत्यादि। तृतीयं मृदधिमात्रमधिकृत्याह। अपि तु खलु भगवन्नित इत्यादि। अपितुशब्दो निपातो यस्मादर्थे वर्तते। ननु भेदे सति कथं मातुः पूजया तथागतपूजेति। तत्कस्य हेतोरित्याशङ्क्याह। प्रज्ञापारमितानिर्जातत्वात्तथागतशरीराणामिति। इदमत्रार्थतत्त्वम्। यस्मादीदृशाः सर्वलोकाभ्युद्गतमूर्तयो बुद्धा भगवन्तः प्रज्ञापारमितातो निष्पद्यन्ते। तस्मान्महानुभावतया पूज्येयमिति तथागतोत्पत्तिसम्बन्धेनास्याः पूजाया भेदेऽपि तथागताः पूजिता इति। यदाश्रयेण यत्पूज्यं भवति तत्पूजायां तदेव पूजितं भवति इत्येतदेव दृष्टान्तपूर्वकं स्पष्टयन्नाह। तद्यथापि नाम भगवन् सुधर्मायामित्यादि। सुधर्मा नाम देवसभा सुमेरुस्थितसुदर्शननगरस्य बहिरेव दक्षिणपश्चिमे स्थिता। यस्यां निषद्य देवाः कृत्याकृत्यं चिन्तयन्ति। कथं पुनरन्यस्य गौरवेणान्यत्र नमस्कारादिकमिति। तत्कस्य हेतोरित्याशङ्क्याह। इह हि किलासन इत्यादि (p. 95, 4)। किलशब्दोऽनुस्मरणे। तत्सम्बन्धादासनपूजायां शक्रोऽपि पूजित इति मतिः। महेशाख्यहेतुप्रत्ययभूतेति। महेशाख्या चासौ महानुभावसंज्ञकत्वेन हेतुप्रत्ययभूता च यथाक्रममुपादानसहकारिकारणभेदादिति तथोक्ता।

आहारिकेत्युत्पादिका। स्थितिहेतुत्वेन तथागतशरीरमेव बुद्धत्वोत्पादकमिति कस्यचिदाशङ्कायामाह। सर्वज्ञताया-श्चेत्यादि। इदमुक्तं भवति। सर्वज्ञतापरिग्रहादेव तथागतशरीराणीत्युच्यन्ते। अतो न तान्यपूर्वसर्वज्ञतोत्पत्तिं हेतुप्रत्ययभूतानि किन्तु निष्पत्तेरुत्तरकालं स्थितिहेतुत्वेनाश्रयभूतानीति। सर्वज्ञज्ञानहेतुकेति। तथागतज्ञानहेतुका प्रज्ञापारमिता पूज्येति शेषः। उपसंहारार्थमाह। तस्मात्तर्हि भगवन्ननयोरित्यादि। चतुर्थं मध्यमृदुं वक्तुमाह। तिष्ठन्तु खलु भगवन् जम्बूद्वीप इत्यादि। अपि तु खलु पुनरित्यादिकारणवचनं गतार्थमपि प्रसङ्गान्तरेणोक्तत्वान्न पुनरुक्तम्। प्रज्ञापारमिताप्रभावित्वमेवाह। तथागतशरीराणि हीत्यादिना। तस्मात्तहींत्याद्युपसंहारः। पञ्चमं मध्यमध्यार्थमाह। अपि तु खलु पुनर्भगवन्नित इत्यादि। इतो विपर्यासरहितायाः प्रज्ञापारमितायाः श्रवणादिक्रमेणोत्पादात्पूजार्हाणि शरीराणीत्यर्थः। तदुत्पत्त्यापि कस्मात् पूजां लभन्त इत्याह। यदुत प्रज्ञापारमितापरिभावितत्वादिति। सुविशुद्धात् कारणात् समुत्पन्नं फलं सुविशुद्धमेवोपजायत इति कृत्वा। यस्मात् प्रज्ञापारमितया महानुभावत्वोत्पादनेन परिभाविता-स्तथागताः सर्वथा वासितास्तस्मात्तदुत्पत्त्या पूजां लभन्त इति। एतदेव दृष्टान्तेन स्फुटीकुर्वन्नाह। तद्यथापि नाम भगवन्ननर्घमित्यादि (p. 96, 12)। तच्चानर्घं प्रणीतत्वेना-

मूल्यार्हम् । एभिरेवंरूपैरिति । वक्ष्यमाणैरेवंस्वभावैः । धम्यमान इत्यापूर्यमाणे । निगृह्णीयादिति मन्दतामापादयेत् । न विवर्धयेदिति वृद्धिं न कुर्यात् । उपशमयेदिति समूलमपनयेत् । दह्यमान इति तप्यमाने । परिगृह्य इति व्याप्ते । बाध्यमान इति पीड्यमाने । अन्धकारतमिस्रायामिति । अन्धकारगह्वरायाम् । अन्तरीक्षधारणात् । स्थापितमिति भूमिस्थापनात् । मन्दतापादनात्प्रतिहन्येत । सर्वथापनयनाद्विगच्छेत् । एभिश्चान्यैश्चेत्यादि (p. 97, 8) । एतैरनन्तरोक्तैरन्यैरेवंवक्ष्यमाणैर्युक्तमित्यर्थः । अभिवर्धमानपिटकमर्बुदं । उपघातस्तिमिरम् । शूलाद्यक्षिरोगः । घनता पटलम् । समुदाचरद्रूपबीजावस्थाविगमाद्यथाक्रमं निर्घातं प्रशमं गच्छेयुरिति योज्यम् । कस्तस्य स्वको वर्ण इत्याह । सचेत् पाण्डरेणेत्यादि (p. 97, 13) । अन्येषामिति हरितशबलादीनाम् । समस्तं वस्त्रेण परिवेष्टयित्वा तदेकदेशेन वा बद्धेति ज्ञेयम् । परिवेष्टयित्वेत्यस्य सुब्वान्तप्रयोगेण नापशब्दता । रजोबहुलता कलुषभावस्तमपि प्रसादयेदधो नयेत् । जम्बूद्वीपे महेशाख्यशुद्धोदनस्यापीदृशरत्नासंभवाद्दृष्टान्तासिद्धिरिति कस्यचिदभिप्रायनिराकरणायाह । किं पुनः कौशिकेत्यादि (p. 98, 1) । प्रतिविशिष्टपुण्यत्वादाह । देवेष्वित्यादि । संख्याप्रभावाभ्यां यथाक्रममल्पानि परित्तानीति द्वयमुक्तम् । तैर्मणिरत्नगुणैरित्यच परिभावितत्वादिति शेषः । परिनिर्वृतस्यापीति । अपिशब्दात्तिष्ठतः । प्रकारान्तरेणापि

प्रज्ञापारमिताहेतुत्वेन पूजां दर्शयन्नाह । यथा च भगवन्नित्यादि । बुद्धानां धर्मदेशनेति । यस्माद्विकल्पस्य स्वाकारं बाह्यरूपेणाध्यारोप्य प्रवर्तनादतस्मिंस्तद्ग्रहेण स्वयमविद्यास्वभावस्य सद्भावेऽशेषावरणप्रहाणं न सम्भवति, तस्मान्नित्यसमाहितानामेव बुद्धानां भगवतां प्रज्ञापारमिताज्ञानप्रभावतो यथाधिमुक्तिभव्यानामसंकीर्णदेशनानिर्भासाः स्वज्ञानप्रत्ययाः समुपजायन्त इत्येवंविधप्रत्ययानुसारेण तेषां देशना भगवतां व्यवस्थापिता । अतः शुद्धलौकिकज्ञानसम्मुखीभावो मुनिनैवं प्रकाशित इत्यादिविनेयजनहिताध्यवसायेन क्वचित्सङ्गीतिकर्तृभिरुक्तः । तस्माद्विनेयशब्दज्ञाननिर्भासरूपत्वेन श्रोतृजनसम्बन्धिन्यपि देशना । यथा प्रज्ञापारमिताज्ञानाधिपत्यनिर्जातत्वाद्बुद्धानां धर्मदेशनेतिकृत्वा पूज्या, तथेदानीन्तनानामपि धर्मभाणकानां देशना भगवतः परस्परावलायातत्वेन प्रज्ञापारमिताज्ञानाधिपत्यनिर्जातत्वात् पूज्येत्यर्थः । षष्ठं मध्याधिमात्रं निर्दिशन्नाह । यथा भगवान् राजपुरुष इत्यादि । अकुतोभय (p. 99, 1) इति । न कुतश्चिद्भयमस्यास्तीति तथोक्तः । धर्मकायानुभावादिति । धर्मधातुनिष्यन्दप्रज्ञापारमितानुभावादित्यर्थः । सप्तममधिमात्रमृदुं वक्तुमाह । तिष्ठतु त्रिसाहस्रमहासाहस्रो लोकधातुरित्यादि । अष्टममधिमात्रमध्यं निर्दिशन्नाह । पुनरपरं भगवन् येऽप्रमेयेष्वित्यादि । स्वपरोभयार्थसम्पद्भेदाद्यथाक्रमं तिष्ठन्तीत्यादिपदत्रयं वाच्यम् । अथवा धर्मकायेनासंसारमवस्थानात्तिष्ठन्ति । सम्भोग-

कायेन बोधिसत्त्वार्थसन्धारणाद्ध्रियन्ते । निर्माणकायेन कतिपयदिनावस्थानाद्यापयन्ति । प्रज्ञापारमितायाश्चरितव्यमित्यादि । प्रयोगाद्यवस्थाभेदादुक्तम् । पूर्ववत् स्वहस्तमेवमेतत् कौशिकैवमेतदिति दत्त्वा मातुर्माहात्म्यमावेदयन्नाह । येऽपि ते कौशिकेत्यादि (p. 100, 2) । नवममधिमात्राधिमात्रं कथयन्नाह । महापारमितेयं भगवन्नित्यादि । महत्तामेव समर्थयन्नाह । सर्वसत्त्वानां हीत्यादि । एतदुक्तम् । "यस्मान्मातुः प्रभावेन भगवान् प्रयोगावस्थायां सर्वसत्त्वानां चित्तानुष्ठानानि प्रजानाति पृष्ठावस्थायां संपश्यति, तस्मान्महत्त्वमस्या" इति । एतदेव समर्थयन्नाह । तथाहि कौशिकेत्यादि । दीर्घरात्रमिति दीर्घकालम् । प्रज्ञापारमितायां चरतीति वचनादन्यव्यवच्छेद इत्यभिप्रायवानाह । किम्भगवन्नित्यादि । नान्यास्विति दानाद्यात्मिकासु । सर्वत्रैवेत्याह । सर्वास्वित्यादि ।

दानं निष्प्रतिकांक्षस्य निस्पृहस्य पुनर्भवे ।
शीलं क्षान्तिश्च सर्वत्र वीर्यं सर्वशुभोदये ॥
विनाऽरूप्यं तथा ध्यानं प्रज्ञा चोपायसंहिता ।
सम्यक्प्रयोगो धीराणां षट्सु पारमितासु हि ॥

इति वचनादनेन सम्यक्प्रयोगेण सर्वास्वेव बोधिसत्त्वश्चरतीत्यर्थः । प्रज्ञापारमितावचनं किमर्थमित्याह । अपि तु खल्वित्यादि । यथा च पूर्वङ्गमा भवति तथा प्रागावेदितम् । एतदेव कथयन्नाह । बोधिसत्त्वस्य महासत्त्वस्य

दानं ददत इत्यादि (p. 101, 2)। विपश्यत इति भावयतः। उपचयार्थमाह। न च कौशिकासामित्यादि। प्रज्ञापारमितापरिणामितानामिति। त्रिमण्डलविशुद्ध्या परिभावितानाम्। सर्वज्ञतापरिणामितानामिति। तथागतत्वे निर्यातितानाम्। अपारमिताव्यवच्छेदात्पारमितारूपेण विशेषो न चेति पूर्वेण सम्बन्धः। पारमिताशब्दवाच्यतया न च नानाकरणम्। नीलपीतादिभेदान्नानावर्णाः समविषमरूपेण नानासंस्थानाः। नानारोहपरिणाहसम्पन्ना इति। आरोहो दैर्घ्यम्। परिणाहः पारिमाण्डल्यम्। अतद्रूपपरावृत्त्या न च छायाविशेषस्तथैवैकशब्दवाच्यत्वान्न च नानाकरणम्। तदेवाह। अपि तु छायेत्यादि। संख्यामिति व्यपदेशं। एवं त्रिविधाधिमुक्तिमनस्काराणां प्रत्येकं मृदुमृद्वादिनवप्रकारान् प्रतिपाद्योपसंहरन्नाह। महागुणेत्यादि। बह्वनुशंसस्वार्थाधिमुक्तेर्निष्पादनान्महागुणसमन्वागता। संख्याप्रमाणविषयस्वपरार्थाधिमुक्तियोगादप्रमेयगुणसमन्वागता। अपर्यन्तसत्त्वधातूद्देशपरार्थाधिमुक्तिसद्भावादपर्यन्तगुणसमन्वागता। एतावत्येव स्वपरोभयार्थभेदेन प्रत्येकं नवप्रकारत्वेनाधिमुक्तिः सप्तविंशतिप्रकारैवेति न विप्रतिपत्तिः कार्या। तथा चोक्तम्।

अधिमुक्तिस्त्रिधा ज्ञेया स्वार्था च स्वपरार्थिका।
परार्थिकैवेत्येषा च प्रत्येकं त्रिविधेष्यते ॥ १८ ॥

मृद्वी मध्याधिमात्रा च मृदुमृद्वादिभेदतः ।
सा पुनस्त्रिविधेत्येवं सप्तविंशतिधा मता ॥ १९ ॥ इति

यथोक्तेन च ग्रन्थप्रमाणेन क्रमादुत्तरोत्तराधिकानुशंसा-प्रतिपादनपरेणान्यापदेशेन सर्व एवायमधिमुक्तिमनस्कारः परिदीपितः। सर्व एव स्वार्थाद्यधिमुक्तिप्रकारे मृदुमृद्वादौ प्रतिपक्षात्मके ऽधिमात्रादिर्विपक्षोऽर्थान्निर्दिष्टः। स्वार्थाधिमुक्तावुद्दिष्टः परार्थो भवति। द्वितीयायां सान्तरः प्रयोगस्तृतीयायान्निरन्तरोऽवगन्तव्यः। अन्यथाऽनुशंस-कथनमात्रेऽभ्युपगम्यमाने यावाननुशंसः सम्भवति तावतः सकृदेवाभिधानाद्ग्रन्थप्रमाणस्य निरर्थकता स्यादिति पूर्वाचार्याः।

अभिसमयालङ्कारालोकायां प्रज्ञापारमिताव्याख्यायां
गुणपरिकीर्तनपरिवर्तो नाम चतुर्थः ॥



यथाधिमोक्षदृष्टधर्मलक्षणां प्रज्ञापारमितां प्रति प्रवृत्तस्याधिमोक्षमनस्कारस्य प्रथमद्विचिनवावस्थानां भावकबोधिसत्त्वस्य यथाक्रममुत्साहनाय प्रत्येकं नवभिः प्रकारैरुत्तरोत्तराभिनन्दनं स्तुतिः स्तोभः प्रशंसा च बुद्धादिभिः क्रियत इत्यधिमोक्षमनस्कारानन्तरं प्रथमं स्तुतिमाद्यां निर्दिशन्नाह। अथ खलु शक्र इत्यादि (p. 102, 2)।

त्यक्तमुक्ताशयेनाप्रत्याख्यानादपरित्यजनीया। बाह्योदकाद्युपद्रवनिराकरणाद्रक्षितव्या। आध्यात्मिकाक्षरादिभ्रंशदोषापनयनाद्गोपायितव्या। अधिमुच्येदित्यपरित्यागबुद्ध्या स्वीकुर्यात्। आर्थिकयेति प्रयोगतः। छन्दिकायेति आशयतः। दद्यादिति ग्रन्थार्थस्वभावायाः फलेन सह सर्वस्वदानात्। एतदेव प्रयोगमौलपृष्ठावस्थाभेदेन यथाक्रमं दर्शयन्नाह। उपनामयेत्। निर्यातयेत्परित्यजेदिति।

देयदायकप्रतिग्राहकानुपलब्धिभेदाद्वा पदत्रयमुक्तम्। तद्वचनेन प्रतिपादयितुमाह। तेन ह्रीत्यादि (p. 103, 4)

शरीरमिति प्रतिमादिकम्। तावत्कालिकत्वेन दानात् संविभजेत्। अयमेव तयोरिति (p. 104, 5)। कृपापूर्वकं दानाशयस्याधिक्येन तयोर्मध्ये सत्कारादिपुरःसरं तथागतशरीरं यो दद्यात् सोऽयमेवेत्यर्थः। तद्वचनेनेदानीं परिहरन्नाह। एवमेव कौशिकेत्यादि। द्वितीयामाह।

पुनरपरं कौशिको यः कुलपुत्रो वा कुलदुहिता वा यत्र यत्रेत्यादिना। पटुतरश्रद्धेन्द्रियादियोगेन पात्रीभूतत्वाद्भाजनीभूता यत्र मगधादौ देशे स्थिताः। तत इत्यगत्वा

दातुः पूर्वोक्तात्पुण्यादित्यर्थः । तृतीयामाह । पुनरपरं कौशिक यः कुलपुत्रो वा कुलदुहिता वा ये जम्बूद्वीप इत्यादिना । ग्रहणाय यत्नकरणात् समादापयेत् । गृहीतानां स्थिरीकरणात् प्रतिष्ठापयेत् । अत इत्यस्मादनन्तरार्थकारिणः पुण्यात् । अक्लासितयेत्यनालस्येन स्वयं प्रतिपत्त्यनुष्ठानात् सम्पादयेत् । कृतोत्साहत्वादुद्युक्तोऽमुमित्युत्पादितबोधिचित्तं समासतो ग्रन्थार्थशिक्षणाद्ग्राहयेदिमां प्रज्ञापारमितामिति पूर्वेण सम्बन्धः । अज्ञानसंशयमिथ्याज्ञानयोगेन मूढं प्रति सम्यगर्थकथनात् सन्दर्शयेत् । कौशीद्याच्छन्दिकताव्यासङ्गयोगात् प्रमत्तं कुशलार्थं प्रवर्तनात् समादापयेत् । हीनाधिमुक्त्यशक्तात्मसम्भावनाकौकृत्यभीरुतायोगात् संलीनं विशिष्टवीर्यानुशंसकथनात् समुत्तेजयेत् । अविपरीतसमाधिसन्तुष्टिवीर्यप्रतिपत्तियोगात् सम्यक्प्रतिपन्नं भूतगुणाभिनन्दनात् सम्प्रहर्षयेत् । विधेयतापादनादेवं वाचानुशासन्या नेष्यति । प्रज्ञापारमितां प्रापयिष्यति । तत्र च सम्प्रजन्येन सम्यगुपलक्षणतया लयौद्धत्यदोषापनयनाद्यथाक्रमं विनेष्यत्यनुनेष्यति । अर्थमिति (p. 105, 1) फलमनुशंसम् । एवञ्चेत्यनन्तरोक्तक्रमेण । अज्ञानमिथ्याज्ञानविगमाच्चित्तं विशोधयिष्यति । संशयज्ञाननिराकरणान्निर्विचिकित्सं करिष्यति । एहि त्वमिति आगच्छ त्वम् । बोधिसत्त्वमार्ग इति । प्रज्ञापारमितायाम् । सन्नाहप्रयोगानिवर्तनवीर्यभेदाद्यथाक्रमं शिक्षमाणश्चरन् व्यायच्छमान इति पदत्रयमुक्तम् । उपधि-

संक्षय इति । समलस्कन्धाभावे धर्मकाय इत्यर्थः । तिष्ठन्तु खलु पुनः कौशिक जम्बूद्वीपे सर्वसत्त्वाः । तथा चातुर्महाद्वीपके । साहस्रे चूडिके । द्विसाहस्रे मध्यम इति हारकचतुष्टयेन यथासंख्यं चतुर्थी पञ्चमी षष्ठी सप्तमी च स्तुतिमात्रा निर्दिष्टा । किन्तु सर्वत्र समादापयेत् प्रतिष्ठापयेदितिपर्यन्तनिर्दिष्टपदानन्तरं पूर्वोक्तहारकात्तत् किं मन्यस इत्यादि (p. 106, 7) यावद्बहुतरं पुण्यं प्रसवेदित्यनुवर्तनीयम् । अष्टमीं स्तुतिमात्रामाह । तिष्ठन्तु खलु पुनः कौशिक त्रिसाहस्रमहासाहस्र इत्यादिना । अतः खलु पुनरिति दशकुशलसमादापितुः प्रतिष्ठापयितुश्च सकाशादित्यर्थः । नवमीं स्तुतिमात्रामाह । पुनरपरं कौशिकेत्यादिना (p. 107, 3) । यावद्गङ्गानदीवालुकोपमत्रिसाहस्रमहासाहस्रलोकधातुसत्त्वानाञ्चतुर्ध्यानेषु (p. 108, 13) प्रतिष्ठापयितुरधिकपुण्यप्रतिपादनेन । प्रथमां स्तोभमात्रामाह । पुनरपरं कौशिक यावन्तो जम्बूद्वीप इत्यादिना (p. 109, 9) । चातुर्महाद्वीपके साहस्रे द्विसाहस्रे त्रिसाहस्रे च लोकधातौ सर्वसत्त्वान् ध्यानाप्रमाणारूप्यसमापत्त्यभिज्ञासु प्रतिष्ठापयेदिति हारकचतुष्टयेन यथाक्रमं द्वितीया तृतीया चतुर्थी पञ्चमी स्तोभमात्रा निर्दिष्टा । सर्वत्र च हारकचतुष्टये प्रतिष्ठापयेदिति पदानन्तरं पूर्वोक्तहारकात्तत् किं मन्यस इत्यारभ्य यावद्भूतकोटिप्रभावनतायामित्य(p. 112, 3)तत्पर्यन्तमनुवर्तनीयम् । षष्ठीं स्तोभमात्रामाह । तिष्ठन्तु खलु पुनः कौशिक त्रिसाहस्रमहासाहस्रलोकधातावित्यादिना ।

सप्तमीं स्तोभमाचामाह । पुनरपरं कौशिक य इत्यादिना (p. 116, 12) अष्टमीं स्तोभमाचामाह । पुनरपरमित्यादिना । अर्थावबोधनिपुणत्वादर्थकुशलः ।

यः प्रतीत्यसमुत्पादः शून्यता सैव ते मता ।
धर्मधातुविनिर्मुक्तो यस्माद्धर्मो न विद्यते ॥

इति वचनात् प्रतीयमानपदार्थ एव हि प्रज्ञापारमिता कस्मादुपदिश्यत इत्यभिप्रायवानाह । इयमपि भगवन् प्रज्ञापारमितोपदेष्टव्येति (p. 112, 11) । पदार्थस्वभावशून्यतानभिज्ञस्य देश्यत इत्याह । इयमपीत्यादि । ननु पदार्थप्रतिपत्तौ तत्र स्वभावशून्यताऽप्रतिपत्तिः कथमिति । तत्कस्य हेतोरित्याशङ्क्याह । उत्पत्स्यते हीत्यादि । एतदुक्तम् । "यस्मादनागते काले सादृश्यार्थेन प्रज्ञापारमिता प्रतिवर्णिकोत्पत्स्यतेऽतस्तां श्रुत्वा मिथ्याशास्त्राभ्यासेन प्रच्छादितप्रतीयमानपदार्थमायोपमस्वभावावबोधादनुत्तरबोध्यर्थी बोधिसत्त्वस्तां सम्यक्प्रज्ञापारमितामनवबुध्यमानोऽभिमतार्थभ्रंशान्मा विनष्टो भविष्यति । तस्माद्देश्यत इति । किं हेतुका किं स्वरूपा च सा येन तद्धेतुस्वभावपरित्यागात् परिह्रियत इत्याह । कथमित्यादि । प्रज्ञापारमिता प्रतिवर्णिकेति ।

प्रक्रान्तार्थतिरस्कारो या चार्थान्तरकल्पना ।
प्रज्ञापारमितायां हि प्रोक्ता सा प्रतिवर्णिका ॥

इत्याचार्यदिङ्नागः । एके भिक्षव । इति (p. 113, 1) महायानिका एव विज्ञानवादिन इत्यर्थः । एकानेकस्वभावविरहान्निःस्वभावत्वेनानभ्यस्तसविषयषड्विज्ञानकाय-

स्वभावत्वेनाभावितकायाः। तदेव कथयन्नाह। अभावितशीला इत्यादि। एतच्च पदत्रयमधिशीलाधिचित्ताधिप्रज्ञाशिक्षात्रयवैकल्याद्यथाक्रममुक्तम्। एतत्समर्थनार्थमाह। दुःप्रज्ञा इत्यादि। यस्मादज्ञानयोगेन दुःप्रज्ञाः संशयज्ञानादेडमूकजातीया मिथ्याज्ञानात् प्रज्ञाप्रहीणाः। रूपविनाशो रूपानित्यतेति। रूपस्य कल्पितस्याभावो विनाशो रूपानित्यता। विकल्पस्य रूपस्य क्षणादूर्ध्वमनवस्थानं विनाशो रूपानित्यता। धर्मतात्मकस्य च रूपस्य कल्पितरूपरहितता विनाशो रूपानित्यता प्रज्ञापारमिता इत्युपदेक्ष्यन्ति। अर्थत्रयञ्चैतदावृत्तिन्यायेन द्रष्टव्यम्। मिथ्याज्ञानोपहतत्वेनात्मानमुत्कर्षयन्तीत्याह। एवञ्चोपदेक्ष्यन्ति। य एवं गवेषयिष्यति स प्रज्ञापारमितायाञ्चरिष्यतीति। यथोक्तेन च निर्देशेन धर्मधर्मिणोरनिराकरणे विपर्यस्तभावाभिनिवेशान्न मुक्तिरित्यभिप्रायवानाह। न खलु पुनः कौशिक रूपविनाशो रूपानित्यता द्रष्टव्येत्यादि। अपि तु रूपादीनां मायोपमस्वभावतैव प्रज्ञापारमिता। भावाभावादिविपर्यासाभिनिवेशमूलस्य सवासनक्लेशज्ञेयावरणस्य सम्यक् प्रहाणहेतुत्वेन तथागतत्वपदप्रापणात् प्रतिपत्तव्येति मतिः। नवमीं स्तोभमात्रामाह। पुनरपरं कौशिक यावन्त इत्यारभ्य यावद्गङ्गानदीवालुकोपमलोकधातुप्रतिष्ठितसत्त्वधातुस्रोतआपत्तिफलप्रतिष्ठापनकारिणः सकाशाद्बहुतरपुण्यप्रसवत्वप्रतिपादनेन (p. 115, 12)। ननु स्रोतआपत्तिफले प्रति-

ष्ठापनमनास्रवे धातौ व्यवस्थापनम् । श्रद्धादिपूर्वकं प्रज्ञापारमितापुस्तकदानं तत्सन्दर्शनादिकञ्च सास्रवं तत् कथं पूर्वकार्थकारिणः सकाशादुत्तरार्थकारिणो बहुतरं पुण्यमिति । तत्कस्य हेतोरित्याशङ्क्याह । अतो हि कौशिक स्रोतआपत्तिफलमित्यादि (p. 114, 13) । एतदुक्तम् । यस्माद्विपुलविमलानन्तगुणराशितथागतत्वादिसर्वार्यधर्माणां जिनजनन्या हेतुत्वेन सुतरामेव स्रोतआपत्तिफलमतः प्रज्ञापारमितातः सम्भवति । तस्मादस्याः पुस्तकदानादिनाऽविकलकारणस्वभावत्वात् स्रोतआपत्तिफलस्यान्यस्य च प्रतिविशिष्टस्वभावस्य बुद्धत्वादेर्दानाद्बहुतरं पुण्यं प्रसवति । प्रथमां प्रशंसामाचामाह । पुनरपरं कौशिक यो हि कश्चिदेव कुलपुत्रो वा कुलदुहिता वा यावन्तो जम्बूद्वीपे सत्त्वास्तान् सर्वान् सकृदागामिफले प्रतिष्ठापयेदित्यादिना (p. 116, 12) । पूर्ववत् तत्कस्य हेतोरित्याशङ्क्य तथैव परिहरन्नाह । अतो हि कौशिक सकृदागामीत्यादि (p. 117, 12) । द्वितीयामाह । पुनरपरं कौशिक यो हि कश्चिदेव कुलपुत्रो वा कुलदुहिता वा यावन्तो जम्बूद्वीपे सत्त्वास्तान् सर्वाननागामिफले प्रतिष्ठापयेदित्यादिना (p. 119, 9) । पूर्वोक्ताभिप्रायेण तत्कस्य हेतोरित्याशङ्क्य तथैव परिहरन्नाह । अतो हि कौशिक अनागामीत्यादि (p. 120, 7) । तृतीयामाह । पुनरपरं कौशिक यः कश्चिदेव कुलपुत्रो वा कुलदुहिता वा यावन्तो जम्बूद्वीपे सत्त्वास्तान् सर्वानर्हत्त्वे प्रतिष्ठापयेदित्यादिना (p. 122, 3) । यथा-

विहितप्रकारेण तत्कस्य हेतोरित्याशङ्क्य पूर्ववदाह। अतो हि कौशिकार्हत्वमित्यादि (p. 123, 1)। चतुर्थीमाह। पुनरपरं कौशिक यावन्तो जम्बूद्वीपे सत्त्वास्तान् सर्वान् कश्चिदेव कुलपुत्रो वा कुलदुहिता वा प्रत्येकबुद्धत्वे प्रतिष्ठापयेदित्यादिना। यथोदितविधिना तत्कस्य हेतोरित्याशङ्क्य तथैवाह। अतो हि कौशिक प्रत्येकबुद्धत्वमित्यादि (p. 126, 8)। पञ्चमीमाह। पुनरपरं कौशिक यावन्तो जम्बूद्वीपे सत्त्वास्तेषामपि सर्वेषामित्यादिना (p. 128, 16)। उपनामयेदिति दद्यात्। केनाशयेनेत्याह। अत्रैव प्रज्ञापारमितायामित्यादि। प्रयोगमार्गेण प्रज्ञापारमितां भावयन् दर्शनमार्गेण वृद्धिं भावनामार्गेण विरूढिं बोधिसत्त्वविशेषमार्गेण विपुलतां गतस्तथागतभूमौ परिपूरयिष्यति (p. 129, 2)। बुद्धधर्मानित्यर्थभेदो वाच्यः। तस्मात् पौर्वकादिति यः कश्चिद्बोधौ चित्तमुत्पादयेत्। यश्चान्यो बोधिचित्तमुत्पाद्य पुस्तकं दद्यात्ततः पुद्गलद्वयादित्यर्थः। ननु बोधिचित्तोत्पादनपूर्वकं पुस्तकदातुरधिकार्थकारिणः सकाशात् केवलपुस्तकमात्रदातुः कथं पुण्यमहत्त्वमिति। तत्कस्य हेतोरित्याशङ्क्याह। नियतमेष इत्यादि। नियतमवश्यमेषोऽविनिवर्तनीय इत्यर्थः। एतदुक्तम्। "यस्मादवैवर्तिको बोधिसत्त्वो नियतमभिसम्बुध्य सत्त्वानां दुःखान्तकारित्वेन विशिष्टं पुण्यक्षेत्रमतस्तस्यैव पुस्तकदातुर्बहुतरं पुण्यं न तु बोधिचित्तोत्पादनपूर्वकमनियतगोत्रपुद्गलाय पुस्तकदातुरि"ति। षष्ठीमाह। तिष्ठतु खलु पुनः

कौशिक जम्बूद्वीपकानामित्यादिना। एतद्वारकान्तोऽनुत्तरायां सम्यक्सम्बोधौ चित्तमुत्पादयेदित्यनन्तरं यश्चान्यः कश्चित् कौशिक कुलपुत्रो वा कुलदुहितेत्यादिग्रन्थः पूर्वोक्त एवानुवर्तनीयः। सप्तमीमाह। तिष्ठतु खलु पुनः कौशिक चातुर्महाद्वीपके लोकधाताविव्यादिना तथैवाच हारकान्ते ग्रन्थोऽनुवर्तनीयः। अष्टमीमाह। तिष्ठतु खलु पुनः कौशिक साहस्रचूडिकायां लोकधाताविव्यादिना। भूयस्या मात्रयेति (p. 130, 10)। अधिकेन प्रकारेणेत्यर्थः। तत्कस्य हेतोरित्यत्रापि प्रश्नपरिहारार्थः पूर्ववत् वाच्यः। नवमीं प्रशंसामात्रामाह। पुनरपरं कौशिक यावन्तो जम्बूद्वीपे सत्त्वास्ते सर्वे इत्यादिना। न केवलमभिसम्बुध्यान्येषामर्थकरणात्। क्षिप्राभिज्ञं बोधिसत्त्वमववदतोऽनुशासतश्च बहुतरं पुण्यं किं तर्ह्यनभिसम्बुध्यापीति प्रतिपादयन्नाह। यथा यथा भगवन्नित्यादि (p. 133, 10)। तत्र चीवरं वस्त्रं। पिण्डपातो मण्डकादि। शयनं तूलिकादि। आसनं दण्डासनादि। व्याधिभिरुपहतं ग्लानं प्रत्येति गच्छति। युक्तरूपं भैषज्यं हरीतक्यादि। परिष्कारः खल्लकादि तान् कारान् कृतानिति। चीवरादीन् दत्तानित्यर्थः। सन्दृष्टफलदानसामर्थ्यान्महाफलान् करोति। जन्मान्तरे फलदानान्माहानुशंसान् करोतीति पूर्वेण सम्बन्धः। तथागतानां बोधिसत्त्वानाञ्च परमदक्षिणीयत्वेन निर्विशिष्टत्वादिति भावः। कुत एतदिति चेत्। यस्माच्चुन्दस्य कर्मकारपुत्रस्य पिण्डपातं परिभुज्य परिनिर्वाणकाल-

समये भगवतैवोक्तमागमे। "मा हैतन्निमित्तं चुन्दस्य कर्मकारपुत्रस्य विप्रतिसारोऽभूत्। स त्वयानन्द चुन्दस्य कर्मकारपुत्रस्य प्रतिविनोदयितव्यः। एवञ्च स वक्तव्यः। यञ्च पिण्डपातं परिभुज्य तथागतोत्तरां सम्यक्सम्बोधिमभिसम्बुद्धः यञ्च पिण्डपातं परिभुज्य निरुपधिशेषे निर्वाणधातौ परिनिर्वृतः। द्वाविमौ पिण्डपातावसमसमफलौ। असमसमविपाकावि"ति। तुल्यफलप्रतिपादनात्तयोः समदक्षिणीयत्वमावेदितमिति। ननु भावनाभ्यासादासन्नीभावे सति कथमववादानुशासनीभ्यामासन्नीभावो निर्दिश्यत इति। तत्कस्य हेतोरित्याशङ्क्याह। एवं ह्येतद्भगवन्नित्यादि। एवं मन्यते। प्रतीत्यसमुत्पादधर्मतैषा यस्मादववादानुशासनीभ्यां विशिष्टक्षणोत्पादादासन्नीभावो भवति। भावनाबलात्तु नितरामेवेति। "बोधिसत्त्वोत्साहदातॄणां साधु साध्विति साधुकारदानेन स्तुतस्तोभितप्रशंसार्थमुपसंहरती"त्यार्यविमुक्तिसेनः। क्षिप्रतरासन्नीभावकथनादुत्साहं ददासि। अववादमुखेनानुगृह्णीषे। अनुशासनीद्वारेणानुपरिवारयसि। कथमन्यस्योत्साहवर्धनेनान्यस्यानुग्रह इति। तत्कस्य हेतोरित्याशङ्क्याह। अतः प्रसूता हीत्यादि (p. 134, 5)। एतदुक्तम् "यस्मादनुत्तरसम्यक्सम्बोधिचित्तोत्साहवर्धनेन निष्पद्यते बोधिसत्त्वानां महासत्त्वानाञ्जगदर्थकारिकाऽनुत्तरसम्यक्सम्बोधिस्तस्मादेषामुत्साहवर्धनात् सत्त्वानामनुग्रह" इति। एतदेव व्यतिरेकमुखेन कथयन्नाह। यदि हीत्यादि। नाभिसम्बुध्येरन्। अतो न सत्त्वार्थं कुर्यादिति शेषः। अन्वयमुखेन चाह।

यस्मात्तर्हीत्यादिना । अभिसम्बुध्यन्ते तस्माज्जगदर्थकारिण इति मतिः । तत्र ते स्तुत्यादय उत्तरोत्तरपुण्यमहत्त्वस्य प्रतिपादनात्तत्स्वभावत्वेन निर्दिष्टा यथाभूतार्थाधिगममात्रलक्षणा नार्थवादादिरूपा यथोक्तप्रभेदा एव प्रतिपत्तव्याः । तथा चोक्तम् ।

स्तुतिः स्तोभः प्रशंसा च प्रज्ञापारमितां प्रति ।
अधिमोक्षस्य मात्राणां नवकैस्त्रिभिरिष्यते ॥ २० ॥ इति

एवञ्च कृत्वा तत्र तत्र सूत्रान्तरे निदानेषु यदुक्तं सर्वबोधिसत्त्वैर्महासत्त्वैः सर्वबुद्धस्तुतस्तोभितप्रशस्तैः सार्धं भगवान् विहरतीति तदुपपन्नं भवति ।

अभिसमयालङ्कारालोकायां प्रज्ञापारमिताव्याख्यायां
पुण्यपर्यायपरिवर्तो नाम पञ्चमः ॥

सर्वबुद्धस्तुतस्तोभितप्रशस्तस्याधिमुक्तिमनस्कारस्यानुत्तर-सम्यक्सम्बोधौ परिणामनं विधेयमित्यतोऽनन्तरं परिणाम-नामनस्कारो वक्तव्यः। स च व्यावृत्तिविषयभेदादनेकविध इत्यादौ विशेषपरिणामनामनस्कारं निर्दिशन्नाह। अथ खलु मैत्रेय इत्यादि (p. 134, 2)। तत्र मैत्रेयो नाम समाधिस्तल्लाभात्कस्यचित् समाधेर्मैत्रेयत्वं फलं तदधि-गमात्। पूर्वप्रणिहितमैत्रीफलाभिसमयादीदृशा वा गुणा-स्तेन मैत्रीविमोक्षमुखप्रभावितत्वादर्जिता येनासौ मैत्रेयो जात इति मैत्रेयः। सम्यक्प्रज्ञायोगाद्बोधिसत्त्वः सर्वा-कारोपायसम्बन्धान्महासत्त्वः। बोधिसत्त्वमहासत्त्वशब्दयोः प्रज्ञोपायाभिधायितया मोघपाशसूत्रे पाठादिति। अनु-मोदनापरिणामनासहगतमिति। अनुमोदनापूर्विका परिणामना तथागतानुत्तरसम्यक्सम्बोध्यनुपलम्भालम्ब-नेन मनस्कारेण परिणामनाद्विशेषपरिणामनामनस्कार-स्तया च सहगतमिति समासः। तथाहि परकीयं दान-मयादिपुण्यक्रियावस्तु वक्ष्यमाणानुमोदनामनस्कारेणा-नुमोद्य बोधौ परिणामयितव्यमित्ययमपि प्रकारः सम्भ-वति। तथा चानन्तरमेव वक्ष्यत्येवमनुमोद्यानुमोदना-सहगतं पुण्यक्रियावस्त्वनुत्तरायां सम्यक्सम्बोधौ परिणाम-यामीति वाचं भाषेतेति (p. 138, 9)। तत इति सर्व-सत्त्वानां दानमयादिपुण्यक्रियावस्तुनः सकाशादित्यर्थः। अग्रमाख्यायते द्विविधाग्रतायोगात्। द्विविधाऽग्रता श्रेष्ठा-ग्रता चोत्तमतया ज्येष्ठाग्रता चाद्वितीयतयेत्याह। श्रेष्ठ-माख्यायते ज्येष्ठमाख्यायत इति। श्रेष्ठाग्रतापि द्विविधा वरतया चोपायकौशलेन प्रवरतया च प्रज्ञापारमितये-

29

त्याह। वरमाख्यायते। प्रवरमाख्यायत इति। उभाभ्यां नान्यत् प्रणीतमिति कथनार्थोक्तं प्रणीतमाख्यायत इति। ज्येष्ठाग्रतापि द्विविधा। उत्तमतया च समाभावात्। अनुत्तमतया चाधिकाभावादिति दर्शनायोक्तम्। उत्तममाख्यायते, अनुत्तममाख्यायत इति। आभ्यां नान्यन्निरुत्तममित्याह। निरुत्तममाख्यायत इति। यथोक्तेन च विधिना आवकाद्यसाधारणत्वेनासममाख्यायते। असमैर्बुद्धैः समतां प्राप्तुं हेतुत्वादसमसममाख्यायते। अनुपलम्भाकारपरिणामनामनस्कारं निर्दिदिक्षुराह। एवमुक्त आयुष्मान् सुभूतिरित्यादि। दशदिशि लोके सर्वतः सर्वचगतयेति। दशसु दिक्षु लोकधातौ सर्वस्मिन् पूर्वादिदिग्व्याप्त्येत्यर्थः। पूर्वपश्चिमदक्षिणोत्तरासु दिक्षु यथाक्रममप्रमेयासंख्येयापरिमाणाचिन्त्यासु स्थिता लोकधातवो यथासंख्यमप्रमेयाप्रमेयेष्वित्यादिना निर्दिष्टाः। तथोर्ध्वाधो दिशि स्थिता अनन्तापर्यन्तेष्वित्यर्थभेदो वाच्यः। अप्रमेयाप्रमेयाणामित्यादि। लौकिकवीतरागाणां शैक्षाणां, प्रत्येकबुद्धानां बोधिसत्त्वानाञ्च यथाक्रममप्रमेयासंख्येयापरिमाणाचिन्त्यापर्यन्तानां ज्ञानपथातीतत्वेनाप्रमेयादयो वेदितव्याः। छिन्नवर्त्मनामित्यादि (p. 136, 1)। हतारित्वेन क्षीणास्रवत्वेन च छिन्नवर्त्मानः। निःक्लेशत्वेन वशीभूतत्वेन च छिन्नवर्त्मनयः। सुविमुक्तचित्तसुविमुक्तप्रज्ञत्वेन छिन्नप्रपञ्चभवनेत्रीकाः। आजानेयमहानागत्वेन पर्यात्तबाष्पाः। कृतकृत्यत्वेन कृतकरणीयत्वेन च मर्दितकण्टकाः। स्वपहृतभाराणामित्यादि व्याख्यातम्। अथवा सर्वाकारज्ञता

मार्गज्ञता सर्वज्ञता सर्वाकाराभिसम्बोधो मूर्धाभिसम्बोध इति पञ्चभिरभिसमयैः प्रहातव्यवस्तुप्रहाणाद्यथाक्रमं छिन्नवर्त्मनामित्यादि पञ्च पदानि। तैरेव पञ्चभिरभिसमयैः प्राप्तव्यधर्माधिगमयोगाद्यथासंख्यं स्वपहृतभाराणामित्यादि पञ्च पदानि वाच्यानि। एतस्मिन्नन्तर इति मध्ये। अनास्रवं शीलं समाधिः प्रज्ञा च शीलस्कन्धः समाधिस्कन्धः प्रज्ञास्कन्धः। सर्वावरणप्रहाणं विमुक्तिस्कन्धः। विशिष्टज्ञानसाक्षात्करणं विमुक्तिज्ञानस्कन्धः। सर्वश्चैष श्रावकादिभिः साधारण इत्यसाधारणार्थमाह। यानि चेत्यादि। तच्च द्रव्यतः षट् पारमिताः। नामतस्तु दश भवन्ति। प्रज्ञापारमिताप्रभेदत्वाच्चतसृणां पारमितानाम्। तथाहि लोकोत्तरनिर्विकल्पकं ज्ञानं क्रमेण सर्वावरणप्रहाणकारि प्रज्ञापारमिता। लोकोत्तरमार्गपृष्ठलब्धज्ञानसङ्गृहीताः पुनरुपायप्रणिधानबलज्ञानपारमिताः स्युरिति। प्राधान्यादादौ षट् पारमिताः निर्दिश्य परिशिष्टपारमितोपादानार्थमाह। बुद्धगुणसम्पदुपायपारमिता बलपारमितेति सुगमम्। अभिज्ञापारमितेति बौद्धी सर्वाभिज्ञा षष्ठी वा ग्राह्या। परिज्ञापारमिता ज्ञानपारमिता। कथं प्रकृष्टापि सती ज्ञानपारमिता न निर्विकल्पेति चेदुच्यते। यस्माज्ज्ञानपारमिता निर्विकल्पज्ञानपृष्ठलब्धं ज्ञानं येन ज्ञानेनाधिगमं परिच्छिद्य स्वयञ्च धर्मसम्भोगं प्रत्यनुभवति परांश्च परिपाचयति। तच्चैतन्निर्विकल्पज्ञाने द्वयमपि नास्तीत्यतो न निर्विकल्पा ज्ञानपारमिता। प्रणिधानपारमितेति ज्ञायत एव। सर्वज्ञज्ञानसम्पदिति। प्रमुदितादिभूमयः।

या च हितैषितेति मुदितोपेक्षे। बुद्धगुणा इति। अष्टादशावेणिकबुद्धधर्मादयः। सम्यक्सम्बोधिसुखमिति। क्लेशज्ञेयावरणवासनानुसन्धिप्रहाणफलम्। सर्वधर्मैश्वर्यपारमितेति। सर्वाकारजगदर्थसम्पादनशक्तता। अनभिभूतः सर्वाभिभूरिति मारतीर्थिकादिभिरतिरस्कृतस्तेषाञ्च कृताभिभवनः। ऋद्ध्यभिसंस्कार इति। ऋद्धिप्रातिहार्यमावर्जनपूर्वकबोधिबीजारोपणहेतुः। यच्चानावरणमित्यादि। क्लेशज्ञेयावरणप्रहाणाद्यथाक्रममनावरणमसङ्गमत एवाप्रतिहतम्। समाभावादसमम्। समेनासमनैव समत्वादसमसमम्। सर्वान्योपमातिक्रान्तत्वादनुपमम्। अनन्तज्ञानपरिच्छेदायोग्यत्वादपरिमेयं, एवं विशेषणविशिष्टं किं तदित्याह। तथागतयथाभूतज्ञानबलमिति। आदेशनादिप्रातिहार्यकरणसमर्थमेव ज्ञानमव्याहतत्वाद्बलमुक्तम्। यद्बुद्धज्ञानबलं बलानामिति। आस्रवक्षयज्ञानमेव बलं बलानां मध्ये प्रकृष्टतरम्। यद्बुद्धज्ञानदर्शनमिति। ज्ञानं सत्यादिसम्बोधिरभिज्ञाः पञ्च दर्शनम्। दशबलपारमितेति। स्थानास्थानज्ञानबलादीनि दश। चतुर्वैशारद्येति। सम्यक्सम्बुद्धोऽहमित्यादि प्रतिज्ञाने पर्यनुयोक्तुरभावेन निर्भयताकाराश्चत्वारस्तैश्चतुर्भिर्वैशारद्यैः परमसुपरिपूर्णोऽयमधिगमः सांप्रतः। तात्त्विकस्त्वन्य इत्याह। यश्चेत्यादि (p. 137, 1)। परमार्थाभिनिर्हारेणेति। मायोपमताभिमुखीकरणेन धर्मचक्रप्रवर्तनमिति। धर्मस्य स्वाधिगमस्य द्योतिकया प्रज्ञापारमितादेशनया चक्रवत्पुनः पुनराभिमुखीकरणार्थेन प्रवर्तनं विनेयसन्ताने विस्तारीकरणम्।

तदेव तमोऽपनयनाद्धर्मोल्काप्रग्रहणम्। सम्यक् प्रतिबोधनाद्धर्मभेरीसम्प्रताडनम्। विनेयमनःप्रपूरणाद्धर्मशङ्खप्रपूरणम्। पौरीत्वेन धर्मशङ्खप्रव्याहरणम्। दृढसर्वावरणप्रहरणाद्धर्मशङ्खप्रहरणम्। वर्णत्वेन धर्मवृष्टिप्रवर्षणम्। विष्पष्टत्वेन विज्ञेयत्वेन च धर्मयज्ञयजनम्। मनोज्ञत्वेन सर्वसत्त्वसन्तर्पणम्। श्रवणीयत्वेन यथासुखीकरणात् सम्प्रवारणम्। ये च तत्रेत्यादि। बुद्धधर्मेषु विनयनाद्विनीताः प्रत्येकबुद्धधर्मेषु शिक्षणाच्छिक्षिताः। श्रावकधर्मेष्वधिमोक्षादधिमुक्ता इति योज्यम्। स्वबोध्यधिगमं प्रतिनियतगोत्रत्वलाभान्नियतास्तत एव सम्बोधिपरायणाः। शैक्षाणीति। प्रथमफलप्रतिपन्नकादीनां सम्बन्धीनि। अशैक्षाणीति। अर्हताम्। तत्र त्रैवाचिकादिकर्मणोपसम्पन्नो भिक्षुरेवं भिक्षुणी। त्रिशरणपरिग्रहात् पञ्चशिक्षापदपरिग्रहाच्चोपासकस्तथोपासिकेति द्विधा भेदः। त्रिशरणपरिगृहीतमुपासकं म आचार्यो धारयतु। तथा त्रिशरणगतं पञ्चशिक्षापदपरिगृहीतमुपासकं म आचार्यो धारयत्विति विनये द्विधा पाठात्। मनोभावनीयानिति (p. 138, 2)। एक-द्वि-त्रि-पुद्गलान्मनःप्रसादकारिणः। निरवशेषमनवशेषमिति। अनन्तहेतुत्वादप्रमेयफलप्रदत्वाच्च यथाक्रमं वाच्यम्। ऐकध्यमित्यादि। अतीततथागतसम्बन्धेन निर्दिष्टत्वादैकध्यमेकप्रकारत्वमभिसंक्षिप्य चेतस्यध्यारोप्याप्रमेयत्वादिरूपेण पिण्डयित्वा गणयित्वा बोधिसत्त्वादि-यावत्तिर्यग्योनिसम्बन्धेन तुलयित्वा प्रमाणीकृत्य वक्ष्यमाणलक्षणयाऽग्रयाऽनुमोदनयाऽनुमोदेत। कर्तुराशयादतिशयश्रद्धातिहर्षं स्वयं तत् सर्वसम्पादनाशयातिशयं कुर्यादिति

यावत् । अयार्थमेव कथयन्नाह । अेष्ठयेत्यादि । व्याख्यातमेतत् । वाचम्भाषतेति । सर्वतथागतशीलादिस्कन्धस्यानुपलम्भालम्बनेन मनस्कारेणानुमोदनासहगतं पुण्यं सर्वसत्त्वार्थमनुत्तरबोधौ परिणामयामीति वचनमुच्चारयेदित्यर्थः । आहारकमिति । उत्पादकं मम सर्वसत्त्वानां वेति शेषः । अनुपलम्भपरिणामनामनस्कारं निर्दिश्येदानीं तत्र कुचोद्यपरिहारार्थं प्रश्नयन्नाह । तत्र बोधिसत्त्वयानिक इत्यादि । यैर्वस्तुभिः परिणामयतीति । यैस्तथागतत्वादिगोचैर्हेतुभिर्निर्यातयतीत्यर्थः । क्वचिदनुमोदेतेति पाठः । तत्रापि परिणामनामनस्कारस्य प्रक्रान्तत्वात्परिणामयतीत्यर्थो ग्राह्यः । तथा चानन्तरमेव वक्ष्यति । कतमैर्वस्तुभिः परिणामयतीति (p. 139, 8) । यैरारम्बणैर्यैराकारैरिति । आरम्बणानि शीलस्कन्धाः सर्वधर्मास्तद्ग्रहणप्रकारा एवाकाराः । तच्चित्तमिति ग्राहकविकल्पम् । अपित्विति । अपितुशब्दो निपातः किंशब्दार्थे वर्तते । तथोपलभ्येरन् यथा निमित्तीकरोतीति । वस्त्वादीन्यनिमित्तीकृत्य परिणामयितुमशक्यत्वात्तान्यतीततयाऽविद्यमानान्येवाध्यारोप्य यथोद्भावनासंवृत्या विषयीक्रियन्ते किं तत्त्वतस्तथैव समुपलभ्यन्त इत्यर्थः । यद्युपलभ्यन्त इति मतम् । तथा च सति ।

प्रमाणव्याहतत्वेन विपर्यासो हि वस्तुनः ।
उपलम्भो मरीच्यादिज्ञानवत् परिनिश्चितः ॥
तस्मात्तद्बलतो वृत्तः परिणामविधिर्मतः ।
आत्मात्मीयविपर्यासप्रवृत्त इव दुर्बलः ॥

इति मतिः। विकल्पविषयस्याध्यारोपितत्वेनालीकत्वात् प्रत्ययाधीनवृत्तित्वाच्च स्वप्नमायामरीचिवन्नैवोपलभ्यन्ते तत्त्वत इत्याह। न तानि भदन्त इत्यादि। एवमपि विपर्यस्तपरिणामप्रसङ्ग इत्याह। यदि सोऽसंविद्यमानमित्यादि। स्वलक्षणविषयीकरणादारम्बणीकुर्यात् (p. 139, 1)। सामान्यरूपपरिच्छेदान् निमित्तीकुर्यात्। संज्ञाया निमित्तोद्ग्रहणात्मिकायाः स्वविषयाभावेन विपर्यासोऽतस्मिं तद्ग्रहाद्भ्रान्तिः संज्ञाविपर्यासः। चित्तस्यालम्बनग्राहकविज्ञानस्य तथैव विपर्यासश्चित्तविपर्यासः। दृष्टेरेवाकारपरिच्छेदरूपायाः सन्तीरणात्मिकायाः प्रज्ञायाः पूर्ववद्विपर्यासो दृष्टिविपर्यासः। न भवेदिति कथं तस्येति पूर्वेण सम्बन्धादपितु भवेदित्यर्थः। तथा चानुपलम्भपरिणामनामनस्कारः संज्ञाविपर्यासादिरूप इति शेषः। तस्मादन्यथा संज्ञादीनां विपर्यासत्वप्रतिपादनेन प्रकृतार्थाविरोधान्न किञ्चिदुक्तं स्यात्। न त्वस्य स्वविषयाभावेन संज्ञादेर्विपर्यासत्वेऽतत्स्वभावस्यान्यस्य कथं संज्ञाविपर्यासादिरूपतेति। तत्कस्य हेतोरित्याशङ्क्याह। तथाहीत्यादि। रागोऽपीत्यपिशब्देन द्वेषादिपरिग्रहः। विकल्प्येति। अध्यारोप्य। संकल्प्येति। पुनः पुनरालम्ब्य विपर्यस्तसंज्ञादिप्रभवत्वाद्रागोऽपि संज्ञाविपर्यास इति योज्यम्। एतदुक्तम्। "यस्मादविद्यमानं नित्यत्वादिकमनित्यत्वादिधर्मयुक्ते वस्तुन्यध्यारोप्य तदेव पुनः पुनरालाम्ब्योत्पद्यमानो रागादिविपर्यस्तसंज्ञादिहेतुकत्वेन संज्ञाविपर्यासादिरूपः समुत्पद्यते। तस्मादनुपलम्भपरिणामनामनस्कारस्तथैवोत्पद्यत इति।

पक्षान्तरार्थमाह। अथापीत्यादि (p. 139, 5)। अथापि यथावस्तु यथारम्बणं यथाकारोऽसंविद्यमान इति शेषः। तथा बोधिस्तथाचित्तं किमसंविद्यमानमित्यध्याहार्यम्। एवमित्यभ्युपगमे सत्याह। एवमित्यादि। ग्राह्यग्राहकाश्च सर्वधर्मास्तद्वासनाः सर्वाः सर्वधातवोऽसंविद्यमानाः प्राप्ता इति मतिः। भवत्वेवं को दोष इति चेदाह। यदि चेत्यादि। एवं मन्यते। यदि यथावस्त्वादिकमसंविद्यमानं तथा बोधिचित्तादिकं तदा कतमैर्वस्त्वादिभिः कतमं चित्तादिकं क्व बोधौ परिणामयति। यावता नैव केनचित् किञ्चित् क्वचित् परिणामयत्यतः सर्वथा परिणामानुपपत्तौ परिणामविपर्यास इति। तत्त्वेन विपर्यस्तोऽप्यनित्यादिविकल्पवत् पारम्पर्येण भूतार्थप्रापकः संवृत्या वस्त्वादेर्विद्यमानत्वेन परिणामनामनस्कार इष्यत एवातो न किञ्चिदधिकं त्वयोक्तमित्यभिप्रायेणाह। नेदमार्यसुभूत इत्यादि। अथवा तस्मिन् वस्त्वारम्बणादौ पारमार्थिकाभिनिवेशविगमेन संवृत्या मायापुरुषस्येव परिणामनान्न विपर्यस्तपरिणाम इति अभिप्रायवानाह। नेदमार्यसुभूत इत्यादि। युक्तियुक्तमपि कथमादिकर्मिकस्य न वक्तव्यमिति। तत्कस्य हेतोरित्याशङ्क्याह। यदपि हि स्यादित्यादि। अधिगमसम्प्रत्ययवैकल्याददृढत्वेन श्रद्धामात्रकं तदेव मृदुमध्याधिमात्रभेदादुक्तम्। प्रेममात्रकमित्यादि पदत्रयेण। अथवा श्रद्धामात्रकमस्तित्वगुणवत्त्वशक्यत्वेषु यथाक्रममभिसंप्रत्ययः प्रसादोऽभिलाष इत्येवं प्रेममात्रकमित्यादि त्रिधा निर्दिष्टम्। अन्तर्धीयेतेति विनश्येत्। संवृतिपरमार्थविभागा-

कुशलत्वादिति भावः। न वक्तव्यमेव तर्हि प्राप्तमित्याह। अविनिवर्तनीयस्येत्यादि। यो वा कल्याणमित्रोपस्तब्ध इति पृथग्जनस्यापि कल्याणमित्राधिष्ठितत्वेनोभयसत्यस्वरूप-विज्ञानादिति भावः। उपसंहारार्थमाह। एवञ्चेत्यादि (p. 140, 1)। एवमिति संवृतिसत्यानतिक्रमेण। पुनरपि संवृतिपक्षाश्रयेण चोद्यार्थमाह। येनेत्यादि। यदिति। अनु-मोदनासहगतं कुशलमूलम्। तच्चित्तमित्यनुमोदकं परि-णामनाकाले क्षीणमुपचयविनाशान्निरुद्धं प्रबन्धविनाशेन विगतं प्रकृतिविनाशाद्विपरिणतं विकारविनाशेन। तत्त-स्मात् कतमत्तच्चित्तमनुमोदकं परिणामनाकाले येनानु-मोदकचित्तेन परिणामयति। नैव केनचिदित्यर्थः। एवं मन्यते। एवञ्चाच बोधिसत्त्वेन महासत्त्वेनानुमोदनासहगतं पुण्यक्रियावस्तुसर्वज्ञतायां परिणामयितव्यमिति वचनेन पौर्वापर्यप्रतिपादनान्नैकस्मिन् क्षणे द्वावनुमोदनापरिणाम-नामनस्कारौ भवत इति प्रतिपादितम्। तस्मात् समान-कर्तृत्वे क्त्वाप्रत्ययविधानादेकमेव चित्तं पूर्वमनुमोद्य पश्चात् परिणामयतीत्युक्तम्। तच्चायुक्तं यतो नित्यस्य क्रमयौगपद्या-भ्यामर्थक्रियाविरोधात् क्षणिकत्वेनानुमोदकं चित्तं परि-णामनाक्षणेनास्त्यतस्तेन कथं परिणामयतीति। एवमनु-मोद्येति पदमसङ्गतमिति निर्दिश्येदानीमनुमोदनासहगतं पुण्यक्रियावस्त्विति पदमयुक्तमित्यावेदयन्नाह। कतमद्वे-त्यादि। एतदुक्तम्। "अनुमोदनाकारेणोत्पादादनुमोदक-मेव चित्तमनुमोदनासहगतं पुण्यक्रियावस्तूच्यते। यत-स्तस्मात् कतमद्वा तच्चित्तमनुमोदनासहगतं पुण्यक्रियावस्तु यच्चित्तं व्यतिरिक्तं कर्मभूतमनुमोदकं चित्तं कर्तृभूतं परि-

णामयति । न च तेनैव चित्तेन तस्यैव परिणामना युक्ता स्वात्मनि कारित्रविरोधादिति मतिः । अथ मतमनुमोदनाचित्तानन्तरं विशिष्टचित्तक्षणोत्पादादनुमोदनासहगतं पुण्यक्रियावस्तु यच्चित्तं प्राप्तं तत्पश्चात् परिणामनाचित्तेन परिणामयितव्यमित्ययं तस्य वाक्यस्यार्थ" इति । तथापि परिणामयितव्यमिति पदं नोपपन्नमित्याह । कथं वा शक्यमित्यादि । एवं वाक्यार्थो योजनीयः । प्रथमक्षणभाविनो विज्ञानस्य क्षणिकत्वेन द्वितीये क्षणेऽभावः । तथा द्वितीयक्षणभाविनोऽपि कारणवैकल्यादनुत्पादेन प्रथमक्षणेऽभाव इत्येवं यदा द्वयोः परिणामनीयपरिणामकयोः प्रथमद्वितीयक्षणभाविनोश्चित्तयोः समवधानसम्भवो नास्ति तत्कथं द्वितीयक्षणभाविना परिणामनाचित्तेन प्रथमक्षणभाविचित्तमनुमोदनासहगतं पुण्यक्रियावस्तु परिणामयितुं शक्यमिति । पूर्वचित्तानुत्पादता तर्हि विद्यमाना परिणाम्यत इति चेत् । आह । न च तच्चित्तस्वभावता शक्या परिणामयितुमिति । नीरूपत्वादिति भावः । भगवदार्यमैत्रेयाधिष्ठानेन शक्रः परिहरन्नाह । मा खल्वित्यादि । अयमभिप्रायः । संवृत्याभ्युपगतभावानामर्थक्रियाकारित्वेन क्षणिकत्वे सति विशिष्टोत्पत्तिक्रियासमावेशं मुक्त्वा न वै कश्चित् क्रियान्तरसमावेशः सम्भवति । अतो योगिनां विशिष्टानुमोदकचित्तानन्तरं विशिष्टतरमनुमोदनासहगतं पुण्यक्रियावस्तुचित्तमुत्पद्यते । ततोऽप्यनन्तरं तत्कुशलमूलवासनावासितं विशिष्टतमञ्चित्तं परिणामनाकारेणोदयमासादयति । प्रतीत्यसमुत्पादधर्मताबलादिति स्थितमेतद्वस्तुतत्वम् । क्षणेन व्यवहारायोगाद्बालजनानुरोधेन

सन्तानापेक्षणात् सामयिकत्वेन च शब्दवृत्तेरेवञ्चाच बोधिसत्त्वेन महासत्त्वेनानुमोद्यानुमोदनासहगतं पुण्यक्रियावस्तु सर्वज्ञतायां परिणामयितव्यमित्यनेन वाक्येनोक्तमार्यमैत्रेयेण कर्मकर्तृक्रियादिरूपतया। तच च वस्तुभागं परित्यज्य शब्दमाचमेवं गृहीत्वा बालजनोत्त्रासकरो विकल्पो न कार्य इति। किञ्चैवमनुमोद्यानुमोदनासहगतं पुण्यक्रियावस्तु। अनुत्तरायां सम्यक्सम्बोधौ परिणामयामीति वाचं भाषेतेति प्राक् स्ववचनादार्यसुभूतिनापि संवृतिपक्षे यथोक्त एवाभिप्रायोऽभ्युपगन्तव्य इत्यभिप्रायेणाह। कथञ्चार्यसुभूत इत्यादि। यदि यथोक्ताभिप्रायो न गृह्यते, तदा गत्यन्तराभावात् कथं परिणामयितव्यम्। नैव कथञ्चित्तस्माद्यथोक्त एवाभिप्रायो ग्राह्य इत्यर्थः। तदेव कथयन्नाह। कथञ्चानुमोदनासहगतमित्यादि। परिगृहीता सुपरिगृहीतं परिणामयता सुपरिणामितं कथं भवतीति योज्यम्। अविपर्यासलक्षणपरिणामनामनस्कारार्थमाह। अथ खल्वायुष्मान् सुभूतिरित्यादि। आरभ्येति विकल्पकेन विज्ञानेनामुखीकृत्य। अधिष्ठानं कृत्वेति। अग्रतो विषयभावेनावस्थाप्य। परिणामयामीति वाचा परिणामनाद्विकल्पेन परिणामः कृतस्तस्मात् सर्वस्यैव विकल्पस्य प्रकृत्या स्वभावप्रतिभासेऽनर्थेऽर्थाध्यवसायेन प्रवृत्तेर्भ्रान्तत्वमित्यभिप्रायेणाह। कथन्न सञ्ज्ञाविपर्यास इत्यादि (p. 142, 11)। परिहारार्थमाह। स चेदार्यसुभूत इत्यादि। तस्मिंश्चित्ते न चित्तसञ्ज्ञीभवतीति। परिणामकचित्ते तस्मिन् परमार्थतो न चित्ताभिनिवेशीभवति। एवं को गुणो भवती-

त्याह । एवं बोधिसत्त्वेनेत्यादि । उपसंहरन्नाह । यथा तच्चित्तमित्यादि । इदं तद्वर्तमानं परिणामकञ्चित्तमित्यभिनिवेशेन तत्त्वतो यथा तच्चित्तं न सञ्जानीते न प्रतिपद्यते । तथा यदि परिणामयति तदैव सम्यगनुपलम्भहेतुप्रवृत्तत्वान्न सञ्ज्ञाविपर्यास इत्यादि योज्यम् । एतदुक्तम् । "यदि तस्य विकल्पस्याविषयस्य विषयवत्तां गृह्णीयात्तदा भ्रान्तो भवेत् । यावता मायाकारवदसौ तज्ज्ञानमविषयमविषयतयैवावगम्य विकल्पेन परिणामनेऽपि स्वरूपपरिज्ञानात् कथं भ्रान्तो भवती"ति । सामर्थ्यकथितमप्यर्थं स्पष्टयन्नाह । अथ येन चित्तेनेत्यादि ।

मायाकारो यथा कश्चिन्निर्मिताश्वादिगोचरम् ।
चेतो निर्विषयं वेत्ति तेन भ्रान्तो न जायते ॥

इति न्यायेन परिणाम्यमानचित्तादावपि मायापुरुषस्येव वर्तनान्न विपर्यास इत्याह । स चेत् पुनरित्यादि । यच्चित्तमिति परिणाम्यमानम् । एवं सञ्जानीत इति । वक्ष्यमाणक्षीणत्वादिना प्रयोगपृष्ठावस्थायां प्रतिपद्यते । एवं समन्वाहरतीति (p. 143, 1) । मौलावस्थायाम् । तस्यापि चित्तस्य सैव धर्मतेति । परिणामकचित्तस्य स्वभावविरहात् सैव क्षीणत्वादिधर्मता । यैरपि धर्मैरिति वस्त्वादिभिः । येष्वपि धर्मेष्विति सर्वज्ञतादिषु । अमुमेवार्थमनागतादिहारकत्रयभेदेन दर्शयन्नाह । यथातीतानामेवमनागतानामित्यादि । स एव धर्मोऽक्षय इति । धर्मतारूपेण क्षयाभावादक्षयो बुद्धत्वम् । न धर्मो धर्मं परिणामयतीति

(p. 149, 10)। धर्मः परिणामनामनस्कारः पुण्यक्रियावस्तु धर्मम्। ननु परिणामयामीति शब्दोल्लेखेन परिणामनाद्विकल्पः समाक्षिप्तस्तस्य च प्रकृत्या स्वप्रतिभासेऽनर्थेऽर्थाध्यवसायेन प्रवृत्तेर्भ्रान्तत्वात्कथं न सञ्ज्ञादिविपर्यास इति। तत्कस्य हेतोरित्याशङ्क्याह। तथाहि स तामित्यादि। एतदुक्तम् "यद्यारोपितस्य तात्त्विकस्य च रूपस्य विभागं न जानीयात्तदा दृश्यविकल्प्यावर्थावेकीकृत्य स्वप्रतिभासेऽनर्थेऽर्थाध्यवसायेन प्रवर्तनाद्भ्रान्तो भवेद्यावता विकल्पविषयमारोपितमारोपितात्मना ऽलीकरूपेण निश्चिन्वन् संवृत्या स्वलक्षणञ्च वस्तु निर्विकल्पकज्ञानगोचरं पृथगेव मायोपमात्मकं मायोपमात्मनाऽवितथरूपेण पश्यन् यदा परिणामनां नाभिनिविशते न च परिणाम्यमानं चित्तं परिणामकञ्चित्तं जानातीत्यपि प्रतिपद्यते। न च धर्मो धर्मं जानातीत्यवगच्छति। तदा कथं विपर्यस्तो नामे"ति। यथोक्तमेवार्थं व्यतिरेकमुखेन स्पष्टयन्नाह। स चेत् पुनरित्यादि। नन्ववबोधमन्तरेण प्रवृत्त्यसम्भवात् कथं जानानो न परिणामयतीति। तत्कस्य हेतोरित्याशङ्क्याह। तथाहि स तां परिणामनामभिनिविशत इति। प्रमाणबाधितभावरूपां तत्वेनेति शेषः। विविक्तपरिणामनामनस्कारमाह। सचेत् पुनरस्यैवं भवति सोऽपि पुण्याभिसंस्कार इति। पुण्यं कुशलमूलान्यलोभादीनि। तस्याभिसंस्कारः तत्समुत्थापिका क्रियाचेतना। आत्मादिसम्बन्धदोषरहितत्वाद्विविक्तः। मायोपमतया सर्वोपद्रवप्रशमहेतुत्वेन शान्तः। शान्तत्वादिरूपेणाप्यभिनिवेशो

विपर्यास इत्याह । स चेदेवमित्यादि (p. 150, 1)। यदि शान्ता इत्याद्येवंरूपेण भावतो न सञ्जानीते तदा सम्यक् प्रवृत्तत्वादेवमियं तस्य प्रज्ञापारमितेति योज्यम् । बुद्धकुशलमूलस्वभावानुस्मृतिपरिणामनामनस्कारं निर्दिशन्नाह । यदपि तत्तेषां बुद्धानामित्यादि । यादृश एव परिणाम इति मायोपमः । तदपीति परिणामकञ्चित्तम् । संवृत्याऽविचारैकरम्यपूर्वपूर्वस्वकारणमाश्रित्य कुशलमूलस्यैवोत्पादात्तज्जातिकम् । स्वसामान्यलक्षणरूपेण यथाक्रममर्थक्रियासु योग्यत्वादयोग्यत्वाच्च तल्लक्षणं तन्निकायम् । धर्मधातुस्वभावत्वात्तत्स्वभावम् । सचेदेवं संजानीत इति। निमित्तत इति शेषः । बुद्धिपूर्वकत्वाद् व्यापाराणां कथं प्रतिपद्यमानो न परिणामयतीति । तत्कस्य हेतोरित्याशङ्क्याह । न हि बुद्धा इत्यादि । निषेध्याभावे निषेधानुपपत्तौ तच्च शून्यत्वादौ तत्त्वाभिनिवेशो विपर्यास इत्यभिप्रायः । प्रकारान्तरमप्याह । यच्चातीतमित्यादि । असम्प्राप्तमिति । वर्तमानकालतां न प्रतिपन्नम् । स्वभाववैधुर्येणावस्थानानुपपत्तेः स्थितिं नोपलभ्यते । सहकारी कारणतया नैव निमित्तम् । उपादानकारणतया न विषयः । यथोक्तरूपेणालम्बनात् सचेदेवं निमित्तीकरोति । तथैव निषेधाभिनिवेशेन वस्तुतत्त्वापरिज्ञानान्न समन्वाहरति । ततो विपर्यस्तत्वान्न परिणामयतीति । अनिमित्ताकारेण तर्हि परिणामनायां काष्ठादेरपि प्राप्नोतीत्याशङ्क्याह । अथ स्मृतिवैकल्येनेत्यादि । स्मृत्यभावेन शून्यतादिकं काष्ठादिभावो न निमित्तीकरोति ।

तथापि वस्तुत्वापरिज्ञानान्न समन्वाहरति। एवं स्मृतिवैकल्यादनवबोधाद्वा देवदत्तादिर्न मनसिकरोति किञ्चित्तथापि पूर्ववन्न समन्वाहरति। ततश्च तथैव विपर्यस्तत्वान्न परिणामयतीति वाक्यार्थः। यदि निमित्ताकारेणानिमित्ताकारेण च न परिणामस्तदा कथं तर्हि क्रियतामित्याह। अथ तन्निमित्तमित्यादि। एतदुक्तम् "निमीलिताक्षजात्यन्धादीनामिव प्रत्ययवैकल्येनामनसिकारमात्रान्न भावादिविपर्यासवासना प्रहीयते। असञ्ज्ञिसमापत्त्यादिव्युत्थितस्येव योगिनः पुनरपि भावाद्यभिनिवेशमूलस्य रागादिक्लेशगणस्योत्पत्तेः। न चापि विना विपर्यासप्रहाणेन पूर्वोपलब्धेषु रूपादिषु पटुतरतदनुभवाहितमनसिकारपरिवर्जनं शक्यं कर्तुम्। अस्य परिवर्जने दाहापरिवर्जनवत्। तथाह्यमी रूपादिमिथ्याविकल्पा न कण्टकादिवदुत्कील्य चेतसोऽपनेतव्याः। किन्तर्हि भावादिष्वस्तित्वविपर्यासबीजापगमात्। अतस्तदविनिवृत्तावप्रहीणतिमिरदोषस्येव पुंसोऽलीकरूपाद्यभिनिवेशः प्रवर्तमानः केन वार्येत। तच्च विपर्यासबीजं योगिनः प्रज्ञाचक्षुषा निरूपयतः सर्वधर्माणां सम्यग्ज्ञानालोकेनादर्शनान्न भवति। एवं सत्युत्खातमूला इव तरवो निर्मूलतया दुर्विकल्पाश्चेतसि तत्त्वतो न पुनर्विरोहन्तीत्येवं तन्निमित्तं तथागतकुशलमूलपरिणामकञ्च चित्तं मायोपमतया समन्वाहरति। तद्रूपेणैव तत्त्वतोऽनभिनिवेशान्न च निमित्तीकरोति" इति। उपायकौशलपरिणामनामनस्कारं कथयन्नाह। एवमत्र बोधिसत्त्वेनेत्यादि। उपायकौशलमिति। दानादीनामनुष्ठानेऽप्यनुपलम्भः। ननु

भिन्नत्वादुपायकौशलशिक्षाया मातुः श्रवणादिना कः सम्बन्ध इति। तत्कस्य हेतोरित्याशङ्क्याह। नहि प्रज्ञापारमितामित्यादि (p. 151, 1)। एतदुक्तम् "दानादीनामनुपलम्भेन या प्रज्ञापारमिताया परिणामनाक्रिया सैव यस्मादुपायकौशलशिक्षा तस्मान्मातुः श्रवणादिकं विना न भवती"ति। एतदेव स्पष्टयन्नाह। तच य एवं वदेत्यादि। स्याद्वचनीय इति वक्तव्यो भवेदित्यर्थः। ननु भिन्नत्वात्परिणामस्य प्रज्ञापारमितया सह कः सम्बन्ध। इति तत्कस्य हेतोरित्याशङ्क्याह। निरुद्धा हीत्यादि। पूर्वकुशलमूलोपार्जकचित्तचैतसिकधर्माणां तद्वासनानाञ्च तत्त्वतोऽनुत्पादान्निरुद्धा हि त आत्मभावा निरुद्धा हि ते संस्कारा इति द्वयमुक्तम्। प्रयोगमौलपृष्ठावस्थायामुपलम्भाभावेन त एव यथाक्रमं शान्ता विविक्ता विरहिता उपलब्धित इति योज्यम्। अथवा तदाकारेण निराकारेणान्याकारेण च ज्ञानेन ग्रहीतुमशक्यत्वाद्यथाक्रमं वाच्यम्। अयमभिप्रायः। परिणाम्यमानधर्माणां तद्वासनानाञ्च तत्त्वतोऽनुत्पादात् परिणामकज्ञानपथातीतत्वेन यस्मात् परिणामानुपपत्तिस्तस्माद्विकल्पेनाध्यारोप्य प्रज्ञापारमिताबलेन मायोपमधर्मताधिमोक्षादविपर्यस्तः सम्यगुपायकौशलपरिणामः शक्यते कर्तुमिति। अनिमित्तपरिणामनमनस्कारं वक्तुमाह। अपि तु खलु पुनः स पुद्गल इत्यादि। शून्यताद्येकरूपेण ग्रहणान्निमित्तीकृत्य पुनः पुनर्मनसिकरणाद्विकल्प्य च यथाभूतमपगतभावाभावादिरूपं तत्त्वं पश्चात्स्वविकल्पप्रतिभासेऽनर्थेऽयथाभूतेऽर्थाध्यवसायेन यथाभूतसञ्ज्ञी पारमार्थिक-

सञ्ज्ञी सन् विकल्पप्रतिभासितमर्थमुपलम्भमनुपलम्भं बुद्धत्वे परिणामयेदिति वाक्यार्थः। नन्वर्थोपलम्भाभावात् कथमेवं परिणामितम्। नाभ्यनुजानन्तीति। तत्कस्य हेतोरित्याशङ्क्याह। एष एव हि तस्येत्यादि। एतदुक्तम् "यस्मात् पुद्गलः शून्यताद्याकारतया परिनिर्वाणमनुत्तरां बोधिं निमित्तीकरोति विकल्पयति च स्वविकल्पप्रतिभासेनाकारेण तथैव चोपलभते। तस्मादध्यारोपितार्थरूपेण ग्रहणादविचिकित्स्यत्वेन तस्यैवं महानुपलम्भ इति। ननूपलम्भस्य मनःप्रसादादिकारित्वात् कथं तत्सञ्ज्ञिनः परिणामना न महार्थकरी"ति। तत्कस्य हेतोरित्याशङ्क्याह। सविष इत्यादि। अभिमतधर्मतत्त्वाधिगमभ्रंशार्थेन मरणहेतुत्वात् सविषः। सर्वसंसारदुरुद्धरदुःखहेतुत्वेन सशल्यः। आदिकर्मिकाणां मनःप्रसादादिकारित्वेऽपि प्रमाणव्याहतत्वादिति शेषः। एतदेव स्पष्टयन्नाह। तद्यथापि नामेत्यादि। तत्र परिज्ञातविषदोषरूपत्वात् पण्डिताः। विषस्वरूपाज्ञानाद्बालाः स्वरूपावगमेऽप्यनवधारितमारणशक्तित्वाद्दुःप्रज्ञाः। सुखोत्पादकत्वात् सुखकरं पर्यवसाने दुःखफलत्वाद्दुःखविपाकम्। एक इत्युपलम्भसंज्ञिनः श्रुतचिन्ताभावनावस्थासु मिथ्यावरणाद्यथाक्रमं दुर्गृहीतेनेत्यादिपदत्रयम्। मायोपमार्थस्य सविपर्यासविनिवृत्तिप्रयोजनानवगमात् सुभाषितस्यार्थमजानानाः। मायोपमपदार्थस्वरूपावधारणशक्तिवैकल्याद्यथाभूतमर्थमनवबुध्यमानाः। नन्वादिकर्मिकस्य मनःप्रसादादिकारित्वात् कथमुपलम्भः सदोषो येन तत्संज्ञिनः परिणामो नास्तीति। तत्कस्य

हेतोरित्याशङ्क्याह । सविषत्वादुपलम्भस्येति (p. 152, 22) । प्रमाणव्याहतत्वेनेति मतिः । नैवं शिक्षितव्यमित्युपलम्भयोगेन शिक्षा न कार्या (p. 153, 1) । बुद्धानुज्ञातपरिणामनामनस्कारं निर्दिष्टुमाह । कथं पुनरनेन शिक्षितव्यमित्यादि । अनभ्याख्यातुकामेनेति तथागतनिर्दिष्टार्थानुष्ठानेन फलप्राप्तिदर्शनादतिरस्कर्तुकामेन । बुद्धज्ञानेन प्रज्ञाचक्षुषा सर्वधर्माविकल्पनविषयेण जानन्ति । बुद्धचक्षुषा सर्वाकारसर्वधर्माभिसम्बोधविषयेण पश्यन्तीति योज्यम् । यया धर्मतयेति मायोपमतया । अभ्यनुजानन्तीति । यथा सर्वमार्गानुपलम्भालम्बनेन मनस्कारेण परिणाम्यमानस्य स्वहस्तं प्रयच्छन्ति । अनपराध इति । निर्दोषत्वादकृतापराधः । अपगतोपलम्भविषयत्वान्निर्विषः परिणामः, रूपकायधर्मकायप्राप्तिहेतुत्वाद्यथाक्रमं महापरिणामो धर्मधातुपरिणामः । प्रयोगपृष्ठावस्थापुष्टत्वात् परिपूर्णः । मौलावस्थायां सम्यक् परिपूर्णत्वात् सुपरिपूर्णः । त्रैधातुकापर्यापन्नपरिणामनामनस्कारं प्रतिपादयन्नाह । पुनरपरं बोधिसत्त्वयानिकेनेत्यादि । अपर्यापन्नमिति कामादिधातुत्रयस्यानुपलम्भादप्रतिष्ठितम् । तत्र—

नरकप्रेततिर्यञ्चो मनुष्याः षड् दिवौकसः ।
कामधातुः स नरकद्वीपभेदेन विंशतिः ॥
ऊर्ध्वं सप्तदशस्थानो रूपधातुः पृथक् पृथक् ।
ध्यानं त्रिभूमिकं तत्र चतुर्थं त्वष्टभूमिकम् ॥
आरूप्यधातुरस्थान उपपत्त्या चतुर्विधः ।
ध्यानादूर्ध्वं ससंस्थानो रूपे सद्भावतोऽथवा ॥

अतीतादिकालत्रयेऽप्रतिस्थितत्वादाह । नाप्यतीतमित्यादि । ननु कामादिधातावतीतादिकाले चावस्थितस्य चित्तक्षणस्य परिणामात् कथं तत्र न प्रतिस्थित इति । तत्कस्य हेतोरित्याशङ्क्याह । त्र्यध्वत्रैधातुकेत्यादि (p. 154, 1)। एतदुक्तम् त्र्यध्वत्रैधातुकस्य तत्त्वेनानुत्पादादपर्यापन्नत्वे कथं तत्र स्थितः । परिणाम इति । यत्रापि धर्म इति बुद्धत्वे धर्मधातुवत् क्षयभावादविनष्टः परिणामः । अपर्यापन्न इत्यभिनिवेशो बन्धनमित्याह । अथ तमित्यादि । उपसंहरन्नाह । तत्र योऽयमित्यादि । प्रश्नमुखेन सम्यगुपदेशकत्वात् । आर्यसुभूतेः साधु साध्विति साधुकारः । अन्यथार्यमैत्रेयेणोपदिष्टत्वात् कथमन्यं प्रति साधुकारः साधुः स्यात् । नन्वविपर्यस्तधर्मदेशनाऽभावे कथं शास्तृकृत्यमिति। तत्कस्य हेतोरित्याशङ्क्याह। यो ह्ययमित्यादि। एतदुक्तम्। "यस्मान्मायोपमतया सर्वोऽयं परिणामो धर्मधातुपरिणामस्तस्मादविपर्यस्तदेशनया बुद्धकृत्यं करोषीति। अतोऽनन्तरं महापुण्योदयपरिणामनामनस्कारो वक्तव्यः । स च मृदुमध्याधिमात्रभेदेन त्रिविध" इति । मृदुमधिकृत्याह । अस्यामेव धर्मतायामित्यादि । यावत् पञ्चानामभिज्ञानां लाभिनो भवेयुरिति (p. 156, 3)। एतदुक्तम् "दशकुशलकर्मपथसेविनः सत्त्वानारभ्य यावत् पञ्चाभिज्ञानां पुण्याभिसंस्कारान्मृदुभूतात्तदनुपलम्भालम्बनमनस्कारेणानुमोदनापूर्वकपरिणामस्याधिकपुण्यत्वेन मृदूपाधिभेदान्मृदुमहापुण्योदयपरिणामनामनस्कार" इति ।

मध्यमावेदयन्नाह। तिष्ठन्तु खलु पुनरित्यादि। यावत् सर्वे प्रत्येकबुद्धा भवेयुरिति (p. 156, 21)। एतदुक्तं "प्रथमफलस्थमारभ्य यावत् प्रत्येकबुद्धानां पुण्याभिसंस्कारान्मध्यभूतात्तदनुपलम्भालम्बनमनस्कारेणानुमोदनापूर्वकपरिणामस्याधिकपुण्यत्वान्मध्योपाधिभेदेन मध्यमहापुण्योदयपरिणामनामनस्कार" इति। अधिमात्रं वक्तुमाह। तिष्ठन्तु खलु पुनरित्यारभ्य यावत् सर्वेऽप्युपलम्भसञ्ज्ञिनः दानं दद्युरिति (p. 157, 7)। गङ्गानदीवालुकोपमेषु त्रिसाहस्रमहासाहस्रेषु लोकधातुषु सम्यक्सम्बोधिप्रस्थितसर्वसत्त्वानां तावद्भिरधिकैर्वा सोपलम्भैः सर्वैश्चीवरपिण्डपातादिभिस्तावतः कल्पानुपस्थानकरणपुण्यादधिमात्रभूतात्तदनुपलम्भालम्बनमनस्कारेणानुमोदनापूर्वकपरिणामस्याधिकपुण्यत्वेनाधिमात्रोपाधिभेदादधिमात्रमहापुण्योदयपरिणामनामनस्कार इति समुदायार्थः। अवयवार्थस्तूच्यते। सम्प्रस्थिता इति प्रणिधिप्रस्थानचित्ताभ्यां प्रवृत्ता इत्यर्थः। ते सर्व इति। दद्युरेतेन पर्यायेणेति वक्ष्यमाणेन सम्बन्धः। तमेव कथयन्नाह। अन्येष्वित्यादि। अन्येष्विति अपरापरेषुः। उपतिष्ठेदिति। सत्कृदुपस्थानं कुर्यात्। सर्वसुखोपधानैरिति। स्नानोद्वर्तनादिभिः, सर्वैः सुखसंस्पर्शविहारैरिति। यथेच्छं चङ्क्रमणादिविहारैरुपतिष्ठेदिति पूर्वेण सम्बन्धः। एतेन पर्यायेणेति। ते सर्वे सम्यक्सम्बोधिसंप्रस्थिताः सत्त्वा यथोक्तापरापरलोकधातुस्थितसर्वसत्त्वानामेतेन पर्यायेणैकैकसत्त्वक्रमेणोपस्थानात्तच्च

दानमुपलम्भसञ्ज्ञिनो दद्युरिति यावत्। तान् सर्वसत्त्वानित्यादि। तानन्यान् यथोक्तलोकधातुस्थितान् सर्वसत्त्वानेकैकं परिकल्प्य कृत्वा पुनस्तानेव सर्वबोधिसत्त्वानेकैको बोधिसत्त्वस्तावतः कल्पानुपतिष्ठेदिति वाक्यार्थः। क्रमेणेत्यभिप्रायात् पूर्वहारकादस्य विशेषः। अनेन पर्यायेण दानं दद्यादिति। यथा गङ्गानदीवालुकोपमान् कल्पानेकं बोधिसत्त्वमेको बोधिसत्त्वः समुपतिष्ठेदेवं स एवैको बोधिसत्त्वोऽनेन गङ्गानदीवालुकोपमकल्पावस्थानक्रमेण तेषामपरापरनिर्दिष्टलोकधातुसङ्गृहीतानां सर्वेषां बोधिसत्त्वानां सुखोपधानार्थं दानं दद्यादेवमनन्तरोक्तक्रमेण सर्वेऽपि ते सम्यक्सम्बोधिसम्प्रस्थिता दानं दद्युः। रूपी भवेदिति। परमाणुस्वभावरूपस्कन्धः स्यात्। नमायेतेति प्राचुर्यान्न तिष्ठेत्। ननूपलम्भसञ्ज्ञिनां दानमयः पुण्याभिसंस्कारोऽप्रमेयोऽपि कथं यावदुपनिषदमपि न क्षमत इति (p. 158, 7)। तत्कस्य हेतोरित्याशङ्क्याह। तथाहीत्यादि। एतदुक्तम् "यस्मात्तेषां सुप्रभूतं दानं दत्तं सदेकत्वादिसंख्यादिरहितमप्यप्रमेयादिसंख्यायोगादप्रमेयं सुबह्वित्यादिपरिसंख्यातं भवति। तस्मात्तद्धेतुकपुण्याभिसंस्कारः परिणामनापुण्यस्कन्धस्याप्रमेयादिसंख्यारहितस्य यावदुपनिषदमपि न क्षमत" इति। भगवदधिष्ठानेन कृतादरतया देवपुत्राः कारिचमाहुः। यच्च हीत्यादिना। नयचयविनेयसत्त्वमार्गोपदेशहेतुभावव्यापारयुक्तत्वेन जगदर्थकरणान्महापरिणामः। कथमेवमित्यादिशङ्कायामाह।

यच्च हि नामेत्यादि। यस्मिन्नुपायकौशले सति यस्मात्तावन्तमप्रमेयादिसंख्यावन्तं नाम प्रसिद्धं पुण्यस्कन्धमभिभवति। तस्मान्महापरिणाम इति वाक्यार्थः। सम्यग्देशनया सञ्जातप्रसादातिशयत्वेन पूजापूर्वकं प्रशंसार्थमाह। अथ खलु चायस्त्रिंशानामित्यादि। पुरतः समन्ताच्च यथाक्रमं प्रकरक्षेपादभ्यवाकिरन्नभिप्राकिरन्नित्यर्थभेदः। एवमन्येभ्य इति। यामादिभ्यः। एवमेवेति चायस्त्रिंशकायिकानामिव महापरिणामोऽयमित्यादिशब्दमुदीरयन्ति। पुनः पुनरुच्चारणाद्घोषमुदीरयन्ति। एवमेव पेयालेन कर्तव्यमिति। एवमेव शब्दमुदीरयन्ति घोषमनुश्रावयन्तीति पदद्वयं सर्वत्र महापरिणामोऽयमित्यादिहारकान्तेऽतिदेशनीयमित्यर्थः। चिररात्रसञ्चितमिति दीर्घकालोपार्जितम्। महाविस्तरसमुदानीतमिति। अनेकप्रयोगयत्नसाध्यम्। पुनरपि परिणामस्य माहात्म्यार्थमाह। अथ खलु भगवांस्तानित्यादि (p. 159, 13)। ननु प्रयोगादिमहत्त्वेऽपि कथं दानमयः पुण्याभिसंस्कारः स्वल्पप्रयोगादिजनितपरिणामपुण्यक्रियावस्तुनो यावदुपनिषदमपि न क्षमत इति। तत्कस्य हेतोरित्याशङ्क्याह (p. 161, 8)। तथा हि ते बोधिसत्त्वा इत्यादि। प्रमाणव्याहतत्वेनोपलम्भस्य विपर्यस्तत्वादिति मतिः। अनुमोदनापूर्वकमपि सर्वमेवाधिमुक्तिमनस्कारेणोपार्जितं कुशलमूलं सर्वधर्मानुपलम्भभावनया सर्वसत्त्वार्थमनुत्तरबोधौ मायापुरुषेणेव परिणामयितव्यमित्येक एव सर्वसत्त्वानां त्रियाननिर्याणमार्गोपदेशहेतुभावव्यापारयुक्तः परिणामनामनस्कारः।

कस्यचित्तु क्वचिदभिनिवेश इति तत्प्रतिपक्षार्थं यथोक्त-न्यायेन मन्दबुद्धिजनानुग्रहाय द्वादशप्रकारः प्रभेदः कृतः। तीक्ष्णप्रज्ञानामवज्ञाविनिवृत्त्यर्थं नातिप्रभेदः। तथाचोक्तम्।

विशेषः परिणामस्तु तस्य कारित्रमुत्तमम्।
नोपलम्भाकृतिश्चासावविपर्यासलक्षणः॥ २१॥
विविक्तो बुद्धपुण्यौघस्वभावस्मृतिगोचरः।
सोपायश्चानिमित्तश्च बुद्धैरभ्यनुमोदितः॥ २२॥
त्रैधातुकाप्रपन्नश्च परिणामोऽपरस्त्रिधा।
मृदुमध्याधिमात्रश्च महापुण्योदयात्मकः॥२३॥ इति।

अनुमोदनामनस्कारेण स्वपरपुण्यक्रियासमतां प्रति-लभत इत्यतोऽनन्तरमनुमोदनामनस्कारार्थमाह। अथ खल्वायुष्मन्नित्यादि। कियतेति कियन्मात्रेण प्रकारेण। न गृह्णीते न मन्यते। नोपलभत इति तत्त्वतः प्रयोगाद्यव-स्थास्विति योज्यम्। न कल्पयति न विकल्पयति न समनुप-श्यतीति। यथाक्रममतीतानागतप्रत्युत्पन्नानिति सम्बन्धः। अभूतपरिकल्पप्रभवत्वात्कल्पनाविठयिता वर्तमानस्वसा-मान्यरूपविरहाद्यथाक्रममजाता अनिर्जाताः। अती-तादागमनाभावेनानागतिकाः। अनागते गमनाभावे-नागतिकाः। धर्मतेति मायोपमरूपता। इयतेति। एता-वतानन्तरप्रकारेणेत्यर्थः। यथाविमुक्तिरिति (p. 162, 17)। यथा क्लेशज्ञेयावरणविगतिरनुत्पत्तिलक्षणा। तत्त्वेन सांक्ले-शिकधर्मायोगादबद्धानां वैयवदानिकधर्मविरहादमुक्ता-नाम्। यस्मादव्याहतदर्शनालोकस्य शास्तुर्यथाविभागशः

प्रत्यात्मनि प्रतिभासिते तथा विभागेनैव जगद्धितविधित्सया तेन द्रष्टा करुणामयेन भगवता कर्मफले प्रोक्ते। तस्मादतीन्द्रियमपि सर्वं यथादर्शनमेव स्थितमिति भावः। संसारनिर्वाणाप्रतिस्थानादसक्तानाम्। अनुमोदनाधिकारे प्रसङ्गात् परिणामयामीति। परिणामनामनस्कारः कथितः। मायोपमतया संसरणाभावादसंक्रान्तितो विनाशाभावादविनाशत इति योज्यम्। प्राणातिपातादित्रिविधकायिककर्माभावात् कायसुचरितम्। मृषावादादिचतुर्विधवाचिककर्मविगमाद्वाक्सुचरितम्। अभिध्यादित्रिविधचैतसिककर्मवियोगान्मनःसुचरितम्। पूर्ववत्तत् कस्य हेतोरित्याशङ्क्य तथैवाभिप्रायेणाह। तथाहि ते बोधिसत्त्वा इत्यादि (p. 165, 5)। पैशुन्यपारुष्यसम्भिन्नप्रलापैरभिधानादाक्रुष्टः। दण्डादिभिस्ताडनादभिहतः। हठेन नियमकरणात् परिभाषितः। उन्नतिलक्षणेन मानेन सह वर्तनात् समान इत्येके। समानशब्दः सन्नित्यर्थे वर्तत इति केचित्। तथैव तत्कस्य हेतोरित्याशङ्क्याह। तथा हि त इत्यादि (p. 166, 19)। उत्तमवीर्यारम्भप्रदर्शनार्थं स्थानचङ्क्रमणयोरुपादानात्तिष्ठन्तश्चङ्क्रमाभिरूढा इति द्वयमुक्तम्। अनभ्युत्साहलक्षणविषादविगमादविषीदन्तः। स्त्यानमिद्धेनेति (p. 167, 8)। मोहांशिकचित्तकर्मण्यता स्त्यानं दध्याद्युपयोगनिमित्तमागम्य मोहांशिकश्चेतसोऽभिसंक्षयो मिद्धम्। पूर्ववत् तत्कस्य हेतोरित्याशङ्क्याह। तथा हीत्यादि (p. 168, 3)। चत्वारि ध्यानानि समापद्येरन्निति। लौकिकानि रूपधातुसंगृहीतानि चत्वारि ध्यानानि भावयेयुः।

तथैव तत्कस्य हेतोरित्याशङ्क्य पूर्ववदाह। तथाहि ते बोधिसत्त्वा इत्यादि। तदयं समासार्थः संवृत्युपायेन कुशलमूलान्युपलभ्य प्रमुदितचित्तेन परमार्थतोऽनुपलम्भतयाऽनुमोदनीयानीत्यनुमोदनामनस्कार इति। तथा चोक्तम्।

उपायानुपलम्भाभ्यां शुभमूलानुमोदना।
अनुमोदे मनस्कारभावनेह विधीयते ॥ २४ ॥ इति

अभिसमयालङ्कारालोकायां प्रज्ञापारमिताव्याख्याया-
मनुमोदनापरिणामनापरिवर्तो नाम षष्ठः ॥

सास्रवभावनामार्गानन्तरमनास्रवो भावनामार्गो वक्तव्यः। स च द्विविध इति। प्रथममभिनिर्हारलक्षणं भावनामार्गं वक्तुं स्वभावाभिधानादाह। अथ खल्वायुष्मा-नित्यादि (p. 170, 2)। तथागतज्ञानस्य निष्पादनहेतुत्वा-त्सर्वज्ञज्ञानपरिनिष्पत्तिः। सर्वज्ञत्वमिति रूपाद्यविपरीत-दर्शनं स्वभाव इत्यर्थः। एवमित्यादिवचनेन लब्धप्रसादा-तिशयत्वादभिनिर्हारस्य विस्तरेण ज्ञानस्वाभाव्यपरिदीप-नार्थमाह। अवभासकरीत्यादि। उष्मगतज्ञानालोकत्वा-दवभासकरी। कायवाङ्मनोभिः प्रणामान्नमस्करोमि। यस्मान्नमस्कारार्हत्वान्नमस्करणीया। मूर्धावस्थाप्राप्तत्वेना-श्रद्धादिभिरसंसर्गादनुपलिप्ता। क्षान्तिस्वभावत्वेनापाय-संवर्तनीयकर्मविगमात् सर्वलोकनिरुपलेपा। अग्रधर्मरूप-त्वेन लोकोत्तरज्ञानोदयहेतुत्वादालोककरी। दुःखधर्मज्ञान-क्षान्त्या स्वदर्शनप्रहातव्यत्रैधातुकक्लेशप्रहाणात् सर्वत्रैधातु-कवितिमिरकरी। धर्मज्ञानेन विमुक्तिसाक्षात्करणात् सर्व-क्लेशदृष्ट्यन्धकारापनेत्री। अन्वयज्ञानक्षान्त्याऽऽर्यधर्मान्वया-वगमादाश्रयणीया। अन्वयज्ञानेन निश्चयावधारणादग्र-करी। समुदये धर्मज्ञानक्षान्त्यादिभिश्चतुर्भिः क्षणैः पूर्व-वद्व्यापारकरणाद्यथाक्रमं बोधिपक्षाणां धर्माणां क्षेमकरी, आलोककरी, सर्वभयोपद्रवप्रहीणाऽऽलोककरीति पद-चतुष्टयं योज्यम्। मांसदिव्यप्रज्ञाबुद्धधर्मचक्षुःपरिग्रहं कृत्वा पूर्ववन्निरोधे धर्मज्ञानक्षान्त्या मार्गदर्शयित्री। धर्मज्ञानेन चक्षुरन्वयज्ञानक्षान्त्या मृदुमध्याधिमात्रविपक्षापगमेनार्य-धर्मान्वयावगमान्मोहतमस्तिमिरविकरणी। अन्वयज्ञानेन निश्चयावधारणाद्वितिमिरकरणी। मार्गे तथैव धर्मज्ञान-

क्षान्त्याऽकरणी। धर्मज्ञानेन मार्गावतारणी। अन्वयज्ञानक्षान्त्या सर्वज्ञता। अन्वयज्ञानेन सर्वक्लेशज्ञेयावरणवासनानुसन्धिप्रहीणतामुपादायानुत्पादिका। सास्रवभावनामार्गेण कुशलधर्मप्रसवनादनिरोधिता। मायोपमत्वादनास्रवाभिनिर्हारभावनामार्गरूपेण सदावस्थानादनुत्पन्नानिरुद्धा। अत्यन्तविशुद्धिभावनामार्गस्वभावेनातिशयहितकारिणीत्वात् स्वलक्षणशून्यतामुपादाय माता। स च मृदुमध्याधिमात्रभेदात्त्रिविध इति यथाक्रमं दशबलकरी, अनवमर्दनी, नाथकरीति पदत्रयमुक्तम्। आनन्तर्यमार्गतया सर्वसंसारप्रहाणात् संसारप्रतिपक्षः। कूटः सामग्री तत्र तिष्ठतीति हेतुप्रत्ययजन्यो भावस्तथोक्तस्तत्प्रतिषेधादकूटस्थतामुपादाय विमुक्तिमार्गेण सर्वगुणसम्पदभिमुखीभावात् सर्वधर्मस्वभावविदर्शनी, पश्चादेवं समधिगततत्त्वानां यथाशयं त्रियानधर्मदेशनया परिपूर्णत्रिपरिवर्तद्वादशाकारधर्मचक्रप्रवर्तनीत्येवमेषां पदानामर्थनिर्देशो वाच्य इति पूर्वाचार्याः। तत्र त्रयः परिवर्ता द्वादशाकारा यस्मिन् धर्मचक्र इति विग्रहः। तत्रामी त्रयः परिवर्ताः। यदुत इदं दुःखमार्यसत्यं तत् खल्वभिज्ञाय परिज्ञेयं परिज्ञातम्। इदं दुःखसमुदय आर्यसत्यं तदभिज्ञाय प्रहातव्यं प्रहीणम्। इदं दुःखनिरोध आर्यसत्यं तदभिज्ञाय साक्षात्कर्तव्यं साक्षात्कृतम्। इदं दुःखनिरोधगामिनी प्रतिपदार्यसत्यम्। तत् खल्वभिज्ञाय भावयितव्यं भावितं मयेति भिक्षवः पूर्वमनुश्रुतेषु धर्मेषु योनिशोमनसिकुर्वतः प्रत्यक्षार्थत्वादनास्रवा प्रज्ञा चक्षुरुदयादि। निःसंशयत्वाज्ज्ञानं भूतार्थत्वाद्विद्या विशुद्धत्वाद्बुद्धिरुदयादी-

त्येतत्क्रियापदमेकैकस्मिन् सत्ये त्रिष्वपि योज्यम् । अतः प्रत्येकञ्चतुर्णामार्यसत्यानां त्रिपरिवर्तनात्त्रिपरिवर्तम् । चक्षुरित्यादयश्चाकाराश्चत्वारस्त्रिपरिवर्तनात् प्रतिसत्यं त्रय इत्यतो द्वादशाकारम् । एतावतैव जगदर्थसम्पादनात् परिपूर्णं त्रिपरिवर्तद्वादशाकारं धर्मचक्रमिव धर्मचक्रं यत् प्रथमतो वाराणस्यां भाषितं सूत्रम् । यथा राज्ञश्चक्रवर्तिनश्चक्ररत्नमग्रेसरं सर्वस्तु बलकायस्तदेवानुसरन् पश्चाद्गच्छति, तथा सकलत्रैलोक्याधिपतेस्तथागतस्य तत् सूत्रमग्रतः कृत्वा सर्वो देशनाधर्मः प्रभवति । अतस्तन्मातुराधिपत्येन प्रवर्तत इति । भगवती तथोक्ता । श्रेष्ठतां प्रतिपादयितुमाह । कथं भगवानित्यादि (p. 171, 12) । परिहरन्नाह । यथा शारिपुत्रेत्यादि । शास्तरीव प्रतिपत्त्यादिविधानान्नान्यथावबुद्धत्वसम्प्राप्तिरिति श्रेष्ठता कथिता । कुत इति कस्माद्धेतोरित्यर्थः । तदेवाह । किन्निदानेति । एतन्निदानेति पुण्यस्कन्धाभिभवहेतुका । अभिनिर्हारश्रेष्ठताधिकारे परिणामनामनस्कारपुण्यस्कन्धहेतुका पृच्छा किमर्थमिति चेदुच्यते । यत्र हि नाम सास्रवपरिणामनामनस्कारस्येदृशी श्रेष्ठता यद्बलादप्रमेयदानादिपुण्यस्कन्धाभिभवो जातस्तत्र सुतरामेवानास्रवभावनामार्गस्येति कथनाय परिणामाभिभूतपुण्यस्कन्धहेतुका पृच्छा कृता । अतिशयार्थमेवाह । अपितु खलु पुनरित्यादि (p. 172, 12) । सर्वज्ञतामार्गावतारायेति । बुद्धत्वप्रापकमार्गप्रमुदितादिभूमिष्ववतारनिमित्तम् । अपरिणायकमभव्यमिति । सारथिभावरहितमयोग्यम् । दान-

मित्यादि। तच्च दानं धर्मामिषाभयभेदात्त्रिविधम्। तथा शीलमकुशलनिवृत्तिकुशलप्रवृत्तिसत्त्वार्थक्रियारूपेण त्रिविधम्। तथा क्षान्तिरपि धर्मनिध्यानदुःखाधिवासनपरापकारमर्षणात्मिका त्रिविधा। तथा वीर्यमपि सन्नाहकुशलसत्त्वार्थप्रयोगभेदात्त्रिविधम्। तथा ध्यानं गुणसत्त्वार्थक्लेशप्रतिपक्षसुखाभिनिर्हारात्पूर्ववत्त्रिविधमिति। जात्यन्धभूतमिति। उत्पद्यमानमेव संवृतिपरमार्थसत्यसकलसत्त्वार्थालम्बनभेदात्त्रिविधप्रज्ञाचक्षुषा विहीनम्। कुतः पुनरिति। कस्मात्पुनर्नैवेत्यर्थः। पारमितानामधेयमेव कथयति। पारमिताशब्दमिति। आसाञ्चक्षुःप्रतिलम्भ इति (p. 173, 1)। दानादिपारमितानां धर्मताचक्षुःसमन्वागमः। सर्वधर्मानभिसंस्कृतिं प्रतिपादयितुमाह। कथं भगवन् बोधिसत्त्वेनेत्यादि। परिहरन्नाह। रूपस्येत्यादि। मायोपमतया रूपादेरधिगमो मातुरभिनिर्हार इत्यर्थः। उपसंहरन्नाह। एवमनभिसंस्कारेणेत्यादि। तथतारूपत्वात् सर्वधर्मविशेषानुत्पादनेनाधिगमो प्रयोगोऽनभिसंस्कारस्तेन स्कन्धानामधिगम इति यावत्। क्वचिदनभिनिर्हारेणेति पाठस्तत्राप्ययमेवार्थो ग्राह्यः। सर्वधर्मानुपलम्भेनाभिसमयार्पणार्थमाह। एवमभिनिर्हृतेत्यादि। न कञ्चिद्धर्ममर्पयतीति। यथोपलम्भादिविपर्यासस्तथा न कञ्चिदधिगमधर्मं योगिसन्ताने समुत्पादयति तदा प्रज्ञापारमितेति संख्यां गच्छत्यविपर्यस्तत्वादिति मतिः। सर्वज्ञतायास्त्वर्पणं युक्तमन्यथा निरर्थिकैव प्रज्ञापारमितेत्यभिप्रायवानाह। किमियम्भगवन्नित्यादि। विपर्यासद्वारेण नार्पयतीत्याह।

न यथोपलम्भ इत्यादि। तत्रोपलम्भो बाह्यार्थोपलम्भः। नाम चत्वारोऽरूपिणः स्कन्धाः। अभिसंस्कारो मायोपममेवेदं तत्त्वमित्यादिचित्ताभोगः। प्रकारान्तरव्यवच्छेदेनान्यथार्पणमित्याह। कथं तर्हीत्यादि (p. 174, 1)। यथा कौशिक नार्पयति तथार्पयतीति। येन प्रकारेण मायोपमतया कश्चिदभिनिवेशं विपर्यासं नार्पयति तथा सर्वज्ञतामर्पयतीत्यर्थः। न किञ्चिद्धर्ममुत्पादयतीति वैयवदानिकं न किञ्चिद्धर्मं निरोधयतीति सांक्लेशिकम्। प्रत्युपस्थितेत्यनुत्पादाय। अनुपस्थितेत्यनिरोधायेति योज्यम्। एवमप्यभिनिवेशो बन्धनमित्याह। सचेदेवमित्यादि। प्रयोगदर्शनभावनाविशेषमार्गेषु यथाक्रमं दूरीकरिष्यति रिक्तीकरिष्यति तुच्छीकरिष्यति न करिष्यतीति पदचतुष्टयं योज्यम्। प्रकारान्तरेणापि दूरीकरणादिकमाह। अस्त्येष इत्यादिना। भवत्येष रूपाद्यभिसंबोधपर्याय इत्यर्थः। ननु "धर्मतया रूपाद्येव प्रज्ञापारमिते"ति न्यायात् कथं रूपाद्यवगमेन मातुर्दूरीकरणादिकमिति। तत्कस्य हेतोरित्याशङ्क्याह। प्रज्ञापारमितायां हीत्यादि। एतदुक्तम्। "मायोपमतया यस्माद्रूपाद्येव जिनजननीत्येकस्वभावत्वेन न्यायात् परिदीपितायां प्रज्ञापारमितायां पृथग्रूपाद्यवगमो विपर्यासस्तस्माद्रूपाद्यवगमेन मातुर्दूरीकरणादिकमि"ति। महार्थतामाह। महापारमितेयमित्यादिना। बुद्धमहार्थसाधनान्महापारमिता। तच्च न महत्करोति। अधिकानुत्पादनात्। नाल्पीकरोति (p. 175, 3) व्यवस्थितानपकर्षणात्। तदेव यथायोगं कथयति।

न संक्षिपति न विक्षिपतीति।

"प्रसिद्धमाचस्य हि याऽयथार्थता
तदर्थसंबोधफलं हि शासनम्।"

इति भावः। न बलीकरोति। अपूर्वसमारोपात्। न दुर्बलीकरोति विद्यमानानुपवादात्। पृथग्जनव्यवस्थायां विपर्यासबलादल्पीयसी सर्वज्ञता मुक्त्यवस्थायां मातुः सामर्थ्येन विपर्यासापगमान्महती जाता। तत्कथमेवं वक्ष्यत इति। तत्कस्य हेतोरित्याशङ्क्याह। असंक्षिप्ता हीत्यादि। एतदुक्तम्। "विपर्यासापगमे मातुः सामर्थ्यस्य स्थितत्वेन यस्मात् सर्वज्ञताऽसंक्षिप्ताऽविक्षिप्ता तस्मान्न महती नाल्पीक्रियत" इति। तच्चाप्यभिनिवेशो बन्धनमित्याह। सचेदेवमित्यादि। किम्पुनरेवं सञ्ज्ञानान इति। वक्ष्यमाणोपलम्भं प्रतिपद्यमानः किं पुनः प्रज्ञापारमितायाञ्चरत्यपि तु महोपलम्भत्वान्नैवेत्यर्थः। ननूपलम्भस्य को दोषो येन तत् सद्भावान्न चरतीति। तत्कस्य हेतोरित्याशङ्क्याह। न ह्येष इत्यादि। एतदुक्तम्। "यस्मादेष प्रज्ञापारमितायाः सदृशः स्यन्दो निष्यन्दस्तदनुरूपं फलं सत्त्वनिर्वाणोपलम्भो न भवति। तस्मादुपलम्भभावान्न चरती"ति। कथं पुनरेतदिति। तत्कस्य हेतोरित्याशङ्क्याह। सत्त्वास्वभावेत्यादि। सत्त्वानामस्वभाव एव जातिः प्रकृतिर्यस्या इति सा तथोक्ता। एवं मन्यते सत्त्वानुत्पादप्रकृतिकाया मातुः कथं सत्त्वोपलम्भो निष्यन्दफलमिति। सत्त्वानुत्पादरूपतार्थमेवाह। सत्त्वास्वभावतयेत्यादि। तत्रास्वभावता विविक्तताऽचिन्त्यता यथाक्रमं कल्पितादेर्वेदितव्या। सत्त्वा-

विनाशधर्मता सदैवावस्थिता तथता । सत्त्वस्य मायोपमतया दर्शनमार्गेणानवगमः सत्त्वानभिसम्बोधनता । सत्त्वस्य पूर्वभावनामार्गेणाऽप्रतिपत्तिः सत्त्वयथाभूतार्थानभिसम्बोधनता । सत्त्वस्य बलं प्रमाणाव्याहतं सामर्थ्यं मायोपमत्वं तस्य प्राप्तिः समुदागमनता । तया तथागतबलस्य प्रज्ञापारमितायाः समुदागमनता वेदितव्या । यथोक्तस्वभावादिलक्षण एवाभिनिर्हारभावनामार्गोऽवसातव्यः । तथा चोक्तम् ।

स्वभावः श्रेष्ठता तस्य सर्वस्यानभिसंस्कृतिः ।
नोपलम्भेन धर्माणामर्पणा च महार्थता ॥२१॥ इति

तदनन्तरं द्वितीयोऽत्यन्तविशुद्धिलक्षणो भावयितव्यस्तदुत्पादानुत्पादहेतोर्यथाक्रमं परिग्रहत्यागेनेत्युत्पादहेतुं तावत्प्रतिपादयितुमाह । यो भगवन्नित्यादि (p. 176, 7) । मार्गान्तराकांक्षणान्न कांक्षिष्यति । सन्देहाभावान्न विचिकित्सिष्यति । अज्ञानविगमान्न धन्वायिष्यति । चिरचरितावीति । चिरं दीर्घकालं चरितमनुष्ठितं दानादि । श्रावकादिबोधावनिर्यातनेनावितुं रक्षितुं शीलमस्येति तथोक्तः । अनुगमिष्यति धर्मतोऽर्थतश्च । अनुभोत्स्यते तन्नयतः । अनुबोधयिष्यति परानुभयथा यथाक्रममित्येवमर्थभेदो वाच्यः । परिवारादिदानात्पर्युपास्यः । संशयार्थपरिपृच्छनात् परिपृच्छ्येति बुद्धसेवा कथिता । अधिमोक्षस्य पर्युपासनादिना कः सम्बन्धो येनाधिमोक्षबलात् पर्युपासनादिकं प्रतीयत इति । तत्कस्य हेतोरित्याशङ्क्याह । यः कश्चिदित्यादि । एतदुक्तम् । "विशिष्टकारणमन्तरेण तादृग्विधाधिमोक्षाद्यसम्भवात् तत्कारणं तथा-

गतपर्युपासनादिकमनुमीयत" इति। समाधानोत्पादना-च्छ्रोत्रमवदधाति। मण्डलादिकरणात्सत्कृत्य शृणोति। अप्रस्तुतार्थानभिधानात् कथं नोपच्छिनत्ति। चिर-चरितावी स (p. 177, 4) इति वचनेन दानादिरुक्तः। अनेकबुद्धपर्युपासनात् बहुबुद्धपर्युपासितः। सहेतुक-श्रवणादावनभिनिवेशं प्रतिपादयितुमाह। शक्या पुन-रित्यादि। उपलक्षयितुमित्यादिपदानि यथासंख्यमियं सेत्यादि पदचतुष्टयेन सम्बन्धनीयानि। तत्राकारलिङ्ग-निमित्तानि स्वसामान्योभयरूपाणि यथाक्रमं वेदि-तव्यानि। हेतुबलादपि श्रवणं संवृत्या न तु तत्त्वत इत्याह। नो हीदमिति। तदेवाह। नेयमित्यादि। प्रतीयमानेनापि स्कन्धादिना कथं न शक्यते श्रवणादि कर्तुमिति। तत्कस्य हेतोरित्याशङ्क्याह। सर्वधर्मेत्यादि। तत्र वर्तमानीभूत-स्कन्धादिस्वलक्षणशून्यत्वात् सर्वधर्मविविक्तत्वं कार्य-कारणान्तद्वयविगमादत्यन्तविविक्तत्वम्। तस्मात् चैयध्विक-शून्यत्वेन तत्त्वतः स्कन्धादिभिर्निर्देष्टुं न शक्यत इति वाक्यार्थः। तद्व्यतिरेकेण तर्हि निर्दिश्यतामित्याह। न चान्यत्रेत्यादि। प्रकारान्तरस्यानिषेधे कथमेवं लभ्यत इति। तत्कस्य हेतोरित्याशङ्क्याह। स्कन्धेत्यादि। उत्पाद-हेतुवैकल्येन शून्यम्। स्वरूपानवधारणाद्विविक्तम्। कार्य-सामर्थ्यविरहेण शान्तम्। एतदुक्तम्। "सर्वधर्मसंग्राहक-स्कन्धादीनां तत्त्वतो निःस्वभावत्वे तद्व्यतिरेकेण निर्देष्टुं न शक्यत" इत्यादि। इति हीत्याद्युपसंहारः। संज्ञा समज्ञा यथाक्रमं स्वसामान्यलक्षणोद्ग्रहणलक्षणे। प्रज्ञप्तिस्तत्सङ्केतो-

ग्रहणम् । व्यवहारः प्रज्ञप्तिपूर्वकौ हिताहितप्राप्तिपरिहारौ । विभज्येत्यादि (p. 178, 3) । प्रज्ञापारमितायोगार्थं येनोपायकौशलं विमाचतया मृद्वादिभेदेन भावितं स योगमापत्स्यत इति विभज्य वक्तव्यमेतदनेनोपायकौशलमुक्तम् । यथोक्तमेव सेवादित्रयमुत्पादहेतुः । तथा चोक्तम् ।

बुद्धसेवा च दानादिरुपाये यच्च कौशलम् ।
हेतवोऽत्राधिमोक्षस्य ॥

इति । अनुत्पादहेतुं निर्दिशन्नाह । स्यात् खलु पुनरित्यादि । अनधिमोक्षे किं कारणमिति । तत्कस्य हेतोरित्याशङ्क्याह । पूर्वमपीत्यादि । ततः पर्षद्भ्योऽपक्रान्ता इति प्रतिक्षेपचित्तेनेति शेषः प्रयोगाद्यवस्थात्रये यथाक्रमं सञ्चितेनेत्यादि वक्तव्यम् । कायासन्निधानान्न कायसामग्री । चित्तविक्षेपान्न चित्तसामग्री । प्रत्यक्षानुमानागमप्रमाणैर्यथासंख्यं न जानन्ति न पश्यन्ति न बुध्यन्ते । अत एव न वेदयन्ते परानिति शेषः । स्वरूपनिराकरणात् प्रत्याख्यास्यन्ति सामर्थ्यापह्नवात् प्रतिक्षेप्स्यन्ति (p. 179, 4) । अप्रियाभिधानात् प्रतिक्रोक्ष्यन्ति । कुशलमूलानुत्पादादुपहत्याकुशलवासनोत्पादेन दग्धाः स्वल्पदानादित्रययोगादल्पपुण्याः । मृदुमैत्र्यादिसम्भवादल्पकुशलमूलाः । कर्तुकामतापनयनाद्विच्छन्दयिष्यन्ति । स्वरूपापकर्षणकरणाद्विवेचयिष्यन्ति । पुनः प्रवृत्तिनिराकरणाद्विवर्तयिष्यन्ति । सर्वेणेत्यादि । सर्वेण बुद्धरत्नादिरूपेण । सर्वं शाक्यमुनितथागतादिरूपम् । सर्वथा मृदुमृद्वादिप्रकारभेदेन सर्वमधिशीलादिप्रकारम् । उत्पादनादुपस्थितेन । विनाशा-

भावात्समुत्थापितेन (p. 180, 2)। महानिरयेष्विति। जम्बूद्वीपस्याधो विंशत्या योजनसहस्रैरवीचिर्महानरकः। तत्प्रमाणस्तदुपरिष्टात् प्रतापनस्तपनो महारौरवो रौरवः संहातः कालसूत्रः सञ्जीवश्चेत्यष्टौ महानिरयाः। तेजःसंवर्तनीति। नरकगतिमुपादाय यावद्ब्रह्मलोके कश्चित् सत्त्वो नाविशिष्टो भवति तदा शून्यभाजने सप्त सूर्याः प्रादुर्भूय क्रमेणाप्मण्डलमारभ्य यावत् प्रथमं ध्यानं दहन्ति। अन्येषु लोकधातुष्विति। त्रिसाहस्रमहासाहस्रेषु प्रचुरदुःखानुभवे किं कारणमिति। तत्कस्य हेतोरित्याशङ्क्याह। यथापि नामेत्यादि सुगमः। पञ्चेति (p. 181, 3)। मातृवधः पितृवधोऽर्हद्वधः सङ्घभेदस्तथागतदुष्टचित्तरुधिरोत्पादश्चेत्येतानि पञ्चकर्माण्यनन्तरमवीचिमहानिरये जन्महेतुत्वादानन्तर्याणि। कार्यकारणस्वभावैस्त्रिभिः सादृश्याभावाद्यथाक्रमं न प्रतिवर्णकापि नानुरूपाण्यपि न प्रतिरूपाण्यपीति। योज्यम्। ननु दुःखितेषु करुणाप्रवर्तनात् कथं स्थानादिनिषेध इति। तत्कस्य हेतोरित्याशङ्क्याह। धर्मदूषका हीत्यादि। अन्येषामपि स्वदोषोपादानात् कसम्बकजाताः। सस्योपघाटकतृणजातिवद्बोधिसत्त्वस्य विनाशात् कृष्णानिर्जातिकाः कृष्णसर्पवद्द्वेषबाहुल्यात् कृष्णाहिजातिकाः। अनयेन व्यसनमिति (p. 182, 2)। यस्मादेवंविधपापकारिभिः सह कृपाऽविषयत्वेनावस्थाविषयविभागादिकं परिहृत्यादिकर्मिकाः संवासादिनाऽनेनेति दुराचारेण व्यसनमुपघाटमापत्स्यन्ते तस्माद्धर्मदूषका वर्जनीया इति यावत्। धर्मदूषकाः क उच्यन्त

इत्याह। ये चेत्यादि। सम्भवत्प्रमाणस्याकथने किं कारणमिति। तत्कस्य हेतोरित्याशङ्क्याह। मा तथारूपस्येत्यादि। यस्मान्महन्नारककायप्रमाणं श्रुत्वा दुःखमहत्त्वं प्रतिपद्य महाभयेन सहसा प्रतिपक्षसमुदाचारादिविरोधेनोष्णरुधिरागमनादयः स्युस्तस्मान्नाख्यायत इति समुदायार्थः। मरणमात्रकं वा दुःखमागाढमाबाधं स्पृशेदिति मृदुमध्याधिमात्रभेदादुक्तम्। पश्चिमाया जनताया आलोक इति अशुक्लकर्मकारिणः। संवेगोत्पादाद्धर्मालोकः संवेग इति तद्धेतुत्वात्तथोक्तः। सुसंवृतकायकर्मवाक्कर्ममनस्कर्मणेति (p. 183, 5) यथाक्रमं स्मृतिसम्प्रजन्यतामुपादाय कायिकवाचिकमानसिककुशलानुष्ठानादुक्तम्। विपरीतकरणे को दोष इति। तत्कस्य हेतोरित्याशङ्क्याह। यच्च हि नामेत्यादि। एवंरूपेणेति नैतद्बुद्धवचनमित्येवं स्वभावेनास्योपलक्षणपरत्वात्। विपरीतकायवाङ्मनस्कर्मणापीति ज्ञेयम्। प्रक्रान्तवाग्दुर्भाषितप्रकरणोपसंहारार्थमाह। कतमेनेत्यादि। अन्यथानन्तरमेवोक्तमिति कथं प्रश्नः स्यात्। मोहपुरुषा इति। स्वकेऽवतारात् स्वस्यैव विनयदर्शनादपि। औदार्यादपि। गाम्भीर्यादविरुद्धैव धर्मतेति वचनात्। यत्सूत्रेऽवतरति विनये च सन्दृश्यते। धर्मताञ्चानुलोमयतीति बुद्धभाषितलक्षणावगमेन सूत्रादिसङ्गृहीताया मातुः स्वभावानवधारणान्मूढः। स्यादेतन्निकायग्रन्थे परिमितपरिमाणसूत्रेष्वनवतारात्तथापरिच्छिन्नप्रमाणविनयपिटकेऽसंदर्शनात्तथाव्यवस्थापितपुद्गलनैरात्म्यादिधर्मताविलोमनेनाबुद्धवचनमहायानप्रतिक्षेपादमोह इति। एवं च

सति, मुक्तकसूत्राण्यपि सूत्रान्तपिटकेष्वपठितत्वादबुद्ध-वचनान्यभ्युपेयानि स्युस्तथैकैकस्मिन् सूत्रान्तपिटकेऽन्यानि सूत्रान्तपिटकानि न सर्वप्रकारमवतरन्ति। तथैकैकस्मिन् विनयेऽन्ये विनया न सर्वप्रकारं सन्दृश्यन्ते। तथैकैकस्मिन् निकाये या धर्मता व्यवस्थापिता न साऽन्येषु निकायेषु धर्मतां सर्वप्रकारमनुलोमयतीत्येवमष्टादशभेदभिन्नानि सूत्रविनयाभिधर्मपिटकानि परस्परं ग्रन्थार्थव्यतिभिन्नानि कथं बुद्धवचनानि सिद्ध्यन्तीत्यव्यापकमेतत् बुद्धवचनलक्षण-मभ्युपगच्छन्तीति मूढा एव। अथवा।

मनःप्रदोषः प्रकृतिप्रदुष्टे
ह्ययुक्तरूपेऽपि न युक्तरूपः।
प्रागेव सन्देहगतस्य धर्मे
तस्मादुपेक्षैव वरं ह्यदोषः॥

इत्यस्यार्थस्यापरिज्ञानान्मोहपुरुषाः। दूषयितव्यामिति। परस्परविरोधोद्भावनया प्रतिक्षेप्तव्यामिति पूर्ववत्। प्रतिबाधितव्यामिति प्रत्यक्षादिप्रमाणबाधनात्। अस्य तु सर्वधर्मप्रतिक्षेपस्य चतुरो हेतून् प्रतिपादयितुमाह। कोऽत्र हेतुरित्यादि। चतुर्भिराकारैरिति। माराधिष्ठानगम्भीरधर्मानधिमोक्षस्कन्धाद्यभिनिवेशपापमित्र-परिग्रहैश्चतुर्भिः प्रतिक्षेपहेतुभिरित्यर्थः। तथा चोक्तम्।

धर्मव्यसनहेतवः॥ २६॥
माराधिष्ठानगम्भीरधर्मतानधिमुक्तते।
स्कन्धाद्यभिनिवेशश्च पापमित्रपरिग्रहः॥ २७॥ इति

अभिसमयालङ्कारालोकायां प्रज्ञापारमिताव्याख्यायां
निरयपरिवर्तो नाम सप्तमः॥

अधिगमानधिगमहेतुं प्राप्तिपरिहारविषयमुक्त्वैवं प्रकृतस्यात्यन्तविशुद्धिलक्षणभावनामार्गस्य सामान्येन विशुद्धिं प्रतिपादयितुं गाम्भीर्यं प्रतिपादयन्नाह। दुरधिमोचेत्यादि। (p. 185, 2) दुःखेनाधिमोच्यत इति दुरधिमोचा। दुरधिमोक्षेति यावत्। ननु पृथग्जनार्यभेदेन बन्धमोक्षात् कथमबद्धममुक्तम् रूपमिति। तत्कस्य हेतोरित्याशङ्क्याह। रूपास्वभावत्वादिति। त्रैपथिकरूपस्य न्यायतो निःस्वभावत्वात्। सामान्येन निर्दिश्यातीतादिभेदेनाह। रूपस्येत्यादि। तथैव तत्कस्य हेतोरित्याशङ्क्याह। पूर्वान्तास्वभावमिति। पूर्वान्तो हेतुस्तत्त्वतोऽनुत्पन्नत्वेनास्वभावो यस्य वर्तमानरूपस्येति तथोक्तम्। पूर्ववत्तत्कस्य हेतोरित्याशङ्क्याह। अपरान्तास्वभावमिति। अपरान्तं कार्यं पूर्ववदस्वभावमस्येति विग्रहः। तथैव तत्कस्य हेतोरित्याशङ्क्याह। प्रत्युत्पन्नास्वभावमिति (p. 186, 1)। प्रत्युत्पन्नलक्षणविरहितम्। रूपादिस्वभावशून्यत्वेन पृथग्जनागोचरत्वाद्दुरधिमोचा। लौकिकवीतरागाविषयत्वात् परमदुरधिमोचा। ननु रूपादिप्रज्ञापारमितास्वभावयोः संवृतिपरमार्थभेदेन विवेकप्रतिपत्तेः कथं परमदुरधिमोचेति। तत्कस्य हेतोरित्याशङ्क्याह। या रूपविशुद्धिरित्यादि। नानात्वलक्षणभेदाभावादभिन्नम्। प्रभेदलक्षणच्छेदाभावादच्छिन्नम्। स्वसामान्यलक्षणनानात्वविरहाद्वा यथाक्रममुक्तम्। इति हीत्यादि।

संवृतेस्तथता यैव परमार्थस्यापि सा मता।
अभेदात् सोऽपि हि न्यायो यथादर्शनमास्थितः॥

इति न्यायाद् या रूपादेरात्मात्मीयाद्यभिनिवेश-विगमान्मायोपमताविशुद्धिः सैव सर्वविपक्षरहितत्वेन स्रोतआपत्त्यादिफलस्य प्रज्ञापारमिताया विशुद्धिस्तथा फलस्य या विशुद्धिः सा रूपादेर्विशुद्धिरिति अद्वयाद्वैधीकारादभिन्नमच्छिन्नम् । तस्मात् फलविशुद्धितो रूपादिविशुद्धिस्तथा रूपादिविशुद्धितः फलविशुद्धिः कथितेति यावत् । तथा चोक्तम् ।

फलशुद्धिश्च रूपादिशुद्धिरेव तयोर्द्वयोः ।
अभिन्नाच्छिन्नता यस्मादिति शुद्धिरुदीरिता॥ २८ ॥

इति सामान्येन शुद्धिमेवमभिधाय विशेषेणाह । पुनरपरमित्यादि । सर्वज्ञताविशुद्धिरिति । त्रिसर्वज्ञताविशुद्धिरित्यर्थः । ततश्चेदमुक्तम् भवति । "श्रावकाणां क्लेशावरणप्रहाणात्, प्रत्येकबुद्धानां तु क्लेशावरणस्य ज्ञेयावरणैकदेशग्राह्यविकल्पस्य च प्रहाणात् सर्वज्ञताविशुद्धिः । यानत्रयमार्गावरणप्रहाणाद्बोधिसत्त्वानां मार्गज्ञताविशुद्धिः। सवासनक्लेशज्ञेयावरणप्रहाणाद्धर्मधातूद्भवत्वादात्यन्तिकी तथागतानां सर्वाकारज्ञताविशुद्धिरि"ति । तथा चोक्तम् ।

क्लेशज्ञेयत्रिमार्गस्य शिष्यखड्गजिनौरसाम् ।
हानाद्विशुद्धिरात्यन्तिकी तु बुद्धस्य सर्वथा ॥ २९ ॥

इति मार्गज्ञताधिकारे विशुद्धिकथनप्रसङ्गादात्यन्तिकी चेतरा च तथागतानां श्रावकाणाञ्च यथाक्रमं विशुद्धिः कथिता । सा कथमित्याह । अथ खल्वायुष्मानित्यादि (p. 187, 9) । गम्भीरावभासकर्यालोकोऽप्रतिसन्धिरसंक्लेशोऽप्राप्तिरनभिसमयोऽनभिनिर्वृतिरत्यन्तमुपपत्तिरित्यार्यशारिपुत्रोक्तानि नवपदार्थानि (p. 187, 9—188, 1) यथाक्रमं

मृदुमृद्वादिनवप्रकारभावनामार्गस्वभावत्वेन वाच्यानि । प्रतिपदश्च विशुद्धत्वादिति भगवतोक्तवचनमधिमात्राधिमात्रादिनवप्रकारविपक्षप्रहाणतो योज्यम् । कामधातुरूपधात्वारूप्यधातुष्विति वचनात्कामधात्वादिनवभूमिको भावनामार्गो ग्राह्यः । यत्तूक्तम् ।

कामधातौ भवाग्रे च बोधिमार्गाङ्गवर्जिता ।

इति तदनुपायकुशलान् श्रावकानधिकृत्येति न तेनास्य विरोध इत्येके । अनागम्यस्थानमारभ्य यावदाकिञ्चिन्यायतनपर्यन्तो नवभूमिको भावनामार्ग इत्यपरे । कामधात्वादिवचनं तु मातुस्तत्र परमार्थतोऽस्थानप्रतिपादनपरम् । न तु नवभूमिप्रकाशकमिति । तदयं समासार्थः । यथोक्तासु नवभूमिषु प्रत्येकं यथासंख्यञ्चाधिमात्राधिमात्रादिनवप्रकारविपक्षस्य प्रतिपक्षभावेन मृदुमृद्वादिमार्गो यथाक्रमं नवप्रकारः सर्वथाऽन्यथा च विशुद्धिहेतुत्वादात्यन्तिकी चेतरा च विशुद्धिरिति । तथा चोक्तम् ।

मृदुमृद्वादिको मार्गः शुद्धिर्नवसु भूमिषु ।
अधिमात्राधिमात्रादेर्मलस्य प्रतिपक्षतः ॥३०॥ इति ।

कथमनुपचरिताऽत्यन्तिकी विशुद्धिरित्याह । न जानातीत्यादि । स्वरूपं न जानाति । प्रभेदं न संजानीते । विशुद्धत्वादिति । त्रैधातुकप्रतिपक्षत्वात् । किमिति विषयगतोऽयं प्रश्नो न तु क्षेपे । तदेवाह । रूपमित्यादि । ननु सदावस्थितं रूपं किमिति न प्रतिपद्यत इति । तत्कस्य हेतोरित्याशङ्क्याह । विशुद्धत्वादिति । तत्त्वतो निःस्वभावत्वात् । ननु चाधिमात्राधिमात्रादिः प्रतिपक्षो मृदुमृद्वादिभिर्विपक्षैरिति भवितव्यम् । तत्कथमन्यथा निर्दिष्ट-

मित्याशङ्कायामाह । प्रज्ञापारमिता भगवन् सर्वज्ञतायाः इत्यादि । व्यवस्थितधर्मतत्त्वापनयनाभावान्नापकारं करोति । अपूर्वाकरणान्नोपकारं करोतीति पूर्वेण सम्बन्धः । प्रतिपक्षं न परिगृह्णाति । न विपक्षं परित्यजति । न जानातीत्यादिप्रकरणस्यायं समुदायार्थः । ननु चाधिमात्रादिमात्रादिः प्रतिपक्षो मृदुमृद्वादिविपक्ष इति भवितव्यम् । तत्कथमन्यथा निर्देश इति चोद्यस्य परमार्थेन कस्यचिन्नोपकारादिकमिति परिहारतस्तथा संवृत्या सूक्ष्ममलापकर्षणे रजकमहायत्नोदाहरणेन मृदुमृद्वादिक्रमप्रतिपक्षोत्पादेन च सामर्थ्याक्षिप्तेन समाधानतस्तस्य यथानिर्दिष्टभावनामार्गस्यान्त्यक्षणस्य त्रैधातुकाकारज्ञानज्ञेययोरनुपलम्भाद्या समता सर्वधर्ममायोपमताप्रतिपत्तिः सैव समस्तप्रतिपक्षरूपत्वमिति कृत्वा । आत्यन्तिकी विशुद्धिर्मुख्या भगवतो बुद्धस्येष्यत इति । तथा चोक्तम् ।

त्रिधातुप्रतिपक्षत्वं समता मानमेययोः ।
मार्गस्य चेष्यते तस्य चोद्यस्य परिहारतः॥ ३१ ॥ इति

भावनामार्गपरिसमाप्त्यनन्तरं तदधिकारे प्राग्यदुक्तं या रूपविशुद्धिर्या फलविशुद्धिर्या सर्वज्ञताविशुद्धिरिति तन्निर्दिशन्नाह । आत्मविशुद्धितो भगवन् रूपविशुद्धिरित्यादि (p. 189, 1) । यथात्मनः परपरिकल्पितस्य परमार्थतोऽनुत्पत्तिविशुद्धिस्तद्वद्रूपादिसर्वज्ञतान्तानां विशुद्धिर्वेदितव्येति द्वारकत्रयस्यार्थः । केवलं संवृत्या रूपादीनामात्मनश्चार्थक्रियासु यथासंख्यं योग्यायोग्यत्वेन तथ्यातथ्यतया भेदो न तु परमार्थत इत्यभिप्रायेण सर्वत्र भग-

वतोक्तमत्यन्तविशुद्धत्वादिति । यथोक्तभावनामार्गे तत्त्वतो नाधिगम इत्याह । आत्मविशुद्धितो भगवन्न प्राप्तिर्नाभिसमय इति । तत्र न प्राप्तिरग्रजप्राप्त्या योग्यतालक्षणया । नाभिसमयो विमुक्तिमार्गेण । तत्त्वेनैवमित्याह । विशुद्धत्वादिति । शून्यत्वादित्यर्थः । संवृत्या तु सर्वमेवास्तीत्याह । आत्मपर्यन्ततयेत्यादि । अविचारैकरम्यपूर्वपूर्वकारणस्यात्मनः स्वभावस्यापर्यन्ततया रूपादीनामपर्यन्तता गम्यत इति यावत् । विशुद्धत्वान्न्यायानुयायिन्योत्पत्त्या रहितत्वात् । मार्गज्ञतामुपसंहरन्नाह । य एवमस्येत्यादि । एवमनन्तरोक्तध्यामीकरणतादिक्रमेण योऽयमवबोधोऽधिगमः सेयं प्रज्ञापारमिता मार्गज्ञता बोधिसत्त्वानां निर्दोषत्वेनावगन्तव्या ॥[1]

सर्ववस्तुपरिज्ञानं विना न मार्गज्ञतापरिज्ञानं सम्यगिति सर्वज्ञतां वक्तुं संसारनिर्वाणाप्रतिष्ठानमाह । सा खलु पुनरित्यादिना (p. 189, 18) । त्रैयध्विकधर्माणामनुत्पादाकारेण तुल्यतावबोधाद्या श्रावकाद्यगोचरत्वेन विप्रकृता विप्रकृष्टरूपा बुद्धबोधिसत्त्वानां प्रज्ञापारमिता मता । सा खलु पुनर्नापरे तीरे संसारे प्रज्ञयाऽदीनवदर्शनात् । न परे तीरे निर्वाणे कृपया सत्त्वार्थकरणान्नापि संसारनिर्वाणमुभयमन्तरेण वस्तुनोऽसत्त्वान्मध्येऽपि व्यवस्थिता ।

---

[1] With the stanza 32 ends the second *adhikāra* of the *kārikās* and therefore in the MS. we read— अभिसमयालङ्कारालोकायां प्रज्ञापारमिताटीकायां मार्गज्ञताधिकारो द्वितीयः ॥

अत्यन्तविशुद्धत्वादिति । प्रज्ञाकरुणयोः सम्यक् प्रतिवेधेन संसारनिर्वाणभयोपलम्भवियोगात् । तथा चोक्तम् ।

नापरे न परे तीरे नान्तराले तयोः स्थिता ।
अध्वनां समताज्ञानात् प्रज्ञापारमिता मता ॥१॥ इति

सर्वज्ञताधिकाराद्व्यतिरेकनिर्देशेन श्रावकादीनामध्वसमताज्ञानाभावात् सम्यक् प्रज्ञापारमिता दूरीभूतेति । स्वाधिगममात्रात्मिका तु प्रज्ञापारमिता कृपाप्रज्ञावैकल्यान्निर्वाणे संसारे चावस्थिता वस्त्ववस्तूपलम्भतयेति ज्ञेयम् । एवमुत्तरत्रापि क्वचिदन्वयमुखेन क्वचिद्व्यतिरेकमुखेन क्वचिदुभयथापि निर्देश इति प्रतिपत्तव्यम् ।

ननु—

यः प्रतीत्य समुत्पादः शून्यता सैव ते मता ।

इति न्यायादध्वसमताज्ञानं पदार्थावबोध एव, स च सर्वेषामेव समस्तीति कथं श्रावकादीनां सम्यक् प्रज्ञापारमितादूरीभाव इत्याह । एवमपीत्यादि । अपिशब्दान्न केवलमन्येन भावाद्याकारेण । किन्तर्ह्येवमपि न क्वचित् स्थितेत्यप्यभिनिवेशनिमित्तयोगेनेत्यर्थः । रिञ्चिष्यति दूरीकरिष्यतीति (p. 190, 1) तदात्वे चायत्याञ्चेति यथाक्रमं वाच्यम् । किमत्र कारणं निमित्तप्रतिपत्त्या मातुर्दूरीभाव इति । तत्कस्य हेतोरित्याशङ्क्याह । नामतोपीत्यादि । तत्र प्रज्ञापारमितेत्यादिव्यपदेशमात्रं नाम कल्पितादिलक्षणवस्तुनिमित्तम् । सक्तिस्थानविपर्यासः सङ्गः । एतदुक्तम् । "मायाकारनिर्मितवस्तुनः प्रतिभासेऽविदिततत्स्वरूपस्य भावाभिनिवेशितया नैःस्वाभाव्याप्रतिभास इव

कल्याणमित्राद्युपायकौशलवैकल्यान्निमित्तयोगेन प्रतिपत्तौ विपर्यासलक्षणोपलम्भसङ्गसम्भवात् तत्समतापरिज्ञानमविज्ञातभावरूपाणां श्रावकादीनां नास्तीत्यतस्तेषां दूरीभावो जिनजनन्या" इति। बोधिसत्त्वादीनां तूत्सारितभावाभिनिवेशभ्रान्तिनिमित्तानां रूपादिसर्वधर्मपरिज्ञानमेव तत्समतापरिज्ञानमित्यतस्तेषां सम्यगासन्नीभावोऽस्या मातुरिति सामर्थ्यात् कथितमित्याह। आश्चर्यं भगवन्नित्यादि। यावदिति वचनात् सुपरिशुद्धेत्यादिपरिग्रहः। श्रावकप्रत्येकबुद्धाधिगमविपर्ययेण कथनात् स्वाख्याता। परिपूर्णमहायानाधिगमतः सुनिर्दिष्टा। समस्तगुणप्रकर्षनिष्ठाधिगमतः सुपरिनिष्ठिता। इमेऽपि सङ्गा इति नामाद्याः। श्रावकबोधिसत्त्वभेदादेतदेव प्रतिपत्तव्यम्। तथा चोक्तम्।

अनुपायेन दूरं सा सनिमित्तोपलम्भतः।
उपायकौशलेनास्याः सम्यगासन्नतोदिता ॥२॥ इति

श्रावकादीनामेवं मातुर्दूरीभावेनानुष्ठानं प्रतिपक्षोऽपि सन् वस्तूपलम्भविपर्यासप्रवृत्तत्वेन बोधिसत्त्वानां त्याज्यत्वाद्विपक्ष इति प्रतिपादयितुमाह। कतमे त इत्यादि। शून्यमिति। तीर्थिकपरिकल्पितात्मनो विवेक इति। सञ्ज्ञानीत इति वक्ष्यमाणेन सम्बन्धः। इयन्तमिति। अप्रमेयादिसंख्यावच्छिन्नम्। प्रथमेन चित्तोत्पादेनेति। दानादिबोधिपक्षोपलक्षणमच चित्तोत्पादः। कथञ्चित्तोत्पादः सङ्ग इत्याह। कतमेनेत्यादि। विपर्यासप्रवृत्तत्वेनाह। स चेदित्यादि। इदं तत् प्रथमं बोधिचित्तमिति। एवमभि-

निवेशयोगेन यथा तद्बोधिचित्तं सञ्जानीते। तथेदं तत् प्रथमं बोधिचित्तं परिणामयामीत्यभिनिवेशयोगेन यदा च परिणामयति तदानेन पर्यायेण सङ्गतिरिति वाक्यार्थः। कस्मादेवं विपर्यास इत्याह। न च चित्तप्रकृतिरित्यादि। परिणामयितुमिति। यथोक्तद्वादशप्रकारभेदभिन्नपरिणामनामनस्कारेण चित्तस्य प्रकृतिरनुत्पादता न शक्या परिणामयितुं तस्योपलक्षणत्वादेकानेकवस्तुरूपतया सञ्ज्ञातुमपि न शक्येत्यवगन्तव्यम्। सञ्जानीते परिणामयतीति पदद्वयस्य प्रकृतत्वात्। एतदुक्तम्। "रूपादिस्कन्धानां शून्यत्वे त्र्यध्विकानाञ्च सर्वधर्माणां सास्रवानास्रवोभयस्थानीयानामतीतादिस्वभावत्वे दानादिबोधिपक्षाणामनुष्ठाने च तात्त्विकोपलम्भसञ्ज्ञाविपर्यासप्रवृत्तत्वेन यस्माद्विपक्षस्तस्मादेषां प्रकृतिस्तथता सञ्ज्ञातुमशक्ये"ति। तथा चोक्तम्।

रूपादिस्कन्धशून्यत्वे धर्मेषु त्र्यध्वगेषु च।
दानादौ बोधिपक्षेषु चर्यासञ्ज्ञा विपक्षता॥३॥ इति

यथोक्तार्थविपर्ययेण बोधिसत्त्वानां प्रतिपक्षमाह। तस्मात्तर्हीत्यादिना। यतो विपक्षस्त्याज्यस्तस्माद्भूतानुगमेन देयदायकप्रतिग्राहकाद्यनुपलम्भयोगेन दानादौ परेषां सन्दर्शनादिकं कार्यमित्यर्थः। एवमात्मानञ्च न क्षिणोतीति (p. 191, 2)। तथैव भूतानुगमयोगेन दानादौ स्वयमवस्थानादात्मानमुपलम्भविपर्यासविशेषेण न विनाशयति। इमाश्चेति रूपाद्यालम्बनाः पूर्वमुक्ताः। धर्मताऽविरुद्धस्थूलतरतमसङ्गकथनात् साधु साध्विति साधुकारं दत्वा सूक्ष्म-

तरसङ्गार्थमाह। तेन हि सुभूत इति। निमित्ततो मनसिकरोतीति रूपकायाद्यालम्बनेनाभिमुखीकरणात्। कथं पुनरेवं सङ्गः कथित इत्याह। यावन्ति खलु पुनरित्यादि। तदयं प्रकरणार्थः। त्रिमण्डलविशुद्ध्या दानादावात्माद्यनवबोधेन स्वपरयोर्नियोजनं सम्यक् प्रवृत्तत्वात् सर्वसक्तिनिचयस्थानप्रतिषेधेन चोपादेयत्वात् सर्वथा प्रतिपक्षः। तथागतादिषु नमस्कारादिः पुण्यसम्भारहेतुत्वेन प्रतिपक्षोऽपि सन् सूक्ष्मसक्तिरूपतया न सर्वथा प्रतिपक्ष इति। तथा चोक्तम्।

दानादिष्वनहङ्कारः परेषां तन्नियोजनम्।
सङ्गकोटी निषेधोऽयं सूक्ष्मः सङ्गो जिनादिषु॥ ४॥ इति

कथं पुनः सूक्ष्मसक्तिर्विपक्ष इति। तत्कस्य हेतोरित्याशङ्क्याह। निमित्ततो हि सुभूते सङ्ग इति। तदेव कथयन्नाह। इति हि स इत्यादि। इदमेव तत्त्वमिति निश्चयग्रहणान्निमित्तीकर्तुम्। पुनः पुनरालम्बनान्नारम्बनीकर्तुमिति भेदः। नापि सा दृष्टश्रुतमतविज्ञातेति चक्षुर्विज्ञानेन दर्शनाद्दृष्टा। श्रोत्रविज्ञानेन श्रवणाच्छ्रुता। घ्राणजिह्वाकायविज्ञानैरनुभूतत्वान्मता। मनोविज्ञानेनोपलम्भाद्विज्ञाता। नापीति प्रत्येकं सम्बन्धनीयम्। एतदेव ज्ञेयज्ञानगाम्भीर्यभेदेनाह। गम्भीरेत्यादिना (p. 192, 1)। प्रकृतिरिति स्वभावस्तथतेति यावत्। विविक्तत्वादिति सर्वोपलम्भशून्यत्वात्। प्रकृतिगम्भीरेति। प्रकृत्या ज्ञानस्य स्वभावेनानुत्पादेन श्रावकाद्यविषयत्वाद्गम्भीरा। प्रकृतिपरिशुद्धत्वात्। प्रकृतिविविक्तत्वादिति। यथाक्रममविकारा-

विपर्यासपरिनिष्पत्त्या परिनिष्पन्नत्वादित्यर्थः। एतदुक्तम्। "यस्मात् स्वभावेनैव सर्वधर्मगोचराणां ज्ञानज्ञेयस्वभावानां प्रकृत्यैव शून्यत्वात् तेषां गाम्भीर्यं तस्मात् केनचिद्रूपेणोपलम्भः सूक्ष्मासक्तिविपक्ष" इति। तथा चोक्तम्।

तद्गाम्भीर्यं प्रकृत्यैव विवेकाद्धर्मपद्धतेः। इति

कथं तर्हि तस्य वर्जनमित्याह। प्रकृतिविविक्तेति। भावाभ्युपगमदोषरहितत्वेन यस्मात् प्रकृतिविविक्ता, तस्मान्नमस्करोमि। प्रज्ञापारमितेतिवचनान्न तर्हि सर्वधर्मा विविक्ता इत्याशङ्कायामाह। सर्वधर्मा इत्यादि। ननु स्वसंवेदनरूपत्वेनावगमाभावात् सर्वधर्मविविक्ततायाः कथं सा स्वसंविद्रूपा प्रज्ञापारमितेति। तत्कस्य हेतोरित्याशङ्क्याह। तथा हि सुभूत इत्यादि। एतदुक्तम्। "बाह्यवस्तुपरिनिष्पत्त्यभावे स्वप्नादाविवोपदर्शितविविधाकारप्रभेदप्रपञ्चं बहिरिव परिस्फुरद्रूपं विज्ञानमुपजायते यदाऽतो ज्ञानस्य संवृत्या मायोपमतावगमात्तदव्यतिरिक्तत्वेनाकृताः शून्या मायोपमाः सर्वधर्मा इति भगवतोऽभिसम्बोधात्तेषां विविक्तताऽप्यवगते"ति।

भावा जायन्ति संवृत्या परमार्थेऽस्वभावकाः।
तया सर्वमिदं सत्यमसत्यं परमार्थतः॥

इत्यार्यलङ्कावतारसूत्रानुसारेणानन्तरमेवार्थतत्त्वं स्पष्टयन्नाह। तस्मात्तर्हीत्यादि। अनभिसम्बुद्धास्तत्त्वत इति शेषः। साधूक्तत्वेन समर्थनमाह। तथाहीत्यादिना। कीदृशी प्रकृतिरित्याह। या चेत्यादि। या च प्रकृतिः स्वभावस्तथता सैव स्वरूपविरहादप्रकृतिर्या चाप्रकृतिः

सा सर्वधर्माणां प्रकृतिरेकलक्षणत्वादेकरूपत्वाद्यदुता-लक्षणत्वान्निःस्वभावत्वादित्यर्थः । एतदेवोपसंहरन्नाह । तस्मात्तर्हीत्यादि । ननु भिन्नकारणजन्यत्वेन भावानां भिन्नस्वभावत्वे कथमेकलक्षणत्वमिति । तत्कस्य हेतोरित्याशङ्क्याह । न हि सुभूत इत्यादि । एवं मन्यते । प्रमाणव्याहतोत्पादरूपत्वादेषां भिन्नहेतुजन्यत्वनिबन्धनानेकस्वभावाभावे यस्मादेषां न नानारूपता परमार्थतस्तस्मादेकैव प्रकृतिरिति । एवमेता इत्यादि । यथोक्तक्रमेण रूपादिसर्वधर्माणामेकैव प्रकृतिरिति प्रकृतिर्यदुता ज्ञानज्ञेयसमतैकपरिज्ञाने पूर्वोक्ताः संगकोट्यः । सूक्ष्मासक्तिरूपा विवर्जिता भवन्ति । तथा चोक्तम् ।

एकप्रकृतिकं ज्ञानं धर्माणां सङ्गवर्जनमिति ॥ ५ ॥

कथं पुनः प्रकृत्या धर्मगाम्भीर्यं प्रागुक्तमित्याह । गम्भीरा भगवन् प्रज्ञापारमितेति (p. 193, 1) । कथमिति काङ्क्षाप्रश्नः । आकाशगम्भीरतयेति । सर्वविज्ञानोपलब्धार्थनिराकरणेनानुपलम्भेन ज्ञानज्ञेयसमतासंसूचकेन यस्मात्तस्याः प्रकृतेर्दुर्बोधता कथिताऽतस्तयाऽऽकाशस्येव गाम्भीर्यमित्यर्थः । तथा चोक्तम् ।

दृष्टादिप्रतिषेधेन तस्या दुर्बोधतोदिता । इति

किम्पुनः कारणमेवं तस्याः प्रकृतेर्दुर्बोधतेत्याह । दुरनुबोधा भगवन् प्रज्ञापारमितेति । अत्रापि पूर्ववत् काङ्क्षाप्रश्नः । न कश्चिदभिसंबुध्यत इति । रूपाद्यावेणिकबुद्धधर्माद्याकारैः प्रकृतेस्तथतास्वाभाव्यादनभिसम्बोधेन यस्मा-

चिन्तातिक्रान्तत्वमिष्यते, अतोऽस्या दुर्बोधतेति यावत्। तथा चोक्तम्।

रूपादिभिरविज्ञानात्तदचिन्त्यत्वमिष्यते ॥ ६ ॥ इति

अचिन्त्यत्वमेव कुत इत्याह। अचिन्त्येत्यादि। कथमिति शेषः। न चित्तेन ज्ञातव्या न चित्तेन गमनीयेति यस्मादक्षतत्वेनाधिमोक्षमनस्कारानधिमोक्षान्न चित्तेन ज्ञातव्या तत्त्वमनस्कारापरिज्ञानान्न चित्तगमनीया। तस्मादचिन्त्यत्वमिति यावत्। अक्षतत्वमेव कथमित्यादि। अक्षत इत्यादि। कथमित्युपस्कारः। कारकानुपलब्धित इति कारकहेतोरनुपलम्भात्। तथा हि प्रत्यक्षानुपलम्भसाधनः कार्यकारणभावो वर्णितः। तच्च न तावन्निराकारेणावसीयते। संविन्मात्रेण सर्वचेतसां साम्यादिदमस्य ज्ञानं नेदमस्येति कुतो व्यवस्था। यतो बीजज्ञानादङ्कुरज्ञाने तदज्ञानात्तदज्ञाने च बीजं कारणमङ्कुरः कार्यमिति स्यात्। नापि बीजजन्यत्वाद्बीजं तेनावसीयते। मा भूच्चक्षुर्जन्यत्वाच्चक्षुषोऽवगतिरत इति। अथ निराकारस्यापि चेतसोऽस्त्यसाधारणः कश्चिदात्मातिशयो हेतुधर्मसामर्थ्यजनितो यस्मादियं व्यवस्थेति चेत्। एमप्यात्मातिशय इत्याकारस्यैव नामान्तरमारोपितम्। न च नामान्तरकरणादर्थान्तरं भवितुमर्हति। नासावाकारश्चेत्कस्तर्ह्यौत्यपदिश्यताम्। दुरुपलक्षणतया नायमिदन्तया निर्देष्टुं शक्यत इति चेत्। यत एवेयं व्यवस्थेदं बीजमयमङ्कुर इति तदनुपलक्षणे कुतोऽनुमा स्यात्। न हि दण्डविषाणानुपलक्षणेऽयं दण्डी विषाणी वेति स्थीयते। नापि साकारेण। न ह्याकारो वस्तुनाऽव्याप्तोऽसत्यपि तस्मिन् द्विचन्द्रा-

दावस्य भावान्नैवम्भ्रान्तत्वादस्य । यस्त्वभ्रान्तो नासावसति वस्तुनि भवति न चान्यव्यभिचारेऽन्यव्यभिचार इत्यप्यसत् । न हि कार्यकारणभावसाधनवेलायामयं भ्रान्तः खल्वाकारो ऽयं नेति निश्चयनिबन्धनमस्त्यर्वाग्दृशः, न चातीन्द्रियदृशः प्रतीदमुच्यते । न चासति निश्चये हेतुफलभावव्यवस्था ज्यायसी । न च वस्त्वाकारो ज्ञानस्य युज्यते । यदि ह्येकदेशेन ज्ञेयाकारं ज्ञानमिति तत्परिच्छिद्यात्तदा सर्वे सर्वविदः प्रसज्येरन् । ज्ञेयत्वादिभिः सर्ववस्तुसाधारणैराकारैरन्वितत्वात् सर्वज्ञानानां सर्वात्मनापि ज्ञेयाकारत्वे ज्ञानस्य ज्ञानज्ञेययोरैक्येन विभागायोगाद्व्यवहारोच्छेदः । सर्वात्मना च संवेदनस्य संवेद्याकारत्वे तदभावादित्यलमतिप्रसङ्गेन । मन्दबुद्धिजनानुग्रहेण सन्निहितविनेयजनविपर्यासनिराचिकीर्षया यथानिर्दिष्ट एव विपक्षप्रतिपक्षयोरयं विभागोऽवसातव्यः । तथा चोक्तम् ।

एवं कृत्वा यथोक्तो वै ज्ञेयः सर्वज्ञतानये ।
अयं विभागो निःशेषो विपक्षप्रतिपक्षयोः ॥ ७ ॥ इति

तयोर्विभावनायां कः प्रयोग इति प्रयोगार्थमाह । तेन हीत्यादि । यस्मादेव विपक्षप्रतिपक्षौ हेयोपादेयौ । तस्मात्तदर्थं कथञ्चरितव्यमित्यर्थः । रूपादिप्रयोगमाह । न रूपे चरत्यभिनिवेशयोगेन यदा तदा चरति प्रज्ञापारमितायाम् । एवमुत्तरच वेदितव्यम् । रूपाद्यनित्यादिप्रयोगार्थमाह । सचेद्रूपमनित्यमित्यादि । रूपाद्यपरिपूरिप्रयोगमाह । स चेद्रूपमप्रतिपूर्णमित्यादिना । लक्षणशून्यत्वात्कल्पितरूपमप्रतिपूर्णम् । गुणगणोपेतत्वाद्धर्मता-

रूपं प्रतिपूर्णम्। न तद्रूपमित्यादि (p. 194, 2)। धर्म-धर्मिणोर्बुद्धिपरिकल्पितभेदात्। सचेदेवमपि न चरति। चरति प्रज्ञापारमितायामिति वक्ष्यमाणेन सम्बन्धनीयम्। यथोक्तधर्मदेशनया संजातातिशयत्वेनाह। आश्चर्यमित्यादि। अन्यार्थकथनेन प्रकारान्तराभिधानादाश्चर्यम्। तस्मादेवं प्रयोगकथनेन ससङ्गता रूपादीनामुपलम्भरूपत्वमसङ्गता च मातुरनुपलम्भस्वभावता कथिता। रूपादिष्वसङ्गप्रयोगमाह। रूपं ससङ्गमसङ्गमित्यादि। ससङ्गमसङ्गमिति सोपलम्भमनुपलम्भमित्यर्थः। नन्वभिनिवेशमकृत्वा भावयितुमशक्यत्वात्कथमेवमुच्यत इति। तत्कस्य हेतोरित्याशङ्क्याह। असक्तेत्यादि (p. 195, 17)। अभिषङ्गविगमादसक्ता। अबद्धाऽमुक्तेति पदद्वयं व्याख्यातम्। प्रतीत्यसमुत्पादशून्यतारूपत्वादसमतिक्रान्ता। एतदुक्तम्। "यथाभिनिवेशमतत्त्वाद्यथातत्त्वज्ञानभिनिवेशाद्विकल्पेन विषयीकर्तुमशक्या यस्मात् सर्वज्ञता तस्मात्तच सङ्गं न जनयती"ति। एवं हीत्याद्युपसंहारः। अविकारप्रयोगमाह। आश्चर्यमित्यादिना (p. 196, 1)। देशनाऽदेशनाभ्यां यथाक्रमं ग्रन्थात्मिकाया मातुर्निष्ठान्तर्धानाभ्यां परिहाणिः। तथा देशनया युक्त्यागमबाधितरूपेण सन्तानान्तरे समुत्पादाद्वृद्धिः। अदेशनया निरन्तरप्रतिसंलयनेन स्वसन्ताने ऽधिकार्थदर्शनाद्वृद्धिः। मुख्यायास्तु मातुर्निर्विकारस्वभावत्वात् सर्वमेतन्नास्तीत्याह। या देश्यमानापीत्यादि। अविरुद्धत्वात् साध्वित्यादिवचनपूर्वकमेतदेव दृष्टान्तेन स्पष्टयन्नाह। तद्यथापि नामेत्यादि। अकर्तृप्रयोगार्थ-

माह। तद्यथापि नाम सुभूते मायापुरुष इत्यादि। वितथप्रख्यातिरूपत्वेनाकर्तृत्वाद्रागद्वेषक्लेशाभ्यां नानुनीयते न प्रतिहन्यते। अत एव तदुदयक्लेशैर्न संक्लिश्यत इति योज्यम्। दुष्करप्रयोगस्य त्रैविध्यादुद्देशदुष्करता-सर्वाकारज्ञताप्रयोगार्थमाह। दुष्करकारक इत्यादि। नोत्प्लवत इति न तरलायते नोपरिवर्तते। न हर्षमुत्पा-दयतीति यावत्। न च प्रत्युदावर्तत इति। नैव विनिवृत्तिं कुर्यात्। अयं सन्नाह इति। वक्ष्यमाणः सन्नाहः। ननु सम्भवत्प्रज्ञादिप्रकर्षमवगम्य यत्नकरणात् को नामातिशयो दुष्कर इति। तत्कस्य हेतोरित्याशङ्क्याह। आकाशेने-त्यादि। एतदुक्तम्। "आकाशोपमानपि सर्वधर्मान-ध्यालम्ब्य तत्त्वतः सम्भवत्प्रज्ञादिप्रकर्षाभावेऽपि सर्वा-कारज्ञतायाः कृतशः सन्नाहकारणादतिशयो दुष्कर" इति। आकाशसमानां धर्मधातुसमानामिति। लौकिक-लोकोत्तरप्रसिद्धिभेदेन द्वयमुक्तम्। प्रयोगदुष्करतामार्ग-ज्ञताप्रयोगार्थमाह। आकाशं स भगवन् परिमोचयितु-काम इति। मार्गज्ञतायां यः प्रयोक्तुकाम इति शेषः। कारित्रदुष्करता सर्वज्ञताप्रयोगार्थमाह। आकाशं स भगवन्नुत्क्षेप्तुकाम इति। सर्वज्ञतां यः कर्तुकाम इत्युप-स्कारः। महावीर्यपारमिताप्राप्त इति। सन्नाहप्रयोग-कारित्रेषु शून्यताकरुणागर्भमहाव्यवसायसम्पन्नः। सन्नाहः सन्नद्धत इति। त्रिविधदुष्करमुत्सहते। यथाभव्यफलप्राप्त्या वन्ध्यप्रयोगार्थमाह। अथ खल्वित्यादिना (p. 197, 3)।

अन्यतमो भिक्षुरिति । अकथापुरुषो नामगोत्रादिभिरनभिलक्षितः पुद्गल इति यावत् । नमस्करोमीति । अन्येषामपि पार्षदानां यथाभव्याधिगमावाप्तिं संसूचयन् शून्येनानुत्पादादिप्रयोगेण स्वानुरूपाधिगमाज्जातप्रसादातिशयो नमस्करोति । प्रयोगमेवाह । तथाहि भगवन्नित्यादिना । आकाश इति ज्ञेयशून्यत्वे । अभ्यवकाश इति ज्ञाननिःस्वभावत्वे। अपरप्रत्ययप्रयोगार्थमाह। आज्ञापयतु भगवन्नित्यादि। नो हीदमिति। अपरप्रत्ययतां दर्शयति। परेण रक्षादौ परप्रत्ययतासम्भवात्। एतदेवं प्रश्नयन्नाह। एवं कौशिक स चेदित्यादि । प्रज्ञापारमिताविहारित्वादेव स्वतस्तस्य रक्षादयो भविष्यन्ति नान्यथेति वाक्यार्थः। निःस्वभावधर्माधिमोक्षाच्च स्वतस्तस्य रक्षादय इत्याह। अपि च कौशिकेत्यादि (p. 198, 1)। सप्तविधख्यातिज्ञानप्रयोगमाह। तत् किं मन्यसे कौशिकेत्यादिना। तत्र विज्ञानपरिणतत्वेन परिणामख्यात्या स्वप्नोपमाः। मंत्रौषधिसंहृतत्वेन समाहारख्यात्या मायोपमाः। अविद्यमानत्वेन विरोधख्यात्या मरीच्युपमाः। शब्दप्रत्ययत्वात् प्रत्ययख्यात्या प्रतिश्रुत्कोपमाः। ज्ञेयरूपासङ्क्रमणादसङ्क्रान्तिख्यात्या प्रतिभासोपमाः। आधारविगमान्निराधारख्यात्या गन्धर्वनगरोपमाः। हेतुविरहादकारकख्यात्या निर्मितोपमाश्च भावा ज्ञाता भवन्तीत्येवं पञ्चविंशतिसाहस्रिकायामुक्तम्। अत्र तु संक्षेपस्य विवक्षितत्वात् प्रतिश्रुत्कोपमाः सर्वधर्मा इति वचनेन मध्यस्य निर्देशादाद्यन्तचिकनिर्देश इति प्रतिपत्तव्यम्। तदेवमन्वयमुखेन बोधिसत्त्वानां दश-

विधः प्रयोगः कथितोऽर्थाद्यथोक्तविपर्ययेण श्रावकादीनां वेदितव्यः । तथा चोक्तम् ।

रूपादौ तदनित्यादौ तदपूरिप्रपूरयोः ।
तदसङ्गत्वे चर्यायाः प्रयोगः प्रतिषेधतः ॥ ८ ॥
अविकारो न कर्ता च प्रयोगो दुष्करस्त्रिधा ।
यथाभव्यं फलप्राप्तेरवन्ध्योऽभिमतश्च सः ॥ ९ ॥
अपरप्रत्ययो यश्च सप्तधाख्यातिवेदकः । इति

समताद्वारेण प्रयोगो भावनीय इति समतामाह । स च तान् न मन्यत इत्यादिना तत्र समाहितेन चित्तेन तान्न मन्यते यतो न समनुपश्यति । ते च धर्मा न विद्यन्ते । यतो न सन्दृश्यते समाहितेन मनसा न जानाति । यतो न सञ्जानीते । ते च धर्मास्तज्ज्ञानगम्या न संविद्यन्ते । यतो नोपलभ्यन्त इति योज्यम् । उपसंहारार्थमाह । सचेदेवं विहरतीत्यादि (p. 198, 11) । तदेवं रूपादिपदार्थमनना । नीलादिनिमित्तमनना । रूपं द्विधा विंशतिधेत्यादि प्रपञ्चमनना । निर्वेधभागीयाद्यधिगममननानां प्रतिषेधेन ज्ञातृज्ञेयधर्मानुपलब्धिश्चतुर्धोक्ता विज्ञेया । तथा चोक्तम् ।

चतुर्धाऽमनना तस्य रूपादौ समता मता ॥ १० ॥ इति

प्रयोगसमतां प्रतिविध्य दर्शनमार्गो ध्येय इत्यधुना वक्तव्यः । स च षोडशक्षणिक इति । "क्षणान्तराभावज्ञापनार्थं साक्षिभावकथनाय सर्वबुद्धभाषितत्वप्रतिपादनाय चाथ खलु बुद्धानुभावेनेत्यादिवचनमि"त्यार्यविमुक्तिसेनः । उपायकौशलबलेनान्येषां विधिप्रतिषेधाभावात्

सहस्रलोकधातौ भद्रकल्पे बोधिसत्त्वसहस्रस्य नियमेन बुद्धत्वप्राप्तेर्बुद्धसहस्रमित्युक्तम्। नामभिरिति (p. 199, 1) पदसमुदायैर्वाक्यैः। पदैरिति सुप्तिङन्तैरक्षरसमुदायैः। अक्षरैरिति एवमित्यादिवर्णैः। अयमेव प्रज्ञापारमिता परिवर्त इति विशुद्धिपरिवर्त इत्यर्थः। तत्रातीततथागतानुदाहरणं तद्देशनापर्युपयोगज्ञापनार्थम्। मैत्रेय इत्यनागततथागतोदाहरणम्। अनागतसत्त्वार्थप्रयोजनाविष्करणार्थम्॥

अभिसमयालङ्कारालोकायां प्रज्ञापारमिताव्याख्यायां
विशुद्धिपरिवर्तो नामाष्टमः॥

---

अधुना दर्शनमार्गार्थमाह। प्रज्ञापारमितेति (p. 200, 12)। प्रतिसत्यं धर्मज्ञानक्षान्तिं धर्मज्ञानमन्वयज्ञानक्षान्तिरन्वयज्ञानमित्येवं षोडशक्षणात्मकः। सर्वज्ञताधिकारे दर्शनमार्ग इत्यर्थः। तथा चोक्तम्।

धर्मज्ञानान्वयज्ञानक्षान्तिज्ञानक्षणात्मकः।
दुःखादिसत्ये दृङ्मार्ग एष सर्वज्ञतानये॥ ११॥ इति

नामधेयमात्रमेतदिति। विकल्पप्रतिबिम्बमात्रमेतदित्यर्थः। तच्च नामेदमिति नोपलभ्यते। तत्त्वतो निःस्वभावत्वात्। नाम किमुच्यत इत्याह। वाग्वस्त्वेवेति निर्विकल्पप्रतिबिम्बकं किमाकारं सत्यमित्याकारप्रतिपादनार्थमाह। किं कारणमित्यादि। न रूपं नित्यं नानित्यमिति। नैःस्वाभाव्येन रूपं नित्यानित्यवियोगान्न नित्यं नानित्यमित्याकारः प्रथमः। न रूपं बद्धं न मुक्तमत्यन्तविशुद्धमिति। दुःखादुःखविगमत्वेन बन्धमोक्षाभावाद्विशुद्धमपगतशाश्वतोच्छेदान्तमिति द्वितीयः। अनेन सुभूते कारणेनेति। अविपरीतसर्वधर्माभिसंबोधिहेतुतया। यथावद्धर्मतत्त्वद्योतिकामिमामेव प्रज्ञापारमितां भाषिष्यते। अन्यस्य तथाभूतधर्मतत्त्वप्रकाशने सामर्थ्याभावादित्यर्थः। रूपविशुद्धित इति (p. 201, 1)। शून्याशून्यरहितत्वाद्विशुद्धमिति तृतीयः। रूपानुत्पादानिरोधासंक्लेशाव्यवदानविशुद्धित इति। आत्मानात्मस्वभावाभावान्नोत्पन्नं न निरुद्धं न संक्लिष्टं न व्यवदातमेवं विशुद्धमिति चतुर्थः। आकाशविशुद्धित इति। हेत्वहेतुतुच्छत्वादाकाशसदृशं विशुद्धमिति पञ्चमः। रूपनिरुपलेपापरिग्रहतयेति।

समुदयासमुदयविसंयोगात्। सर्वक्लेशोपक्लेशनिरुपलिप्त इति षष्ठः। प्रभवाप्रभवसंक्लेशापरिग्रहेण निर्मुक्त इति सप्तमः। आकाशप्रतिश्रुत्काऽवचनीयप्रव्याहारनिरुपलम्भतयेति प्रत्ययाप्रत्ययविमुक्तत्वादाकाशप्रतिश्रुत्कावत् स्वरूपतोऽवचनीयमित्यष्टमः। यस्मान्निरोधानिरोधेनासम्बन्धस्तस्माद्वचनोदाहरणेन सन्तानान्तरे निरोधसत्यार्थे ऽप्रापणीय इति नवमः। शान्ताशान्ताभावान्नोपलम्भकारणमिति दशमः। सर्वोपलेपानुपलेपधर्मानुपलेपतयेति। प्रणीताप्रणीतविकलत्वात् सर्वोपलेपधर्मैः सास्रवैरनुपलेपधर्मैरनास्रवैश्चानुलिप्तत्वादतिक्रान्तोभयान्ता विशुद्धिरित्येकादशः। प्रागेवेति। सुतरामेवोद्ग्रहणादिकारिणां सुलब्धा लाभाः। श्रोत्रविज्ञानानुभवविशिष्टत्वादुद्ग्रहणादेरित्यर्थः। न तेषाञ्चक्षूरोग इत्यादि। निःसरणानिःसरणविविक्तत्वात् सर्वव्याध्यनुत्पाद इति द्वादशः। बहुतरमिति (p. 202, 3)। अष्टम्यादौ प्रजावलोकनादवतीर्णशक्रादिबहुतरश्रोतृसद्भावादिति भावः। मार्गे धर्मज्ञानक्षान्तिमाह। बहूनि सुभूत इत्यादिना। प्रज्ञापारमितया देवपुत्राणामनुपकारात्तां भाषमाणस्य रक्षादिकरणे तेषां को हेतुरिति। तत्कस्य हेतोरित्याशङ्क्याह। स देवमानुषासुरस्येत्यादि। अनुत्तरं रत्नमिति। सर्वपापप्रशमहेतुत्वेन मार्गामार्गरहितत्वादनुत्तररतिं तनोतीति। देवपुत्रादीनामुपकारभावादनुत्तररत्नमपायोच्छित्तिरिति त्रयोदशः। अतोऽपि सुभूत इत्यादि। न केवलं यत्र बहुतरश्रोतृजनसम्भवादतोऽप्यनुत्तररतिदानादपि ततो

धर्मभाणकत्वेन हेतुना बुद्धत्वप्राप्तेर्हेतुभूतं निदानं पुण्यं प्रसविष्यतीत्यर्थः। मार्गे धर्मज्ञानमाह। अपि तु खल्वित्यादिना। महानुभावत्वेऽपि बह्वन्तरायत्वे किं कारणमिति। तत्कस्य हेतोरित्याशङ्क्याह। तथा हीत्यादि। महानुभावत्वाद्बह्वनामभिलषणीयत्वाद्बहुप्रत्यर्थिकानि। यथा सारञ्चेत्यादि। येन प्रकारेणोत्तरोत्तरसारता तथा प्रत्यर्थिकबहुतेत्यर्थः। सामान्येन निर्दिश्येदानीं विशेषेणाह। अनुत्तरञ्चेदं सुभूते महारत्नमिति। सर्वसत्त्वहितसुखाद्यर्थं प्रत्युपस्थितत्वेन सर्वधर्मविकल्पाभावादविकल्पककल्याणप्रकृतिरत्नार्थेन न्यायान्यायासंश्लेषात् फलसाक्षात्करणं प्रत्युपायोऽविकल्पकत्वं महारत्नमिति चतुर्दशः। मार्गेऽन्वयज्ञानक्षान्तिमाह। न च सुभूत इत्यादिना (p. 203, 1)। कल्पितस्तावन्नावलीयते। परतन्त्रं न संश्लिष्यते। परिनिष्पन्नं न परिगृह्णातीत्यर्थभेदः। एतदुक्तम्। प्रतिपत्त्यप्रतिपत्तिविनिर्मुक्तत्वेन धर्माणां निमित्तैरसंसर्ग इति पञ्चदशः। विद्यमानत्वेऽपि धर्माणां कथनं न परिग्रह इति। तत्कस्य हेतोरित्याशङ्क्याह। तथाहीत्यादि। गतार्थम्। मार्गेऽन्वयज्ञानमाह। अनुत्पत्तित इत्यादिना। नैर्याणिकानैर्याणिकविकलत्वेनोभये वाच्यवाचकभावलक्षणे ज्ञेये शब्दे ज्ञानस्यानुत्पत्तिरित्याकारः षोडशः। प्रकारान्तरेणानुपलिप्तार्थं कथयन्नाह। तथाहीत्यादि। इत्थमपि धर्मतत्त्वमभिनिविश्यमानं दोषायेत्याह। सचेद्देवमपीत्यादि। यथोक्तनीत्या षोडशाकाराः सर्वज्ञताक्षणा इति। दर्शनमार्गो बोधिसत्त्वानामन्वयमुखेन कथितो-

ऽर्थादेतद्विपर्ययेण श्रावकादीनामनित्यादिभिराकारैर्दृङ्मार्गोऽवसेयः। तथा चोक्तम्।

रूपं न नित्यं नानित्यमतीतान्तं विशुद्धकम्।
अनुत्पन्नानिरुद्धादि व्योमाभं लेपवर्जितम्॥ १२॥
परिग्रहेण निर्मुक्तमव्याहारं स्वभावतः।
अव्याहारेण नास्यार्थः परेषु प्राप्यते यतः॥ १३॥
नोपलम्भकदत्यन्तविशुद्धिर्व्याध्यसम्भवः।
अपायोच्छित्त्यकल्पत्वे फलसाक्षात्क्रियां प्रति॥ १४॥
असंसर्गो निमित्तैश्च वस्तुनि व्यञ्जने द्वये।
ज्ञानस्य या चानुत्पत्तिरिति सर्वज्ञतालक्षणाः॥ १५॥

इति विस्तरेण निर्दिश्यैवं सकलार्थसङ्ग्रहकत्वेन त्रिसर्वज्ञतामध्ये सर्वाकारज्ञतामुपसंहरन्नाह। सा खलु पुनरित्यादि। तत्रावेशिका चित्तोत्पादद्वारेणोत्पादिका। निवेशिकाऽववादादिना प्रतिष्ठापिका। सन्दर्शिका सन्नाहप्रतिपत्त्या सामान्यरूपेण निदर्शिका प्रस्थानप्रतिपत्त्या विशेषरूपेण। आवाहिका सम्भारप्रतिपत्त्या प्रापिका निर्वाहिका निर्याणप्रतिपत्त्या निष्कर्षिका। सर्वत्र न कस्यचिद्धर्मस्येत्यभिसम्बन्धनीयम्। अविपरीतधर्मामृतरसेन तृप्ताः पूजयन्तीत्याह। अथ खलु इत्यादि। प्रसादौद्बिल्यसमुत्थः सिंहनादः किलकिलाप्रक्ष्वेडितमित्येके। हर्षजनितोऽट्टहासः। किलकिलाः तत्पूर्वकं नृत्यं प्रक्ष्वेडितमित्यपरे। वाराणस्यां प्रथमतो धर्मचक्रप्रवर्तनापेक्षया द्वितीयम्। तात्त्विकाभिनिवेशनिराकरणार्थमाह। नेदमित्यादि। तदेव कथयन्नाह। नापीत्यादि। मार्गज्ञतामुपसंहरन्नाह।

महापारमितेयमित्यादि (p. 204, 1) । असङ्गतेति । अनभिनिवेशता । उपलम्भेऽपि धर्मादर्शने को हेतुरिति । तत्कस्य हेतोरित्याशङ्क्याह । नहि स इत्यादि । सुबोधम् । प्रवर्तयिष्यतीति । उत्पादयिष्यति । कारणसामग्रीकरणेन धर्मोत्पादनात् । कथमेवमुच्यत इति । तत्कस्य हेतोरित्याशङ्क्याह । अत्यन्तेत्यादि । कारणस्यैवासत्त्वादिति भावः । निवर्तयिष्यतीति विनाशयिष्यतीति । मुद्गरादिना प्रवृत्तसन्तानविरुद्धपदार्थोत्पादने विनाशावसायात् कथमेवमुच्यत इति । तत्कस्य हेतोरित्याशङ्क्याह । आद्यनभिनिर्वृत्ता हि भगवन् सर्वधर्मा इति । आदावेवोत्पादहेतोरसत्त्वेनानुत्पन्नाः । तदेव कथयन्नाह । प्रकृतिविविक्तत्वात् सर्वधर्माणामिति । स्वभावेन शून्यत्वात् कुतो विरुद्धतेति भावः । सर्वज्ञतामुपसंहरन्नाह । नहि सुभूते शून्यतेत्यादि । शून्यत्वादीनामनुत्पन्नत्वादिति मतिः । इयं सेति सर्वज्ञता सर्वधर्मदेशनेत्यारभ्य यावद्दक्षिणीयः कृत इति । परमार्थसत्यमधिकृत्योक्तत्वात् सुगमः । यथोक्तनीत्या त्रिसर्वज्ञतोपसंहारे न विप्रतिपत्तिः कार्या । तथा चोक्तम् ।

इति सेयं पुनः सेयं सेयं खलु पुनस्त्रिधा ।
अधिकारत्रयस्यैषा समाप्तिः परिदीपिता ॥ १६ ॥

इति । किमर्थं पुनस्तथा सर्वज्ञतायां पृथग्भावनामार्गो नास्ति यथा मार्गज्ञतायामभिहितः । श्रावकप्रत्येकबुद्धसम्पदं बोधिसत्त्वो ज्ञानेन दर्शनेन चावलोक्यातिक्रामतीति

वचनेनासाक्षात्कर्तव्यत्वान्निर्दिष्टो बोधिसत्त्वानां श्रावकादीनां तु यथा परिदृष्ट एवार्थः पुनः पुनरभिमुखीक्रियमाणो भावनामार्ग इति सुगमत्वान्नोक्तः। निर्वेधभागीयं पुनर्बोधिसत्त्वानां पूर्वोक्तक्रमेणावसातव्यम्। श्रावकादीनां त्वनित्यादिभिरेवाकारैराकीर्यमाणे सत्यचतुष्टये सास्रवं भावनामयमूष्मादिकं स्पष्टत्वान्नोक्तमिति ग्राह्यम्। ननु मार्गज्ञतायां श्रावकादिमार्गस्याभिधानात् सर्वज्ञता कथितैव कस्मात् पुनः सर्वज्ञतायाः पृथङ्निर्देश इति चेत्। उच्यते। तत्र हि।

चतुर्णामार्यसत्यानामाकारानुपलम्भः।
श्रावकाणामयं मार्गो ज्ञेयो मार्गज्ञतानये॥

इत्यनुपलम्भभावनादिक्रमेण श्रावकादिमार्गो बोधिसत्त्वेन ध्येय इत्युक्तमतोऽनित्यादिभिराकारैर्व्यतिरेकमुखाक्षिप्तैरशेषवस्तुपरिज्ञानार्थं पृथक् सर्वज्ञतोपादानम्। बहुवक्तव्यञ्चेदमित्यलमतिप्रसङ्गेन[1]।

परिज्ञातत्रिसर्वज्ञतो वशित्वार्थं पुनः सर्वाकारमार्गवस्तुज्ञानसङ्ग्रहेण त्रिसर्वज्ञतां भावयतीति सर्वाकाराभिसम्बोधो वक्तव्यः। तत्र तावन्नित्यादिग्राहविपक्षस्य प्रतिपक्षधर्मता स्वभावानामनित्याद्यालम्बनप्रकाराणामाकारत्वेन व्यवस्थानं सामान्येन लक्षणं ज्ञेयमतो निर्वस्तुकाकारदोषो नेह विजृम्भते। ते चाकारास्त्रिसर्वज्ञताभेदात्त्रिप्रकारा एव मता इति ग्राह्यम्। तथा चोक्तम्।

---

[1] Here ends the III chapter of AA. as shown by the colophon inserted in the text—अभिसमयालङ्कारालोकायां प्रज्ञापारमिताव्याख्यायां सर्वज्ञतापरिच्छेदस्तृतीयः॥

वस्तुज्ञानप्रकाराणामाकारा इति लक्षणम् ।
सर्वज्ञतानां त्रैविध्यात् त्रिविधा एव ते मताः॥ १ ॥ इति

तत्र चत्वार्यार्यसत्यान्यधिष्ठानं कृत्वा त्रिसर्वज्ञताधिकारेण यस्मिन् सत्ये यावन्तो भवन्त्याकारास्तानुपरि दीपयन् सर्वज्ञताधिकारेण तावदाह । एवमुक्त आयुष्मान् सुभूतिर्भगवन्तमित्यादि (p. 204, 10) । असत्पारमितेयमिति । आकाशस्येव नित्यरूपेणासत्तामविद्यमानतामुपादाय हेतूकृत्यासदनित्याकार इत्यर्थः । असमसमतेति (p. 205, 1) । सर्वधर्मानुपलब्धेरिव समतामनुत्पादतामुपादाय । दुःखाकारोऽन्याकारविसदृशत्वेनासमोऽतुल्यः स तत्त्वतः समताऽनुत्पादः । विविक्तेति । अत्यन्तेनातिशयेनात्मनः शून्यतामुपादाय शून्याकारो गुणावाहकत्वेन विवेकः । अनवमृद्येति । सर्वधर्माणामात्मत्वेनानुपलब्धितामुपादाय सर्वतीर्थिकासाधारणत्वेन तीर्थिकाकोप्यत्वेनानात्माकारोऽनवमर्दनीयः । तदेवमसदनुत्पादविवेकानवमर्दनीयाकाराश्चत्वारो यथासङ्ख्यमनित्यादिलक्षणा दुःखसत्ये भवन्ति । अपदेति । तत्र चत्वारोऽरूपिणः स्कन्धा नाम, शरीरं रूपस्कन्धस्तेषामसौ हेतुरिति कृत्वा न्यायेनानामाशरीरतामुपादाय हेत्वाकारास्तत्त्वतोऽप्रसवाधानार्थेनापदः । अस्वभावेति । अनुत्पादानिरोधस्वभावामनागतिमगतिमुपादाय समुदयाकारोऽन्यायेनाकाशम् । अवचनेति । सर्वधर्माणामविद्यमानत्वेनोद्भावनासंवृत्याऽपि शब्दाऽवाच्यत्वादविकल्प्यतामुपादाय। प्रभवाकारोऽप्रव्याहारः। अनामेति। पञ्चस्कन्धा-

नुपलब्धितामुपादायाचैतसिकत्वेन प्रत्ययाकारोऽनाम । तदेवमपदाकाशाप्रव्याहारानामाकाराश्चत्वारो यथाक्रमं हेत्वादिलक्षणाः समुदयसत्ये भवन्ति। अगमनेति। निरोधस्वभावसर्वधर्माणां क्वचिदगमनतामुपादाय निरोधाकारोऽगमनः। असंहार्येति। आदिशान्तत्वेन विषयभावोपसंहाराभावात् सर्वधर्माग्राह्यतामुपादाय। शान्ताकारोऽसंहार्यः। अक्षयेति। धर्मधातुरूपेणाक्षयधर्मयोगतामुपादाय प्रणीताकारोऽक्षयः। अनुत्पत्तीति। एकानेकहेतुवैधुर्यात् सर्वधर्मानभिनिर्वृत्तितामुपादाय निःसरणाकारोऽनुत्पत्तिः। तदेवमगमनासंहार्याक्षयानुत्पत्त्याकाराश्चत्वारो यथासंख्यं निरोधादिस्वभावा निरोधसत्ये भवन्ति। अकारकेति। मार्गस्य कर्तृग्राहप्रतिपक्षत्वात् कारकानुपलब्धितामुपादाय मार्गाकारोऽकारकः। अजानकेति प्रमाणबाधितत्वेन सर्वधर्माणामनात्मतामनुपलम्भात्मतामुपादाय न्यायाकारोऽजानकः। असंक्रान्तीति। धर्मधातुरूपेण च्युत्युपपत्त्योर्विनाशोत्पादयोरनुत्पत्तिमुपादाय प्रतिपत्त्याकारोऽसङ्क्रान्तिः। अविनयेति। पूर्वान्तापरान्तप्रत्युपपन्नाध्वानुपलब्धितामुपादाय क्लेशविनयासम्भवान्नैर्याणिकाकारोऽविनयः। तदेवमकारकाजानकासङ्क्रान्त्यविनयाकाराश्चत्वारो यथासंख्यं मार्गादिस्वभावा मार्गसत्ये क्लेशावरणप्रतिपक्षेण भवन्ति। न्यायानुयायिनो जन्मनोऽसत्त्वादनुत्पादविज्ञपनतामुपादाय। स्वप्नप्रतिश्रुत्काप्रतिभासमरीचिमायाकाराः पञ्च यथाक्रमं निःस्वभावानुत्पन्नानिरुद्धादिशान्तप्रकृतिपरिनिर्वृतिलक्षणाः

सामान्येन ज्ञेयावरणप्रतिपक्षभूताः। सर्वज्ञतया प्रत्येकबुद्धाः सङ्गृहीता इति। तेषां ज्ञेयावरणप्रतिपक्षात्मके सास्रवे भावनामार्गे भवन्ति। असंक्लेशेति। रागद्वेषमोहास्वभावतामुपादाय क्लेशाभावोऽसंक्लेशः। अव्यवदानेति। आश्रयस्य क्लिष्टसत्त्वस्यानुपलब्धितामुपादाय व्यवदानाभावोऽव्यवदानम्। अनुपलेपेति। आकाशस्य प्रकृतिप्रभास्वरत्वेनानुपलेपतामुपादाय क्लेशोपक्लेशलेपाभावोऽनुपलेपः। अप्रपञ्चेति (p. 206, 1)। सर्वधर्ममननानामुपलम्भरूपाणां समतिक्रमतामुपादाय प्रपञ्चाभावोऽप्रपञ्चः। अमननेति। सर्वोपलम्भसमुद्गतादनिञ्जनतां निष्प्रकम्पतामुपादाय मननाभावोऽमननः। अचलितेति। आसंसारं धर्मधातुस्थिततामुपादाय भ्रंशाभावोऽचलितः। तदेतेऽसंक्लेशाव्यवदानानुपलेपाप्रपञ्चामननाचलाकाराः षड् यथाक्रमं संक्लेशव्यवदानक्लेशवासनारूपादिप्रपञ्चस्वाधिगमोपलम्भपरिहाणिविकल्पानां षण्णां प्रतिनियतज्ञेयावरणानां प्रतिपक्षभूताः प्रत्येकबुद्धानां ज्ञेयावरणप्रतिपक्षात्मकेऽनास्रवदर्शनमार्गे भवन्ति। समुदायेन सप्तविंशतिरिति सर्वज्ञताकाराः। तथा चोक्तम्।

असदाकारमारभ्य यावन्निश्चलताकृतिः।

चत्वारः प्रतिसत्यं ते मार्गे पञ्चदश स्मृताः॥ २॥ इति

तदनन्तरं मार्गज्ञताकारा वक्तव्याः। तत्र संक्लेशेतरपक्षाश्रयेण समुदयमार्गसत्ये कारणम्। दुःखनिरोधसत्ये च फलमित्यर्थद्वारेण निर्दिष्टे समुदयमार्गदुःखनिरोधसत्येषु यथासंख्यमष्टौ सप्त पञ्च षोडशाकारा बोधव्याः। तत्र

हेतुस्त्रिविधः। छन्दो रागो नन्दी च पौनर्भविकी तृष्णेति। छन्दप्रतिपक्षेणाह। विरागेति। सर्वधर्माणां शून्यता-रूपेणावितथतां सत्यतामुपादाय। रागाभावो विरागः। कर्तुकामत्वाभावाभिसन्धिना निर्दिष्टः छन्दोऽवस्थायां रागः प्रधानमिति कृत्वा। तदभावेन छन्दस्य भावापदेशात्। रागस्य वा कार्यात्मनोऽभावेनाऽविकलतद्धेतुकच्छन्दस्याभावः कथितोऽन्यथाऽविकले कारणे सति कार्यानुदयो न स्यादिति न्यायात्। रागप्रतिपक्षेणाह। असमुत्थानेति। मायोप-मत्वे सर्वधर्मनिर्विकल्पतामुपादाय समुत्थानस्य छन्दस्या-भावोऽसमुत्थानः। धर्मेष्वसक्तत्वाभिसन्धिना कथितः। रागावस्थायां साक्षात्प्रवृत्तिहेतुत्वेन छन्दः प्रधानमिति कृत्वा तदभावेन रागस्याभावापदेशात्। पुनर्भवनिमित्त-नन्दीतृष्णाप्रतिपक्षेणाह। शान्तेति। सर्वधर्माणां नील-पीतादिनिमित्तानुपलब्धितामुपादाय तृष्णायाः प्रधानेना-नुपशमस्याभावः शान्तः। समुदयास्त्रिधा रागद्वेषमोहा-स्तत्प्रतिपक्षेणाह। निर्दोषेति। दशबलवैशारद्यादिगुण-पारमितामुपादाय दोषाभावो निर्दोषोऽरागोऽद्वेषोऽमोह इति यावत्। प्रभवः परिकल्पस्ततो रागादिप्रसूते-स्तत्प्रतिपक्षेणाह। निःक्लेशेति। परिकल्पस्य द्वयाद्यभिनि-वेशस्यासत्तामुपादाय क्लेशहेतुप्रभवाभावो निःक्लेशः। प्रत्ययः सत्त्वाभिनिवेशः। सत्कायदृष्टेः सर्वानर्थप्रत्ययत्वात्तत्प्रति-पक्षेणाह। निःसत्त्वेति। अविपर्यासार्थेन भूतकोटितामुपा-दाय प्रत्ययाभावो निःसत्त्वम्। तदेवं विरागाकारमारभ्य यावन्निःसत्त्वाकार इति। यथाक्रमं यो हेतुः छन्दो रागो

नन्दी च। यः समुदयो रागद्वेषमोहाः। यः प्रभवः परिकल्पः। यश्च प्रत्ययः सत्त्वाभिनिवेश इति। तत्प्रतिपक्षेण त्रयस्त्रय एकं एक इत्यष्टावाकाराः समुदयसत्ये भवन्ति। अप्रमाणेति। सर्वधर्मसमुत्थानस्य प्रादुर्भावस्य समुत्थानतामुपादाय विपक्षनिवृत्तिप्रतिपक्षावाहकत्वेनाप्रमाणसत्त्वावकाशदत्वान्मार्गाकारोऽप्रमाणः। यथा चाप्रमाणसत्त्वावकाशद इत्याह। अन्तद्वयाननुगमेति। सर्वधर्मानभिनिवेशतामुपादाय संसारनिर्वाणान्तद्वयस्य प्रहाणादनुगमोऽनुपलम्भः। असम्भिन्नेति। धर्मधातुरूपेण सर्वधर्माणामसम्भेदनतामनानारूपतामुपादाय विपक्षनिवृत्त्या न्यायाकारोऽसम्भिन्नः। यथा च न्याय इत्याह। अपरामृष्टेति। सर्वश्रावकप्रत्येकबुद्धभूम्यस्पृहनतामुपादाय। तद्विकल्पासंमृष्टोऽपरामृष्टः। अविकल्पेति। विकल्पसमतामुपादाय प्रतिपत्त्याकारोऽविकल्पः। यथा च प्रतिपत्तिरित्याह। अप्रमेयेति। अप्रमाणधर्मतामुपादाय लब्धपरित्यागेऽलब्धलाभे च हीनप्रणीतविकल्पाभावं पुरोधाय ज्ञेयावधिरहितत्वेनाप्रमेयः। असङ्गेति। तत्र तत्राधिगमे गगनवत् सर्वधर्मासङ्गतामुपादाय नैर्याणिकाकारोऽसङ्गः। तदेवमप्रमाणान्तद्वयाननुगमासम्भिन्नापरामृष्टाविकल्पाप्रमेयासङ्गाकारा यथाक्रमं यः सर्वसत्त्वावकाशदो मार्गो यथा च सर्वसत्त्वावकाशदः, यो न्यायो यथा च न्यायः, या प्रतिपत्तिर्यथा च प्रतिपत्तिः, यच्च निर्याणमिति, द्वौ द्वौ द्वावेक इति सप्ताकारा मार्गसत्ये भवन्ति। अनित्येति। सर्वधर्माणामसत्त्वेन हेतुप्रत्ययै-

रसंस्कृततामुपादाय नित्यमसदित्यसदर्थोऽनित्यार्थः। दुःखेति। आकाशस्य सर्वधर्मेषु समतामुपादाय सर्ववस्तुव्यापि संस्कारदुःखम्। शून्येति। अधिष्ठाचात्मसम्बन्धगन्धानुबन्धेनापि सर्वधर्मानुपलब्धितामुपादाय परपरिकल्पितात्मादिरहितत्वं शून्यम्। अनात्मेति। स्वयमनात्मत्वेन सर्वधर्मानभिनिवेशतामुपादाय पुद्गलाद्यस्वभावोऽनात्मा। अलक्षणेति। सर्वधर्मानभिनिर्वृत्तितामुपादाय निःस्वभावोऽलक्षणम्। तदेवमनित्यदुःखशून्यानात्माकाराः पञ्चमालक्षणाकारस्वभावा इति पञ्चाकारा दुःखसत्ये भवन्ति। सर्वशून्यतेति। पूर्वापरभावलक्षणस्यान्तस्य मध्यस्य च परितोऽन्तद्वयेन युक्तत्वात्पर्यन्तस्याविद्यमानत्वेनानन्तापर्यन्ततामुपादाय निरोधसत्याकाराः षोडशशून्यताः सर्वशून्यताः। तत्राध्यात्मबहिर्धोभयवस्तूनां निरोधेनाध्यात्मबहिर्धोभयशून्यताकारास्त्रयो निरोधाकारस्वभावाः शून्यतायां भाजनलोके परमार्थे संस्कृतेऽसंस्कृते शाश्वतोच्छेदान्तेऽनवराग्रसंसारेऽधिगतधर्मानवकारेऽभिनिवेशस्य प्रज्ञप्त्यात्मकस्याष्टप्रकारस्य निरोधेन यथाक्रमं शून्यताशून्यता। महाशून्यता। परमार्थशून्यता। संस्कृतशून्यता। असंस्कृतशून्यता। अत्यन्तशून्यता। अनवराग्रशून्यता। अनवकारशून्यता चेत्यष्टौ शून्यताकाराः शान्ताकारस्वभावाः। प्रणीताकारः परपरिकल्पितकारकनिरोधेन प्रकृतिशून्यताकारः। विषयभ्रान्त्यात्मिकानां निरोधेन सर्वधर्मलक्षणानुपलम्भशून्यताकारास्त्रयो निःसरणाकारस्वभावाः। स्वभावनिरोधेनाभावस्वभावशून्यताकार एव

निःसरणाकारात्मक इति निरोधाकारं शान्ताकारं प्रणीताकारं निःसरणाकारञ्चाधिकृत्य यश्चाध्यात्मिकादेर्वस्तुनो निरोधः । यथा च शान्तोऽष्टविधाभिनिवेशोपरमात् । यथा च प्रणीतः प्रकृत्या । यथा च निःसरणं त्रिविधभ्रान्तिनिरोधेन । यच्च निःसरणमभावस्वभावतेति त्रयोऽष्टावेकस्त्रय एक इति यथाक्रमं षोडशाकारा निरोधसत्ये भवन्ति । समुदायेन षट्त्रिंशदिति मार्गज्ञताकाराः । तथा चोक्तम् ।

हेतौ मार्गे च दुःखे च निरोधे च यथाक्रमम् ।
अष्टौ ते सप्त पञ्चेति षोडशेति च कीर्तिताः ॥ ३ ॥ इति

तदनन्तरं सर्वाकारज्ञताकारा वक्तव्याः तत्र च सर्वार्यपुद्गलाधिकारेण त्रिविधसर्वज्ञताकारसङ्ग्रहो भवति अतः सर्वज्ञतामार्गभेदेनाह । स्मृत्युपस्थानादिबोधिपक्षधर्मेति (p. 207, 1) । तेषामेव बोधिपक्षधर्माणामनुपलब्धितामुपादाय स्मृत्युपस्थानादय एव पारमितेत्यर्थः । एतदुक्तम् । तत्र सर्वज्ञतायामादौ चतुःसत्यावताराय स्वसामान्यलक्षणपरीक्षितकायवेदनाचित्तधर्मस्मृत्युपस्थानाकाराश्चत्वारो वस्तुपरीक्षामार्गः, तेन कायादिचतुर्विधवस्तुपरीक्षणात् । ततोऽवतीर्णस्य वीर्यमिति सर्वथोत्पन्नानुत्पन्नस्याकुशलस्य कुशलस्य च यथाक्रमं प्रहाणानुत्पादनार्थं भूयोभावोत्पादनार्थं च हेतुभूतवीर्यात्मकाः सम्यक् प्रहाणाकाराश्चत्वारो व्यवसायिकमार्गः, तथावरणप्रहाणादिमुखेन वीर्यारम्भात् । वीर्यवतश्चित्तकर्मण्यतापादानमिति छन्दवीर्यचित्तमीमांसासमाधिप्रहाणसंस्कारसमन्वागतर्द्धिपादाकाराश्चत्वारः समाधिपरिकर्ममार्गः, तथा

छन्दादिमुखेन कर्मण्यतापादनात्। कृतचित्तपरिकर्मणो-ऽनन्तरमूष्ममूर्धप्रयोग इति तत्स्वभावाः श्रद्धावीर्यस्मृति-समाधिप्रज्ञेन्द्रियाकाराः पञ्च सम्यगभिसमयप्रायोगिक-मार्गः, श्रद्धेन्द्रियादिनार्यमार्गसमुदागमायाधिपतिभूतोष्म-मूर्द्धप्रयोगात्। अधिगतोष्मादेः क्षान्त्यग्रधर्मप्रयोग इति तत्स्वभावाः श्रद्धावीर्यस्मृतिसमाधिप्रज्ञाबलाकाराः पञ्च सर्वथाभिसमयसंश्लेषमार्गः, श्रद्धाबलादिनाऽनन्तरं सत्य-प्रतिवेधार्थमाश्रद्ध्यादिविपक्षानभिभूतक्षान्त्याग्रधर्मप्रयो-गात्। विदितोष्मादिचतुष्कस्य सत्यदर्शनमार्ग इति स्मृतिधर्मप्रविचयवीर्यप्रीतिप्रस्रब्धिसमाध्युपेक्षाकाराः सप्त-बोध्यङ्गान्यभिसमयमार्गः, तेनादितः प्रत्यात्मवेद्यतत्त्वा-भिसम्बोधात्। परिज्ञातसत्यदर्शनस्य भावनामार्ग इति सम्यग्दृष्टिसंकल्पवाक्कर्मान्ताजीवव्यायामस्मृतिसमाध्यार्या-ष्टाङ्गमार्गाकारा विशुद्धनैर्याणिकमार्गः, दर्शनमार्गादूर्ध्व-मनेन भावनाप्रहातव्यक्लेशविशुद्धये निर्याणात्। अत एवैषां बोधिपक्षधर्माणामेषानुपूर्वी। तदेवं वस्तुपरीक्षा-मार्गादि सप्तविधं मार्गमधिकृत्य सर्वज्ञतामार्गाधिष्ठानाः सप्तत्रिंशदाकारा भवन्ति। तदनन्तरं मार्गज्ञतामार्गभेदा-नाह। शून्यानिमित्ताप्रणिहितपारमितेति। शून्यानात्मा-कारस्वभावं प्रथमं शून्यताविमोक्षमुखं, दृष्टिकृतप्रतिपक्षः। यच्चानिमित्तं निरोधो येन चानिमित्तं विकल्पापोढेन मार्गेणेति कृत्वा निरोधमार्गसत्याकारस्वभावं द्वितीयमा-निमित्तविमोक्षमुखं दृष्टिनिमित्तविकल्पप्रतिपक्षः। यत्तू-क्तमानिमित्तः शमाकारैरिति तद्वस्तुनिमित्तानुविद्धं श्रावक-मार्गमधिकृत्येति न तेनास्य विरोधः। अनित्यदुःख-

समुदयसत्याकारस्वभावं तृतीयमप्रणिहितं विमोक्षमुखं त्रैधातुकप्रणिधानप्रतिपक्ष इति। एवं त्रिविमोक्षमुखाकारास्त्रयः प्रतिपक्षमार्गः। अष्टविमोक्षपारमितेयमिति। अविभावितविभावितरूपसंज्ञत्वाद्यथाक्रममध्यात्मं रूप्यरूपी प्रत्यात्मं ध्यानमारूप्यसमापत्तिं वा निःश्रित्य बहिर्धा रूपाणि सुवर्णदुर्वर्णानि पश्यतीत्येतौ निर्माणावरणप्रतिपक्षेण द्वौ विमोक्षौ। शुभाशुभरूपनिर्माणे च यथासंख्यमाभोगः प्रातिकूल्यञ्च संक्लेशस्तत्प्रतिपक्षेण शुभं विमोक्षमुखं कायेन साक्षात्कृत्वोपसम्पद्य विहरति। प्रत्यात्मं शुभाशुभेषु रूपेष्वन्योन्यापेक्षासंज्ञामन्योन्यानुगमसंज्ञां च निश्रित्यान्योन्यैकरससञ्ज्ञालाभेन यथेष्टं रूपाधिमोक्षविभूत्वलाभादित्येको विमोक्ष इति विमोक्षाकारास्त्रयो निर्माणमार्गः। मोक्षानुकूलविहारमार्गस्वभावाश्चतुरारूप्यसमापत्त्याकाराः शान्तविहारमार्गस्वभावः सञ्ज्ञावेदितनिरोधाकार एक इति पञ्चाकारा दृष्टधर्मसुखविहारमार्गः। नवानुपूर्वविहारपारमितेयमिति। चतुर्ध्यानारूप्यनिरोधसमापत्त्याकारा नवलोकोत्तरमार्गः। चतुःसत्यपारमितेयमिति। चतुःसत्यसङ्गृहीताः क्लेशविसंयोगलक्षणानन्तर्यमार्गाकाराश्चत्वारः प्रहाणमार्गः। दशपारमितेयमिति। दानादिपारमिताकारा दशबुद्धत्वमार्गः। तदेवं प्रतिपक्षमार्गादिषड्विधमार्गमधिकृत्य मार्गज्ञता मार्गाधिष्ठानाश्चतुस्त्रिंशदाकारा भवन्ति। तदनन्तरं सर्वाकारज्ञताकारा वक्तव्याः। तत्र च मार्गो निरतिशयत्वादेक एव केवलं तु बलवैशारद्याद्याकारभेदेनास्य विशेषमार्गस्यासाधारणभेदो वक्तव्य इत्याह। बलपारमितेयमिति। स्थानास्थानज्ञान-

बलं, कर्मविपाकज्ञानबलं, नानाधिमुक्तिज्ञानबलं, अनेकलोकधातुज्ञानबलं, इन्द्रियपरापरज्ञानबलं, सर्वत्रगामिनीप्रतिपज्ज्ञानबलं, संक्लेशव्यवदानज्ञानबलं, पूर्वनिवासानुस्मृतिज्ञानबलं, च्युत्युपपत्तिज्ञानबलं, आस्रवक्षयज्ञानबलमिति निर्जितविपक्षत्वेनानवमृद्यतामुपादाय बलाकारा दश। वैशारद्यपारमितेयमिति। बुद्धोऽहमित्यात्मप्रतिज्ञाने रागादीनामन्तरायत्वाख्याने सर्वज्ञतादिमार्गस्य निर्याणत्वप्रकाशने क्षीणास्रवत्वेनात्मनोऽभ्युपगमे च पर्यनुयोक्तुरभावेनानवलीनचित्ततामुपादाय वैशारद्याकाराश्चत्वारः। प्रतिसंवित्पारमितेयमिति। पर्याये धर्मलक्षणे जनपदभाषायां धर्मप्रभेदे च यथाक्रममधिगमास्वादनज्ञेयावरणप्रतिघाताभावेन सर्वज्ञानासङ्गाप्रतिघातितामुपादाय धर्मार्थनिरुक्तिप्रतिभानप्रतिसंविदाकाराश्चत्वारः। सर्वबुद्धधर्मावेणिकपारमितेयमिति। नास्ति स्खलितं रवितं मुषितस्मृतिरसमाहितं चित्तं नानार्थसञ्ज्ञाऽप्रतिसंख्यायोपेक्षा चेत्येवमाकाराः षट्। ज्ञेयावरणविशुद्धिमारभ्य नास्ति छन्दतो वीर्यतः स्मृतितः समाधेः प्रज्ञाया विमुक्तेश्च सकाशात्परिहाणिरित्येवमाकाराः षट्। कायवाङ्मनस्कर्मणां ज्ञानपूर्वङ्गमानुपरिवर्तनाकारास्त्रयः। अतीतानागतप्रत्युत्पन्नेष्वसङ्गाप्रतिहतज्ञानाकारास्त्रय इति श्रावकाद्यसाधारणत्वेन गणनासमतिक्रमणतामुपादायाष्टादशावेणिकबुद्धधर्माकाराः। तथागततथतेति। सर्वस्य धर्मस्य बुद्धैर्भगवद्भिर्भाषितस्य लक्षणार्थवैकल्यादवितथतामुपादाय सर्वबुद्धभाषिततथताकार एकः। स्वयम्भूपारमितेयमिति।

सर्वधर्मास्वभावतामुपादाय तदधिगमस्यापरप्रत्ययत्वात् । सर्वधर्मवशवर्तनस्वयम्भ्वाकार एकः । सर्वज्ञज्ञानपारमितेयमिति । सर्वधर्मस्वभावसर्वाकारपरिज्ञानतामुपादाय सर्वाकाराभिसम्बोधिबुद्धत्वाकार एकः । तदेवं कृत्वा यथा बलादिभिराकाराणां प्रभेदो यश्चैषां स्वभावस्तथता । यस्य च ते सर्वधर्मवशवर्तिनः स्वयम्भुवो यदर्थञ्च सर्वधर्मसर्वाकाराभिसम्बोधायेति यथाक्रमं दश चत्वारश्चत्वारोऽष्टादश एक एक एकश्चेत्येकोनचत्वारिंशदाकाराः सर्वाकारज्ञतामार्गाधिष्ठाना भवन्ति । यथोक्ता एव चाकाराः श्रावकादिभेदेन सर्वाकारज्ञतायां मार्गसत्यभेदादवगन्तव्याः । तथा चोक्तम् ।

स्मृत्युपस्थानमारभ्य बुद्धत्वाकारपश्चिमाः ।
शिष्याणां बोधिसत्त्वानां बुद्धानाञ्च यथाक्रमम् ॥ ४ ॥
सप्तत्रिंशच्चतुस्त्रिंशत्त्रिंशन्नव च ते मताः ।
त्रिसर्वज्ञत्वभेदेन मार्गसत्यानुरोधतः ॥ ५ ॥ इति

तत्रानास्रवाः सास्रवाश्च सर्वज्ञताकारा यथाक्रमं श्रावकबोधिसत्त्वभेदेन । मार्गज्ञताकाराः सास्रवा एव बोधिसत्त्वानामत्यन्तक्लेशाप्रहाणात् । अनास्रवा एव सर्वाकारज्ञताकाराः सवासनक्लेशज्ञेयावरणप्रहाणेन सर्वधर्मज्ञानित्वात् सम्यक्सम्बुद्धस्येत्येकत्र गण्यमानं त्रिसप्तत्युत्तरमाकारशतमित्याकाराः । यदुक्तं नामतः षोडशेभ्योऽन्याकारा इति तत्क्लेशावरणमात्रप्रतिपक्षाकाराभिसन्धिनेति न तेनास्य विरोधः ॥

अभिसमयालङ्कारालोकायां प्रज्ञापारमिताव्याख्यायां
स्तुतिपरिवर्तो नाम नवमः ॥

विशिष्टप्रयोगैराकारा भावयितव्यास्ते च प्रयोक्तारं विना कथयितुमशक्या इति श्रवणादिभाजनं प्रयोक्तारं निर्दिशन्नाह। अथ खलु शक्रस्येत्यादि (p. 208, 2)। तथागतमुद्दिश्य विहारादिकरणात् पूर्वजिनकृताधिकाराः। पिण्डपातादिदानाद्बहुबुद्धावरोपितकुशलमूलाः। कल्याणमित्रैरधिष्ठितत्वेन कल्याणमित्रपरिगृहीताः। यथोक्तविशेषणत्रयोपेता एवाकारलक्षणाया मातुरस्या मुख्यतः श्रवणभाजनम्। तथा चोक्तम्।

कृताधिकारा बुद्धेषु तेषूप्तशुभमूलकाः।
मित्रैः सनाथाः कल्याणैरस्याः श्रवणभाजनम्॥ ६॥ इति

अवरमात्रकेणेति। अल्पेन। कायाद्युपस्थानाराधनाद्बहुबुद्धपर्युपासिताः। संशयार्थनिर्णयाय स्वरूपपरिपृच्छनात् परिपृष्टाः। हेतुपरिपृच्छया परिप्रश्नीकृताः। दानादिदशपारमिताप्रतिपत्त्यनुष्ठानाद्बहुबुद्धावरोपितकुशलमूलाः। कृततथागतपर्युपासनाद्य एवोद्ग्रहणादिभाजनमित्यवसातव्यम्। तथा चोक्तम्।

बुद्धोपासनसम्प्रश्नदानशीलादिचर्यया।
उद्ग्रहधारणादीनां भाजनत्वं सतां मतम्॥ ७॥ इति

युक्त एवायं शक्रस्य वितर्को यस्य यथोक्तहेतुरस्ति स एवाधिमोक्षं करोतीत्याह। यो भगवन्नित्यादि (p. 209, 8)। तथा त्वया शिक्षिष्यत इत्यादि पदत्रयं प्रयोगमौलपृष्ठावस्थासु दर्शनभावनाविशेषमार्गभेदाद्वा ग्राह्यम्। ननु विशिष्टार्थाधिगमाभावे कथमुद्ग्रहादिमात्रेणाविनिवर्तनीयो धारयितव्य इति। तत्कस्य हेतोरित्याशङ्क्याह। गम्भीरे-

त्यादि । यथोक्ततथागतपर्युपासनसंप्रश्नदानशीलादिचर्या-हेतुत्रयवैपरीत्येन परीत्तकुशलमूलेनापरिपृच्छकजातीयेन पूर्वमचरितवतेति पदत्रयं योज्यम् । एतदुक्तम् । "व्यतिरेकमुखेन यस्माद्यथानिर्दिष्टबुद्धोपासनादिकारणेनाधिमुच्यति प्रज्ञापारमितां विशिष्टाध्याशयतया तस्मादविनिवर्तनीयो धारयितव्य" इति । यथोक्तहेतुवैकल्याच्च प्रतिक्षिपन्तीत्याह । ये पुनरधिमुच्येत्यादि । कथमिदानीं प्रतिक्षेपाशयेन पूर्वं प्रतिक्षेपो गम्यत इति । तत्कस्य हेतोरित्याशङ्क्याह । यथापीत्याह (p. 210, 2) । यस्मादिदानीं कुशलमूलानं परीत्तत्वात् प्रतिक्षेपाशयो मातुस्तस्मात् पूर्वमपि प्रतिक्षेपो गम्यते । अन्यथा परीत्तकुशलमूलत्वानुपपत्तेरित्यर्थः । तदेवाह । न हि भगवन्नित्यादि । उचितमेवोक्तम् । शारिपुत्रेणेत्याह । गम्भीरेत्यादि । किमत्राश्चर्यं । नैव किञ्चित् कारणानुरूपत्वात् कार्यस्य । सञ्जातप्रसादातिशयत्वादाह । नमस्करोमीत्यादि । कथं मातुर्नमस्कारेऽन्यस्य सम्बन्धाभावान्नमस्कार इति । तत्कस्य हेतोरित्याशङ्क्याह । अतो निर्जाता हीत्यादि । बोधिसत्त्वावस्थायां मातुरभ्यासेन बुद्धत्वप्राप्तेस्ततः सर्वज्ञता निर्जाता । बुद्धत्वावस्थायां विनेयेभ्यः प्रज्ञापारमिताप्रकाशनात् सर्वज्ञज्ञानप्रभाविता च प्रज्ञापारमितेत्येवं हेतुफलसम्बन्धात् प्रज्ञापारमितानमस्कारे सर्वज्ञज्ञानस्य नमस्कारः । एवमिति । सर्वज्ञज्ञानस्य हेतुत्वेन फलत्वेन चेत्यर्थः । श्रुतचिन्ताभावनामयज्ञानैर्यथाक्रमं प्रज्ञापारमितायां चरितव्यमित्यादि । पदत्रयं योज्यम् । प्रयोक्तुर्निर्देशानन्तरं प्रयोगार्थं प्रश्नय-

न्नाह। कथं भगवन्नित्यादि (p. 211, 5)। प्रकरणानुरूपत्वात् प्रश्नस्य साधु साध्विति साधुकारदानम्। एतमर्थमित्यादि। वक्ष्यमाणान् विंशतिप्रयोगानारभ्य स्वाधिगमार्थं परिप्रष्टव्यम्। पराधिगमार्थं परिप्रश्नीकर्तव्यम्। तथागतं मन्यसे प्रतिपद्यसे जानीष इति यावत्। तत्र रूपादिष्वनवस्थानप्रयोगमाह। इहेत्यादिना। आधारस्वरूपभेदेन रूपे रूपमिति पदद्वयं वाच्यम्। ततः किमित्याह। यत इत्यादि। एतदुक्तम्। "यस्माद्रूपादिषु निःस्वभावतया स्थानप्रतिषेधस्तस्मात्तत्रानवस्थानप्रयोग" इति। अयोगप्रयोगार्थमाह। रूपमिति कौशिक न योजयतीति। न योगमापद्यत इत्यर्थः। ततः किं भवतीत्याह। यत इत्यादि। एवं योगमापद्यत इति। एवं तत्त्वतो योगाभावेन संवृत्या योगमापद्यते। अयोग एव तेषु प्रयोग इत्यर्थः। गम्भीरप्रयोगमाह। गम्भीरेत्यादिना (p. 212, 4)। रूपादितथतागम्भीरतया प्रतिष्ठानानुपलब्ध्यर्थेन सर्वज्ञताधिकारे गम्भीरेत्यवबोधात्। दुरवगाहप्रयोगमाह। दुरवगाहेत्यादिना। रूपादिदुरवगाहतया प्रकृत्यनाविलार्थेन मार्गज्ञताधिकारे दुरवगाहेत्यधिमोक्षात्। तदेव कथयन्नाह। दुरनुबोधेति। श्रोत्रविज्ञानेन तदाकृष्टेन च मनोविज्ञानेन दुरनुबोधत्वात्। अप्रमाणप्रयोगमाह। अप्रमाणेत्यादिना। रूपाद्यप्रमाणतया पर्यन्तानुपलम्भार्थेन सर्वाकारज्ञताधिकारेऽप्रमाणेत्यालम्बनात्। अथवा गम्भीराभिसम्बोधमसाधारणाभिसम्बोधं निरुत्तराभिसम्बोधञ्चाधिकृत्य यथाक्रमं त्रिविधोऽयं गम्भीरप्रयोगादि-

रुक्तः। साधूक्तत्वेन गम्भीरप्रयोगं स्पष्टयन्नाह। एवमेतदित्यादिना। तदयं समासार्थो यदा गम्भीरं रूपादिकमित्यभिनिवेशयोगेन तत्त्वतो न तिष्ठति तदाऽविपर्यस्तत्वाच्च गम्भीरयोगमापद्यते। यदा च गम्भीरमित्यपि न योगमापद्यते तदा गम्भीरं रूपादिकमित्यपि न तिष्ठत्येवं योगावस्थानस्य निषेधेनाविपरीतगाम्भीर्यप्रयोगार्थः कथित इति। एतदनुसारेण दुरवगाह्याप्रमाणप्रयोगयोरप्यर्थो वाच्यः। "एते च गम्भीरादयस्त्रयः प्रयोगाः प्रत्येकं मृदुमध्याधिमात्रा" इत्यार्यविमुक्तिसेनः। कृच्छ्रचिराभिसम्बोधप्रयोगार्थमाह। गम्भीरा भगवन् प्रज्ञापारमिताऽविनिवर्तनीयस्येत्यादि। नियतगोचरत्वेन कश्चिदवैवर्तिकोऽप्यव्याकृत इति। तद्व्यवच्छेदार्थं व्याकृतग्रहणम्। मातरि सर्वप्रकारज्ञानाभावेन विचिकित्सादिसम्भावात् तस्यैव पुरतो भाषणे को हेतुरिति। तत्कस्य हेतोरित्याशङ्क्याह। स हीत्यादि। स यस्मात् प्रतिविद्धधर्मधातुनिष्यन्ददेशनाधर्माग्रत्वेन मिथ्याज्ञानाभावान्न कांक्षिष्यति, संशयज्ञानविगमान्न विचिकित्सिष्यति, अज्ञानविरहान्न धन्वायिष्यति, सम्यग्ज्ञानोपेतत्वान्न विवदिष्यति, तस्मात्तस्यैव पुरतो भाषणीयेति मतिः। सामर्थ्यादन्यस्य पुनरुत्त्रासादिसम्भवात् कृच्छ्रचिराभिसम्बोधप्रयोगो दर्शितः। व्याकरणलाभप्रयोगमाह। स चेत्पुनरित्यादिना (p. 213, 1) को दोष इति। कतमः कांक्षादिदोषः स्यात्। गोचरसामर्थ्यादनुत्त्रासादिमतो न कश्चिदित्याह। दूरत इत्यादि। दूराद्दूरतो दीर्घकालादि यावत्। तदेवाह। चिरयान-

सम्प्रस्थित इति। अथवा दूरतो गम्भीरार्थाधिमोक्षाच्छ्रावकाद्यगोचरतः। प्रज्ञापारमितां लप्स्यत इत्यादि। प्रथमतरमेव तावद्दूरात्पश्यति। ततो दर्शनाह्लादितशरीरो वन्दते। ततो विवर्धमानप्रसादवेगः प्रदक्षिणीकरणादिना पर्युपास्ते। ततः कृतानुपूर्वीको निषद्य शृणोति। इत्येवं दर्शनाद्यर्थं प्रज्ञापारमितां प्राप्स्यति। न चेदानीमसौ चिरेणेति। न चिरेणेदानीमेव दर्शनादिकाले। एतदेवाह। आसन्नमित्यादिना। नैकं तथागतमित्यादि। एकद्वित्रितथागताननतिक्रमिष्यति। ततः स बोधिसत्त्वः पश्चाद्व्याकरणं प्रतिलप्स्यत इत्येवं न, अपि तु तेभ्य इत्यर्थः। तदेव कथयन्नाह। अपि तु तानारागयिष्यतीति। अपि च तानेकद्वित्रितथागतान् सम्यक् तत्प्रज्ञप्तशिक्षाप्रतिपत्त्याऽऽरागयिष्यति। तथागतदर्शनं च व्याकरणेनावन्ध्यं करिष्यतीति। एकद्वित्रितथागतादिदर्शनं व्याकरणेनाशून्यं करिष्यति। नियमे व्याकरणलाभात्। तदेवाह। तथागतदर्शनाच्चेत्यादिना। यदा च व्याकरणमित्याद्युपसंहारः सुगमः। अविनिवर्तनीयप्रयोगार्थमाह। अथ खल्वायुष्मान् शारिपुत्र इत्यादि। कः पुनर्वादोऽत्र यः श्रुत्वा चोद्ग्रहीष्यति। यः सम्यगुद्ग्रहणादिनाऽविनिवर्तनीयप्रयोगेण युक्तः स परिपक्वकुशलमूल इत्यत्र को वादः। नैव कश्चित्संदेह इत्यर्थः। साधूक्तत्वेनानुमतिमाह। एवमेतदित्यादि (p. 214, 5) यथोक्तप्रयोगमेव द्रढयन्नाह। प्रतिभाति मे भगवन्नित्यादि। औपम्योदाहरणमिति। सादृश्योदाहरणम्। उपवर्त्स्यत इति। उपपत्स्यते। प्रज्ञा-

पारमितोद्ग्रहणादिना कथं परिपक्वकुशलमूलो बोधिसत्त्वो लक्ष्यते, अन्यस्यापि तदुद्ग्रहादिसम्भवादिति। तत्कस्य हेतोरित्याशङ्क्याह। भूयस्त्वेन हीत्यादि। यस्माद्बाहुल्येन धर्मव्यसनसंवर्तनीयैः कर्मभिरविरहितानां प्रज्ञापारमिताया श्चित्तानि सम्यगुद्ग्रहादिविमुखत्वेन प्रतिकूलानि भविष्यन्तीति। परित्यागपरत्वेन च परिवेल्लयिष्यन्ति। यस्माच्चानुपचितकुशलमूलाः प्रज्ञापारमितायामर्थानवबोधगमनान्न प्रस्कन्दन्ति, नापि प्रसादलाभात् प्रसीदन्ति, तस्मादुपचितकुशलमूलास्ते यथावदुद्ग्रहणादिकारिण इति वाक्यार्थः। भूतकोट्यामिति। भूतकोटिर्धर्मधातुस्तद्द्योतनात् प्रज्ञापारमिता तथोक्ता। निर्याणप्रयोगमाह। तद्यथापि नाम भगवन् पुरुषो योजनशतिकादित्यादिना। एवमेवेत्यादिना। बहुयोजनशतिकाटवीकान्तारात्प्रस्थितपुरुषवदान्तरायिकधर्मवर्जनादिप्रतिपत्तिमतो यस्येयं जिनजननी श्रवणाद्यर्थमुपपद्यते नियमेन निर्याणात्तेन वेदितव्यमभ्यासान्नोऽहमनुत्तरायाः सम्यक्सम्बोधेरित्यर्थः। तदेवाह। नापि तेनेत्यादिना। तद्विरोधिधर्मानुपस्थाने कथं श्रावकादिभूमौ पतनभयं न स्यादिति। तत्कस्य हेतोरित्याशङ्क्याह। तथा ह्यस्येमानीत्यादि (p. 216, 8)। एतदुक्तम्। "यस्मात् पुद्गलनैरात्म्यमात्रप्रभवत्वेन श्रावकादिभूमिविरुद्धामविकलसर्वधर्मनैःस्वाभाव्यद्योतिकां प्रज्ञापारमितां दर्शनाद्यर्थं लभते ततो विरुद्धाया मातुरुपलम्भान्न श्रावकादिभूमिपाताशङ्के"ति। साधूक्तत्वादेवमेतच्छारिपुत्रैवमेतदिति। स्वहस्तं दत्त्वा पुनरपि सामर्थ्या-

धानार्थमाह । प्रतिभात्वित्यादि । निरन्तरप्रयोगार्थमाह । तद्यथापि नाम भगवन्निह कश्चिदेवेत्यादि । स्तम्बं वा स्तम्बनिमित्तं वेति, विटपं विटपनिमित्तं वेत्यर्थः । स्तम्बाद्यनुपलम्भात् कथं महासमुद्रस्याभ्यासन्नत्वमिति । तत्कस्य हेतोरित्याशङ्क्याह । अनुपूर्वनिम्नो हीत्यादि । एतदुक्तम् । यस्मात् स्वहेतुना जनितस्तम्बादिना विरुद्धोऽनुपूर्वनिम्नः स्वभावो महासमुद्रस्यातस्तदुपलम्भस्वभावादेव स्तम्बाद्यनुपलम्भात्तस्यासन्नत्वमिति । प्रज्ञापारमितां शृण्वता वेदितव्यमिति (p. 217, 4) । सततभावनादिप्रतिपत्त्या निरन्तरप्रयोगबलान्निश्चेतव्यम् । कथं मातुः श्रवणकारणेन व्याकरणकार्यासन्नीभावोऽनुमीयते इति । तत्कस्य हेतोरित्याशङ्क्याह । तथा ह्येनामित्यादिना । एतदुक्तम् । "कारणस्यार्थान्तरनिरपेक्षतया कार्योत्पादनयोग्यतानुमानेन स्वभावहेतुना व्याकरणासन्नीभावानुमानाददोष" इति । आसन्नाभिसम्बोधप्रयोगमाह । तद्यथापि नाम भगवन् वसन्त इत्यादिना । शीर्णपर्णपलाशेष्विति । पतितवृद्धपत्रेषु । पूर्ववत् तत्कस्य हेतोरित्याशङ्क्याह । तथा हीमानि पूर्वनिमित्तानीत्यादि ।

हेतुना यः समग्रेण कार्योत्पादोऽनुमीयते ।
अर्थान्तरानपेक्षत्वात् स स्वभावोऽनुवर्णितः ॥

इति न्यायेन गतार्थमेतत् । उपनामितेयमिति । अभिनवानास्रवधर्माधारत्वादिप्रतिपत्तेरासन्नाभिसम्बोधप्रयोगसामर्थ्येन ढौकिता । क्षिप्राभिसम्बोधप्रयोगार्थमाह ।

तद्यथापि नामेत्यादि (p. 218, 1)। जातगर्भत्वाद्गुर्विणी। आसन्नप्रसवकालत्वाद्गुरुगर्भा। अङ्गविजृम्भणाद्वेष्टते। पौर्वकेणायोनिशोमनसिकारेण ग्राम्यधर्मप्रतिसंयुक्तेन प्रयोगमौलपृष्ठावस्थासु यथाक्रममासेवितेन निषेवितेन भावितेन सर्वच पुनः पुनरामुखीकरणाद्बहुलीकृतेनेमां वर्तमानामेवरूपामसह्यां कायेन वेदनां दुःखमनुभवामीति। चिन्तयतीति शेषः। सुखतश्चैनां रमते चित्तमस्यामिति। आधेयस्य प्रतिपत्तिधर्मस्य क्षिप्रं धर्मकायफलाभिनिर्वर्तनादिप्रतिपत्तिमतो यथोक्तप्रयोगसामर्थ्याच्चित्तं प्रज्ञापारमितायां श्रवणपूर्वकं रमते भक्तिं करोतीति यावत्। परमार्थप्रयोगमाह। आश्चर्यं भगवन् यावदित्यादिना। यावद्वचनेन सनाथा इत्यादिपरिग्रहः। यस्माद्व्याकरणादिभिर्भूमिषु पारमितासु च निवेशनात्सुपरिगृहीताः सुपरीत्ताश्च कल्याणमित्रप्रत्यर्पणाच्च सुपरीन्दिता भगवता बोधिसत्त्वास्तस्मादाश्चर्यम्। सर्वविषयत्वेऽपि कृपाया विशिष्टाशयसम्पत्तिभव्यताबलेन प्रतिनियतजनानुग्रहो विस्मयः। विशिष्टाशयसम्पत्तिमेवाह। तथा हीत्यादिना (p. 219, 1)। अनागतसम्बन्धेनार्थकारित्वाद्बहुजनहिताय प्रतिपन्नाः। वर्तमानकालतयेदानीमर्थकरणाद्बहुजनसुखाय। अतीतकालसम्बन्धेन कृतानां कुशलाकुशलधर्मवासनानां यथाक्रमं विवृद्धये परिहाणये वा यत्नकरणाल्लोकानुकम्पायै प्रतिपन्ना इति पूर्वेण सम्बन्धः। पुनरप्यतीतानागतवर्तमानकालसम्बन्धात्सामान्येनाह। महतो जनकायस्यार्थाय हिताय सुखायेति।

धर्मं देशयितुकामा इति। प्रज्ञापारमितायां धर्म-चक्रप्रवर्तनादिप्रतिपत्तिमतां परार्थकरणाद्धर्मं भाषितु-कामाः। अवृद्ध्यपरिहाणिप्रयोगार्थमाह। इह भगवन् बोधिसत्त्वस्येत्यादि। रूपादीनां वृद्धिपरिहाण्यदर्शनेन प्रज्ञापारमितायाश्चरणानुज्ञानात्तत्प्रयोगोऽभिहितः। धर्मा-धर्माद्यनुपलम्भप्रयोगार्थमाह। धर्मं न समनुपश्यती-त्यादि। धर्माधर्मादेरनुपलम्भप्रतिपत्त्या तत्प्रयोगत्वादेवं भावनापरिपूरिं गच्छति। अचिन्त्याकारसञ्ज्ञानिरोध-प्रयोगार्थमाह। अचिन्त्यमिदं भगवन् देश्यत इत्यादि। धर्मधातुरूपत्वेन चिन्तयितुमशक्यत्वादचिन्त्यं रूपादीति यदि न सञ्जानीते तद्ग्रहणसञ्ज्ञा-निरोधात्तदा यथोक्तप्रयोगेन चरति प्रज्ञापारमिताया-मित्यर्थः। अविकल्पप्रयोगार्थं प्रश्नयन्नाह। कोऽत्र भग-वन्नधिमोक्षयिष्यतीत्यादि (p. 220, 1)। परिहर्तुमाह। यः शारिपुत्र चरितावीत्यादि। कथं भगवंश्चरितावी बोधि-सत्त्वो महासत्त्वो भवतीति। स्वरूपलाभप्रश्नं कथं चरि-तावीति नामधेयं लभत इत्यन्वर्थसञ्ज्ञालाभप्रश्नं च परिहर-न्नाह। इह शारिपुत्रेत्यादि। ननु चिन्ताविषयबलवैशा-रद्यादिसम्भावे कथं न कल्पयतीति। तत्कस्य हेतोरित्या-शङ्क्याह। बलानि हि शारिपुत्रेत्यादि। तत्त्वतो धर्मधातु-रूपत्वाद्रूपादितन्निमित्ततत्स्वभावविकल्पनादिप्रतिपत्ति-सामर्थ्येनाविकल्पप्रयोगलाभाच्चिन्तातिक्रान्तत्वेनाचिन्त्यानि बलादीनि न कल्पयतीत्यर्थः। फलरत्नदानप्रयोगार्थ-

माह। गम्भीरा भगवन् प्रज्ञापारमिता रत्नराशि-र्भगवन् प्रज्ञापारमितेति। धर्मपुद्गलनैरात्म्यप्रतिपक्ष-त्वेन गम्भीरा सती प्रथमफलदर्शनादिप्रतिपत्त्या फल-रत्नदानप्रयोगवतां स्रोतआपत्त्याद्यनुत्तरसम्यक्सम्बोधि-फलरत्नस्य दातृत्वाद्रत्नराशिः। विशुद्धिप्रयोगार्थमाह। शुद्धराशिरित्यादि। आकाशस्यैव शुद्धत्वमुपादाय। रूपादिविशुद्धिभावनया तत्प्रयोगवतां क्लेशज्ञेयावरणहेतु-त्वेन शुद्धराशिः। अवधिप्रयोगार्थमाह। आश्चर्यं भग-वन्नित्यादि। महानुभावत्वेऽप्यन्तरायसम्भव इत्याश्चर्यम्। साधूक्तमित्याह। एवमेतत् सुभूत इत्यादि (p. 221, 1)। निर्युक्तिकमेवेदमिति। तत्कस्य हेतोरित्याशङ्क्याह। तथा हीत्यादि। यस्मान्मारः पापीयानौत्सुक्यमुद्वेगमापत्स्यते, अन्तरायं कर्तुं तन्निमित्तं तस्माद्बहवोऽन्तराया इत्यर्थः। यद्येवं कथं तर्हि शीघ्रं लिख्यत इत्याह। तच्च शीघ्रमित्यादि। "संवत्सरेणेति वचनं तावता ऋत्वादिप्रत्ययसाकल्याद्बहिः-कालो नास्तीति ज्ञापनार्थमित्य"ार्यविमुक्तिसेनः। तथा लिखितव्यैवेति। संवत्सराभियोगानुत्सर्गादिप्रतिपत्ति-मतामवधिप्रयोगलाभाल्लिखितव्यैव निर्विघ्नतया शीघ्र-मिति शेषः। ननु संवत्सरेण लिखने कथं शीघ्रमिति। तत्कस्य हेतोरित्याशङ्क्याह। एवं ह्येतदित्यादि (p. 221, 12)। धर्मतैषा यस्मान्महारत्नानां बहवोऽन्तरायाः सम्भवन्ति, तस्मात् परमरत्नस्वभावाया मातुः संवत्सरेण बह्वन्तराय-त्वेऽपि लिखनं शीघ्रमेवेति भावः। यथोक्त एव प्रयोगो ग्राह्यः। तथा चोक्तम्।

रूपादिष्वनवस्थानात्तेषु योगनिषेधतः।
तत्तथतागम्भीरत्वात्तेषां दुरवगाहतः॥ ८॥
तदप्रामाण्यतः कृच्छ्राच्चिरेण प्रतिबोधतः।
व्याकृतावविवर्त्यत्वे निर्याणे सनिरन्तरे॥ ९॥
आसन्नबोधे क्षिप्रञ्च परार्थेऽवृद्ध्यहानितः।
धर्माधर्माद्यदृष्टौ च रूपाचिन्त्याद्यदर्शने॥ १०॥
रूपादेस्तन्निमित्तस्य तद्भावस्याविकल्पकः।
फलरत्नप्रदाता च शुद्धकः सावधिश्च सः॥ ११॥ इति

युक्तरूपा चेयमेषां विंशतेः प्रयोगाणामानुपूर्वी। तथा हि रूपादिष्वनभिनिवेशयोगेन स्थितोऽयोगप्रयोगेणाभियुज्यमानस्तेषां रूपादीनां गम्भीरतां दुरवगाहतामप्रमाणताञ्चावगच्छति। ततोऽसम्यग्योगविहितत्वेनादिकर्मिकः कृच्छ्रेण तदन्यः सुखेन व्याकरणमविनिवर्त्यभूमिञ्च प्राप्य निर्यात्यविरहितो भवत्यासन्नीभवति क्षिप्रमभिसम्बुध्यते। ततः परार्थं कुर्वन् न वर्धते न परिहीयते। ततो धर्माधर्मादौ सामान्ये रूपाचिन्त्यादौ च विशेषे सर्वसंज्ञाप्रहाणादविकल्पकः। फलरत्नप्रदानेन परां शुद्धिं निष्ठां प्राप्तो भवति। पूर्वमेवासंवत्सरमभियोगपरिकर्मितचित्तसन्तान इत्यधिगमप्रभावितः प्रयोगानुक्रमः। प्रयोगानन्तरं गुणदर्शनपूर्वकं सुतरामभ्यस्यन्ते प्रयोगा इति तद्गुणा वक्तव्याः। तत्र प्रथमं मारशक्तिव्याघातगुणं वक्तुमाह। इह भगवन् प्रज्ञापारमितायामित्यादि। न प्रसहिष्यत (p 222, 1) इति न प्रभविष्यति। अच्छिद्रसमादानस्येत्यादि। अखण्डितप्रज्ञापारमितापठनादिसमादानस्य। अच्छिद्रसमादानस्य तावन्मात्रं विघ्नासामर्थ्यादाह। यदा

भगवन्नित्यादि। कथमेतद्भवतीति। केन प्रकारेणेदानीं कस्य वानुभावेनेति, कस्य वा सामर्थ्येन। सम्यक्संबुद्धानामनुभावेनेति। विकल्पेन प्रश्नद्वयस्य कृतत्वात् पश्चात्तस्यैव परिहारः। एतदुक्तम्। "प्रयोगभावनावस्थायां तथागतानामधिष्ठानस्य लाभान्मारशक्तिव्याघातगुणोदयेनोद्ग्रहणादिकं करिष्यन्ती"ति। तथागतानुभावस्तेषां कथमिति। तत्कस्य हेतोरित्याशङ्क्याह। एता हि शारिपुत्र धर्माणां धर्मतेति सुगमम्। एतदेव स्पष्टयन्नाह। ये तेऽप्रमेयेष्वित्यादि। द्वितीयं बुद्धसमन्वाहारज्ञातत्वगुणं वक्तुमाह। ये चैनां प्रज्ञापारमितामित्यादि। शक्त्याधानायावलोकनात् समन्वाहरिष्यन्ति। सामर्थ्योत्पादनात् परिग्रहीष्यन्ति। तदेव विस्तरेणाह। येऽपि ते भगवन्नि-(p. 223, 10)त्यादिना। प्रयोगमौलपृष्ठावस्थासु तथागते समन्वाहरणलाभाद्बुद्धसमन्वाहारज्ञातत्वगुणोदयेन श्रवणादि करिष्यन्तीत्याह। बुद्धानुभावेनेत्यादिवचनम्। साधूक्त्वेनाह। एवमेतदित्यादि। तृतीयं बुद्धप्रत्यक्षीकरणगुणं निर्दिशन्नाह। ज्ञातास्त (p. 224, 6) इत्यादि। विशिष्टार्थाधानाभिप्रायेण दिव्यचक्षुषा ज्ञाताः। प्रज्ञाचक्षुषाऽधिष्ठिताः। धर्मचक्षुषा दृष्टाः। व्यवलोकिता बुद्धचक्षुषेति स्पष्टमेव। के पुनस्त इत्याह। ये त इत्यादि। एतदुक्तम्। "तथागतज्ञानदर्शनलाभाद्बुद्धप्रत्यक्षीकरणगुणवन्तो ये श्रवणादिकारिणस्ते ज्ञाता" इति। सम्यक्सम्बोध्यासन्नीभावगुणं चतुर्थं निर्दिशन्नाह। श्रुत्वोद्गृह्येत्यादि। आसन्नी-

भविष्यन्तीति। तथागतानां समीपीभवनलाभेन सम्यक्सम्बोध्यासन्नीभावगुणोदयान्निकटवर्तिनो भविष्यन्ति। महार्थतादिगुणं पञ्चमं प्रतिपादयन्नाह। येऽपि शारिपुत्रैनामित्यादि। न तथतायां स्थास्यन्तीति (p. 225, 1)। अनन्यथार्थेन तथतायां सम्यक्सम्बोधौ प्रतिपत्तिवैकल्यान्न तदैव स्थास्यन्ति। तेषामपीति। महानुशंसलाभान्महार्थतादिगुणोदयेन पुस्तकलिखितायां धारणवाचनवतां बुद्धैरविरहितत्वं सुगतिपरायणत्वं सम्यक्सम्बुद्धत्वं निर्वाणात् परेणापि च परार्थप्रवृत्तिमधिकृत्य यथाक्रमं महार्थिको महानुशंसो महाफलो महाविपाकश्चेति चत्वारि पदानि वेदितव्यानि। प्रकृष्टश्चाच पाको विपाको द्रष्टव्यः। सपरिश्रम इति। तल्लिखनम्। परिष्यन्द इति धारणवाचने।

यथाप्रज्ञप्तितो धर्ममहायानमनस्क्रिया।
बोधिसत्त्वस्य सततं प्रज्ञया त्रिप्रकारया।
धातुपुष्ट्यै प्रवेशाय चार्थसिद्ध्यै भवत्यसौ॥ इति॥

सर्वस्य महायानधर्मस्यानुशंसत्वे कथं जिनजनन्या एवानुशंस इति। तत्कस्य हेतोरित्याशङ्क्याह। तथा हि प्रज्ञापारमितेत्यादि। यस्मात् सर्वधर्मनैःस्वाभाव्यमुखेन धर्माणां तत्त्वप्रतिवेधाय श्रवणादिक्रमेण प्रत्युपस्थिता तस्मात्तस्या एवानुशंसो मुख्यत इत्यर्थः। देशनिरूपणागुणं षष्ठं वक्तुमाह। इमे खलु पुनः शारिपुत्र षट्पारमिताप्रतिसंयुक्ता इत्यादि। षट्पारमितावचनं दानादिपारमितासहायभूतत्वात् परिशिष्टपारमितानाम्। तथा हि

दानादिभिस्तिसृभिः पारमिताभिरनुगृहीतसत्त्वानां चतुः-सङ्ग्रहवस्तुसङ्गृहीतेनोपायकौशलेन कुशले प्रतिष्ठापनादु-पायकौशलपारमिता तिसृणां पारमितानां सहायभूता । दृष्टे धर्मे क्लेशप्रचुरतया कुशले कर्मण्यक्षमत्वेनायत्यां मन्द-क्लेशत्वे मनसः प्रणिधानात् प्रणिधिपारमिता वीर्यपार-मितायाः सहायभूता । सत्पुरुषसेवां सद्धर्मश्रवणञ्चागम्य दुर्बलाध्याशयतां व्यावर्त्य, आशयबलत्वं प्रणीते धातौ प्राप्याध्यात्मं चित्तस्थापनसामर्थ्यलाभाद्बलपारमिता ध्यानपारमितायाः सहायभूता । बोधिसत्त्वपिटकश्रुता-लम्बनपूर्वकलोकोत्तरप्रज्ञानिर्हारसामर्थ्याज्ज्ञानपारमिता प्रज्ञापारमितायाः सहायभूतेति । वर्तन्यामिति पूर्वदेशे । नवमण्डप्राप्त इति । नवमण्ड इवाभिनवसाराभिधेयेऽर्थे तैस्तैर्धर्मभाणकैः प्राप्ते सति प्रचरिष्यन्ति सूत्रान्ता इति पूर्वेण सम्बन्धः । अनेन च ग्रन्थेन तथागतकृत्यकरणादेश-निरूपणागुणलाभेन धर्मभाणकानां बुद्धसमन्वाहार-कांक्षादिनिरसार्थो वेदितव्यः । तदेवाह । समन्वाहृता इत्यादिना । पञ्चकषायोत्सेदत्वेनात्यन्तमभव्यत्वात् सत्त्व-धातोर्धर्मरत्नस्य प्रचरणमसम्भावयन्नाह । इयमपीत्यादि । पश्चिमे काल इत्येतदेवाह । पश्चिमसमय इति न कणादादिपरिकल्पितः कालो नित्योऽस्ति क्रमेतराभ्यामर्थ-क्रियारहितत्वेनासत्त्वात् । किन्तु भावसन्निवेश एव कश्चित् पश्चिमः समयः सङ्केतः पश्चिमकालः । उत्तरस्यां दिशि न सर्वत्र किं तर्ह्युत्तरे दिग्भागे चीनविषयादौ । एवंविधेऽपि काले केचिदवरोपितकुशलमूला भविष्यन्तीत्याह । ये तत्र

शारिपुत्रेत्यादि। तथापि बहुत्वमपश्यन्नाह। कियन्त (p. 226, 6) इत्यादि। कल्याणमित्रादिबलेन बहूनां सम्भव इत्याह। बहव इत्यादि। स्वरूपबहुत्वाद्बहवः। गोत्रप्राचुर्यात् सुबहवः। सर्वानास्रवधर्मपरिपूरिगुणं सप्तमं कथयन्नाह। किञ्चापि शारिपुत्र बहव इत्यादि। तेभ्योऽपि बहुभ्योऽल्पका इति। श्रवणादिकारिभ्योऽपि बहुभ्यः प्रतिपक्षधर्मपरिपूरणलाभादनास्रवधर्मपरिपूरिगुणनिष्पत्त्याऽनवलयादिकारिणोऽल्पका इत्यर्थः। कथापुरुषतागुणमष्टमं वक्तुमाह। अनुबद्धास्तैः पौर्वका (p. 227, 1) इत्यादि। त्रिशरणादिभावेनाश्रयादनुबद्धाः। कल्पितादिस्वभावत्रयपरिज्ञानार्थं प्रतिपत्त्यालम्बनसमुदागमानुत्तर्यावबोधार्थं वा यथाक्रमं परिपृष्टाः परिपृच्छिताः परिप्रश्नीकृता इति पदत्रयं वाच्यम्। अणुमात्रावेद्यदर्शनात्परिपूर्णकारिणः। विस्मृतबुद्धभूमिप्रापकधर्मश्रवणाः कथमनुत्तरां बोधिमारभ्यार्थकारिण इति। तत्कस्य हेतोरित्याशङ्क्याह। तथा हि तेषामित्यादि। समुदाचारा भविष्यन्तीति। सर्वाकारज्ञताकथाकथनलाभेन कथापुरुषतागुणसम्भवात् प्रज्ञापारमिताप्रतिसंयुक्ता विकल्पाः प्रवर्तिष्यन्ते। अभेद्यतागुणं नवमं निर्दिशन्नाह। तेषु च सुस्थिता इत्यादि। समुदाचारेषु व्यवस्थिताः। न शक्या भेदयितुमिति। तथागतसानाथ्यकरणलाभेनाभेद्यतागुणोत्पत्तेर्भेदयितुं बोधेर्निवर्तयितुमशक्याः। छन्दत इति स्वचान्तमहायानाभिलाषतः। मन्त्रत इति।

रक्षन्ति देवता मन्त्रैः कुशले वर्तते मनः ।
व्याधयोऽकालमृत्युश्च दौर्भाग्यञ्च प्रणश्यति ॥ इति

बह्वनुशंसान्मन्त्रचर्याभ्यासाच्च भेदयितुं न शक्यन्त इत्येके। मारेण पापीयसा सर्वप्रकारेणौषधिसामर्थ्यान्मन्त्रसामर्थ्याच्च प्रज्ञापारमितातो निवर्तयितुमशक्या इत्यपरे। ननु स्वल्पकालेन बोधेरप्राप्त्या कथमशक्या भेदयितुमिति। तत्कस्य हेतोरित्याशङ्क्याह। यथापि नामेत्यादि। तस्यानल्पकल्पासंख्येयवीर्यत्वात् बोधिं प्रति न सहसाऽप्राप्तौ विनिवृत्तिरित्यर्थः। असाधारणकुशलमूलोत्पत्तिगुणं दशमं प्रतिपादयन्नाह। ताञ्च कुलपुत्रा इत्यादि। तत्र प्रीतिर्या लोकोत्तरधर्मपर्येष्टिः। प्रसादो बुद्धधर्मसङ्घाश्रयः। प्रामोद्यं या शुद्धता चित्तस्येत्यार्षम्। अथवा पूर्वोक्तमेव व्याख्यानम्। प्रतिलप्स्यन्त इति। असाधारणकुशलमूलपरिग्रहात् प्राप्स्यन्ति। प्रतिज्ञायाथार्थ्यसम्पादनगुणमेकादशं कथयन्नाह। बहुजनस्येत्यादि। पूर्वावेधमन्तरेण कथं सत्त्वार्थं कुर्वन्तीति। तत्कस्य हेतोरित्याशङ्क्याह। एवं हि तैरित्यादि। वाग्भाषितेति। प्रणिधानवचनमुच्चारितम्। महाबोधिचित्तोत्पादे नियोजनात्प्रस्थापयिष्यामः सन्दर्शयिष्याम इत्यादि व्याख्यातम्। स्मृत्युपस्थानादिभावनासु प्रवर्तनात् संप्रभावयिष्यामः। प्रमुदितादिसप्तभूमिप्रस्थापनात् सम्बोधये प्रतिष्ठापयिष्यामः (p. 228, 4)। वाग्भाषणेऽपि तदर्थानिष्पत्तौ कथमर्थक्रियाकारित्वमिति। तत्कस्य हेतोरित्याशङ्क्याह। अनुमोदितं हीत्यादि।

यस्मात्तेषामाशयपरिशुद्धिं चित्तेन ज्ञात्वा वागनुमोदिता मया तथागतेन, तस्मात् प्रतिज्ञानुमोदनलाभे क्रमेण प्रयोगाभ्यासात् प्रतिज्ञायाथार्थ्यसम्पादनगुणोदयेनाशेष-सत्त्वार्थकारिण इत्यर्थः। उदारफलपरिग्रहगुणं द्वादशं वक्तुमाह। एवञ्च ते कुलपुत्रा इत्यादि। उदाराधिमुक्तिका इति। गम्भीरोदारार्थाधिमोक्षेणोदारफलपरिग्रहादुदाराधिमुक्तिकाः। सत्त्वार्थकरणसामर्थ्यलाभेन सत्त्वार्थ-प्रतिपत्तिगुणं त्रयोदशं निर्दिशन्नाह। तेष्वपि ते बुद्धक्षेत्रेष्वित्यादि। स्वज्ञानविषयातिक्रान्तदेशनया सञ्जातबहुमानत्वादाह। आश्चर्यमित्यादि (p. 229, 3)। अतीतादि-धर्मेषु प्रहीणाशेषविपर्यासवासनस्यापि भगवतो यथादर्शनं संवृत्या ज्ञानं प्रवर्तत इति विस्मयः। यावदिति पर्यन्त-निर्देशादधर्मादिपरिग्रहः। चक्षुर्विज्ञानेनादृष्टम्। श्रोत्र-विज्ञानेनाश्रुतम्। घ्राणविज्ञानेनाविदितम्। मनोविज्ञा-नेनाविज्ञातम्। नास्ति किञ्चिदिति योज्यम्। दौष्ठुल्य-वासनास्वभावानीन्द्रियाणि इति वचनादज्ञानस्वभावस्ये-न्द्रियस्य बुद्धत्वावस्थायां प्रहाणेन मनोबुद्धिवदिन्द्रियबुद्ध्या विषयपरिच्छेदेन यस्मात् सर्वं विज्ञानं भगवतः सर्वविषय-मिष्यते तस्मान्निर्मलतया चक्षुरादिज्ञाने नास्ति किञ्चि-ददृष्टादिकमित्यदोषः। तथा चेन्द्रियबुद्धिः पूर्वानुसारेण व्यवस्थाप्यत इत्यवसेयम्। मातुरलाभविकललाभविपर्य-येण नियतिलाभगुणं चतुर्दशं प्रतिपादयन्नाह। ये च तस्मिन् काल इत्यादि। अन्वेषमाणानामित्यादि पदत्रयं प्रयोगाद्यवस्थासु योज्यम्। यदुक्तमाश्चर्यमित्यादि तत्

साधूक्तमित्याह । एवमेतदित्यादि । धर्मतैषा यद्बुद्धा भगवन्तो मायोपमतया सर्वं प्रतिपद्यन्त इति । किमत्र कारणमिति यदुक्तं तत्परिहर्तुमाह । तस्मिन् खलु पुनरित्यादि । निर्युक्तिकमेवेदं भगवतोक्तमिति । तत्कस्य हेतोरित्याशङ्क्याह । तथा हि तैरित्यादि । अगवेषयन्तोऽपि लप्स्यन्त इति । अविकलप्रज्ञापारमिताप्रापकपूर्वकुशलमूलसमन्वागमे प्रयोगाभ्यासेन नियतिलाभगुणोदयात्प्राप्स्यन्ते । यान्यपि च ततोऽन्यान्यपीति । ततः प्रज्ञापारमितातः सकाशाद्यान्यन्यानि समाधिराजादिसूत्राणि । स्वयमेवेति । अनुकूलताप्राप्त्या कमकर्तृविवक्षावशादेवमुक्तम् । उपगमिष्यन्तीत्यादि पदत्रयं श्रुतादिज्ञानोदयभेदेन कल्पितादिस्वभावत्रयावबोधेन वा यथाक्रमं योज्यम् । पूर्ववत् तत्कस्य हेतोरित्याशङ्क्याह । एवमेतदित्यादि । धर्मतैषा यः प्रत्युत्पन्ने जन्मन्यपरित्यक्तवीर्यो ग्रन्थं सुमृगयतेऽर्थं च पर्येषते स स्वप्रकृतिपरित्यागाज्जातिव्यतिवृत्तोऽपि पूर्वकायविरहाज्जन्मान्तरव्यतिवृत्तोऽप्यपरस्मिन्जन्मान्तरेऽप्यन्यजातिसंगृहीतोऽपि नियतिगुणलाभात् प्राप्स्यतीत्यर्थः । पदपरमत्वादाह । इम एवेत्यादि । नान्ये इति षट्पारमितारहिताः । किमिति काङ्क्षाप्रश्नः । साधारणकुशलमूलायत्तत्वात् सर्व एवोपपत्स्यन्त इत्याह । ये चान्येऽपीत्यादि । अन्येऽपीत्यषट्पारमिताप्रतिसंयुक्ताः । पूर्ववत् तत्कस्य हेतोरित्याशङ्क्य तथैवाह । एवं ह्येत-

दित्यादि । अनुपलम्भप्रतिसंयुक्ता इति (p. 231, 2) पुद्गल-नैरात्म्यप्रतिसंयुक्ताः । शून्यताप्रतिसंयुक्ता इति । धर्म-नैरात्म्यपरिदीपकाः । यथोक्ता एव गुणा ग्राह्याः । तथा चोक्तम् ।

मारणां शक्तिहान्यादिश्चतुर्दशविधो गुणः ॥ इति

अभिसमयालङ्कारालोकायां प्रज्ञापारमिताव्याख्यायां गुणपरिकीर्तनपरिवर्तो नाम दशमः ॥

---

गुणानन्तरं के पुनः प्रयोगान्तरायकरा दोषा येषां परिवर्जनेन प्रयोगा भावयितव्या इत्यन्तरायकरान् दोषान् वक्तुमाह । गुणा इमे भगवन्नित्यादि (p. 232, 2) । केचित् पुनरिति कियन्तः पुनरित्यर्थः । प्रतिवचनमाह । बहूनीति । तथापि कियद्बहु मारकर्म न ज्ञायत इत्याह । कियद्रूपाणीति । कियत् संख्यावच्छिन्नस्वभावानि बहूनि । षट्चत्वारिंशद्दोषा इति प्रतिपादयन् कृच्छ्रप्राप्तिं तावदाह । तेषामित्यादिना । चिरेण प्रतिभानमिति । दीर्घकालेन मातरि ज्ञानोत्पादः । अत्याशुप्रतिभानतां वक्तुमाह । तदपीत्यादि । क्षिप्रतरोत्पादेन पौर्वापर्यानिरूपणाद्दृढीभूतं ज्ञानमुत्पद्यमानं विक्षेप्स्यते । प्रज्ञापारमितातो भ्रश्यते । कायदौष्ठुल्यं कथयन्नाह । ते विजृम्भमाणा इत्यादि । तच्च कायपरावर्तनाद्विजृम्भयन्तः । महाट्टहासादिकरणाद्धसन्तः । स्वेनाङ्गेन तत्प्रतिबद्धेन वा परापभ्रंजनादुच्चग्धयन्तः इति वाच्यम् । चित्तदौष्ठुल्यं प्रतिपादयन्नाह । विक्षिप्तचित्ता इत्यादि । अन्योन्यविज्ञानसमङ्गिन इति परस्परं समालम्बितरञ्जनीयवस्तुविज्ञानाः । अयोगविहितस्वाध्यायादितां निर्दिशन्नाह । परस्परमुपहसन्त इत्यादि । लिखिष्यन्तीत्युपलक्षणात् स्वाध्यायादिकं ग्राह्यम् । वैमुख्यनिमित्तग्रहितां कथयन्नाह । न वयमत्र गाधमित्यादि (p. 233, 2) । श्रुतचिन्तामयज्ञानाविषयत्वात् यथाक्रमं न गाधं नास्वादञ्च लभामह इति योज्यम् । न नोऽत्रेति । नोऽस्माकम् । यावद्भिश्चित्तोत्पादैरप्रसादबहुलैरपक्रामन्ति, तावतः कल्पान् संसारस्य योगापत्तये

ग्रहीष्यन्तीति। किमत्र कारणमिति। तत्कस्मादित्याशङ्क्याह। इमां हीत्यादि। हेतुभ्रंशं वक्तुमाह। पुनरपरमित्यादि। आहारिकामिति। उत्पादिकाम्। विवर्ज्योत्सृज्येति प्रयोगाशयाभ्यामिति वाच्यम्। परीत्तबुद्धय इति स्वल्पबुद्धयः। यथाभूतपरिज्ञाया मूलमिति सम्यग्धर्मावबोधस्य प्रधानं कारणम्। प्रशाखामिति श्रावकयानादिकम्। प्रणीतास्वादभ्रंशं निर्दिशन्नाह। तद्यथापि नामेत्यादि (p. 234, 4)। निर्युक्तिकमेवेदमिति। तत्कस्य हेतोरित्याशङ्क्याह। नहि तेऽल्पबुद्धय इत्यादि। कथं बुद्धवचनेऽपि श्रावकयानादौ प्रतिपत्तिर्निन्द्यत इति। तत्कस्य हेतोरित्याशङ्क्याह। न हि सुभूत इत्यादि। प्रतिषिद्धाचरणान्निन्द्यत इत्यर्थः। दमयिष्यामः शमयिष्यामः परिनिर्वापयिष्याम इति पदत्रयं प्रयोगदर्शनभावनामार्गेषु यथाक्रमं वेदितव्यम्। श्रावकप्रतिपत्तिं प्रतिषिध्य बोधिसत्त्वप्रतिपत्त्यर्थमाह। अपि तु खलु पुनरित्यादि। न च तैर्मन्तव्यमिति (p. 235, 4)। सर्वसत्त्वार्थं सर्वकुशलमूलाभिसंस्कारैर्नोत्कर्षः कार्यः। उत्तमयानभ्रंशं प्रतिपादयन्नाह। तद्यथापि नामेत्यादि। हस्तिनं लब्ध्वेति। स्पर्शादिनोपलभ्य प्रकाशमित्यालोकं। उपनिध्यायेदिति। निरूपयेत्। नो हीदमिति। हस्तिपदाद्वर्णसंस्थाने ग्रहीतुमशक्यत्वान्नैवेत्यर्थः। उद्देशभ्रंशं वक्तुमाह। तद्यथापि नाम सुभूते रत्नार्थिक इत्यादि। प्रमाणानवबोधान्नावगाहेत। नो हीदमिति। रत्नोद्देशमहासमुद्रभ्रंशान्नैव पण्डितः। प्रति-

संलपनमिति (p. 236, 4)। कायादिविवेकः। दृष्ट एवेत्यादि। प्रत्युत्पन्ने जन्मन्यनागतोत्पत्तिं प्रति हेतुमकृत्वा क्लेशेभ्यः स्वचित्तमपनीय प्रदीपवन्निर्वृतिं करोमि। ननु सर्वोपद्रवास्पदजन्मनिरोधे कथं प्रवृत्तिर्वार्यत इति। तत्कस्य हेतोरित्याशङ्क्याह। महायानसम्प्रस्थिता हीत्यादि। महायानसंप्रस्थितत्वेन जगदर्थकरणाय कृतसन्नाहानामुपायकौशलबलेन जन्मसम्भवेऽप्युपद्रवाभावादित्यर्थः। अल्पोत्सुकतायामिति। तावन्मात्रसन्तोषो लाभसत्कारस्य बन्धनत्वेन कथमेवं निषिध्यत इति। तत्कस्य हेतोरित्याशङ्क्याह। लोकपरिणायका हीत्यादि। एतदुक्तम्। "आत्माभिनिवेशेनावग्रहे क्लेशवर्धनाल्लाभसत्कारो वर्धनम्। यदा तु दानादिभिः परानावर्ज्य पद्मवत्तत्रासक्तः सारथिभावेन लोकार्थकारी भवेत्तदा न कश्चिद्दोष इति। प्रथमं दशकं हेतुफलसम्बन्धभ्रंशं कथयन्नाह। ये च खलु पुनरित्यादि। एतदेव स्पष्टयन्नाह। तद्यथापि नामेत्यादि। पलगण्ड इति तक्षकः। पलगण्डान्तेवासीति तच्छिष्यः, वैजयन्तस्य प्रासादस्येति। सुमेरुतलमध्ये सुदर्शनं नाम नगरं सौवर्णम्। दैर्घ्येणार्धतृतीययोजनसहस्रप्रमाणमेकैकं पार्श्वम्। उच्छ्रयेण द्व्यर्धयोजनम्। तत्र नगरस्य मध्ये शक्रस्य वैजयन्तो नाम प्रासादो दैर्घ्येणार्धतृतीययोजनशतप्रमाणमेकैकं पार्श्वमुच्छ्रयेण यथाशोभं वैजयन्तप्रासादः। चिरक्षिप्रभेदेन कर्तुकामो निर्मातुकाम इति पदद्वयम्। नो हीदमिति (p. 237, 4)। सूर्याचन्द्रमसोर्विमानाद्यथायोगं पञ्चाशत्सैकयोजनाद्वैजयन्तस्याधिक-

प्रमाणत्वेन हेतुफलानुरूपविपर्ययसूचनान्नैवेत्यर्थः। निरुत्तरभ्रंशं वक्तुमाह। तद्यथापि नाम सुभूते कश्चिदेवेत्याह। तत्र वर्णो गौरत्वादि। संस्थानं दीर्घत्वादिकम्। लक्षणादिसम्पत्तेजः। आकाशगमनादिकमृद्धिः। निमित्तमसाधारणं वस्तुनश्चिह्नम्। वर्णादिसादृश्यमात्रोपलम्भेन विप्रलब्धबुद्धित्वादप्रतिबलः। ननु श्रावकयानेऽपि तथागतत्वप्रापककरुणादिधर्मनिर्देशात् कथं तेन सर्वाकारज्ञता पर्येषणीयेति। तत्कस्य हेतोरित्याशङ्क्याह। श्वको हीत्यादि (p. 238, 13)। सर्वाकारानिर्देशान्निर्दिष्टोऽप्यविशिष्ट इत्यर्थः। धर्मसम्भोगनिर्माणकायत्रयभ्रंशेन यथाक्रमं चक्रवर्तिशतरसभोजनानर्घमणिरत्नदृष्टान्ताः। बहुविधविषयविकल्पप्रतिभानोत्पादं कथयन्नाह। पुनरपरमित्यादि (p. 240, 9)। चतुर्विधदोषप्रतिपादनार्थमाह। शक्येत्यादि। नो हीदमिति तत्त्वतो मायोपमज्ञानत्वादिति मतिः। लिखितेति मंस्यन्त इति। लिखनाभिनिवेशः। असतीति वेति। अभावाभिनिवेशः। अक्षरेषु वा प्रज्ञापारमितामभिनिवेक्ष्यन्त इति। अक्षराभिनिवेशः। अनक्षरेति। अनक्षराभिनिवेशः कथितः। जनपदादिमनस्कारं निर्दिशन्नाह। पुनरपरं सुभूते प्रज्ञापारमितायामित्यादि। तत्र देशो मगधादिः। एकगृहादिको ग्रामः। अष्टादशप्रकृतिवासो नगरम्। वणिग्बहुलस्थानविशेषो निगमः। चातुर्वर्ण्याध्यस्तप्रदेशो जनपदः। चम्पादिविषयो राष्ट्रः। राज्ञामावासदेशो राजधानी। आख्यानं जातकमालादि। गुल्मस्थानं घट्टस्थानं परिष्कारविशेषः।

विशिखाऽपणवीथी। शिविका याप्ययानम्। प्रियाप्रियव्यत्यस्तः प्रियाप्रियवियोगः। इतिकर्तव्यता सततकरणीयता। गुल्माक्षदर्शनं घट्टस्थाने पाशकादिदर्शनम्। शेषं सुगमत्वान्न विभक्तम्। लाभसत्कारश्लोकास्वादनं प्रतिपादयन्नाह। पुनरपरं सुभूते बोधिसत्त्वानामित्यादि (p. 242, 6)। लाभसत्कारश्लोकास्वाद इति। तत्र लाभो रत्नादिप्राप्ति सत्कारः श्रीपट्टबन्धनादिः। श्लोको यशस्तेषामनुभवनमास्वादः। अमार्गोपायकौशलमार्गणं वक्तुमाह। पुनरपरं सुभूत इत्यादि। शून्यतादिप्रतिसंयुक्तेषु कथं न स्पृहेति। तत्कस्य हेतोरित्याशङ्क्याह। किञ्चापीत्यादि (p. 243, 2)। द्वितीयं दशकम्। अमी तावदस्य प्रवृत्तस्यान्तरायाः कथिताः। सम्प्रति पुनः प्रवृत्तेः पूर्वमेव विसामग्र्यो वक्तव्या इति। छन्दकिलासवैधुर्यार्थमाह। पुनरपरं सुभूते धार्मश्रवणिक इत्यादि। छन्द इत्यभिलाषसम्पन्नः। किलासीत्यालस्योपेतो वीर्यरहित इति यावत्। छन्दविषयभेदवैधुर्यार्थमाह। पुनरपरं सुभूते धार्मश्रवणिकश्छन्दिक इत्यादि। तत्राधिकारार्थप्रतिपत्त्या गतिमान्। तावन्मात्रार्थावगमान्मतिमान्। मेधायोगात् स्मृतिमान्। देशान्तरं प्रक्रंस्यत इत्यनेन श्रोतुश्छन्दविषयाद्दैशिकस्य भिन्नच्छन्दविषयत्वमावेदितम्। रूपमित्याद्युक्ते रूपादिस्कन्धापरिज्ञानान्नोद्घटितज्ञः। रूपणालक्षणं रूपमित्याद्यभिधाने तदर्थानवबोधान्न विपञ्चितज्ञः। रूपं द्विधा विंशतिधेत्याद्युच्चारेण तदर्थानवगमादनभिज्ञः। यथोक्तवैधुर्यमेव स्पष्टयन्नाह। पुनरपरं सुभूते धर्मभाणकश्चे-

त्यादि (p. 244, 4)। धर्मदैशिकश्रावणिकयोर्दातुकामदेशान्तरगन्तुकामत्वेन भिन्नविषयच्छन्दत्वात्। लाभगौरवाल्पेच्छतावैधुर्यार्थमाह। पुनरपरं सुभूते धर्मभाणकश्चामिषगुरुक इत्यादि। अनेनैव हारकेण योगायोगौ कथितौ। तथा हि तयोर्यथाक्रमं लाभादिकगुरुत्वेन धूतगुणायोगोऽल्पेच्छतादित्वेन च धूतगुणयोगो देशितः। कल्याणाकल्याणधर्मत्वार्थमाह। पुनरपरमित्यादि। तत्र कल्याणधर्मत्वेन श्राद्धस्तद्विपरीत्येनाश्राद्धः। अनेनैव हारकनिर्देशेन त्यागमात्सर्यमुक्तम्। तथा ह्यर्थं परित्यक्तुकाम इति श्रावकणिकत्यागः। न वा भाषितुकामः इति। दैशिकस्य मात्सर्यं विहितम्। अनेनैव च दानाग्रहणं कथितम्। तथा हि पूर्ववच्छ्रावणिकस्य दानं दैशिकस्य पुनरल्पेच्छतावेत्यग्रहणमावेदितम्। उद्घटितज्ञविपञ्चितज्ञार्थमाह। पुनरपरमित्यादि। अर्थमवबोद्धुकाम इति। उद्घटितज्ञत्वेनार्थं प्रतिपत्तुकामः। धर्मान्तरायिकतयेति। सर्वधर्मप्रतिक्षेपसंवर्तनीयतया। न सम्भविष्यन्ति। पुस्तकादिरूपेण नावतरिष्यन्तीति। विपञ्चितज्ञत्वेन तस्यावबोधमार्गं न गमिष्यन्ति। अप्राप्तधर्मभाणिन इति। अप्राप्तधर्मभाणकस्य। प्रतिवाणीति। न मया श्रोतव्यमिति प्रतिकूलवचनम्। सूत्रादिधर्माभिज्ञाऽनभिज्ञार्थमाह। पुनरपरमित्यादि (p. 245, 8)। भाषितुकाम इति। सूत्रादिधर्माभिज्ञतया वक्तुकामः। अच्छन्दिक इति। तेषामेव सूत्रादिधर्माणामनभिज्ञतया श्रवणार्थमभिलाषरहितः। षट्पारमितासमन्वागमाऽसमन्वागमाविति। मारकर्मानेनैव

हारकेणोक्तम् । तथा हि भाषितुकाम इत्यनेन सत्त्वानुग्रहाशयतया षट्पारमितासमन्वागमः । अच्छन्दिक इत्यनेन च वैरूप्याशयतया दानादिवियोगः । कथित इति तृतीयं दशकम् । उपायकौशलानुपायकौशले धारणीप्रतिलम्भाप्रतिलम्भौ लिखितुकामताऽलिखितुकामतौ विगताविगतकामादिच्छन्दत्वे च श्रावणिकमादिं कृत्वा प्रतिपादयन्नाह । पुनरपरं सुभूत इत्यादि । मिद्धादिगुरुकत्वेनाश्रोतुकामतया श्रावणिकस्य प्रतिषेधविषयं समन्वागमादिकं दैशिकस्य च भाषितुकामत्वेन समन्वागमादिकमप्रतिषेधविषयमुक्तं वेदितव्यम् । यथोक्तमेवार्थं दैशिकमादिं कृत्वा निर्दिशन्नाह । पुनरपरं सुभूते धर्मभाणक इत्यादि । अपायगतिवैमुख्यार्थमाह । पुनरपरं सुभूते प्रज्ञापारमितायामित्यादि । एवं दुःख इत्यादि । आवीचिज्वालादिदुःखा नारकाः । परस्परभक्षणादिदुःखा तिर्यग्योनिः । क्षुत्पिपासादिदुःखाः प्रेताः । विष्णुचक्रादिभयाः सर्वासुराः । जात्यादिदुखाः सर्वसंस्काराः । इहैव दुःखस्यान्तः करणीय इत्यनन्तरमेवं श्रुत्वा सत्त्वार्थनिमित्तमपायगतौ वैमुख्यं करिष्यन्तीति शेषः सुगतिगमनसौमनस्यार्थमाह । पुनरपरमित्यादि (p. 246, 2) । तत्राशाश्वतं प्रबन्धोच्छेदात् । अनित्यं क्षणिकानित्यतया । दुःखं संस्कारदुःखतायोगात् । विपरिणामधर्मकं विपरिणामदुःखसम्भवादिति । तदेवं सर्वमशाश्वतमित्यादि । सर्वं हि संस्कृतमनित्यमित्यादिर्व्याख्यानमित्यवसातव्यम् । संवेगमापत्स्यन्त इति । प्रथमफलादिसुगत्यभिलाषेण बोधि-

चारिकाविमुखतां करिष्यन्ति। पूर्वं बाहुल्येन श्रावणिकं पश्चाद्दैशिकं नियम्य वैधुर्यमाख्यातम्। इदानीं पुनः पूर्वं दैशिकं पश्चात् श्रावणिकं नियम्य वैधुर्यमुच्यतेऽन्तरायानुपूर्व्यनियमज्ञापनार्थम्। तत्र एकाकिपर्षदवचरत्वार्थमाह। पुनरपरं सुभूते येऽपि भिक्षवो धर्मभाणकास्ते एकाकिताभिरता भविष्यन्ति। येऽपि धार्मश्रवणिकास्तेऽपि पर्षद्गुरुका भविष्यन्तीति। अनुबन्धकामानवकाशदानत्वार्थमाह। तेऽपि धर्मभाणका एवं वक्ष्यन्तीत्यादि। अनुभत्स्यन्तीति। अनुबन्धयिष्यन्ति। न चावकाशं दास्यन्तीति। प्रज्ञापारमितां दास्यामीत्युक्त्वा तद्दानाय नावसरं करिष्यन्ति। आमिषकिञ्चित्काभिलाषतददातुकामतार्थमाह। स च धर्मभाणक इत्यादि। ते च न दातुकामा इति। अर्थश्रावणिका न दातुकामाः। जीवितान्तरायदिग्गमनार्थमाह। तेन तेन गमिष्यतीत्यादि (p. 247, 1)। दुर्भिक्ष इति भक्तरहितत्वेन दुष्प्रापभिक्षः। अयोगक्षेम इति। इष्टावाप्तिर्योगः निरुपद्रवत्वं क्षेमः। तदुभयाभावादयागक्षेमः। जीवितेन्द्रियनिरोधाज्जीवितान्तरायः। तस्मिंश्च प्रदेशे जीवितान्तरायोऽपि भवेदिति। अनन्तरायां दिशं गच्छेयुर्भवन्त इति शेषः। इति चतुर्थं दशकम्। दुर्भिक्षदिग्गमनागमनार्थमाह। स च धर्मभाणकस्तानित्यादि। कच्चिदिति कदाचित्। नानुभत्स्यन्तीति नानुगमिष्यन्ति। चौराद्याकुलितदिग्गमनागमनार्थमाह। पुनरपरं सुभूते इत्यादि। तत्र जन्तुर्दंष्ट्रिकादिः। दुष्ट-

ग्रहो व्याडः, प्रेतादिरमनुष्याः, कान्तारं भयस्थानं, सरीसृपः सर्पः, मांसाशी यक्षादिः क्रव्यादः, प्रत्युदावर्त्स्यन्त (p. 248, 1) इति निवर्तिष्यन्ते। कुलावलोकनदौर्मनस्यार्थमाह। पुनरपरं सुभूते धर्मभाणको भिक्षुर्मित्रकुलेत्यादि। उपसंहारार्थमाह। इति हि सुभूते मार इत्यादि। मारभेदप्रयोगं कारणप्रश्नेनाह। किमत्र भगवन्नित्यादिना। उद्योगमापत्स्यत इति। महायानाद्विभेत्तुं यत्नं करिष्यति। तथा चोपायेन चेष्टिष्यत इति। पूर्वोक्तप्रकारव्यतिरेकेणोपायेन विघ्नार्थं यतिष्यते। कारणनिर्दिशन्नाह। प्रज्ञापारमिता निर्जाता हीत्यादि (p. 249, 4)। प्रतिवर्णिकोपसंहारार्थमाह। पुनरपरं सुभूते मार इत्यादि। अपरसूत्रानुलोमनात्सूत्रागतम्। स्वस्मिन्नर्थविनिश्चयादिसूत्रे दृश्यमानत्वात्सूत्रपर्यापन्नम्। जननीसदृशसूत्रोपसंहारेण संशयोत्पादनात्संशयं प्रक्षेप्स्यति। कल्पितादिस्वभावत्रयापरिज्ञानादल्पबुद्धिकान् मन्दबुद्धिकान् परीत्तबुद्धिकानिति यथाक्रमं वाच्यम्। तदेव कथयन्नाह। अन्धीकृतानिति। अयथाविषयस्पृहोत्पादनं वक्तुमाह। पुनरपरं सुभूत इत्यादि। भूतकोटिं साक्षात्करोतीति (p. 250, 5) श्रावकनिर्याणमधिगच्छति। नियमादनेन तत्राभिलाषो जन्यत इति षट् दोषाः। कियन्तं मारकर्मप्रकारं निर्दिश्यापरमतिदिशन्नाह। एवं सुभूते मार इत्यादि। बहुप्रत्यर्थिकमहारत्नोदाहरणेन पूर्वोक्तमेव समर्थयन्नाह। एवमेतद्भगवन्नित्यादि। बहुप्रत्यर्थिकत्वे किं

कारणमिति । तत्कस्य हेतोरित्याशङ्क्याह । यदुत दुर्लभत्वादित्यादि । साधूक्तमित्याह । एवमेतत्सुभूत इत्यादि (p. 251, 6) । बह्वन्तरायत्वेऽपि तथागतसामर्थ्यादेव लभ्यत इत्याह । किञ्चापि सुभूत इत्यादि । तथागतसामर्थ्यपरिकल्पने को हेतुरिति । तत्कस्य हेतोरित्याशङ्क्याह । मारोऽपि हीत्यादि ।

अभिसमयालङ्कारालोकायां प्रज्ञापारमिताव्याख्यायां
मारकपरिवर्तो नामैकादशः ॥

तथागतानामुद्योगमेव दृष्टान्तेन स्पष्टयन्नाह। तद्यथापि नामेत्यादि (p. 253, 3)। अस्पर्शविहार इति। असुखविहारः। अमन आप इति। चित्तेनानभिप्रेतः। पूर्ववत् तत्कस्य हेतोरित्याशङ्क्याह। एतया हि वयमित्यादि। तच्च केनचिदाहाराद्युपस्तम्भेन सुधारितामन्येऽपि धारयेयुः। चौरादिभ्यो विहितरक्षत्वेन सुगोपितां गोपायेयुः। कायिकमलाद्यपनयनेन सुकेलायितां केलायेयुः। आपततो विद्युदादिपातात्। उत्पाततः सर्वोपसर्गिकरोगतः। अनिष्टनिपातोऽनिष्टवस्तुसम्भवः। दार्ष्टान्तिकार्थमाह। एवमेव सुभूत तथागता इत्यादि (p. 254, 4)। इह लोकधातुस्था एव तथागता ग्राह्याः। यतोऽनन्तरं वक्ष्यति। येऽपि ते अन्येषु लोकधातुष्वित्यादि। अन्तरायं न कुर्युरिति। यथापूर्वोक्तन्यायेन षट्चत्वारिंशद्दोषान् न कुर्युः। तथौत्सुक्यमापत्स्यन्त इति पूर्वेण सम्बन्धः। तथा चोक्तम्।

दोषाश्च षड्विबोधव्याश्चतुर्भिर्दशकैः सह ॥ १२ ॥

इति दोषानन्तरं यथासंख्यं गुणदोषादानत्यागेन प्रयोगा भावनीया लक्षणज्ञानपूर्वकमिति। प्रयोगाणां लक्षणं करणसाधनपरिग्रहेण ज्ञानविशेषकारित्रस्वरूपं, कर्मसाधनपरिग्रहेण च स्वभावात्मकं वक्तव्यम्। तथा चोक्तम्।

लक्ष्यते येन तज्ज्ञेयं लक्षणं त्रिविधञ्च तत्।

ज्ञानं विशेषः कारित्रं स्वभावो यश्च लक्ष्यते ॥ १३ ॥ इति

तत्र तावत् ज्ञानलक्षणं त्रिसर्वज्ञताभेदेन भिद्यमानं सर्वज्ञताद्वारेण तथागतनिर्वृतिज्ञानं कथयन्नाह। एवं हि सुभूते तथागता इत्यादि। निर्युक्तिकमेवेदमिति।

तत्कस्य हेतोरित्याशङ्क्याह। एषा हीत्यादि। तच्चोत्पादना-न्माता, संवर्धनाज्जनयित्री। समुत्पादनात् सर्वज्ञताया दर्शयित्री। लोकस्य च सन्दर्शयित्री शून्यतादिरूपेणाव-गमात्। अत्र केचित् स्वयूथ्या एवं चोदयन्ति। यदि युगपदेकज्ञानक्षणेन निःशेषं ज्ञेयमण्डलं संवृत्या व्याप्यते, तदा भावानामियत्तापरिच्छेदादनन्तत्वमभ्युपेतं बाध्येत। तथा ह्येकज्ञानारूढाद्भावादन्यो भावो नास्तीत्येवं परि-च्छिद्यमानाः कथमन्तवन्तो न भवेयुरिति। तदेतदसारम्। यदि तावन्निराकारविज्ञानमाश्रित्यैवं चोद्यते, तदा सर्वम-सङ्गतम्। तथा हि यावत्किञ्चिद्वस्तुजातं सत्तामनुभवति, तस्य सर्वस्य सत्तामात्रेण सर्वज्ञचेतसा परिच्छेदात्तेन तद्व्याप्त-मिति व्यपदिश्यते। न तु परैरेव घटनाद्देशापर्यन्ततया व्याप्तेः। न चैकेन ज्ञानेन परिच्छिन्नानीत्येतावता वस्तूना-मात्मस्वभावहानिर्येन तान्येकज्ञानपरिच्छेदवशादनन्तत्व-मात्मस्वभावं जह्युः। न हि नीलपीतादयो भावा बहवो युगपच्चित्रास्तरणादिष्वेकज्ञानक्षणावसीयमाननवो ऽनेकत्वं विजहति। नापि परस्परं समन्वाविशन्ति। अपि तु यथैव ते सन्ति तथैव ज्ञानेन परिच्छिद्यन्ते, नान्येन रूपेण। तद्वत्सत्त्वभाजनलोकोऽपि यथैव सत्तामनुभवति तथैव सर्वज्ञचेतसा गृह्यते। अपर्यन्तश्च दिक्षु विदिक्षु सत्त्वादि-लोकोऽवस्थित इत्यपर्यन्ततयैव तस्य ग्रहणं न तु पर्यन्त-वर्तितयेति। कुतोऽन्तवत्त्वप्रसङ्गः। स्यादेतत्। साकल्य-ग्रहणाभ्युपगमे कथं पर्यन्तग्रहणं न स्यादिति। नैतदस्ति। को ह्यत्र प्रतिबन्धो यत्र साकल्यग्रहणं तत्रावश्यं पर्यन्त-ग्रहणमिति। तथा हि यावन्तस्ते सन्ति भावास्तेषां मध्ये

नैकोऽपि सर्वज्ञज्ञानादिविदितस्वरूपः सत्तामनुभवति, अपि तु सर्व एव सर्वज्ञचेतसा विदितस्वरूपा एवोदयन्ते व्ययन्ते च। नैकोऽपि परित्यक्त इत्ययं सकलग्रहणस्यार्थः। इयमेव च तेषामेकज्ञानेन व्याप्तिः। अन्यथा सकलशब्दवाच्यत्वमपि तेषां नाङ्गीकर्तव्यम्। माभूदन्तवत्त्वप्रसङ्ग इति यत्किञ्चिदेतत्। यथोक्तमेकज्ञानारूढाद्भावादन्यो नास्तीत्येवं परिच्छेदात्कथमन्तवन्तो न भवेयुरिति। तदप्यसम्यक्। न हि निराकारज्ञानवादिपक्षे ज्ञानात्मनि भावानामारोपणमस्ति, अपि तु सत्तामात्रेण तेन ते वेद्याः। नापि भावानां ज्ञानापरिच्छेद्यस्वभावतयाऽनन्तमभ्युपेतं, येन ज्ञायमानतया तेषामन्तवत्त्वं प्रसज्यते। किन्तु देशवितानापर्यन्ततयाऽनन्तो भाजनलोकः। सत्त्वलोकस्तु संख्यानापर्यन्तयापि। न च देशावस्तभाद्यपर्यन्तत्वे सति ग्राह्यत्वविरोधः कश्चिद्येनाग्राह्यता भवेत्। यदि पर्यन्ततया न गृह्णाति कथं सर्वज्ञः स्यादिति चेदत एव यत एवासौ पर्यन्ततया न गृह्णाति तत एव सर्वज्ञो भवति। अन्यथाऽनन्तवस्त्वन्तवत्त्वेन गृह्णन् भ्रान्तो भवेत्। तथाहि यदस्ति तदस्तित्वेन यन्नास्ति तन्नास्तित्वेन गृह्णन्सर्वविदुच्यते। न च सत्त्वभाजनलोकस्य पर्यन्तोऽस्ति। तस्मात्पर्यन्तं गमनकृतमविद्यमानमसंविद्यमानतया गृह्णन्। सर्वज्ञज्ञानपरिच्छेदकृतं तु पर्यन्तं विद्यमानं विद्यमानतया पश्यन् कथमसर्वज्ञो नाम। स्यादेतत्। निराकारज्ञानपक्षे विषयग्रहणमनुपपन्नं सर्वत्राविशिष्टत्वात्तस्य तेन प्रतिकर्मविभागानुपपत्तेः। अतो निराकारपक्षोऽनुपन्यसनीय एव सर्वदा तस्य दुष्टत्वादिति। तदेतदप्यसम्यक्। न हि सर्वज्ञज्ञानस्य प्रतिकर्म-

विभाग इष्यते। तस्य सर्ववस्तुविषयत्वात्। यतो न तन्नीलस्यैव संवेदनं पीतस्यैव वापितु सर्वस्यैवेतीष्टम्। यस्य ह्यर्वाग्दर्शनस्य ज्ञानं प्रतिनियतार्थविषयग्राहि निराकारज्ञानपक्षे तस्य सर्वत्राविशेषात् प्रतिकर्मविभागानुपपत्तिदोष उच्यते, तथा हि नीलस्येदं वेदनम्, न पीतस्येति नियमाभावात्, सर्वस्य पृथग्जनस्य सर्वज्ञत्वप्रसङ्गापादानं क्रियते। सर्वज्ञस्य तु तदिष्टमेवेति। तस्य किमनिष्टमापद्यताम्। तेन सर्वज्ञावस्थायां निराकारं योगबलेनोत्पद्यमानमविरुद्धमेव। विभागेन हेयोपादेयवस्तुपरिज्ञानं न स्यादिति चेत्। तदपि न। यदि हि युगपदनन्तवस्तुनि प्रतिभासमाने हेयोपादेयवस्तुनः प्रतिभासविरोधः स्यादविरोधे वाऽन्यैः सह भासमानस्य तस्य हेयोपादेयवस्तुनस्तत्त्वप्रच्युतिः स्यात्, अप्रच्युततत्त्वस्यापि विभागेनावभासं वा न स्यात्, विभक्तावभासस्यापि यदि परिच्छेदकः शुद्धलौकिको विमर्शप्रत्ययो वा पृष्ठभावी नोत्पाद्यते, तदैतत्सर्वं स्याद्वक्तुम्। यावता विश्वस्मिन् जगत्यवभासमाने तदपि हेयोपादेयं वस्तु। अविरुद्धप्रतिभासमप्रच्युतात्मतत्त्वं विभक्तमेवावभासते, पश्चात् सर्वज्ञज्ञानबलोत्पन्नशुद्धलौकिकप्रत्यवमर्शप्रत्ययेन परिच्छिद्यत एवेति। कथं विभागेन तदपरिज्ञानं नाम। तदेवं निराकारज्ञानपक्षे तावदचोद्यमिति प्रतिपादितम्। अथ साकारज्ञानवादिपक्षे चोद्यते। तत्राप्यविरोध एव, तथा हि यथैव तदनन्तं वस्त्वनन्ताकारानुगतमात्मसत्तामनुभवति, तथैव तत्सार्वज्ञं चेतोऽपरिमितवस्तुगताकारोपग्रहेणोत्पाद्यमानमविरुद्धमेव। एकस्य ज्ञानस्यानेकवस्त्वाकारोपग्रहणोत्पत्त्य-

विरोधात्। एकस्यानेकाकारत्वं विरोध एवेति चेत्। न। आकाराणामसद्भूतत्वात्। यदि ह्येकस्य पारमार्थिका आकारा भवेयुः, तदा स्यादेकस्य चित्तत्वविरोधः। यावताऽसत्यभूता एवाकारा इतीष्टम्। यद्येवं भ्रान्तज्ञानसमङ्गित्वात्, भ्रान्तः प्राप्नोति सर्वज्ञ इति चेत्। न। यथाभूतपरिज्ञानाददोष एषः। यदि ह्यसत्यं सत्यत्वेन गृह्णीयात्तदा भ्रान्तः स्यात्। यदा त्वभूतानाकारानसत्यत्वेनैव जानाति, तदा कथं भ्रान्तो भवेत्। अर्थव्यतिरिक्तज्ञानारूढाकारग्रहणे सत्यर्थेषु दृष्टादिव्यवहारं कुर्वन् कथमभ्रान्त इति चेत्। न। सम्यगुपायपरिज्ञानात्। यदि ह्युचितं ग्रहणोपायमपास्योपायान्तरेणामुख्येनार्थं गृह्णीयात्तदा भ्रान्तो भवेत्। यावता साकारज्ञानवादिपक्षे ज्ञानस्यात्माकारानुभवव्यतिरेकेण नान्योऽर्थग्रहणव्यापारोऽस्ति। तत्कथमुचितेनार्थोपाधिभेदेन ग्रहणव्यापारेणार्थं गृह्णन् भ्रान्तो भवेत्। अतो ज्ञेयवदेकचेतसापि ज्ञानस्यानन्तवस्तुगताकारोपग्रहणोत्पत्तेरनन्तं वस्तु तेन व्याप्तमित्युच्यते। येनैव चात्मना ज्ञानात्मनि भावाः समारोहन्ति, तेनैव तत्पृष्ठभाविपरामर्शचेतसा वा परिच्छिद्यन्ते। न च सर्वज्ञचेतसि परिमितभेदानुगताः समारोहन्ति भावाः। किं तर्हि यावत्किंचिदस्तित्वमनुभवति तत्सर्वमेव समारोहति। सर्वस्यैव सर्वज्ञज्ञानोत्पादनं प्रत्यालम्बनभावेनाप्रतिबद्धशक्तिकत्वात्, मनोविज्ञानस्य च सर्वार्थविषयत्वात्। अतः सार्वज्ञस्य चेतसः परिमितवस्त्वाकारोपग्रहणानुपपत्तेः। पृष्ठलब्धेन वा शुद्धलौकिकेन परामर्शप्रत्ययेन देशपर्यन्तं वर्तित्वेनापरिच्छेदात् कथमियन्त इति परिच्छेदो

भवेत्, येनान्तवत्त्वं स्यात्। यदि नाम प्रतिभासमाना-दन्यन्नास्तीत्येवं परामर्शो जातस्तथापि नान्तवत्त्वप्रसङ्गः। तथाहि यदि प्रतिभासमानमन्तवदेव निर्विकल्पे सर्वज्ञ-चेतसि प्रतिभासेत, तदा तत्पृष्ठलब्धेन परामर्शचेतसा-ऽन्तवत्त्वं भावानां व्यवच्छिद्येत। तद्व्यवच्छेदाच्चानन्तत्वहानि-र्भवेत्। यावता प्रतिभासमानं वस्तु सार्वज्ञे चेतस्यनन्तमेव प्रतिभासेत, सर्वस्याप्रतिहतशक्तिकत्वात्। तस्मादन्यद-प्रतिभासमानमन्तवदेव तस्यैव च परामर्शचेतसा व्यवच्छेदः क्रियत इति सुतरामेव भवताऽनन्तत्वं भावानामुपपादित-मिति यत्किञ्चिदेतत्। ये पुनः सर्वमेव योगिज्ञान-मनालम्बनं सत्यस्वप्नदर्शनवद्वस्तुसंवादितया प्रमाणमिति प्रतिपन्नास्तान् प्रत्यन्तवत्त्वचोद्यं दूरीकृतावकाशमेव। स्यादेतद्योगिनामनास्रवं ज्ञानं शास्त्रे सामान्यविषय-मेवोपवर्ण्यते, न तु स्वलक्षणविषयम्। तत्कथं सामान्य-विषयेण योगिनो ज्ञानेन भावानां स्वरूपाण्येवावबुध्यन्त इति चेत्। तदेव हि स्वलक्षणं विजातीयव्यावृत्तमभिन्ना-कारप्रत्ययहेतुतया शास्त्रे सामान्यलक्षणमित्युच्यते। अतस्तद्ग्राहकं योगिज्ञानं भावनाबलेन स्फुटप्रतिभास-मुत्पद्यमानं स्वलक्षणगोचरमेवेत्यविरुद्धमेतत्। यत्सामान्य-गोचरं तत्कथं स्वलक्षणग्राहि भवतीति। कथं परस्पर-विरुद्धानामेकज्ञानेन ग्रहणमिति चेत् उच्यते। यद्यपि भावाः केचित् परस्परं विरोधिनस्तथापि ते ज्ञानेन सहा-विरुद्धा एव। युगपदेकेनापि ज्ञानेन विरुद्धानेकार्थग्रहणोप-लम्भात्। तथाहि ये परस्परपरिहारेण स्थितलक्षणास्तेषा-मैक्यं विरुद्धम्। ये तु सहानवस्थायिनस्तेषामेकदेशावस्थानं

विरुद्धम् । न चैकविज्ञानभासनादेषामैक्यमेकदेशत्वं वा प्रसज्यते । तेन नैकविज्ञानभासित्वमेषां विरोधः । दृष्टञ्च विरुद्धानामपि सतामेकज्ञानभासनम् । यथा शुच्यशुचिनोश्चक्षुर्विज्ञानेन परस्परपरिहारस्थितलक्षणयोरहेर्मयूरस्य च सहानवस्थायिनोर्युगपद्ग्रहणम् । स्यादेतत् । यदि विरुद्धानामप्येकविज्ञानावभासनमविरुद्धम् । एवं सति सुखदुःखयो रागद्वेषयोर्वा किमेकविज्ञाने वेदनं प्राणभृतां स्वसन्तानेनोत्पद्यत इति । यत् सुखादीनां सकृदवेदनं तत्कारणाभावेनानुत्पत्तेरसन्निहितत्वात् सुखादीनां न तु विरुद्धत्वादित्यवसातव्यम् । यथा चातीतानागतवस्तुग्रहणं तथा प्रागेव प्रतिपादितम् । अथवा वर्तमानस्यैव साक्षात् पारंपर्येण वा तदुपकार्योपकारकस्वभावस्य प्रतिपत्त्यैवातीतानागतयोः प्रतिपत्तिः । विविक्तभूतलप्रतिपत्त्यैव घटादेरभावप्रतिपत्तिवत् । न चैवं सत्यानुमानिको भगवान् लिङ्गाभावात् । सर्वविशेषयुक्तस्यैव वर्तमानस्य प्रत्यक्षत्वेन तयोः प्रत्यक्षत्वादित्यलमतिप्रसङ्गेन । जनयित्रीत्वं स्पष्टयन्नाह । अतो निर्याता हीत्यादि (p. 255, 1) एवं सर्वज्ञतायाश्च सन्दर्शयित्रीति जनयित्रीत्वेनैव सर्वज्ञतायाश्च प्रतिपादिका । लोकज्ञानं प्रतिपादयन्नाह । यद्भगवानेवमाहेत्यादि । न लुज्यन्ते न प्रलुज्यन्त इति (p. 156, 7) । क्षणिकप्रबन्धानित्यताभ्यां यथाक्रमं न नश्यति न प्रणश्यतीत्यर्थः । वस्तुधर्मस्वभावत्वात् कथं तौ न भवत इति । तत्कस्य हेतोर्न लुज्यन्ते न प्रलुज्यन्त इत्याह । शून्यतास्वभावा हीत्यादि । तत्त्वतोऽस्वभावत्वात् । स्कन्धानां शून्यादित्वेन

वस्तुधर्मस्वभावाभावे क्षणिकप्रबन्धानित्यते न भवतः। संवृत्या तु स्त इति भावः। सर्वसत्त्वचित्तचरितज्ञानं निर्दिशन्नाह। पुनरपरमित्यादि। प्रतिज्ञातार्थं समर्थयितुं प्रश्नयन्नाह। कथञ्च सुभूत इत्यादि। परिहरन्नाह। सत्त्वास्वभावतयेत्यादि। सत्त्वानां मायोपमस्वभावत्वाद-प्रमेयादिरूपेण परिज्ञानम्। उपसंहरन्नाह। एवं हि सुभूत इत्यादि (p. 257, 1)। अमुनैव विधिना तेषाञ्चित्त-चरितपरिज्ञानमित्याह। यान्यपि तानीत्यादि। सत्त्वाऽसम्भवतयेति। सत्त्वस्य विद्यमानत्वस्य तत्त्वतोऽनुपलब्धे-र्धर्मधातुरूपतयाऽप्रमेयादिरूपत्वेन सत्त्वानां चित्तचरितानि प्रजानाति। चित्तसंक्षेपज्ञानं कथयन्नाह। संक्षिप्तानि चित्तानीत्यादि। स संक्षेपं क्षयतः क्षयञ्चाक्षयत इति। तदालम्बनेन धर्मतायां प्रविष्टञ्चित्तं स संक्षेपं क्षयतो विनाशतः संवृत्या जानाति। क्षयमपि विनाशं क्षयिणोऽ-सत्त्वात् परमार्थतोऽक्षयमविनाशं यथाभूतं प्रजानाति। चित्तविक्षेपज्ञानं गदितुमाह। विक्षिप्तानि चित्तानीत्यादि। धर्मतात इति। धर्मधातोरनुत्पादस्तदमनसिकारेण बहिः प्रवृत्तानि चित्तानि विक्षिप्तानि संवृत्या। परमार्थतः पुन-रलक्षणानि स्वभावविरहितानि लक्षणानित्यत्वेनाक्षीणानि प्रबन्धोपरमादविक्षीणानि बहिर्गमनासम्भवादविक्षिप्ता-नीति यथाभूतं प्रजानाति। चित्ताक्षयाकारज्ञानं वक्तुमाह। अप्रमेयाक्षयाणि चित्तानीत्यादि (p. 258, 5)। अधिष्ठितमिति। महाकरुणया आसंसारमधिष्ठितं तच्चित्तं

यथायोगं त्रिविधसंस्कृतलक्षणासम्भवादनिरोधमनुत्पादमस्थितमतो धर्मिरूपत्वायोगादनास्रवं प्रमातुमशक्यत्वेनाप्रमेयं धर्मधातुवद्विनाशानुपपत्तेरक्षयं भवति। तथागतस्य येनैवं चित्तेनाकाशमिवाप्रमेयाक्षयतया सर्वसत्त्वानां चित्ताप्रमेयाक्षयतां स्वसमाधिदर्पणतले प्रतिभासनाद्यथाभूतं प्रजानाति। सरागादिचित्तज्ञानं कथयन्नाह। संक्लिष्टानि चित्तानीत्यादि। असंक्लेशसंक्लिष्टानीति। भ्रान्तिमात्रास्तित्वात्। क्लेशकर्मजन्मलक्षणैः संक्लेशैस्तत्त्वतोऽसंक्लेशैर्विपर्यासबलात् संक्लिष्टान्युपहतानि। असंकेतानीति। अप्रतिनियतवृत्तीनि। विगतरागादिचित्तज्ञानं निर्दिशन्नाह। असंक्लिष्टानि चित्तानीत्यादि। प्रकृतिप्रभास्वराणीति। पृथग्जनावस्थायामविशुद्धभ्रान्तिकारणनिर्जातत्वेन तथाभूतान्यपि चित्तानि नैःस्वाभाव्यात् प्रमाणोपपन्नानुत्पादादिरूपात्मावबोधपरायणत्वेन प्रतिपक्षोदयादप्यनिवर्त्यानीति शक्यापनेयरागादिसहायत्वात्, प्रभास्वराणि परिशुद्धनिजस्वभावमात्राणि। सामान्येन सरागादिचित्तं वीतरागादिचित्तञ्च निर्दिश्यैवं तदुपायं यथाक्रमं कथयितुं लीनानि चित्तानीत्या(p. 259, 7)दिकमेकं द्वारकम्। प्रगृहीतानि चित्तानीत्यादिकञ्च द्वितीयमाह। अनालयलीनानीति। अस्थानार्हेऽनालये समापत्त्यास्वादनादौ रागादिहेतुत्वेन लीनान्यभिनिविष्टानि। अग्राह्याणि सुभूते तानि चित्तानि न प्रग्रहीतव्यानि इति। तत्रोद्धतमौद्धत्याभिशङ्कि वा चित्तं संवेजनीयवस्त्वमनस्कारेण शमथनिमित्तेन। लीनं लयाभिशङ्कि वा

चित्तं प्रमोदनीयवस्तुमनस्कारेण प्रग्रहनिमित्तेन। समप्राप्तं चित्तमनाभोगमनस्कारेणोपेक्षानिमित्तेन च गृहीतमित्येवं विरागादिहेतुत्वेन प्रगृहीतानि चित्तानि। पुनरग्रहणार्हत्वेनाग्राह्याणि। भूयो न प्रग्रहीतव्यानि। तयोरेव चित्तज्ञानयोः सामान्येन पर्यायं कथयन् यथाक्रमं सास्रवाणि चित्तानीत्यादिकञ्चापरं हारकमाह। अस्वभावानि सुभूते तानि चित्तानि, असत्संकल्पानीति (p. 260, 3)। सास्रवाणि चित्तानि प्रतिपक्षोदयान्निवर्त्यत्वेनाविद्यमाननिजस्वभावानि। ततश्चासत्तातुल्यानि। अभावगतिकानि सुभूते तानि चित्तानि। अनाभोगानीति। अनास्रवाणि चित्तानि दर्शनभावनाहेयक्लेशानामभावपर्यवसानानि। ततश्च स्वरसेन परिशुद्धसन्तानप्रवर्तनादनाभोगानि। तयोरेव पुनः प्रभेदं वक्तुं षट् सरागाणीत्यादि हारकानाह। या चित्तस्य सरागतेत्यादि। या चित्तस्य सरागता विषयादिसक्तिरूपता पृथग्जनस्य न सा चित्तस्य यथाभूतता न्यायतो मायोपमस्वप्रकाशरूपता भवति। शक्याशक्यापनेयत्वेनानयोर्यथाक्रमं चलाचलरूपत्वात्। तथार्याणां प्रतिपक्षभावनया चित्तस्य या यथाभूतता अनास्रवरूपता न सा सरागता तत्प्रतिपक्षरूपत्वात्। तस्मादशुद्धावस्थायां सरागाणि चित्तानि संवृत्या। यः सुभूते चित्तस्येत्यादि (p. 201, 5)। यश्चित्तस्य विगमो रागविगमावस्था पृथग्जनस्य न सा चित्तस्य सरागताऽरागावस्थतयोर्भिन्नरूपत्वात्। तथा या वीतरागस्य विष्कम्भणादिप्रहाणेन प्रहीणरागस्य चित्तस्य यथाभूतता तद्विविक्तात्मसंवेदनता न सा चित्तस्य

सरागता । तस्माद्विवेकावस्थायां विगतरागाणि चित्तानि। एतदनुसारेण परिशिष्टेषु सदोषादिहारकेषु ग्रन्थो व्याख्येयः। विपुलचित्तज्ञानं वक्तुं व्यतिरेकान्वयमुखेन हारकद्वयमाह । अविपुलानि चित्तानीत्यादि (p. 263, 2) । असमुत्थानयोगानि सुभूते तानि चित्तान्यसमुत्थानपर्यापन्नानीति । तत्त्वतोऽनुत्पत्तेः कारणसम्बन्धशून्यत्वेनासमुत्थानयोगानि । प्रादुर्भावविरहात् कामादिधातावप्रतिबद्धत्वात्तान्यसमुत्थानपर्यापन्नान्येवमनुपलम्भादविपुलानि । न हीयन्त इत्यादि । विनाशाभावान्न हीयन्ते । उत्पादाभावान्न विवर्धन्ते । अत एव क्वचिद्गमनाभावेनाविगमत्वान्न गच्छन्त्येवं धर्मधातुस्वाभाव्याद्विपुलानि चित्तानीति । महद्गतचित्तज्ञानं कथयितुं व्यतिरेकान्वयमुखेन हारकद्वयमाह । अमहद्गतानि चित्तानीत्यादि । अनागतिकानि सुभूते तानि चित्तान्यगतिकान्यपर्यापन्नानीति । सत्कार्यप्रतिषेधेनातीतादध्वनस्तदागमनवैकल्यादनागतिकानि चित्तानि । सर्वात्मना विनाशादनागतेऽपि काले गमनानुपपत्तेरगतिकानि । प्रत्युत्पन्नेऽप्येकानेकस्वभाववैधुर्यादपर्यापन्नान्येवममहद्गतानि । समतासमानि सुभूते तानि चित्तानि स्वभावसमानीति (p. 264, 4) । तत्त्वतोऽनुत्पादरूपत्वादात्मादिनिःस्वभावतुल्यत्वेन समतासमानि चित्तानि । तथ्यसंवृत्या तु सर्वगुणावाहकरूपेण प्रतिभासनान्मायास्वभावसमान्येवं महद्गतानि । अप्रमाणचित्तज्ञानं निर्दिशन्नाह। अप्रमाणानि चित्तानीत्यादि। अनिश्रयत्वादिति। न हि प्रतिनियतस्तेषामाश्रयो विद्यत इत्यप्रमाणानि ।

अनिदर्शनचित्तज्ञानं प्रतिपादयन् पूर्ववद्वारकद्वयमाह। सनिदर्शनानि चित्तानीत्यादि। समदर्शनानि सुभूते तानि चित्तानि चित्तस्वभावानीति। मायोपमात्मसंवेदनतया समदर्शनानि तत्तुल्योपलम्भरूपाणि सर्वाण्येव ज्ञानानि। कुशलाकुशलवासनाभिश्चितत्वाच्चित्तस्वभावानि सञ्चित-वासनारूपाण्येवं सनिदर्शनानि। अलक्षणत्वादित्यादि (p. 265, 4)। तत्त्वतो वर्तमानस्वरूपविरहेणालक्षणत्वा-दतीतानागतरूपाभ्यां सह यथाक्रमं कार्यकारण-सम्बन्धानुपपत्त्याऽर्थविविक्तत्वात् त्रयाणां मांसादिचक्षुषां सर्वेषां वा पञ्चानामविषयत्वेनानवभासगतमदृश्यं चित्त-मेवमनिदर्शनानि। यथोक्तज्ञानमेवमप्रतिघादित्वेन कथं-चिद्व्यावृत्त्योच्यत इति प्रतिपादयन् सप्रतिघानि चित्तानी-त्यष्टौ हारकानाह। असत्सङ्कल्पितानि इत्यादि। असता-ऽविद्यमानेनोत्पादादिरूपेण संङ्कल्पितान्यध्यारोपितानि चित्तानि शून्यान्यस्वभावानि, आरम्बनवशिकानि, संवृत्या-ऽलम्बनपरतन्त्राण्येवं प्रमाणबाधितत्वात् सप्रतिघानि। अद्वयभूतानीत्यादि। उत्पादानुत्पादरहितत्वेनाद्वय-भूतानि। तत्त्वतोऽभवनमेव संवृत्या भवनमित्यभूतसम्भूता-न्येवं प्रमाणोपपन्नत्वादप्रतिघानि। या सुभूते सोत्तरस्ये-त्यादि (p. 266, 8)। आत्माद्यभिनिवेशेन सोत्तरस्य न्यूनावस्थां प्राप्तस्य चित्तस्य या यथाभूतता नैरात्म्यसंवे-दनता न तत्रास्ति मन्यमानता सत्कायादिदृष्ट्युपलम्भता। तस्मादेवं संवृत्या सोत्तराणि। अणवपि हीत्यादि। यस्मा-त्परमार्थतोऽणुमात्रमपि चित्तं वस्तुस्वरूपं नोपलब्धं, तस्मा-

बुद्धत्वावस्थायामिव पृथग्जनावस्थायां प्रकृतिवैयवदानिक-स्वभावेन सर्वरूपादिनिमित्तापगमान्निष्प्रपञ्चान्येवं तत्त्वतो निरुत्तराणि चित्तानि। असमसमानि हीत्यादि (p. 267, 2) उत्पादादिदोषवैषम्यादसमेन ग्राह्येण समानि तद्ग्राहकत्वेन प्रवृत्तानि चित्तानि विक्षेपादकृतसमाधानत्वेनासमवहिता-न्येवमसमाहितानि। समसमानि हीत्यादि। सर्वदोष-वैषम्यानुपपत्तेः समो धर्मधातुस्तेन सहानुत्पादादिना तुल्यत्वात् समानि। विक्षेपात्कृतप्रतीकारत्वेन समव-हितानि। तत्त्वतोऽविद्यमानस्वभावत्वेनाकाशसमान्येवं समाहितानि। स्वभावविमुक्तानीत्यादि। न्यायानुयायि-जन्मरहितत्वात् स्वभावविमुक्तानि चित्तान्यविद्यमान-सत्तारूपत्वादभावस्वभावानि। ततश्च बन्धापनयनपूर्वक-मोक्षाभावादविमुक्तानि चित्तानि। चित्तं हीत्यादि (p. 268, 4)। यस्मादेकानेकस्वभाववैधुर्येणासत्त्वाच्चित्तं त्रैकालिकं तथागतेनानुपलब्धं, तस्मात् प्रकृत्या द्विविधा-वरणविगमाद्विमुक्तानि। प्रभेदं निर्दिश्य चित्तज्ञानं वक्तुमाह। अदृश्यानि चित्तानीत्यादि। असत्त्वात् सुभूते-ऽदृश्यमिति। लक्षणशून्यत्वेनासत्त्वाददृश्यं कल्पितं चित्तम्। हेत्वभावेनाभूतत्वादविज्ञेयं परतन्त्रम्। स्वरूपाविद्य-मानत्वेनापरिनिष्पन्नत्वादग्राह्यं परिनिष्पन्नं चित्तम्। प्रत्येकं प्रज्ञाचक्षुरादिभिस्त्रिभिः सम्बन्धनीयम्। पञ्चानां वा बुद्धधर्मचक्षुरादीनामनवभासगतत्वाददृश्यादिकमव-गन्तव्यम्। एवं हि सुभूते प्रज्ञापारमितेत्युपसंहारपदम्। संक्षिप्तचित्तज्ञानादिहारकान्तेऽपि प्रत्येकं सम्बन्धनीयम्।

चित्तोन्मिञ्जितादिज्ञानं कथयन्नाह। उन्मिञ्जितनिमिञ्जितानीत्यादि। तत्र विधिमुखेन यः स्वविषये चित्तप्रसरः सोऽयमुन्मिञ्जः। प्रतिषेधमुखेन विषयान्तराच्चित्तस्यापसर्पणं निमिञ्जः। तत्सञ्ज्ञातत्वादुन्मिञ्जितनिमिञ्जितानि। लौकिकलोकोत्तरप्रसिद्धिभेदात्परसत्त्वानां परपुद्गलानामिति द्वयमुक्तम्। रूपनिश्रितानीत्यादि। सर्वाण्येव विधिप्रतिषेधमुखेन रूपादिपञ्चस्कन्धाश्रितान्युत्पद्यन्ते चित्तानीत्यर्थः। तदेव कथयन्नाह। भवति तथागत इत्यादि (p. 269, 7)। मरणादुत्तरकालं तथागतो भवति। तिरोभावरूपेणावस्थानात् किमिति कांक्षाप्रश्नकरणात्। सांख्यप्रभृतीनां रूपादिगतोऽयमुन्मिञ्जितविकल्पः। तथैव सर्वात्मना निरन्वयविनाशान्न भवतीति लौकायतिकानां निमिञ्जितविकल्पः। अवस्थातुरेकत्वादवस्थायाश्च भिन्नत्वाद्यथाक्रमं पूर्ववद्भवति न भवतीति दिगम्बरप्रभृतीनामुभयविकल्पः। तत्त्वान्यत्वरूपेणावाच्यत्वान्न भवति न न भवतीति पुद्गलवादिनामुभयप्रतिषेधाधिष्ठानो विकल्पः। एते च विकल्पास्तत्त्वतोऽनुत्पन्नत्वादतथ्यसंवृतिभाविन्यात्मस्वभावे तथागते न कथञ्चित् प्रतिष्ठां लभन्ते। तथा शून्यतादेशनायामविनेयजनापेक्षयाऽवस्थापनीयप्रश्नत्वेन व्यवस्थापिताः प्रदेशान्तरे। एवं शाश्वत आत्मा चेत्यादयोऽवगन्तव्याः। पर्षन्मण्डले तस्मिन् यथोक्तप्रभेदात्मदृष्ट्युपेतानां सन्निहितविनेयजनानामाशयानुरोधादेव तावत्प्रभेदोपादानम्। तथताकारज्ञानं वक्तुमाह। पुन-

रपरं सुभूते तथागत (p. 270, 21) इत्यादि । तथा सुभूते तथागतो रूपं जानाति, यथा । तथतेति (p. 271, 2) ।

"यः प्रतीत्यसमुत्पादः शून्यता सैव ते मता" इति ।

तथताकारेण रूपादिस्कन्धपरिज्ञानादुन्मिञ्जितादीनामपि तथतापरिज्ञानमिति यावत् । सम्यक्सम्बुद्धस्य तथतावबोधतत्परसमाख्यानप्रज्ञपनज्ञानञ्च कथयन्नाह । एवं हि सुभूते तथागततथतया च स्कन्धतथतया चेत्यादि । तथतां प्रज्ञपयतीति । सर्वधर्मानुयायिनीं तथतामेकरूपेण व्यवस्थापयत्यनेन तथताप्रज्ञपनज्ञानमुक्तम् । तदेवाह । यैव चेत्यादिना । ननु धर्मिभिन्नत्वे कथमभेदस्तथताया इति । तत्कस्य हेतोरित्याशङ्क्याह । उक्तं हीत्यादि । यस्मात् पञ्च स्कन्धा लोक इत्यादि । संज्ञाता संख्याता इति भगवता पञ्चस्कन्धैः सर्वधर्मनिर्देशाधिकारे कथितम् । तस्मान्न लोकोऽन्यानित्यादिलक्षणो भिन्नः, केवलं सन्निहितविनेयप्रतिपत्त्यपेक्षया भिन्नधर्मित्वेनोक्तः । तदेव वक्तुमाह । तस्मात्तर्हीत्यादि । अनेकभावाभावापगतेत्यादि । तत्त्वतोऽनुत्पादरूपत्वेन वस्तुधर्मसमतिक्रमान्नैकत्वं नापि नानात्वमिति । शून्यतारूपेणैकैवैषा तथता सर्वधर्मव्यापिनी घटपटादेरनेकस्माद्भावात् । प्रागभावादिलक्षणाच्चाभावादपगता प्रयोगमार्गे । तथा दर्शनभावनाविशेषनिष्ठामार्गेषु च । यथाक्रममक्षयत्वादविकारत्वादद्वैधीकारत्वादेकैवैषा तथतेति योज्यम् । प्रज्ञापारमितामागम्याभिसम्बुद्धेत्यनेन (p. 272, 1) तथतावबोधज्ञानमावेदितम्

लोकस्य लोकं सन्दर्शयतीति । भावाभिनिवेशिनो लोकस्य मायोपमं लोकं कथयति । कल्पितपरतन्त्रपरिनिष्पन्नस्वभावानां मायोपमदर्शनाद्यथाक्रमं तथतां जानाति । अवितथतां जानाति । अनन्यतथतां जानाति । इति पदत्रयं वाच्यम् । तथतामभिसम्बुद्धः संस्तथागत इत्युच्यत इत्यनेन तथतापरिज्ञानमावेदितम् । कोऽत्र भगवन्नन्यो ऽधिमोक्ष्यत इति । नैव कश्चिदनियतगोचादिरधिमुच्यति । किं तर्हि विशिष्ट एव पुद्गल इत्याह । अविनिवर्तनीय इत्यादि । अभिसम्बुद्ध्याख्यातानि इति । तथतासमाख्यानज्ञानमनेन निर्दिष्टम् । अक्षयाऽक्षयैवाख्यातेति । उत्पादाद्वा तथागतानामनुत्पादाद्वा तथागतानां स्थितैवैषा धर्माणां धर्मतेति वचनादक्षया तथताऽक्षयत्वेन निर्दिष्टा । तथतावबोधादिज्ञानचतुष्टयमेकीकृत्य निर्दिष्टमेवमतो ज्ञानलक्षणं सर्वज्ञतासङ्गृहीतं षोडशप्रकारं भवति । तथा चोक्तम् ।

तथागतस्य निर्वृत्तौ लोके चालुज्यनात्मके ।
सत्त्वानां चित्तचर्यासु तत् संक्षेपे बहिर्गतौ ॥ १४ ॥
अक्षयाकारतायाञ्च सरागादौ प्रविस्तृते ।
महद्गते ऽप्रमाणे च विज्ञाने चानिदर्शने ॥ १५ ॥
अदृश्यचित्तज्ञाने च तदुन्मिञ्जादिसंज्ञकम् ।
पुनस्तथताकारेण तेषां ज्ञानमतः परम् ॥ १६ ॥
तथतायां मुनेर्बोधतत्पराख्यानमित्ययम् ।
सर्वज्ञताधिकारेण ज्ञानलक्षणसङ्ग्रहः ॥ १७ ॥ इति

तदनन्तरं मार्गज्ञताधिकारेण ज्ञानलक्षणकथनार्थमाह । अथ खलु शक्रदेवेन्द्रप्रमुखा इत्यादि । कथं भगवन्नच लक्षणानि स्थाप्यन्त इति । केन प्रकारेण मार्गज्ञताधिकारे ज्ञानलक्षणानि निर्दिश्यन्ते । शून्यमित्यादि (p. 273, 1) । शून्यतानिमित्ताप्रणिहितानुत्पादानिरोधासंक्लेशाव्यवदानाभावज्ञानान्यष्टौ स्वशब्देनोक्तानि । स्वभावज्ञानं निर्वाणमिति । अनिश्रितज्ञानं धर्मधातुरिति । आकाशलक्षणज्ञानं तथतेति । एवं ज्ञानत्रयं व्यवस्थापितम् । निर्युक्तिकञ्चेदमिति । तत्कस्य हेतोरित्याशङ्क्याह । अनिश्रितानि हीत्यादि । यस्मादेतानि ज्ञानलक्षणानि तत्त्वतोऽनुत्पादरूपत्वान्न क्वचित् प्रतिबद्धानि, तस्माद्यथोक्तस्वभावानीति वाक्यार्थः । धर्मताऽविकोपनार्थमाह । नैतानि लक्षणानीत्यादि । चालयितुमिति विकोपयितुम् । तथैव तत्कस्य हेतोरित्याशङ्क्याह । सदेवमानुषासुरोऽपि हीत्यादि । एतल्लक्षण एवेति । अविकोपितमायोपमो धर्मतास्वभावः । असंस्कारज्ञानार्थमाह । नाप्येतानि लक्षणानि केनापि हस्तेन स्थापितानीति । असंस्कृतत्वादेव भावानामिति भावः । अविकल्पज्ञानं वक्तुमाह । यो देवपुत्रा इत्यादि । संस्कृतत्वे कथं न स्थापितमिति । तत्कस्य हेतोरित्याशङ्क्याह । असंस्कृतत्वादिति । अहेतुप्रत्ययसमुद्भूतत्वादित्यर्थः । प्रभेदज्ञानार्थमाह (p. 274 1) । अथ खलु भगवंस्तानित्यादि । तथागतेन प्रकाशितत्वात् कथं

पूर्वमवस्थितानीति। तत्कस्य हेतोरित्याशङ्क्याह। यथैता-नित्यादि। आख्यातानीति। शून्यतादिरूपेण प्रभेदत इति शेषः। अलक्षणज्ञानं कथयन्नाह। गम्भीराणि भग-वन्नित्यादि। असङ्गज्ञानमिति सर्वाभिनिवेशरहितं पर-मार्थतोऽलक्षणज्ञानं निष्पन्नावस्थायां यदुत प्रज्ञापारमिता बुद्धानां तदेवाह। असङ्गज्ञानायेत्यादिना। अनिष्पन्ना-वस्थायां पुनरसङ्गज्ञानाय भाव्यमाना प्रज्ञापारमिता तथा-गतानामेवं सर्वाकारं गोचरो ज्ञानविषयीभवति। अस्य लोकस्य सन्दर्शयित्रीति। यथोक्तैः षोडशप्रकारैर्मार्गज्ञता-ज्ञानैर्लौकिकतत्त्वसाक्षात्करणाल्लोकं सन्दर्शयति। तथा चोक्तम्।

शून्यत्वे सानिमित्ते च प्रणिधानविवर्जिते।
अनुत्पादानिरोधादौ धर्मताया अकोपने॥ १८॥
असंस्कारेऽविकल्पे च प्रभेदालक्षणत्वयोः।
मार्गज्ञताधिकारेण ज्ञानलक्षणमिष्यते॥ १९॥ इति

तदनन्तरं सर्वाकारज्ञताद्वारेण ज्ञानलक्षणार्थमाह। यथा सुभूते तथागता इत्यादि। तत्र स्वधर्मोपनिश्रय-ज्ञानं सम्यक्सम्बुद्धस्य कथयन्नाह। इमं धर्मं प्रज्ञापारमिता-मित्यादि। अस्थानत इत्यनभिनिवेशतः। विहरन्तीति दृष्टधर्मसुखविहारार्थमधिगतमर्थमामुखीकृत्य विहरन्ति। सत्कारगुरुकारमाननापूजनाज्ञानानि वक्तुमाह। धर्मं सत्कुर्वन्तीत्यादि। पूजयन्तीत्यस्यार्थं प्रयोगपृष्ठावस्थाभेदे-नाह। अर्चयन्त्यपचायन्तीति सामान्येन निर्दिश्य विशेषार्थमाह। प्रज्ञापारमितैवेत्यादि। विशेषग्रहणे किं

निबन्धनमिति। तत्कस्य हेतोरित्याशङ्क्याह। अतो हि सुभूत इत्यादि। तत्र कृतज्ञाः प्रत्युपकारकरणात्। कृतवेदिनोऽल्पस्याप्युपकारस्य महत्त्वेन स्मरणात्। यानं महायानं प्रतिपद्दर्शनादिमार्गः। अनुगृह्णीतेऽनुपरिपालयतीति (p. 275, 2)। तयोरेव यथाक्रमं वर्णावदनात्। अकृतकत्वां वक्तुमाह। पुनरपरं सुभूते तथागतेनेत्यादि। तत्र कारकहेतोरसत्त्वादकृताः। विनाशहेतोरभावेनाविकृताः। संस्कृतस्वरूपविरहादनभिसंस्कृताः। सर्वज्ञगज्ज्ञानं कथयन्नाह। प्रज्ञापारमितां हीत्यादि। एवं सर्वधर्मेषु ज्ञानं प्रवृत्तमिति। अकृतकत्वाद्यवगमेन ज्ञानमुत्पन्नम्। तत्त्वतोऽनुत्पन्नत्वे भावानां कथं दृश्यदर्शकदर्शनमित्याह। यदा भगवन्नित्यादि। तत्र मनोविज्ञानेन परिच्छेदाभावादजानकाः। चक्षुरादिविज्ञानेनोपलम्भविरहादपश्यकाः। निर्युक्तिक एवायमनुवाद इत्याह। कथञ्चेत्यादि। यस्मात्सर्वधर्मास्तत्त्वेनोत्पादाभावाच्छून्या ग्राह्यग्राहकसम्बन्धानुपपत्तेरनिश्रितास्तस्मादजानका अपश्यका इत्यर्थः। प्रज्ञापारमितां चागम्येत्थंभूतधर्मावबोधेन लोकस्यादर्शनमेव दर्शनं तत्त्वतः। संवृत्या तु यथाप्रतीतमेवेति भावः। अदृष्टार्थदर्शकज्ञानं निर्दिशन्नाह। रूपस्यादृष्टत्वादित्यादि। रूपाद्यदर्शनमेव लोकस्य तत्त्वतो दर्शनमिति भावः। तदेवाह। कथं भगवन्नित्यादिना (p. 276, 4)। न रूपालम्बनमिति। न रूपादिनिर्भासं सैव लोकस्य दृष्टेति सर्वमिति न जानाति। सच्च सदिति

जानाति। असच्चासदिति वचनादसतो लोकस्यादर्शनमेव दर्शनम्। परिशिष्टज्ञानकथनार्थमाह। कथञ्चेत्यादि। इति लोकः शून्य इति लोकशून्यताकारज्ञानमुक्तम्। इति लोकं सूचयतीति लोकशून्यतासूचकज्ञानम्। एवं ज्ञापयतीति। लोकशून्यताज्ञापकज्ञानम्। एवं लोकं सन्दर्शयतीति। लोकशून्यतादर्शकज्ञानमित्येतानि त्रीणि ज्ञानानि यथाक्रमं संगृहीतपरिपाचितविमोचितानां विनेयानामर्थाय वेदितव्यानि। "तिस्रः सर्वज्ञता-श्चाभिप्रेत्य त्रिविधार्यपुद्गलाधिकारेण यथाक्रमं प्रदेशवृत्ति-मुद्देशवृत्तिं प्रत्यक्षवृत्तिं वाधिकृत्यावगन्तव्यानी"त्यार्य-विमुक्तिसेनः। इति लोकोऽचिन्त्य इति। अचिन्त्यता-ज्ञानम्। इति लोकः शान्त इति। शान्तताज्ञानमिति। लोको विविक्त इति। लोकनिरोधज्ञानम्। इति लोको विशुद्धेत्यादिना संज्ञानिरोधज्ञानञ्च गदितमवगन्तव्यम्। सर्वाकारज्ञतासंगृहीतानि यथोक्तान्येव षोडशज्ञानान्यव-सातव्यानि। तथा चोक्तम्।

स्वधर्ममुपनिश्रित्य विहारे तस्य सत्कृतौ।
गुरुत्वे माननायाञ्च तत्पूजाऽकृतकत्वयोः॥ २०॥
सर्वत्र वृत्तिमज्ञानमदृष्टस्य च दर्शकम्।
लोकस्य शून्यताकारसूचकज्ञापकाक्षगम्॥ २१॥
अचिन्त्यशान्ततादर्शि लोकसंज्ञानिरोधि च।
ज्ञानलक्षणमित्युक्तं सर्वाकारज्ञतानये॥ २२॥ इति

अभिसमयालङ्कारालोकायां प्रज्ञापारमिताव्याख्यायां
लोकसन्दर्शनपरिवर्तो नाम द्वादशः॥

सामान्यरूपतया ज्ञानाकारेण परिच्छिन्नानां विशेषो ज्ञेय इति । ज्ञानलक्षणानन्तरं विशेषलक्षणं सामान्येनोपोद्घातयन्नाह । अथ खल्वायुष्मानित्यादि (p. 277, 2) । महाकृत्येनेति । अचिन्त्यातुल्यादिविशेषविशिष्टैर्दुःखादिसत्यविषयैः षोडशभिर्धर्मान्वयज्ञानक्षान्तिज्ञानक्षणैर्विशेषलक्षणस्वभावैस्तथागतत्वाद्यर्थाय प्रत्युपस्थितेत्यर्थः । तथा चोक्तम् ।

अचिन्त्यादिविशेषेण विशिष्टैः सत्यगोचरैः ।
विशेषलक्षणं षड्भिर्दशभिश्चोदितं क्षणैः ॥ २३ ॥ इति

वतशब्दोऽवधारणे । कः पुनरचिन्त्यादिविशेष इत्याह । अचिन्त्यकृत्येनेत्यादि । अचिन्त्यातुल्याप्रमेयासंख्येयताभिस्तावद्विशेषैर्यथाक्रमं दुःखसत्यचतुःक्षणसंगृहीतैर्विशेषलक्षणमुक्तम् । असमसमकृत्येनेति । सर्वेषामेवेदं विशेषणम् । एषाञ्च व्याख्यानं ग्रन्थत एव भविष्यति । निरुपपत्तिक एवायमनुवाद इति व्याख्यातुमाह । कथञ्चेत्यादि । तच्च तथागतत्वमित्यादिपदचतुष्टयमादर्शादिज्ञानचतुष्टयभेदेन योज्यमिति पूर्वाचार्याः । तथागतत्वादिनिष्पादनादचिन्त्यकृत्यत्वमेवमुत्तरचाप्यतुल्यकृत्यत्वादिकं ग्राह्यम् । चित्तचैतसिकादिप्रवृत्तौ कथं चिन्तयितुं न शक्यमिति । तत्कस्य हेतोरित्याशङ्क्याह । न हि चित्तमित्यादि । चित्तं मनोज्ञानां, चेतना मानसं कर्म, तज्जे वाक्कायकर्मणी चैतसिको वा प्रज्ञादिरालम्बकभावेनाच बुद्धत्वादौ न प्रवर्तते । सर्वविपर्यासापगमादिति भावः । तुलयितुं वेति । बुद्ध्या स्वरूपमवधारयितुम् । अप्रमेयं हीत्यादि ।

यस्मात् प्रमातुमशक्यम् । असंख्येयं हीति । यस्मादेकत्वादिना गणयितुं न पार्यते । कुतः पुनरुत्तर इति । समाभावादसमस्य कस्मात्पुनरुत्तरः प्रतिविशिष्टो भविष्यत्यतोऽसमेनात्मना समस्तुल्य इत्यसमसमो भगवान् सर्वज्ञः । एतदुक्तम् । "तथागतत्वादिकमेव सर्वैरचिन्त्यादिपदैर्व्यावृत्तिभेदेनोच्यत" इति । पदपरमत्वेन तथागतत्वादिकमेवाचिन्त्यादिविशिष्टमित्यवगम्य रूपादौ सन्देहादार्यसुभूतिराह । किं पुनरित्यादि (p. 278, 6) । न्यायस्य तुल्यत्वादित्यभिप्रायेणाह । एवमेतत् सुभूते एवमेतत् रूपमपीत्यादि । पूर्ववत् तत्कस्य हेतोरित्याशङ्क्याचिन्त्यातुल्यते तावत् पूर्वोक्ताभिप्रायेण कथयन्नाह । रूपस्य हि सुभूते या धर्मतेत्यादि । रूपमपि सुभूतेऽप्रमेयमित्यादिना (p. 279, 1) । अप्रमेयतां व्याचष्टे । कथं प्रमाणसद्भावेऽप्रमेया इति । तत्कस्य हेतोरित्याशङ्क्याह । रूपस्य हि सुभूते प्रमाणं न प्रज्ञायत इत्यादि । अप्रमाणत्वादिति । तत्त्वतोऽनुत्पन्नत्वेन सर्वधर्माणामप्रमाणत्वात् प्रमाणं न विद्यते । अतो न प्रज्ञायत इति यावत् । रूपमपीत्यादिनाऽसंख्येयतां कथयति । गणनासमतिक्रान्तत्वादिति । मायोपमत्वेनैव एकत्वादिगणनाभिरसंगृहीतत्वात् । अचिन्त्यतादिकमेव स्पष्टयितुमसमसमताप्रतिपादनार्थमाह । रूपमपि सुभूतेऽसमसममित्यादि । आकाशसमत्वादिति । समाधिकाभावादाकाशेन तुल्यत्वादसमसमाः । सामान्येन पुनरपि प्रतिपादयन्नाह । तत्किं मन्यस इत्यादि । नो हीदमिति ।

तत्त्वतो निःस्वभावत्वादिति भावः। दार्ष्टान्तिकार्थं वक्तुमाह। एवमेव सुभूत इत्यादि (p. 280, 1)। अनेन पर्यायेणेति। आकाशदृष्टान्तनिर्देशेन। तथागतधर्मा इति। अचिन्त्यतादिभिरेव सर्वप्रकारं तथागतानां धर्माधिगमादुपसंहारार्थमाह। अनेनापीत्यादि। तदेव स्पष्टयन्नाह। एते च सुभूते तथागतधर्मा इत्यादि। विज्ञानगतस्येति। मायोपमप्रतिभासप्राप्तस्यार्थस्याचिन्त्यतादिव्यपदेशः। संवृत्या। उपसंहारार्थमाह। तस्मात् सुभूत इत्यादि। अनास्रवधर्मदेशना सम्पन्नहेतुकानां विफला नास्तीत्याह। अस्यां खलु पुनरित्यादि। अनुपादायास्रवेभ्य इति। क्लेशवासनाबीजाधानमकृत्वा क्लेशेभ्यश्चित्तानि विमुक्तानि। विरजो विगतमलं धर्मेषु धर्मचक्षुर्विशुद्धमिति। दुःखसत्यादौ धर्मज्ञानक्षान्तिभिर्विरजः। धर्मज्ञानैर्विगतमलम् ज्ञेयविषये धर्मचक्षुः पूर्वोक्तमपगतदोषमुत्पन्नम्। क्षान्तिः प्रतिलब्धेत्यनुत्पन्नाः सर्वधर्मा इति धर्मनिध्यानक्षान्तिर्दुःखधर्मज्ञानक्षान्तिर्वा प्राप्ता। ते च विंशतिमात्रा बोधिसत्त्वाः। यद्यप्यनादिर्बुद्धवंशः प्रतिबुद्धोत्पादे चासंख्येयसत्त्वपरिनिर्वाणं तथापि संसारिणां परिक्षयो नास्ति, अनन्तादाकाशवत्। न हि पर्वताद्यनेकावरणसम्भवेऽपि नभसः परिक्षयोऽस्तीत्येके। ये प्रतिपक्षसन्निधावपचयधर्माणो दृष्टास्ते प्रतिपक्षात्यन्तसम्वृद्धौ सम्भवदत्यन्तापचयधर्माणो यथा कनकमलादयः। नैरात्म्यादिलक्षणप्रतिपक्षसम्मुखीभावेनापचयधर्माणः संसारिण इति स्वभावहेतुबलात् संसारिणामुच्छेद इत्यपरे। सर्वार्य-

पुद्गलसङ्ग्रहविशेषं समुदये प्रथमक्षणसङ्गृहीतं वक्तुमाह। गम्भीरा भगवन्नित्यादि (p. 281, 1)। मातरि बुद्धत्वाद्यप्रतिबन्धात् कथं महाकृत्यत्वमिति। तत्कस्य हेतोरित्याशङ्क्याह। अत्र हीत्यादि। सर्वज्ञतासमायुक्तेति सर्वाकारज्ञता। प्रज्ञापारमितायां प्रतिबद्धा। सर्वकार्यप्रतिबद्धत्वमेव मातुर्दृष्टान्तेनाह। तद्यथापि नामेत्यादिना। मूर्धाभिषिक्तस्येति। अष्टादशमहाकुलिभिरभिषिक्तः। यद्वा राजहस्तिकरोदकाभिषिक्तः। जनपदस्थामवीर्यप्राप्तस्येति। स्वराज्यविगमभयाभावाज्जनपदविषये स्थामप्राप्तः। तन्निग्रहानुग्रहसामर्थ्ययोगाद्वीर्यप्राप्तः। कृत्यानीति व्यापाराः। अमात्यसमायुक्तानीति। प्रतिबद्धानि। तत्र कायवाग्व्यापाराभावाद्यथाक्रममल्पोत्सुकोऽपहृतभार इति योज्यम्। परिग्रहाभिनिवेशमन्तरेणाधिगमानुपपत्तिरित्याशङ्क्याह। कथं भगवन्नित्यादि। परिहारार्थं प्रतिप्रश्नमाह। तत्किं मन्यस इत्यादिना (p. 282, 1)। परिग्रहं वाभिनिवेशं वेति। यथासंख्यं ग्राह्यग्राहकविकल्पाभ्यामवग्रहमित्यर्थः। नो हीदं भगवन्निति। अयमत्र समासार्थः। यस्मादार्यपुद्गलस्य निर्विकल्पेन ज्ञानेन दर्शनमार्गादौ स्थितस्य ग्राह्यमिदं फलमहं ग्राहक इत्येवमरूपो विकल्पो न समुदाचरति, सर्वविकल्पप्रतिपक्षत्वात्तथाभूतज्ञानस्य। अन्यथा साभिलापविज्ञानैर्यथावस्थितवस्त्वनुभवानुपपत्तेस्तथ्यज्ञानवियुक्तत्वेन मार्गासम्भवात् क्लेशप्रहाणवैकल्ये सत्यर्हत्वफलोदयो न स्याच्छ्रुतचिन्तावस्थायामिव। तस्मान्मार्गा-

व्युत्थितस्यैव योगिनोऽपगतैकत्वाभिनिवेशवचनादिविकल्पवत् समारोपरहिता ग्राह्यग्राहककल्पनामतिरुपजायते। तथा च वस्तुतत्त्वाग्रहणान्नाहं तं धर्मं समनुपश्यामीति। एतदेवानुवदन्नाह। एवमेतदित्यादि। औपलम्भिकजनानुकम्पयाह। सर्वज्ञतापि भगवन्नित्यादि। तस्मात्तेभ्यो न वक्तव्यमिति भावः। पुरुषविशेषवेदनीयताविशेषं द्वितीयक्षणसङ्गृहीतं कथयन्नाह। अपि नु खलु पुनरित्यादि। तत्र प्रकृतिसमुदानीतगम्भीरधर्माधिमोक्षगोचरत्वेन यथाक्रमं हेतुसम्पन्नाः। दीर्घरात्रावरोपितकुशलमूलाः। गोचरद्वयस्य तथागताधिष्ठानेन दृढ्यर्थं पदद्वयमध्ये पूर्वजिनकृताधिकारा इत्युक्तम्। तत्र गम्भीरा दुर्दृशा दुरनुबोधेति। पदत्रयं कल्पितादिस्वभावत्रयानुपलम्भतोऽवगन्तव्यम्। असाधारणताविशेषं तृतीयक्षणसंगृहीतं निर्दिशन्नाह। सचेद्भगवन्नित्यादि (p. 283, 1)। श्रद्धानुसारिभूमाविति निर्वेधभागीयावस्थातः पूर्वं सम्भारभूमौ दानाद्यनुष्ठानमुपलम्भयोगेन कुर्युः। क्षान्तिमिति धर्मनिध्यानक्षान्तिः। श्रवणावस्थायां प्रयोगमौलभेदेन रोचयेद्गवेषयेत्। चिन्तावस्थायां तथैव चिन्तयेत् तुलयेत्। भावनावस्थायां पूर्ववदुपपरीक्षेत उपनिध्यायेदिति वाच्यम्। क्षिप्राभिज्ञताविशेषं चतुर्थक्षणसंगृहीतं प्रतिपादयन्नाह। एवमुक्ते भगवानित्यादि। यावदिति वचनाद्बोधिसत्त्वादिपरिग्रहः। निर्वाणमिति तथागतत्वम्। अन्यूनापूर्णताविशेषं निरोधे प्रथमक्षणसंगृहीतं वक्तुमाह। अथ खलु ते कामावचरा

इत्यादि। महापारमितेयमिति। न्यूनपरिपूर्णत्वाभावान्महानुभावयुक्ता। अविदूरं गत्वाऽन्तर्हिता इति भगवतः प्राकृतदर्शनविषयं यावत्पङ्क्यां गत्वापरेण स्वर्द्धा गता इत्यर्थः।

अभिसमयालङ्कारालोकायां प्रज्ञापारमिताव्याख्यायां

अचिन्त्यपरिवर्तो नामः त्रयोदशः॥

---

तीव्रप्रतिपत्तिविशेषं द्वितीयक्षणसंगृहीतं कथयन्नाह। यो भगवन् बोधिसत्त्व इत्यादि (p. 284, 2)। सह श्रवणेनेति। श्रवणमात्रानन्तरम्। तत्र श्रवणचिन्ताभावनाक्रियाविरोधेन यथाक्रमं नावलीयते न संलीयते नावतिष्ठते। यतोऽज्ञानसंशयमिथ्याज्ञानविरहान्न धन्वायति न विचिकित्सति न कांक्षतीति पदार्थौ वाच्यः। अभिलाषयोगादभिनन्दति। न विपृष्ठीकरिष्यति मानसमिति। न विप्रतिसारश्चित्तमुत्पादयिष्यति। करिष्यत्यनुबन्धमिति धर्मभाणकस्यापरित्यागात्तदेवाह। अनुगमिष्यति धर्मभाणकं नोत्स्रक्ष्यतीति। एतदेव दृष्टान्तेन वक्तुमाह। तद्यथा नाम सुभूत इत्यादि। कायगता चेत्युरोगताकरणात्। पुस्तकगता वेति पुस्तकधारणात्। समुदागमविशेषं तृतीयक्षणसङ्गृहीतं वक्तुमाह। स्याद्भगवन्नेतैरित्यादि (p. 285, 1)। स्याद्भवेत्। किमिति काक्वा प्रश्नः। एतैरेव गुणैरिति प्रज्ञापारमिताधिमोक्षानवलयादिभिः। अन्वयमुखेन परिहरन्नाह। स्यात्सुभूते बोधिसत्त्व इत्यादि। व्यतिरेकमुखेनापि निर्दिशन्नाह। येन खलु पुनरित्यादि। निर्युक्तिक एवायमिति। तत्कस्य हेतोरित्याशङ्क्याह। तथा ह्यस्यास्यामित्यादि। एतदुक्तम्। "यस्मान्मातुर्वासनाधानवैकल्येन कांक्षायितत्वादिकं भवति, तस्मात् पूर्वमपरिपृच्छकजातीय" इति। तदेव स्पष्टयन्नाह। पुनरपरमित्यादि। तावत्कालिकीति। कतिपयादिनानुबन्धिनीति। संह्रियते चेति। विरोधप्रत्ययबलादपनीयते।

असंहार्या चेति परिपृच्छाबाहुल्येनाशक्योत्तरा। तथैव तत्कस्य हेतोरित्याशङ्क्याह। एवं ह्येतत् सुभूते भवतीत्यादि। धर्मतैषा यत्कारणानुविधायि तत्कार्यमित्यर्थः। येन पूर्वं न सम्परिपृष्टेत्यादौ (p. 286, 2) तु सर्वकालमिति भावः। यतोऽनन्तरमेवोक्तमेकं वादिनमित्यादि। कञ्चित्कालं छन्दोऽनुवर्तत इति। कतिपयदिनाभ्यासबलात्तावन्मात्रमभिलाषो भवति। कारणानुरूपत्वात् कार्यस्येति मतिः। उत्क्षिप्यत इति। श्रद्धातो भ्रश्यते। अवसीदतीति श्रद्धायोगेऽपि। चलाचलेति प्रतिनियतधर्मानालम्बनात्। तदेवाह। तूलपिचूपमश्चेति। तूलवर्त्तिकरणाय संस्कृतं तूलकं तूलपिचुः। तेनानवस्थितसाधर्म्यात्सदृशस्तदुपमः श्रवणाद्यवस्थासु प्रयोगादिषु वा यथासंख्यं नानुग्रहीष्यति नानुवर्तिष्यते नानुपरिवारयिष्यतीति वाच्यम्। आलम्बनविशेषं चतुर्थक्षणसंगृहीतं निर्दिशन्नाह। तद्यथापि नामेत्यादि। बाह्याध्यात्मिकोपद्रवाभावात्। स्वस्तिनाऽनन्तरायेणेति द्वयोरुपादानम्। तदेवाह। अक्षताश्चानुपहताश्चेति। व्यध्वनीत्यन्तराल एव मार्गे विनाशमापत्स्यते। अस्ति श्रद्धेत्यादि (p. 287, 1)। तच श्रद्धास्तित्वेनाभिसम्प्रत्ययः। क्षान्तिरनुत्पादादिधर्मक्षमणम्। रुचिरवग्रहः। छन्दः कर्तुकामता। वीर्यं कुशलोत्साहः। अप्रमादः कुशलाकुशलयोर्यथाक्रमं सेवनासेवने। अधिमुक्तिर्निश्चयावधारणम्। अध्याशयः परोपकारादिप्रवणं चित्तम्। त्यागः फलेन सह सर्वस्वपरित्यजनम्। गौरवं

सर्वत्र नम्रता। प्रीतिः सौमनस्यम्। प्रामोद्यं हर्षविशेषः। प्रसादो गुणवत्तादर्शनाङ्गक्तिविशेषः। प्रेम शक्यानुष्ठाने ऽभिलाषः। अनिक्षिप्तधूरता प्रतिज्ञाभारापरित्यागः। अनालम्बनालम्बनोदाहरणं सान्तरनिरन्तरकारिणोः सर्वाकारज्ञताविपक्षप्रतिपक्षभावपरिदीपनार्थम्। आधारविशेषं मार्गे प्रथमक्षणसंगृहीतं वक्तुमाह। तद्यथापि नाम सुभूते स्त्री वेत्यादि। निर्युक्तिक एवायमिति। तत्कस्य हेतोरित्याशङ्क्याह। वस्तुधर्मत्वेन परिहरन्नाह। यथापि नामेत्यादि। परिवहेदित्युदकं नयेत्। तथैव तत्कस्य हेतोरित्याशङ्क्य पूर्ववदाह। यथापि नामेत्यादि। प्रज्ञापारमितोपायकौशल्येनेति शून्यताकरुणाभ्यामित्यर्थः। परिपक्वामघटौ प्रतिपत्तिधर्मस्याधारानाधारभावसन्दर्शनार्थौ। साकल्यविशेषं द्वितीयक्षणसङ्गृहीतं प्रतिपादयन्नाह। दुष्प्रज्ञजातीय इत्यादि (p. 288, 9)। अनाकोटितामिति। उदकप्रवेशस्थाने वल्कलादानात्। अपरिकर्मकृतामिति। पूतिकाष्ठानपनयनात्। भाराक्रामभिरूढं इति। गुरुभारभरितामुत्कलितः। असन्तीर्णभाण्डैव सम्पत्स्यतीति। अप्राप्तस्थलपरिष्कारैवावसादं यास्यति। परिहीन इत्यप्राप्तपरिहाण्या। अन्तरा संसत्स्यति व्यवसादमापत्स्यते इति (p. 289, 1)। अन्तराभेदं यास्यति। बुद्धभूमिञ्च प्रति विषादमापत्स्यते। अनागतार्थनिश्चयाभावात् कथं स्थास्यत्ययमिति। तत्कस्य हेतोरित्याशङ्काविकलकारणमात्रानुबन्धियोग्यतानुमानादाह। एवं

ह्येतत्सुभूत इत्यादि । आकोटितानाकोटितनौग्रहणं प्रतिपत्तिवैकल्यसाकल्यज्ञापनार्थम् । सम्परिग्रहविशेषं तृतीयक्षणसङ्गृहीतं प्रतिपादयन्नाह । कश्चिदेव पुरुषो जीर्ण इत्यादि (p. 290, 6) । तत्र जराजर्जरितगात्रत्वाज्जीर्णः । वयःप्राप्तत्वेन वृद्धः । सुभाषितदुर्भाषिताविवेकत्वान्महल्लकः । क्षपित इत्युपहतः । तथैव तत्कस्य हेतोरित्याशङ्क्याह । यथापि नामेत्यादि । जीर्णपुरुषस्य परिग्रहापरिग्रहोदाहरणं प्रज्ञापारमितोपायकौशलपरिग्रहापरिग्रहाभ्यां यथायोगं संसारनिर्वाणैकान्तपातापातार्थपरिदीपनार्थम् ।

अभिसमयालङ्कारालोकायां प्रज्ञापारमिताव्याख्यायामौपम्यपरिवर्तो नाम चतुर्दशः ॥

---

अनास्वादविशेषञ्चतुर्थक्षणसङ्गृहीतं निर्दिशन्नाह । आदिकर्मिकेणेत्यादि (p. 292, 2) । तत्र कायेन वाचा परिवारादिप्रदानेन वाऽऽराधनाद्यथासंख्यं सेवितव्यानि भक्तव्यानि पर्युपासितव्यानि इति योज्यम् । योग मापद्यस्वेति । देयदायकप्रतिग्राहकाद्यनुपलम्भयोगेन प्रतिपत्तिपरो भव । मा रूपतः परामृक्ष इति । मा रूपाद्यभिनिवेशयोगेन ग्रहीरित्यर्थः । तथैव तत्कस्य हेतो-रित्याशङ्क्याह । अपरामृष्टा हीत्यादि । तत्त्वतोऽनुत्पाद-रूपत्वात् सर्वाकारज्ञता न केनचित् प्रकारेण प्रत्यवमर्ष-णीया । पेयालमिति । तत्सर्वमनुत्तरायामिति (p. 293, 1) । यावत् कुलपुत्र सर्वत्रेत्ययं ग्रन्थः शीलादिपारमिताचतुष्टये-ऽतिदेशनीयः । अनुपूर्वेणेति । आदावात्मादिनिरा-करणेन बाह्येऽर्थे प्रतिष्ठाप्य पश्चात्कल्पितपरतन्त्रपरि-निष्पन्नस्वभावकथनेन त्रैधातुकचित्तमात्रावगमे नियोज्य तदनु सम्यगर्थक्रियासु योग्यमयोग्यं तथ्यातथ्यभेदेन संवृति-सत्यद्वयमविचारैकरम्यपूर्वपूर्वस्वकारणाधीनं निर्दिश्य तथ्यसंवृतौ स्थित्वा यथादर्शनं मायापुरुषेणेव दानाद्या-चरितव्यम् । परमार्थतोऽनुत्पादश्च भावयितव्य इत्येवंक्रमेण प्रज्ञापारमितायामवतारयितव्यः । तदेवं षोडशप्रकारं विशेषलक्षणमावेदितं येन श्रावकादिमार्गेभ्यो बोधिसत्त्वा-दीनां मार्गज्ञतादिद्वये विशेषमार्गो विशिष्यते । अतस्तेषां यथोक्तविशेषविकलोऽभिज्ञाद्युत्पादनलक्षणत्वेन सुगमत्वा-न्नोक्तः । तथा चोक्तम् ।

अचिन्त्यातुल्यते मेयसंख्ययोः समतिक्रमौ।
सर्वार्यसंग्रहो विज्ञवेद्यासाधारणज्ञते ॥ २४ ॥
क्षिप्रज्ञान्यूनपूर्णत्वे प्रतिपत्समुदागमौ।
आलम्बनञ्च साधारं साकल्यं संपरिग्रहः॥ २५ ॥
अनास्वादश्च विज्ञेयो विशेषः षोडशात्मकः।
विशेषमार्गो मार्गेभ्यो येनान्येभ्यो विशिष्यते ॥२६॥ इति

विशेषलक्षणेनावच्छिन्नायां किं कारित्रमिति कारित्र-लक्षणं वक्तव्यम्। तत्र हितसुखकारित्रे निर्दिशन्नाह। दुष्करकारका भगवन्नित्यादि (p. 293, 8)। एवंरूपमिति। बुद्धत्वनिष्पादकमविकलं कारणमित्यर्थः। तत्रानागत-तदात्वसुखोपसंहाराभिप्रायेण हिताय सुखायेति द्वयमुक्तम्। एतच्च द्वयमनुकम्पया स्यादित्याह। लोकानुकम्पायै सम्प्र-स्थिता इति। त्राणादिकारित्रप्रतिपादनायोद्देशमाह। लोकस्य त्राणं भविष्याम इत्यादिना। तत्र त्राणकारित्रं निर्दिशन्नाह। कथञ्च सुभूत इत्यादि। तत्र व्यायच्छन्ते वीर्यमारभन्त (p. 294, 3) इति। प्रयोगासन्तुष्टिवीर्याभ्यां यथाक्रमं योज्यम्। त्राणं भवन्तीति। अविपाकधर्मतायां स्थापनात्। शरणकारित्रं वक्तुमाह। कथञ्चेत्यादि। तत्र जातिरभूत्वाभावः, जरा पुराणीभावः, व्याधिरस्वास्थ्यं मरणं पूर्वकर्माक्षिप्तनिकायपरित्यागः, शोको वैमनस्यं, परिदेवः प्रियगुणानुस्मरणसहितं क्रन्दनं, दुःखं कायिकम-शान्तं वेदितं, दौर्मनस्यं चैतसिकं पूर्ववत्, उपायासो भारो-द्वहनादिः। शरणमिति। आत्यन्तिकहितोपसंहारार्थेन। लयनकारित्रं निर्दिशन्नाह। कथञ्चेत्यादि। अश्लेषायेति।

रूपाद्यनुत्पादाय लयनमिति । दुःखहेतुनिवर्तनार्थेन । अश्लेषार्थमेव स्पष्टयन्नाह । कथं भगवन्नश्लेष इत्यादि । ज्ञानदर्शनादिति (p. 295, 3) । अस्मिन्प्रसङ्गे यथानिर्दिष्टार्थसाक्षात्करणं ज्ञानदर्शनम् । परायणकारित्वं प्रतिपादयन्नाह । कथञ्च सुभूत इत्यादि । यत्सुभूते रूपस्य पारं न तद्रूपमिति । प्रकर्षगमनार्थेन रूपस्य यत्पारमनुत्पादो निःस्वभावता न तद्रूपं भवतीति संवृत्या । परमार्थतः पुनर्यथा पारं शून्यता तथा रूपम् ।

धर्मधातुविनिर्मुक्तो यस्माद्धर्मो न विद्यते । इत्याह ।

यथा सुभूते पारं तथारूपमिति । अभिसम्बुद्धा एवेति । इदानीमपि शून्यतारूपत्वाद्बुद्धत्वावस्थायामिवाधिगताः सर्वधर्मास्तस्मादेतत्सूचाभियोगो व्यर्थ इति भावः । भ्रान्त्यात्मकविकल्पसद्भावात् कथमभिसम्बुद्धा इति । तत्कस्य हेतोरित्याशङ्क्याह । न ह्यचेत्यादि । विकल्पस्यानुत्पादरूपत्वाद्रूपादिपारे विकल्पो नैवास्तीत्यर्थः । अभिसम्बुद्धा एव भवन्ति सर्वधर्मा इति । तत्त्वत एवेति शेषः । संवृत्या पुनरनादिकालीनसमारोपापनयनाय सूचाभियोगः सफलो भवेदिति भावः । संवृत्यधिगममेवावेदयन्नाह । इदमपीत्यादि । बहुशो बहुधोपायं भावयन्त्युपनिध्यायन्ति न च साक्षात् कुर्वन्तीदं परमदुष्करं सहसा कर्तुमशक्तम् । न चावलीयन्ते दानादिपारमितापूरणे च कौशीद्यं न प्रतिपद्यन्ते । एते धर्मा इति । प्रकृतिपरिनिर्वृतत्वादिलक्षणाः । परायणं भवन्तीति । धर्मदेशनया संसार-

निर्वाणसमतोपसंहारार्थेन त्रातारो भवन्ति। द्वीपकारित्वं वक्तुमाह। कथञ्च सुभूत इत्यादि। उदकपरिच्छिन्ना इति। जलमध्यस्थिताः स्थलभागाः। पूर्वान्तापरान्तपरिच्छिन्नं रूपमिति। पूर्वान्तो हेतुरपरान्तं कार्यं ताभ्यां परिच्छिन्नम्। तन्मध्यवर्ति मायोपमस्वरूपम्। एतेन सुभूते परिच्छेदेनेति। तत्त्वतोऽनुत्पादेन। एतच्छान्तमित्यादि। पदपञ्चकेन प्रयोगदर्शनभावनाऽशैक्षविशेषमार्गेषु यथाक्रमं मार्गसत्यमावेदितम्। लोकस्य द्वीपा भवन्तीति। उदकपरिक्षिप्तसुस्थलसाधर्म्येण पूर्वान्तापरान्तपरिच्छिन्नसर्वधर्माधिगमात् तृष्णाक्षयविरागनिरोधनिर्वाणदेशिकत्वेन, स्वपरार्थाधिगमाधारभावोपसंहारादाश्रयणीया भवन्ति। कथञ्चेत्याद्यालोककारित्वं पुनः सालोकरत्नद्वीपसाधर्म्येणाविद्यान्धकारक्षयस्य तृष्णादिक्षयान्तर्भावेन द्वीपकारित्वमेव। पृथक्करणं तु ज्ञानालोकस्याज्ञानक्षये प्राधान्यादिति वेदितव्यम्। अविद्याण्डेत्यादि। अविद्यैवाण्डकोशपटलं ग्राह्यग्राहकाकारादिप्रतिभासः। तेन पर्यवनद्धानां समन्ताद्वाह्येन ज्ञानेन युक्तानां सत्त्वानाम्। तमोऽभिभूतानामान्तरेणाविद्यावासनाबीजेनाभिभूतानां सर्वाज्ञानतमोऽन्धकारं बाह्याभ्यन्तरमज्ञानं विधुन्वन्त्यपनयन्तीति सम्बन्धः। किं कुर्वाणा इत्याह। प्रज्ञायाऽवभासयन्त इति ज्ञानालोकं कुर्वाणा इत्यर्थः। परिणायककारित्वं कथयन्नाह। कथञ्च सुभूत इत्यादि। परिणायका भवन्तीति (p. 297, 1)। रूपादिसर्वधर्माणां स्वभावेनानुत्पादानिरोधाय धर्म-

प्रकाशनात्सारथिभावेन परार्थप्रतिपत्त्युपसंहारान्नायकाः। अनाभोगादिकारित्रयार्थं प्रश्नयन्नाह। कथञ्चेत्यादि। लोकस्य गतिर्भवतीति। त्रिविधकारित्रव्यापारोपसंहारादाश्रया भवन्तीति। तत्र सर्वज्ञताधिकारधर्मदेशिकत्वेनानाभोगप्रवृत्तसत्त्वार्थोपसंहारादाश्रया भवन्तीत्यनाभोगकारित्रं तावत् कथयन्नाह। इह सुभूत इत्यादि। आकाशगतिकमिति। आकाशनिष्ठम्। एतदेव कथयन्नाह। यथाकाशमित्यादि। तत्र द्रव्याभावमात्रमाकाशम्। अतीतात् कालादागमनाभावादनागतमनागते च काले गतिवैकल्यादगतम्। कारकहेतोरसत्त्वादकृतं विनाशहेतुविरहादविकृतम्। स्थापकसंस्कारानुपपत्तेरनभिसंस्कृतम्। कालत्रये स्वभाववियोगाद्यथाक्रममस्थितमसंस्थितमव्यवस्थितम्। अतश्चानुत्पन्नमनिरुद्धम्। उपसंहारार्थमाह। एवमेव सुभूत इत्यादि। आकाशकल्पत्वादविकल्पा इति। खतुल्यत्वान्निर्विकल्पाः। अनागतमित्यादि निर्युक्तिकमिति। तत्कस्य हेतोरित्याशङ्क्याह। या सुभूते रूपस्येत्यादि (p. 298, 1)। शून्यता अनुत्पादरूपता। यदि नाम तस्या गमनागमनं नास्ति, तथापि रूपादीनां कथं न भवतीति। तत्कस्य हेतोरित्याशङ्क्याह। शून्यतागतिका हीत्यादि। अनुत्पादस्वभावत्वात्, सर्वधर्माः शून्यतादिस्वभावाः। तत्र मायोपमत्वाच्छून्यता। सर्वनिमित्तविगमादानिमित्तम्। प्रार्थनाविषयातिक्रान्तत्वादप्रणिहितम्। गगनवत् प्रकृतिप्रभास्वरत्वादनभिसंस्कारः। तां गतिं न व्यतिवर्तन्ते। तं स्वभावं नातिक्रामन्ति।

अतोऽनन्तरमेवं खलु सुभूते बोधिसत्त्वा महासत्त्वाऽनुत्तरां सम्यक्सम्बोधिमभिसम्बुद्धाः (p. 299, 6) । सन्तो लोकस्य गतिर्भवन्तीति वक्ष्यमाणेन हारकान्तेन सम्बन्धतः । सर्वज्ञताधिकारस्तु हिताद्यनाभोगपर्यन्ते सर्वत्रकारित्रे निर्वाणपरिदीपनार्थेन वेदितव्यः । मार्गज्ञताधिकारधर्मदैशिकत्वेन यथायाननिर्वाणतदसाक्षात्करणोपसंहाराद्गतिर्भवन्तीति । यानत्रयनिर्याणतत्फलासाक्षात्करणकारित्रं प्रतिपादयन्नाह । अनुत्पादगतिका हीत्यादि (p. 298, 9) । तत्र कल्पितदुःखविवेकादनुत्पादगतिकाः, विकल्पितदुःखविरहादजातिगतिकाः, धर्मतादुःखवियोगादभावगतिकाः । कल्पितसमुदयाभावात् स्वप्नोपमप्रतिभासमात्रस्य विद्यमानत्वेन स्वप्नगतिकाः । यथा आत्मा प्रमाणबाधितत्वान् न विद्यते, तद्वद्विकल्पितसमुदयासत्त्वादात्मगतिकाः । धर्मतासमुदयस्य मायोपमत्वेनाविद्यमानपरिच्छेदत्वादपर्यन्तगतिकाः । कल्पितादित्रिविधभावनिरोधाद्यथाक्रमं शान्तगतिकाः, निर्वाणगतिकाः, अप्रत्युद्धारगतिका इति पदत्रयं वाच्यम् । तथैव कल्पितादित्रिविधमार्गस्वभावत्वादनागतिकाः, अगतिकाः, अचलगतिका इति । अतोऽप्यनन्तरं पूर्ववद्धारकान्तेन सम्बन्धः करणीयः । गतिकारित्रं कथयन्नाह । रूपगतिका हीत्यादि । रूपादिगतिका धर्मतात्मकरूपादिस्वभावाः । लोकस्य गतिर्भवन्तीति । सर्वाकारज्ञताधिकारिकसर्वधर्मदैशिकत्वेन बोधिसत्त्वा लोकस्याश्रयणीया भवन्तीति । यथोक्तमेकादशविधमेव कारित्रलक्षणमवसातव्यम् । तथा चोक्तम् ।

हितं सुखं च त्राणं च शरणं लयनं नृणाम् ।
परायणञ्च द्वीपञ्च परिणायकसंज्ञकम् ॥ २७ ॥
अनाभोगं त्रिभिर्यानैः फलासाक्षात्क्रियात्मकम् ।
पश्चिमं गतिकारित्रमिदं कारित्रलक्षणम् ॥ २८ ॥ इति

कारित्रलक्षणेनावच्छिन्नानां स्वभावलक्षणं कथयन् प्रतिपत्त्यर्थमाह । के भगवन्निमामित्यादि (p. 299, 7) । स्वरूपमावेदयन्नाह । ये सुभूते चरिताविन इत्यादि । स्वभावलक्षणकथनार्थं प्रश्नयन्नाह । किं स्वभावा इत्यादि । परिहर्तुमाह । वैनयिकविविक्तस्वभावा इति । विनीयतेऽनेनेति विनयो धर्मधातुः तत्प्रभवो विपक्षविवेकाद्विविक्तः स्वभावो येषां ते तथोक्ता इत्यनेनैव पदेन क्लेशविवेकस्वभावो रागादिविविक्तस्वभावत्वेन, क्लेशलिङ्गविवेकस्वभावो रागादिलिङ्गकायादिदौष्ठुल्यविविक्तस्वभाववत्त्वेन, क्लेशनिमित्तविविक्तस्वभावो रागादिनिमित्तायोनिशोमनसिकारविविक्तस्वभावत्वेन, विपक्षप्रतिपक्षविवेकस्वभावो रागारागद्वेषाद्वेषमोहामोहविविक्तस्वभावत्वेन चेति स्वभावचतुष्टयं सर्वाकारज्ञतागतिकत्वेनाधिमुक्तूणां भावनामार्गोपन्यासार्थेनावेदितम् । तामेव गतिं निर्देष्टुमाह । किं भगवन्नेवमित्यादि । एवं गतिका इति । सर्वाकारज्ञतागतिकाः । साधूक्तत्वेनाह । एवमेतत्सुभूत इत्यादि । दुष्करस्वभावं वक्तुमाह । दुष्करकारक इत्यादि (p. 300, 6) । एवमेतदिति । सर्वधर्माणामत्यन्ततयाऽविद्यमानत्वात्तदसम्बद्धतामुपादाय सर्वसत्त्वापरिनिर्वापणदुष्करसन्नाह-

त्वेन दुष्करकारकः। सन्नाहस्वरूपं स्पष्टयन्नाह। स खलु पुनरयमित्यादि। तत्र वर्तमानरूपाद्यभिनिवेशविरहान्न रूपादिसम्बन्धः। अनागततत्प्रार्थनाविमुखत्वान्न रूपादेरर्थाय सम्बन्धः। निर्युक्तिकमेवेदमिति। तत्कस्य हेतोरित्याशङ्क्याह। सर्वधर्मासम्बद्ध इति। तत्त्वतोऽविचारैकरम्यत्वादिति मतिः। ऐकान्तिकस्वभावं प्रतिपादयन्नाह। अस्य भगवन् बोधिसत्त्वस्येत्यादि। एवं महासन्नाहसन्नद्धस्येति। ऐकान्तिकस्वभावेन युक्तस्य। तत्र श्रावकभूमिः प्रत्येकबुद्धभूमिश्च सम्यक्प्रवृत्तत्वाद्बोधिसत्त्वस्य न प्रतिकांक्षितव्या। बुद्धभूमिः पुनरभिलाषयोगेन नाकांक्षणीया। कथमयमर्थो लभ्यत इत्याह। कं त्वं सुभूतेऽर्थवशमित्यादि (p. 301, 1)। सर्वोपलम्भप्रतिपक्षत्वान्मातुरित्यभिप्रायेण परिहरन्नाह। अस्थानं हीत्यादि। तत्र हेतुवैकल्यादस्थानमसम्भवः। फलासम्भवादनवकाशोऽनवसरः। श्रावकादिभूमिपातास्थानानवकाशत्वेन चैकान्तिकभावनाऽनभिनिवेशयोगेन परिदीपिता भवेत्। उद्देशस्वभावं निर्दिशन्नाह। अपि तु बुद्धभूमिरेवेत्यादि। प्रतिकांक्षितव्येति। मायोपमसर्वधर्माधिमोक्षादिति भावः। अनेनोद्देशभावनाऽव्यभिचारत्वेनोद्योतिता स्यात्। अनुपलम्भस्वभावं कथयन्नाह। गम्भीरा भगवन्नित्यादि। सा न केनचिद्भावयितव्या। भाव्यभावकभावनानुपलम्भात्। तदेवाह। तां हीत्यादिना। पूर्ववत् तत्कस्य हेतोरित्याशङ्क्याह। न हीत्यादि। न हि कश्चिद्धर्मः परिनिष्पन्न इति। कर्तृकर्मक्रियादिलक्षणः। कथन्तर्हि भावने-

त्यादि । आकाशभावनेति । तत्त्वतो मायोपमभावना । तामेव भावनां सर्वाकारज्ञतादिभेदेनाह । सर्वधर्मभावनेत्यादिना । तत्र सर्वाकारज्ञतया सर्वाभिसमयानुत्पादसंग्रहात् सर्वधर्मभावना । मार्गज्ञतयाऽनभिनिवेशेन सर्वमार्गशिक्षणादसङ्गभावना । सर्वज्ञतयाऽशेषवस्तुसङ्ग्रहादत्यन्तभावना । सर्वाकाराभिसम्बोधेन विशेषमार्गरूपत्वादसम्भावना । मूर्धाभिसमयेन निष्ठामार्गलक्षणत्वादपरिग्रहभावना । अनभिनिवेशस्वभावं वक्तुमेवमेतत्सुभूत एवमेतदिति । स्वहस्तदानपूर्वकमाह । अतो हि सुभूते गम्भीराया इत्यादि (p. 302, 1) । अत इति वक्ष्यमाणात् कारणादित्यर्थः । कारणमेवाह । कश्चिदित्यादिना । कश्चिच्छब्दो यस्मादर्थे वर्तते । नाभिनिवेशं करोतीति । न वस्तुपरिग्रहं करोति । परभणितानि परमन्त्रितानि नाभिनिविशत इति । निकायभिक्षूणां नेदं बुद्धवचनमिति । प्रकटाभिधानं परभणितं प्रच्छन्नकथनं परमन्त्रितम् । नाकर्णयति । न परस्य श्रद्धया गच्छतीति, प्रत्यात्मवेद्यप्रसादलाभान्न परप्रणेयो भवति । ग्रन्थाद्यवगमादवगाहते । अर्थालम्बनादधिमुच्यते । तथैव तत्कस्य हेतोरित्याशङ्क्याह । तथा हीत्यादि । जन्मान्तरवासनाधानमन्तरेण चानुत्त्रासादिर्न भवतीति भावः । अनुत्त्रासादिभिश्च मार्गज्ञताकारभावना कथिता स्यात् । आलम्बनस्वभावं निर्दिशन्नाह । यो भगवन् बोधिसत्त्व इत्यादि । आकारेणेति ग्रहणप्रकारेण । व्यवचारिता निरूपिता । सर्वज्ञतानिम्नयेति त्रिसर्वज्ञतानिष्ठया चित्तसन्तत्या । अनेन त्रिसर्वज्ञताभावना

कथिता स्यात्। निर्ज्ञातस्वरूपा सन्ततिरन्यस्य व्यवचारणे दक्षेत्याह। कथं भगवन्नित्यादि। प्रयोगमौलपृष्ठावस्थासु मायोपमसर्वधर्मभावनात्मिकया चित्तसन्तत्या पूर्विकया सर्वज्ञतानिम्ना सन्ततिर्व्यवचारितेति परिहरन्नाह। आकाशनिम्ना चेत्यादिपदत्रयम् (p. 303, 1)। इयं सा व्यवचारणेति। यथोक्तनिश्रितसन्तत्या सा व्यवचारणा सम्यगित्यर्थः। निर्युक्तिकमेवेदमिति। तत्कस्य हेतोरित्याशङ्क्याह। अप्रमेया हीत्यादि। यस्मात् तत्त्वेन प्रमाणप्रमेयत्वसमतिक्रमाद्यथायोगमप्रमेयाऽप्रमाणा च सर्वज्ञता तस्मान्मायोपमभावनानिश्रितसन्तत्या व्यवचारणाऽन्यथा प्रमेयत्वादिसद्भावाद्भावग्रहः स्यादिति वाक्यार्थः। एतदेव स्पष्टयन्नाह। यत्सुभूत इत्यादि। तत्र प्राप्तिः पृथग्जनस्य शीलादिस्वभावः सम्भारमार्गः, अभिसमयः सम्भृतसम्भारस्य निर्वेधभागीयात्मकः प्रयोगमार्गः। अधिगमः सर्वत्रगधर्मधातुप्रतिवेधलक्षणो दर्शनमार्गः। मार्गो लौकिकध्यानारूप्यालम्बनो लौकिकभावनामार्गः। मार्गफलं दुःखसत्यादिज्ञानरूपो लोकोत्तरभावनामार्गः। ज्ञानमधिमात्राधिमात्रादिक्लेशप्रहाणकारी मृदुमृद्वादिस्वभावो मृदुमार्गः। विज्ञानं मध्याधिमात्रादिक्लेशविध्वंसको मध्यमृद्वादिलक्षणो मध्यो मार्गः। उत्पत्तिर्मृद्वधिमात्रादिक्लेशोन्मूलकोऽधिमात्रमृद्वादिरूपोऽधिमात्रो मार्गः। विनाशो भावनामार्गे क्लेशप्रहाणोपायः प्रयोगमार्गः। उत्पादः क्लेशप्रहाणेन विमुक्तिप्रापकः सम्यगानन्तर्यमार्गः। व्ययः क्लेशविविक्तज्ञानसाक्षात्कारी विमुक्तिमार्गः। निरोधः परिशिष्टक्लेशप्रकारस्य प्रयोगानन्तर्यविमुक्तिमार्गात्मको

विशेषमार्ग इत्येके। वैशेषिकगुणाभिनिर्हारको विशेषमार्गो निरोध इत्यन्ये। भावना वज्रोपमः समाधिः सर्वावरणाभेद्यभेदकः। विभावना निष्ठामार्गः। क्षयानुत्पादज्ञानं देशादेशसामान्यम्। प्रदेशो देशविशेषः। न केनचिदभिसम्बोद्धुमिति। रूपादिभिराकारैर्न शक्याधिगन्तुम्। तदेवाह। न रूपेणेत्यादिना। यत्तर्हीदमुक्तमालम्बनं सर्वधर्मा लौकिकाः कुशलादय इत्यादि, तत्कथमिति। तत्कस्य हेतोरित्याशङ्क्याह। रूपमेव हीत्यादि। यस्माद्योगिसंवृत्त्या रूपादिकमेव मायोपमताधिगतं बुद्धत्वमित्यर्थः। यथोक्तं प्रसिद्धमाचस्य हि याऽयथार्थता तदर्थसम्बोधफलं हि शासनमिति। दानपारमितैवेत्यादि। तत्र दानशीलक्षान्तिपारमितास्तिस्रो वीर्यध्यानपारमितयोश्चांशः पुण्यसम्भारः। ज्ञानसम्भारस्तु प्रज्ञापारमिता वीर्यध्यानपारमितयोश्चांश इत्येतत्सर्वं मायोपमत्वेनाविशिष्टत्वात्तथागतत्वम्। सम्यग्धर्मावबोधेन सञ्जातप्रसादातिशया भगवत्पादवन्दनापूर्वकं मातुर्माहात्म्यं शक्रादयः प्रकटयन्तीत्याह। अथ खलु शक्र इत्यादि। तत्र गम्भीरा रूपादितथतास्वभावत्वात्। श्रुतचिन्ताभावनावस्थासु मायोपमत्वाद्यथाक्रमं दुरवगाहा दुर्दृशा दुरनुबोधा, इदमप्यर्थवशमिति। अपिशब्दान्न केवलं विनेयाग्रहणादि किन्तर्हीदमपि धर्मगाम्भीर्यं पश्यत इत्यर्थः। अल्पोत्सुकतायामिति निर्व्यापारत्वे चित्तमवनतम्। न धर्मदेशनायां तथापि ब्रह्माध्येषणान्महाकरुणया धर्मचक्रं प्रवर्तितमिति भावः। साधूक्तत्वेनानुवदन्नाह। एवमेतदित्यादि। उप-

संहारार्थमाह। गम्भीरो वतायमित्यादि। केयं गम्भीरतेत्यादि। यत्र न कश्चिदित्यादि। सर्वलोकविप्रत्यनीकस्वभावं कथयन्नाह। आकाशगम्भीरतयेत्यादि। अविचारैकरम्यकारणत्वादाकाशगम्भीरतया गम्भीरः। तत्त्वेन मायोपमकार्यस्वभावत्वादात्मगम्भीरतया गम्भीरः। उत्पादाभावात्सर्वधर्मानागमनतया गम्भीरः। विनाशवियोगात् सर्वधर्मागमनतया गम्भीरः। एतदुक्तम्। "स्वप्नोपमहेतुफलधर्माधिगतिपूर्वकः क्षयानुत्पादज्ञानस्वभावो मया धर्मोऽभिसम्बुद्धो देश्यत" इति। यथोक्तस्वभावमेव स्पष्टयन्नाह। आश्चर्यमित्यादि (p. 305, 2)। हेतुवैशिष्ट्यादाश्चर्यम्। फलातिशयादद्भुतम्। सर्वलोकविपरीतत्वात्सर्वलोकविप्रत्यनीकः। तदेव वक्तुमाह। अनुग्रहायेत्यादि। अयमिति प्रज्ञापारमितात्मकः॥

अभिसमयालङ्कारालोकायां प्रज्ञापारमिताव्याख्यायां

देवपरिवर्तो नाम पञ्चदशः॥

---

अप्रतिघातस्वभावं निर्दिशन्नाह । अथ खल्वायुष्मा- नित्यादि (p, 306, 2) । नायमिति । त्रिविधसर्वज्ञताकार- सुपरिपूर्णाभिसमयत्वेन सर्वत्र रूपादौ ज्ञानधर्मस्याप्रति- घातित्वादयं देशनाधर्मो न क्वचित्प्रतिहन्यते । अपद- स्वभावं वक्तुमाह । अप्रतिहतेत्यादि । सर्वपदानुपलब्धित इति । ज्ञानज्ञेयसमतया सर्वप्रतिष्ठानुपलम्भार्थेनाप्रति- हतलक्षणोऽनभिभूतः । अद्वितीयत्वादिति । एकाकित्वा- दप्रतिमलक्षणोऽसादृश्यलक्षणः । निःप्रत्यर्थिकत्वादिति । सर्वप्रतिपक्षसमतिक्रान्तत्वादप्रतिलक्षणोऽप्रतिपक्षलक्षणः । अनभिनिर्वृत्तत्वादिति । अजातत्वादपदोऽप्रतिष्ठास्वभावः । सर्वोपपत्त्यनुपपत्तित्वादिति । देवादिसर्वगतिष्वविद्यमान- रूपत्वादनुत्पादः । सर्वपथानुपलब्धित्वादिति । सर्वमार्ग- त्वेनानुपलम्भादपथोऽमार्गः । अपद इत्यस्य प्रयोग- दर्शनभावनाविशेषाशैक्षमार्गेषु विशेषणार्थमप्रतिहतलक्षण इत्यादि पञ्चपदोपादानम् । अगतिस्वभावं कथयन्नाह । अनुजातो बतायमित्यादि । भगवतः सम्बन्धी श्रावको- ऽयमनु पश्चाज्जातस्तथागत इवेत्यनुजातः । कथं श्रावको- ऽपि तथागत इवानुजात इति । तत्कस्य हेतोरित्याशङ्क्याह । तथा हि भगवन्नित्यादि । यस्मात्सर्वमेव धर्ममनधिगतार्थ- विषयमपि सम्यक्शून्यतया देशयति, तस्मात्तथागत इवानु- जात इत्यर्थः । वस्तुधर्मत्वेनानुजातार्थं विघटयन्नाह । यद्देवपुत्रा इत्यादि । अजातत्वादिति (p. 307, 1) । तत्त्वेना- नुत्पन्नत्वादजातस्तथागतस्य श्रावकः सुभूतिस्तस्यैव तथता- मनुयातः । प्राप्तस्तादात्म्येनानुगतः । "तथाभावस्तथ-

तेत्यत एव निर्देशादस्य ह्रस्वत्वमि"त्याचार्यवसुबन्धुः। कथमित्याह। यथा तथागतेत्यादि। एवं हि सुभूतिरिति। यस्मादनन्तरोक्ततथतारूपेण तथागततथतामनुयातस्ततोऽजातत्वादनुजात इति पूर्वेण सम्बन्धः करणीयः। एवमुत्तरचाप्यवगन्तव्यम्। अभ्यासयोगेन तत्तथताप्राप्तौ कथं न वस्तुधर्मत्वेनानुजातः स्यादित्याह। आदित एवेत्यादि। आदित इति। प्रथमत एवेत्यर्थः। निर्युक्तिकमेवेदमिति। तत्कस्य हेतोरित्याशङ्क्याह। या हीत्यादि। सा सर्वधर्मतथतेति। द्रव्याभिमतानां रूपादीनां सामान्यधर्मताऽनुत्पाद इति यावत्। एवं तथागतसर्वधर्मतथतयोः परस्परमभेदेन तथागततथतायाः सर्वविषयत्वमावेदितम्। अतश्च सैव सुभूतेरपीत्याह। या चेत्यादि। अतोऽनुजात इति तथताप्राप्तियोगादनुजातः। तथता तर्हि द्रव्यसती स्यादित्याह। सापि चेत्यादि। अतथतेति, निर्विषयप्रतिषेधानुपपत्तेस्तथतापि सांवृती मायोपमेति यावत्। तथागतमनुजात इति। अनुशब्दयोगे कर्मविभक्तिः। तथागतस्येति पाठे तत्सम्बन्धो विवक्षितः। तत्त्वतो धर्मतारूपत्वे कथमनुजात इत्याह। तथागतस्येत्यादि। स्थितितेति। संवृत्या प्रबन्धधर्मता। यद्येवं विकारादिमान् सुभूतिः स्थविरः स्यादित्याह। यथा तथागतेत्यादि। तत्राधिकन्यूनविकाराभावाद्यथाक्रममविकारानिर्विकारा। स्वपरविकल्पवियोगादविकल्पा निर्विकल्पा। तथागततथतावत्सुभूतितथता कुतोऽविकारादिस्वभावेत्याह। एतदेव कुत इति। तत्कस्य हेतोरित्याशङ्क्याह। या

च तथागततथतेत्यादि । एकैवैषेत्यभिन्ना यस्माद्भेदक-कर्मकर्तृक्रियाऽनुपलम्भाद्‌द्वयाऽद्वैधीकाराऽद्वयतथतेत्यर्थभेदो वाच्यः । सर्वथाऽऽधारत्वविरहान्न क्वचित् । हेतोरभावान्न कुतश्चित् । सम्बन्धिनोऽसत्त्वान्न कस्यचित् । सम्बन्धि-भावादौ तु वस्तुत्वापत्तेस्तथतैव न स्यादित्याह । यतः सेत्यादि । एवं हि सुभूतिरिति । तथागतसर्वधर्मतथ-तयोरेवमेकस्वभावत्वेन तथागततथतया सङ्गृहीतत्वा-न्निर्विकारादिस्वभावा सुभूतितथता । तस्मादक्ततथतया-ऽनुजात इत्यर्थः । तथतारूपेण सर्वेषामनुजातत्वे सुभूतेः कोऽतिशय इति चेत् । सत्यम् । किन्तु यदेव विवादा-स्पदीभूतं तदेव निर्दिश्यते । अन्यथाऽश्रोतृसंस्कारकं वाक्यं कुर्वाणः कथं नोन्मत्तः स्यात् । एतदेव स्पष्टयन्नाह । या चाक्ततथतेत्यादि । न सा कदाचिन्न तथतेति । सर्वदैव तथतेत्यर्थः । उपसंहरन्नाह । यथा तथागततथता सर्वत्रेत्यादि (p. 308, 2) । सर्वत्रेति सर्वस्मिन् काले । अभिनिर्मित इति । प्रभावितो निष्पादितः । अलुप्त-मिति । लुप्तमप्रतीतमदृष्टं न लुप्तमलुप्तं दृष्टं प्रतीतमिति यावत् । भेदकानुपलब्धित इति । प्रमाणोपपन्नैकस्वभाव-त्वेन तथताया भेदकप्रमाणानुपलम्भेन द्वयमप्यनन्तरोक्तम-भिन्नमित्येतदलुप्तम् । सर्वधर्मतथतात्मिका तथागततथता सुभूतितथता पुनर्न तथाविधा । तत्कथं तथतया द्वय-मभिन्नं स्यादित्याह । यथा तथागततथतेत्यादि । नान्य-त्रेति निपातवचनं प्रथमार्थे वर्तते । तदुक्तम् । स्यात् । यथा सर्वधर्मतथताया नान्या तथागततथता किन्तर्हि

तदात्मिका एवं सुभूतितथतापीति। न सा कस्यचिन्न तथतेति सर्वस्य सा तथतेत्यर्थः। तदेवाह। सैव सेत्यादिना। यैव सा तथता सुभूतेः सैव सर्वधर्मतथतेति योज्यम्। अनन्यतथतानुगमेनेति। आत्मस्वभावतथतानुकारेण तां तथतां सर्वधर्मवर्तिनीमुपगतः। तथतास्वभावत्वेन कथमनुगम इति चेत् आह। न चात्रेत्यादि। संवृत्यैवं व्यपदेशः कृतः। परमार्थतस्तु नैवात्र मायोपमत्वे कश्चिद्भावः क्वचिदनुगतिं सदृशतां प्राप्तः। त्रैयध्विकसर्वधर्माणां तथता त्रैकालिकी, तथागततथता तु प्रकृतिप्रभास्वरत्वेनोत्पादविरहान्न तथाविधा। तत्कथमनयोरेकत्वमिति चेदाह। यथा तथागततथतेत्यादि। तत्रो-त्पादपूर्वकविनाशाभावान्नातीता, भविष्यदुत्पादवियोगान्नानागता, लब्धसत्ताकत्वानुपपत्तेर्न प्रत्युत्पन्ना। एवं सर्वधर्मतथतेति। मायोपमत्वप्रसाधकप्रमाणस्य सर्वत्र तुल्यत्वादिति भावः। भवतु वा सांवृतभावोपाधिभेदेन तत्तथतायास्त्रैकालिको व्यपदेशः, तथापि तथागतसर्वधर्मतथतयोरभेद एवेत्याह। तथागततथतयापीत्यादि। न केवलमात्मतथतया किन्तर्हि तथागततथतयापि। यस्मात्तथतामनुप्राप्तः सन् सुभूतिस्तयैव तथागततथतयाऽतीतादितथतामनुगतः, अतीतादितथतया च तथागततथतामनुगतो भवति, तस्मान्नास्ति विमुक्तेर्नानाकरणमिति भावः। अतीतादिप्रत्येकसमुदायभेदेन च द्वारकचतुष्टयमवगन्तव्यम्। उपसंहरन्नाह। इति हि सुभूतितथतेत्यादि। बोधिसत्त्वतथागतावस्थयोरेव तावद्भिन्नरूप-

त्वात्तथतायाः कुतः सर्वधर्माभिन्नस्वभावत्वमिति कस्यचिदाशङ्कायामाह । यैव चेत्यादि । इयं सा तथतेति (p. 309, 2) । सर्वदैकस्वभावत्वाद्युक्तेयं सा तथता यया सर्वप्रकारागन्तुकमलापगमेनाभिसम्बोधात् । य एकानेकस्वभावा न भवन्ति, न तेषां परमार्थतः स्वभावोऽस्ति । यथा मायादिरूपस्य न भवन्ति चैकानेकस्वभावाः स्वपरोदिता भावा इति व्यापकानुपलब्ध्या । मायोपमस्तथागत इत्यर्थः । नासिद्धो हेतुर्यस्मात्प्रेक्षावतां प्रवृत्तेः प्रयोजनवत्तया व्याप्तत्वादर्थक्रियायोग्यपदार्थविषयो विचारोऽन्यथार्थक्रियार्थिनां पुंसामसदर्थपदार्थविचारैः किं प्रयोजनमित्यर्थक्रियाकारी भावोऽभ्युपगन्तव्यः । स चान्योन्यव्यवच्छेदरूपत्वाज्ज्ञेयरूपो वा भवेज्ज्ञानरूपो वेति विकल्पः । तत्र यद्याद्यः पक्षस्तदा परस्परसंयुक्तस्वभावो वा भवेत्, बहुभिर्वा समानजातीयैः परमाणुभिः परस्परसामर्थ्यविधृतैरसमाश्लिष्टस्वरूपैः सान्तरैः परिवृतो यद्वा निरन्तरैरिति पक्षत्रयम् । तत्र प्रथमे पक्षे यद्येकेन सहैकदेशेन संयोगोऽपरस्य तदा सावयवत्वप्रसङ्गादेकत्वहानिरपरापरस्वभावैरवन्तरसमाश्लेषात् । सर्वात्मना संयोगपक्षेऽपि यदा पूर्वोऽणुरपराणुना सह सर्वात्मना संयुज्यते, तदाऽपरोऽपि पूर्वेणेत्यतः संयोगस्योभयपदार्थाधीनत्वेन परस्परस्वभावानुप्रवेशान्न कस्यचिदणोरेकस्वभावता । तथा हि पूर्वाणुरपरेण सर्वात्मना संयुज्यत इति। स्वस्वभावं परित्यज्य सर्वथाऽपररूपापत्तेस्तस्य च संयुज्यमानस्यासत्त्वम् । तथाऽपरोऽपि पूर्वेण संयुज्यत इति स्वस्वभावं विहाय सर्वथा पूर्वरूपभवनात्तस्य संयोगाश्रयस्यासत्त्वम् । ततश्चैकस्यैकदा

परस्परपरिहारस्थितलक्षणविधिप्रतिषेधायोगात् कथमेक-
स्वभावता। द्वितीयेऽपि परिवारकपक्षे, यदि नाम समान-
जातीयैः संस्पर्शो नेष्टस्तथापि छिद्रस्यालोकतमोरूपत्वा-
द्विजातीयैरालोकतमःपरमाणुभिरभीष्ट एव। न ह्या-
लोकेनासमाक्रान्तस्य तमोरहितता तमसा वाऽनास्पदी-
कृतस्यालोकरहितत्वं युक्तिमत्। तयोरन्योन्यविरहित-
देशादिमात्रप्रतिबद्धोदयत्वात्तथा चानन्तरोपवर्णितो दोषः
समुपनिपतति। अथ विजातीयैरपि संस्पर्शो नानुमन्यते,
तदा योऽसौ मध्यवर्ती परमाणुर्येनैकेन स्वभावेनैकपरमा-
ण्वभिमुखावस्थितस्तेनैवान्यपरमाण्वभिमुखो यद्वा ऽन्येनेति
विकल्पद्वयम्। तत्र यद्याद्यः पक्षस्तदा यदेकरूपपरमाण्व-
भिमुखस्वभावं तदेकदेशम्। तद्यथा तस्यैव परमाणोः पूर्व-
दिगवस्थितपरमाणुः। एकपरमाण्वभिमुखस्वभावाश्च सर्वे
परिवारकाः परमाणव इति स्वभावहेतुः। तेनैव
स्वभावेनेत्यभ्युपगमान्नासिद्धता सपक्षे सद्भावान्न विरुद्धता।
भिन्नदेशावस्थाने तु नाभिमतैकपरमाण्वभिमुखस्वभावा
भवेयुस्तस्य परमाणोरपरापरस्वभावाभावात्, असता च
स्वभावेनाभिमुख्यायोगादिति न चानैकान्तिकता हेतोः
ततश्च परिवार्यावस्थानाभावेन परिवारकाणामणूनामेक-
देशताप्रसङ्गात्तत्त्वतः प्रचयाभावे तत्साध्यार्थक्रियावैकल्या-
देव तस्य परमाणोर्नैकस्वभावाभ्युपगमो युक्तः। द्वितीये तु
पक्षेऽपरापरस्वभावैरपरापरपरमाण्वभिमुखयोगात् स्फुट-
तर एव सावयवताप्रसङ्गादेकत्वविरहोऽणूनां स्वभावभेद-
लक्षणत्वाद्वस्तुभेदस्य। तृतीयस्तु नैरन्तर्यपक्षः संयोगपक्ष-
मेवानुपतति तत्पर्यायत्वात् न ह्यन्तरालदेशविरहिणां पर-

स्परसंश्लेषं मुक्त्वाऽन्या गतिरस्ति। न च शब्दान्तरेणाभिधीयमानः स एवार्थोऽन्यथा भवत्यतिप्रसङ्गात्। अथासंयुक्तः एव परमाणुर्बहुभिस्तु दिक्शब्दवाच्यैः समीपेतरदेशावस्थितैः परमाणुभिः परिवृत इति चेन्मतम्। तदयुक्तम्। न ह्यर्वाक्परभागयोरभावे वचनमिदमर्थवत्तायां व्यवतिष्ठते। तदन्यापेक्षयाऽन्यस्य यद्रूपमवधार्यते तदसत्तच्च तत्त्वेन पारावारादिभेदवदिति न्यायान्न भूतार्थेन सावयवत्वमिति चेत्। न। पारापारयोरपि बहिरर्थवादिनां व्यपेक्षाभेदेनासाङ्कर्यात् पितापुत्रादिवत् तात्त्विकमेव रूपमित्यभ्युपगन्तव्यम्। यदपेक्षया हि तत्पारं न जातु तदपेक्षया तदपारमिति। अन्यथा पारापारयोरपारमार्थिकत्वे कथं पारावाराभिधानतटस्थितयोरसाङ्कर्येणावस्थानम्। तथा हि पाराभिमतादन्यत्वमेव विवक्षितस्यापारस्यापारत्वमुच्यते। तस्य च कल्पितत्वे तयोरैक्यप्रसङ्गः। तथा च न तदाश्रितानामसङ्कीर्णावस्थितिः स्यात्। न हि कल्पनोपरचितो भेदोऽर्थक्रियाङ्गम्। अथ संवेदनबलाद्विषयस्थितेरननुभूयमानत्वेनार्थस्यात्यन्तपरोक्षत्वात्समनन्तरप्रत्ययबलेन प्रतिनियतस्य कार्यस्योदयात्तद्व्यतिरेकेण कल्पयितुमशक्यत्वाच्च स्वतःसिद्धरूपमेवाद्वयज्ञानमेकस्वभावं परमार्थतो ग्राह्यग्राहकभावरहितमहेतुकत्वे नित्यं सत्त्वादिप्रसङ्गान्नित्यत्वेऽर्थक्रियाद्यनुपपत्तेश्च स्वहेतुप्रतिबद्धोदयमुदयानन्तरापवर्गि केवलमनादिभवभावि भावाभिनिवेशवासनापरिपाकप्रभावादाकारास्तत्र प्रतिभासन्त इति ज्ञानात्मको भावो योगाचारैरभ्युपगम्यते। तत्रापि किं त्वाकारास्तात्त्विका एव किं वा प्रतिबिम्बादिवद-

विचारैकरम्या इति विकल्पः। यद्याद्यस्तदा भाविकानेकाकाराव्यतिरेकादाकारस्वरूपवदनेकत्वं विज्ञानस्यासज्यत इत्येकता कुतः। अथ सकृदनुभूयमानत्वेन विज्ञानस्यैकत्वं निश्चितम्। तदैकज्ञानाव्यतिरेकादाकाराणामेकत्वं विज्ञानस्वरूपवद्दुर्निवारम्। भवत्वेवमिति चेत्। नैवम्। तथा हि यद्येक आकारश्चलनादिविशिष्टः प्रतिभासते तदा परिशिष्टा अप्याकाराः पूर्वाकाराव्यतिरिच्यमानमूर्तिस्वभावत्वात्तथाविधा एव स्युरिति वैचित्र्याकारानुभवो विरुध्यते। अतो नानात्वमैकान्तिकमेवाकाराणामित्येकानेकत्वयोः परस्परविरुद्धधर्माध्यासयोगात् पारमार्थिकमेवाकारविज्ञानयोर्नानात्वं स्थितमित्यभ्युपगताद्वयनयहानिः। अथ सुखादिवन्नीलादय आकारा अनुभवात्मका एवेत्येकस्य चित्रत्वानभ्युपगमान्न यथोक्तदूषणप्रसङ्ग इति मत्वा समानजातीयान्यपि विज्ञानानि बहूनि विजातीयज्ञानवत् सकृदुत्पद्यन्त इति वर्ण्यते। तदायमन्यो दोषः। तथा हि यत्तन्मध्याभिमतं विज्ञानं परिवृताणुप्रख्यमिष्यते। तद्येन स्वभावेनैकस्याभिमुख्यं प्रतिपद्यते किन्तेनैवान्यस्याप्यथान्येनेति विकल्पः। तेनैवेति पक्षे परिवार्यावस्थानाभावेनावशिष्टानां न दिगन्तरावस्थितिर्यथार्था भवेदतश्च पूर्वापरादिदिग्भागेनानुत्पत्तेर्नीलादिमण्डलसंनिवेशप्रतिभासो न स्यात्। अन्येनेति तु पक्षे स्वभावभेदलक्षणत्वाद्वस्तुभेदस्येत्येकता कुत इति परमाणुविचारभावी दोषः समापतति। नन्वमूर्तत्वाज्ज्ञानानां न देशकृतं पौर्वापर्यमस्ति तत्कथमणुवन्मध्यवर्तित्वं ज्ञानानां भवेत्। सत्यमेतत्। अयमपरोऽस्य दोषोऽस्तु यद्देशवितानप्रतिभासिना-

माकाराणां सत्यत्वमिच्छता ज्ञानानामदेशानामपि सतां बहूनां तथा देशवितानास्थानेनोत्पादः परिकल्प्यते। अन्यथा हि यद्यनेकविज्ञानोत्पादकल्पनायामपि तथा देशवितानोत्पादप्रतिभासो मिथ्या स्यात्तदाऽनेकविज्ञानोत्पादकल्पना व्यर्थैव स्यात्। न च देशवितानावस्थितनीलादिप्रतिभासमन्तरेणान्यन्नीलाद्यनुभूयते यत्सत्यं भवेत्। तस्य चालीकत्वे किमन्यत् सत्यं भविष्यतीति यत् किञ्चिदेतत्। ननु तथाप्यणवो मूर्ता विज्ञानं त्वमूर्तं तत्कथं स एवात्र दोष इति चेत्। नैष दोषः। तथा हि तदेव नीलादि नैरन्तर्येण भासमानमेकेन परमाण्वात्मकमुपगम्यते। अपरेण संविद्रूपमिति नाममात्रमेव केवलं भिद्यते, नतु देशनैरन्तर्यावस्थानलक्षणस्यार्थस्य भेदः। न च नाममात्रप्रवृत्तिद्वारकृतं तुल्यदोषतापादनं क्रियते। अपि तु देशनैरन्तर्यावस्थानकृतम्। तच्च नाममात्रभेदेऽप्यस्तीति कथं तुल्यदोषता न भवेत्। अथैवमपि ज्ञानज्ञेययोर्वैसादृश्याज्ज्ञेयगतं दूषणं ज्ञानेनानुमन्यते। तदाप्युच्यते। युगपदनेकज्ञानोदये घटपटादिविषयः प्रतीयमानो विकल्पः क्रमभावी न स्यात्। न चैतच्छक्यते वक्तुं निर्विकल्पकज्ञानान्येव युगपदिति तदनुभवनिश्चयद्वारेण विकल्पानामुत्पत्तेः। ततश्च न हीमाः कल्पनाः स्वयमसंविदितरूपा उत्पद्यन्त इति सकृदनुभवनिश्चयप्रसङ्गात् क्रमभावी विकल्पोऽनुभूयमानो न स्यादिति प्रत्यक्षविरोधः। अथ मतम्। एकमेव विज्ञानमगृहीतचित्ररूपं मेचकमणिप्रतिभासवदिति तदसत्। तथा हि यच्चित्रं तदेकं न भवति। यथा नाना-

सन्तानवर्तिनः प्रत्ययाः। चित्रं चेदं विज्ञानमिति विरुद्धोपलब्धिः। चित्रत्वेनोपलम्भान्नासिद्धो हेतुः, सपक्षे भावान्न विरुद्धः। कथं पुनश्चित्रैकत्वयोर्विरोधो येन चित्रत्वमेकत्वमपनयेदिति चेत्। उच्यते। न हि नानास्वभावव्यतिरेकेणान्यच्चित्रशब्दाभिधेयमस्ति। नानैकत्वयोरन्योन्यस्वरूपव्यवच्छेदान्तरीयकत्वात् परस्परपरिहारस्थितलक्षणो विरोध इति सिद्धो विरोधः। विरुद्धयोरप्येकस्वभावत्वे सकलं विश्वमेकं द्रव्यं स्यात्ततश्च सहोत्पादविनाशादिप्रसङ्गो दुर्निवारः। अन्यथा नाममात्रमेव स्यादेकमिति। न च नाम्नि विवाद इति नानैकान्तिकता च हेतोः। दृष्टान्तो मेचकमणिप्रतिभासस्तावत् सिद्ध इत्यपि न वक्तव्यम्। तत्राप्येकरूपत्वे नानारूपतयाऽव्याप्तत्वेन नानारूपावभासित्वाद्यनुपपत्तेस्तुल्यपर्यनुयोगत्वात्। अथ स्यात्। प्रतिभासमानस्य नीलादेर्देशकालान्तरस्थात् पदार्थान्न भेदः प्रत्यक्षेण प्रतीयते द्वयोरप्रतिभासनेनैतस्मादिदं भिन्नमित्यग्रहात्। नापि समानकालदेशस्थात् प्रतिभासमानादस्मादिदं भिन्नमिति प्रत्ययोऽस्ति निर्विकल्पतया प्रत्यक्षेणाग्रहात्। तस्माद्ग्राह्यग्राहकयोर्ग्राह्याणाञ्च परस्परं भेदाग्रहाच्चित्राद्वयमेवैकरूपं प्रत्यक्षे प्रतिभासत इति। तदप्येतेनैव प्रत्युक्तम्। एकस्य चित्रत्वविरोधात्। अथाभिन्नयोगक्षेमत्वाच्चित्रमप्येकम्। तदयुक्तम्। अन्योन्यव्यावृत्तरूपत्वेनास्यैकत्वविरोधात्। न चास्यानेन भिन्नयोगक्षेमत्वं प्रत्यक्षेणावगम्यते, युगपत् प्रतिभासस्याभिन्नयोगक्षेमरूपत्वे स्वरूपान्यत्वस्यापि प्रतिभासनात्। कथन्न भेदप्रतिभासो भवेत्। यदि च भेदस्याग्रहादद्वैतं कल्प्यते तदा

अभेदस्यास्मादिदमभिन्नमित्येवं रूपस्याग्रहात् द्वैतं किं न कल्प्यते। अथ भेदाभेदविनिर्मुक्तं वस्तुमात्रं गृह्यते। कथं तर्हि नीलादेश्चित्रस्य च प्रतिभासः। चित्रश्चेत्प्रतिभास इष्यते स एव लोके भेदप्रतिभास उच्यत इति कथं भेदापलापः। अथ मतम्। यदि सत्यरूपा एवामी स्युराकारास्तदा सर्वोऽयं विरोधः। यावता शुद्धस्फटिकोपलसंकाशमेव तद्विज्ञानमसंप्राप्तनीलाद्याकारभेदं तस्मिन्नेवंविधेऽप्यनादिकालिकविपर्यासवासनापरिपाकप्रभावात् मृच्छकलादिषु मन्त्राद्युपप्लुतलोचनपुरुषप्रतिभासापन्नकरितुरगादीनामिवाकाराणामवभासनमिति। परमार्थत एकरूपस्यैकज्ञानस्याभ्युपगमेऽलीकत्वान्न विरोधो यतो भवता दोषाभिधानेनालीकत्वमेवाकाराणां प्रतिपाद्यते। तच्चास्माभिरभ्युपगतमिति। तदसत्। तथा हि यदतिस्फुटमाबालप्रतीतनीलाद्याकाररूपमनुभूयते तदलीकमननुभूयमानं तु स्फुटप्रतिभास्याकारव्यतिरिक्तमद्वयं ज्ञानं यत्तत्सत्यमिति किमतः परमिह सुभाषितमस्ति। किमित्यतिपरिस्फुटसंवेदनानुपपत्तिरसत्त्वेऽपि तत्त्वत इति चेत्। उच्यते। यद्यत्रासंविद्यमानरूपं न तत्तत्र संवेद्यते। यथा दुःखे सुखादिरूपमसंविद्यमानाश्चाकारा नीलादयो विज्ञान इति व्यापकविरुद्धोपलब्धिः। अलीकत्वेनाकाराणां निश्चितत्वान्नासिद्धता, सपक्षे भावान्न विरुद्धता। तत्र यदि परमार्थतोऽसंवेदनप्रसङ्गः साध्यते तदा सिद्धसाधनम्। सामान्येन। तदा साध्यधर्मविपर्यये साधनधर्मस्य वाचकप्रमाणाभावात्कथं सन्दिग्धविपक्षव्यावृत्तिकत्वं हेतोर्न भवेदित्यपि न वक्तव्यम्। यतः सामान्येन नैवात्र

साध्यते न चानैकान्तिकता। तथा हि द्विविधं संवेदनं मुख्यं गौणञ्च। तत्र मुख्यं यदजडरूपम्। स च ज्ञानस्यैवासाधारणः स्वात्मभूतो धर्मः कथमसत आकारस्य स्यात्। तथा हि यदज्ञानरूपं न तस्य मुख्यं संवेदनमस्ति। यथाकाशनलिनस्य। अज्ञानरूपाश्चासत्त्वेनोपगता नीलादय आकारा इति व्यापकविरुद्धोपलब्धिः। गौणमपि न सम्भवति। यतः स्वाकारनिर्भासज्ञानोत्पादनमेव गौणं संवेदनमुच्यते। तच्चासतः सर्वसामर्थ्यशून्यस्य तुरगविषाणस्येवायुक्तं। सर्वसामर्थ्यविवेकलक्षणत्वादसत्त्वस्य। तथा हि यदसमर्थं न तस्य गौणं संवेदनं यथा तुरगविषाणस्य। असमर्थाश्चासत्त्वेनाभिमता नीलादय आकारा इति व्यापकविरुद्धोपलब्धिः। आकाराणामलीकत्वान्नासिद्धो हेतुः। सपक्षे भावान्न विरुद्धः। तदेवं मुख्योपचरिताभ्यामन्योन्यपरिहारस्थितलक्षणाभ्यां संवेदनस्य व्याप्तत्वात्, तस्य च व्यापकस्य निवृत्तेः संवेदनस्यापि तद्व्याप्तस्य निवृत्तिरेवेति नासत्त्वादित्यस्य हेतोः संवेदनेऽनवकाशो नास्तीति नानैकान्तिकत्वम्। ननु मरीच्यादौ जलाद्याकारस्यासतोऽपि संवेदनादनैकान्तिकत्वमेवेति चेत्। न। तत्रापि हि जलाद्याकारो यदि नान्तर्नापि बहिस्तदा तस्यात्यन्तासतः कथं संवेदनं स्यादिति तुल्य एव पर्यनुयोगः। प्रतिबन्धबलेनानुभूयन्त इत्यपि न वक्तव्यम्। तथा हि न ज्ञानस्वभावता, आकाराणां ज्ञानवत् सत्त्वप्रसङ्गात्। अथाकारस्वभावता ज्ञानस्यानुमन्यते तदाकारवत् ज्ञानस्यासत्त्वप्रसङ्गः। न च ज्ञानादाकाराणामुत्पत्तिर्नीरूपस्य जन्यरूपासम्भवात्। नाप्याकारेभ्यो ज्ञानस्याकाराणा-

मलीकत्वेनार्थक्रियासामर्थ्यविरहात्। न च तादात्म्यतदुत्पत्तिभ्यामन्यः सम्बन्धोऽस्ति। ततश्च यस्य येन सह प्रतिबन्धो नास्ति न तत्तस्मिन् संवेद्यमाने नियमेन संवेद्यते, यथा ज्ञानात्मनि संवेद्यमाने बन्ध्यासुतः। नास्ति च तादात्म्यतदुत्पत्तिलक्षणो द्विविधोऽपि प्रतिबन्धो ज्ञानेन सहाभिमतानामाकाराणामिति व्यापकानुपलब्धिः। सम्बन्धाभावस्य प्रतिपादितत्वान्नासिद्धता। सपक्षे भावान्न विरुद्धता। सर्वसंवेदनप्रसङ्गान्नानैकान्तिकता च हेतोः। ततश्च योऽयमाकारो ज्ञानसमानकालभावित्वेन भवता परिकल्पितस्तस्याहेतुकत्वे कथमपेक्षाऽभावात् कादाचित्कत्वमित्यभिधानीयमच कारणम्। योऽपि मन्यतेऽलीकत्वेऽपि यथा भवतां संवृत्या ज्ञानज्ञेययोः प्रतिभासनं तथास्माकमपि निराकारे तात्त्विके ज्ञाने तदप्रतिबद्धैवाऽविद्यालीकापि सती संवृत्त्याऽन्यत्वेऽपि प्रतिभासत इति। तदप्येतेनैव प्रत्युक्तम्। अस्माकन्तु संवृत्या ज्ञानमेव ज्ञेयरूपमिति सम्बन्धस्याभ्युपगतत्वात्तयोः प्रतिभासनमविरुद्धम्। अथ माभूदयं दोष इति हेतुमत्वमभ्युपगम्यते तदा प्रतीत्यसमुत्पन्नत्वाद्ग्राह्यग्राहकाकारयोः कल्पितत्वाभावात् परतन्त्रतास्वभावः प्रसज्यते। यतो न प्रतीत्यसमुत्पत्तेरन्यत्पारतन्त्र्यम्। यद्यप्येवं तथापि पारमार्थिकी सत्ता कुतो लभ्यत इति चेत्। उच्यते। तथा हि विज्ञानस्यापि न प्रत्ययोद्भवात् स्वभावादन्या सत्तेत्यतः प्रतीत्योत्पत्त्यविनाभाविनी पारमार्थिकी सत्ता दुर्निवारा। ततश्च पौर्वापर्येण भावाद्यौगपद्येनासंवेदनप्रसङ्गेऽप्युपगताकारालीकत्वहानिः स्यात्। अथ यथोक्तोऽप्याकारो नाभ्युप-

गम्यते तदोपलब्धिलक्षणप्राप्तत्वेनानाकारमेव ज्ञानं सदा सर्वप्राणभृद्भिः संवेद्यत इति प्राप्तम्। स्यादेतत्। संवेद्यत एव किन्त्वनुभूयमानाकारोपजनितविभ्रमबलेनानुपलब्धिलक्षणप्राप्तत्वादर्वाग्दृशामतोऽनुभूतनिश्चितोपलम्भवैकल्यान्न तस्योपलम्भोऽस्ति क्षणैकत्ववदिति तदसत्। तथा हि यद्यन्तर्बहिर्वाकाराः सम्भवेयुस्तदा तेषां संवेदनोपजनितविभ्रमबलेन संविद्यमानमपि ज्ञानं न निश्चिन्वन्तीति स्यात्। यदा तु नान्तर्न बहिस्ते सन्ति तदा कस्यानुभवेन विप्रलभ्येरन् येन संवेदयन्तोऽप्यद्वयं न विनिश्चिन्वन्तीति स्यात्। अथ मतम्। भ्रान्तेरयमेव स्वभावो यदलीकाकारसन्दर्शनम्। तेनाऽसतोऽप्याकारस्य भ्रान्तिवशात् संवेदनं भविष्यतीति तदप्यसम्यक्। तथा हि भ्रान्तिशब्देन विभ्रमोत्पत्तिवासनाहेतुभूतज्ञानावस्था वाऽभिधीयेत, यद्वा तथाविधवासनाप्रभवं भ्रान्तमेव ज्ञानं कार्यरूपम्। तत्राद्ये पक्षे तत्र हेतावाकाराणामप्रतिबद्धत्वात्तद्बलात्तेषां संवेदनमयुक्तमतिप्रसङ्गात्। न चापि तदुत्पत्तिलक्षणः प्रतिबन्धोऽस्त्येवेति युक्तं पूर्ववत्परतन्त्रत्वप्रसङ्गात्। अथापि द्वितीयः पक्षस्तत्रापि प्रतिबन्धो भवन्नाकाराणां तादात्म्यलक्षणो भवेन्न तदुत्पत्तिलक्षणः तत्समानकालमनुभूयमानत्वात्। समानकालयोश्च हेतुफलत्वायोगात्। ततश्च भ्रान्तिवत्तदव्यतिरेकात्परतन्त्रत्वप्रसङ्गो दुर्निवार इति यत्किञ्चिदेतत्। स्यादेतत्। भ्रान्तग्राह्यग्राहकाकाराभावात् सुप्ताद्यवस्थायां स्वसंवित्तिरेकरूपा सत्या भविष्यतीति। तदसत्। मनोविज्ञानस्य धर्मधात्वालम्बनत्वेऽपि केवलचैतसिकधर्माग्रहणात्कलापपरिच्छेदेन चित्तरूपत्वात्। अथ ग्राह्यग्राहकभाव-

रहित एव ससम्प्रयोगविज्ञानस्कन्धस्य स्वभावो निश्चितः। तथापि चित्रतामेवाभिधावति। तथा हि भ्रान्तिवासना विद्यत इति भवताऽभ्युपगम्यते। अथ नेति विकल्पद्वयम्। यद्याद्यस्तदा वितथाकाराभिनिवेशवासनैवाविद्या सा च वासना शक्तिरुच्यते। शक्तिश्च कारणज्ञानात्मभूतैवेति। तेन पूर्वपूर्वस्मात् कारणभूतादविद्यात्मनो ज्ञानादुत्तरोत्तरस्य कार्यस्य वितथाकाराभिनिवेशिन उत्पत्तेरविद्यावशात्तथा-ख्यातियुक्तेति बलाच्चित्रत्वमायातम्। न च समनन्तर-प्रत्ययान्नियम इति वक्तव्यम्। यतो यथोक्तमेव ज्ञानं सम-नन्तरप्रत्यय इति यत्किञ्चिदेतत्। अथ तत्र वासनात्मिकाः शक्तयो भिन्ना इति चेत्। न। भाविकानेकशक्त्यव्यतिरेकात् शक्तिस्वरूपवद्युगपदनेकत्वं विज्ञानस्यासज्यते। तत्र चोक्तो दोषः। तथैकज्ञानाव्यतिरेकाद्वा शक्तीनामेकत्वं विज्ञान-स्वरूपं दुर्निवारमिति कथं समनन्तरप्रत्ययभेदः। अथ नेति द्वितीयः पक्षो मतस्तदा मुक्ताः स्युरयत्नेन सर्वदेहिन इत्यादिप्रसङ्गोऽनिवार्यः। अथ सर्वमेव पृथग्जनस्य ज्ञान-मनापन्ननीलाद्याकारोपरागं प्रवर्तते तत्रैकत्वहानिप्रसङ्गो न भविष्यति। अचित्ररूपत्वात् नीलादिसंवेदनरूपतात्तया तस्य व्यवस्थाप्यते सा तत्संवेदनरूपत्वान्न तु नीलादि-रूपापत्तेः। तथा ह्यालम्बनग्रहणप्रकार एवाकारो न तु तादूप्यम्। यत्तु नीलादि बहिरिव प्रतिभासमानमालक्ष्यते तन्न ज्ञानाकारतया, अपि तु ज्ञानं नीलादिसंवेदनमनुभवन् प्रतिपत्ता मोहात्तथा बहीरूपेण नीलादिकमध्यवस्यतीति। एतदपि मिथ्या। तथा हि यदि नीलादिना सहगतस्य कश्चित् प्रतिबन्धो नास्ति तदा कथं नीलादिसंवेदनं

स्यात् । नहि ताद्रूप्यव्यतिरेकेणान्यो निरीहस्य ज्ञानस्यालम्बनग्रहणप्रकारोऽस्ति येन ताद्रूप्यव्यतिरेकेणाकारो व्यवस्थाप्यते, अतिप्रसङ्गात् । अपि तु ताद्रूप्योत्पत्त्यैव ज्ञानस्य सव्यापारता प्रतीयते स एव तस्यालम्बनग्रहणप्रकार उच्यते । तच्च चोक्तो दोषः । नास्त्येव सर्वथा नीलादिरिति चेत् । नैवम् । तथा हि यदि नीलादि नाल्तर्नापि बहिरस्ति तत्कथमिदमविकल्पे चेतसि स्फुटतरमनुभूयत इति वक्तव्यम् । न चैतच्छक्यते वक्तुं नैव प्रतिभासत इति । सर्वेषामनुभवसिद्धत्वात्तत्प्रतिभासस्य । न चापि स्फुटावभासिनो विकल्पविषयता युक्ता । येनोच्यते मुढात्मना तथावसीयत इति । अथैवमप्यनुमन्यते विकल्पेनावसीयत इति तदसत् । यस्माद्यदि निराकारमेव सर्वं ज्ञानमनुभूतं तदा तत्पृष्ठभाविनापि विकल्पेन प्रतिनियतस्य नीलादेराकारस्याध्यवसायोऽप्ययुक्त एव प्रतिबन्धाभावात् । भ्रान्तेरयमेव स्वभाव इति चेत्, उक्तमत्र परतन्त्रत्वप्रसङ्गात् कथं भ्रान्तावस्य प्रतिबन्ध इति । तस्मात्प्रतिबन्धाभावाद्विकल्पविषयतयापि नीलादेरसतः संवेदनानुपपत्तेरयुक्तमेतदिति । यद्येवमस्तु तर्ह्यपरिशुद्धावस्थायां चित्रावभासमलीकमेव ज्ञानं, परिशुद्धावस्थायां भ्रान्तिविगमादद्वयरूपमेवैकस्वभावं भविष्यतीति । उच्यते । यद्यशुद्धावस्थायां सर्वमलीकमेव ज्ञानं, तदा शुद्धावस्थायां तत् सत्यरूपं कुतो जातमिति वक्तव्यम् । न चालीकात्सत्यरूपस्योत्पत्तिर्युक्ता, तस्यासमर्थत्वात् । सामर्थ्ये वा तदलीकं कथं भवेत् । तथाविधस्याप्यलीकत्वेऽन्यस्यापि सत्यत्वं कथं भवेत् । अतो निर्हेतुकमेव तत्स्यात् । तच्चायुक्तं नित्यं सत्त्वादिप्रसङ्गात् ।

भ्रान्तिविगमादित्यपि न वक्तव्यम् । यदि हि विशुद्धावस्थायां सर्वेषामाकाराणां निवृत्तिः सम्भवेत्तदा संभाव्यत एवैतत् । यावता भ्रान्तिनिवृत्तावपि नाकाराणां निवृत्तिः सम्भवति, तत्र तेषां यथोक्तन्यायेन प्रतिबन्धाभावात् । न चाप्रतिबन्धे सत्येकनिवृत्तावपरस्य नियमेन निवृत्तिर्गवाश्वादिवदतिप्रसङ्गात् । अथापि स्यात्कस्यचिन्निसर्गसिद्धमेवाद्वयज्ञानं प्रपञ्चापगतमेकं भविष्यतीति तदयुक्तम् । निसर्गसिद्धत्वे हि प्रतिनियताश्रयपरिग्रहेणानायत्तत्वान्न तथाविधा सत्ता कस्यचिद्विरमेत् । ततश्च प्रतीत्यादिविरोधो भवेत् । स्यादेतत् । स तादृशो हेतुधर्मो येन पूर्वपूर्वप्रतिपक्षक्षणबलेनोत्पादात् प्रतिनियतकारणायत्तस्वभावतया कस्यचिदेव भविष्यतीति । तदेतन्नितरामेव न राजते । यथोदितविधिभिः सर्वस्य नीरूपताऽपादनेन परमार्थतः कार्यकारणभावस्यानुपपत्तेरिति यत्किंचिदेतत् । अतो यदा विचार्यमाणो भावानां न कश्चिदंशरूपोऽपि स्वभाव एको भागरहिततया सिद्धस्तदानेकः कथं सेत्स्यति तत्समुदयात्मकत्वादनेकत्वस्येति, नासिद्धो हेतुः । ननु न सर्वस्य प्रतिभासमानस्यैकानेकस्वभावरहितत्वेन निःस्वभावत्वं प्रत्यक्षतोऽवभासते भावविषयत्वादस्य नाप्यनुमानतो व्याप्तेर्ग्राहकस्य प्रत्यक्षस्याभावात् । अनुमानेन च ग्रहणेऽनवस्थानादप्रतिपत्तेः कथं सिद्धो हेतुरिति चेत् । न । तथा हि समुदितानुमानविधिभिर्निःस्वभावत्वमेकानेकस्वभावरहितत्वेन व्याप्तमिति प्रतिपादितम् । तेषाञ्च मध्ये कस्यचिदनुमानस्य प्रत्यक्षेण व्याप्तिः, कस्यचित् प्रत्यक्षगृहीतव्याप्तिकेनानुमानेन गृह्यत इति यथास्वं प्रमाणेन निश्चितपक्ष-

धर्मग्रहणात्कुतोऽनवस्था। सपक्षे भावान्न विरुद्धः। तथा हि यदि यथोक्तहेतुः साध्यविपर्ययसाधनात्पारमार्थिकस्वभावे वर्तते, तदा तादात्म्यतदुत्पत्तिभ्यां तत्र प्रतिबद्धोऽन्यच्च विचारविमर्दासहिष्णुत्वेन तात्त्विकरूपविरहिणि मायादिरूपे कथं वर्तितुमुत्सहेत। भावधर्मत्वहानिप्रसङ्गादिति कथं प्रसिद्धदृष्टान्तं प्रति विरुद्धता हेतोः। अथ मतम्। मां प्रति दृष्टान्त एवोभयधर्मानुगतो न सिद्धो विज्ञानरूपेण मायादीनां वस्तुसत्त्वेनाभ्युपगमादतोऽनैकान्तिकता हेतोरिति। तदसत्। तथा हि विज्ञानानां सर्वेषामेव वस्तुत्वेनाभिमतानां यथोदितानुमानविधिभिर्नैःस्वाभाव्यं प्रतिपादितम्। ततो न स्वेच्छाबलेन वस्तूनां तथा भावो लक्ष्यते, येन प्रमाणबाधितस्यापि मायादेर्विज्ञानरूपेण सिद्धत्वादसिद्धो दृष्टान्तः स्यादिति न किञ्चिदेतत्। स्यादेतत्। पक्षसपक्षयोः सत्त्वे सिद्धेऽपि कथं विपक्षाद्व्यावृत्तिर्निश्चीयते हेतोर्येन सन्दिग्धव्यतिरेकदोषदुष्टता न भवतीति। उच्यते। यद्रूपव्यवच्छेदनान्तरीयकपरिच्छेदं हि यत्तत्तत्परिहारस्थितलक्षणम्। तद्यथा भावोऽभावव्यवच्छेदनान्तरीयकपरिच्छेदः। परस्पररूपव्यवच्छेदनान्तरीयकपरिच्छेदे चैकत्वानेकत्वे तस्मात्परस्परपरिहारस्थितलक्षणे इति। यौ च परस्परपरिहारस्थितलक्षणौ तावेकविधानस्यापरप्रतिषेधनान्तरीयकत्वाद्राश्यन्तराभावं गमयतः। तद्यथा भावाभावौ। त अन्योन्यपरिहारस्थितलक्षणे चैकत्वानेकत्वे तस्माद्राश्यन्तराभावादेकत्वानेकत्वाभ्यां स्वभावः क्रोडीकृत इति साध्यविपर्यये हेतोरस्त्येव व्यतिरेक इति कुतो यथोक्तदोषावकाशः। ननु चात्र प्रतिज्ञार्थैकदेशत्वादसिद्धो

हेतुर्यस्मादेकानेकयोः स्वभावप्रभेदरूपत्वात्, तद्विपर्यययोरपि साध्यसाधनयोरभेद एव। ततश्च यदि साध्यमसिद्धं हेतुरपि तदभिन्नस्वभावत्वादसिद्धः। अथ हेतुः सिद्धस्तदा निःभावत्वमपि भावानां सिद्धम्। न ह्येकानेकत्वविरहिणि शशविषाणादौ कश्चिद्भावस्वभावरूपताम्भ्युपैतीति चेत्। तदसत्। तथा हि हेतुस्तावद्यथा सिद्धस्तथा विस्तरेण प्रतिपादितम्। तस्मिन् सिद्धेऽपि यदि नाम विधिरूपतया साध्यते नैःस्वाभाव्यं, तथापि वस्त्वभिनिवेशस्य दुस्त्यजतया तत्त्वतः समस्तवस्तुव्यापिनैःस्वाभाव्ये निश्चयाद्यनुत्पादनाद्यामूढं प्रति सर्वभावानां निःस्वभावताव्यवहारयोग्यताप्रसाधनान्न प्रतिज्ञार्थैकदेशता हेतोर्यथोपलब्धिलक्षणप्राप्तानुपलम्भेन नास्तित्वस्येत्यचोद्यम्। अथ मूढं प्रति नैःस्वाभाव्यमेव तावत्साधयितव्यं व्यवहारार्थमित्यभिनिविश्यते। तचाप्युच्यते। यदा त्वेकानेकत्वयोः स्वभावव्यापकयोर्निवृत्त्या वृक्षनिवृत्त्या शिंशपानिवृत्तिवद्भाविकी स्वभावनिवृत्तिः साध्यते। तदा कुतः प्रतिज्ञार्थैकदेशता हेतोः। न हि व्याप्यव्यापकनिवृत्तिवचनयोर्भिन्नव्यवच्छेदरूपयोः पर्यायत्वं, न चापर्यायरूपस्य प्रतिज्ञार्थैकदेशत्वमिति यत्किञ्चिदेतत्। ननु परमार्थत इति विशेषणमनर्थकम्। तथा ह्यविसंवादको न्यायः परमार्थ इति परमार्थशब्देन त्रिरूपलिङ्गजनिता बुद्धिरभिधीयते। तदा तस्या अपि संवृतिरूपत्वात् कथं परमार्थत्वम्। यदि च तद्वशाद्भावानां निःस्वभावत्वं व्यवस्थाप्यते, तदा तस्याश्च बुद्धेः कुतोऽवस्थापनीयम्। न तत एव स्थापयितुं युक्तं, स्वात्मनि वृत्तिविरोधात्। नापि प्रमाणान्तरतो-

ऽनवस्थाप्रसङ्गात्। अथ तामेकां बुद्धिं मुक्त्वा व्यवस्थाप्यते। न तर्हि सर्वविषयनैरात्म्यं प्रतिपादितं भवतीति। साध्वेतत् किन्तु सकलप्रपञ्चपरिवर्जितपरमार्थस्यानुकूलत्वाद्यथोक्तबुद्धेः परमार्थत्वं निःस्वभावतापि च तत एव, न च स्वात्मनि वृत्तिविरोधः, सामान्यरूपेण सर्वधर्माणां निःस्वभावताव्यवस्थापनात्। तत्र च सामान्यलक्षणे तद्बुद्धिस्वरूपस्यान्तर्गतत्वाद्यथा सर्वधर्मेषु सत्त्वादिभ्यो हेतुभ्यो विनाशित्वप्रत्ययो भवन्नात्मानं विरहय्य भवतीत्यचोद्यम्। ननु समारोपिततात्त्विकोत्पत्त्याद्याकाररहिततयाऽविचारैकमनोहरो भावस्वभाव एव निःस्वभावताशब्देनोच्यते। तस्य च भावस्वभावस्य प्रत्यक्षत्वात्तत्स्वभावभूताऽपि निःस्वभावता प्रत्यक्षैव घटविविक्तभूतल इवोपलब्धे तदात्मभूतो घटविवेकः। अन्यथा भिन्नयोगक्षेमत्वादव्यतिरेकताऽवहीयते। ततश्च भावो निःस्वभावो न स्यादसम्बन्धान्निःस्वभावतायाः। न च तदुत्पत्तिलक्षणः सम्बन्धोऽवस्तुत्वेनाकार्यत्वात्तस्याः, तस्माद्बालैः सा न प्रत्यक्षतोऽवसीयत इति प्रत्यक्षबाधा। तथोपलब्धिलक्षणप्राप्तानुपलब्ध्या घटवदभावव्यवहारयोग्यत्वान्नास्त्येव निःस्वभावतेत्यनुमानबाधा। शशिन्यचन्द्रत्ववदागोपालजनस्य निःस्वभावताप्रतीतिवैकल्यात्प्रतीतिबाधापि दुर्निवारैवेति चेत्। तदसत्। तथा हि समारोपिताकारविविक्तता भावानां निःस्वभावतोच्यते। सा च भावस्वभावग्रहणेन गृहीताऽपि क्षणिकत्ववद्भ्रान्त्या समारोपिततत्त्वोत्पत्त्याद्याकारतिरस्कृतरूपत्वान्न बालैर्निश्चीयते। अतो निश्चयानुपपत्तेः प्रत्यक्षताया अभावान्न प्रत्यक्षबाधा। तथा गृहीताऽपि

व्यवहारायोग्यादगृहीतकल्पैवेति नोपलब्धिलक्षणप्राप्तत्वमस्याः, ततो नानुमानबाधा। परमार्थत इति विशेषणाच्च भावप्रतीतेरनपह्नवेन प्रतीतिबाधा नास्त्येवेति यत्किञ्चिदेतत्। निर्बीजभ्रान्तेरयोगात् कथं तया समारोपित आकार इत्यपि न वक्तव्यम्। यतः सत्येन सहालीकायाः भ्रान्तेः कः सम्बन्धः। न तावत् तत्स्वभावता सत्यालीकयोर्विरोधात्, नापि तदुत्पत्तिरलीकस्याकार्यत्वात्। अतः सांवृतमेव कारणं पूर्वमुपादानमस्या न विरुध्यते। तस्यापि कारणस्यापरं सांवृतमेव पूर्वं कारणम्। एवंविधहेतुपरम्परायाश्चानादित्वान्न कदाचिन्निरुपादाना भ्रान्तिः। कथं प्रतिनियम इति चेत्। उच्यते। तात्त्विकभावस्वरूपवत् सांवृतस्याप्ययमेव स्वभावोऽपरसांवृतकारणाधीनो यत्प्रतिनियतसांवृतकार्यकारणं नाम। कथं तर्हि सांवृतमिति चेत्। अर्थक्रियासमर्थमेव हि वस्तुविचारविमर्दाक्षमत्वात् सांवृतमित्युच्यते। तथा हि तथ्यातथ्याभ्यां सर्व एव राशिर्व्याप्तस्तयोरन्योन्यपरिहारस्थितलक्षणत्वात्। तथ्यरूपतायाञ्च निषिद्धायां सामर्थ्यादितरत्रावस्थानमेषामापतितम्। अतः स्वयमेवेदं रूपं सर्वभावैः स्वीकृतमित्यदोषः। ननु हेतुमन्तरेणेष्टार्थासिद्धेः सर्वधर्मनैःस्वाभाव्यप्रसाधनाय हेतोः परिग्रहं कुर्वता तस्य सत्ताभ्युपगता सर्वधर्मनैःस्वाभाव्यप्रतिज्ञया चासत्तेति परस्परविरोधात् स्वमातृवन्ध्यात्वप्रतिज्ञावत् स्ववचनविरोधः। यतो न हेतोस्तत एव निःस्वभावता सिध्यति, स्वात्मनि कारित्रविरोधात्। नाप्यन्यतोऽनवस्थाप्रसङ्गादिति चेत्। न। निःस्वभावताऽपि च तत एवेत्यादिनोक्तोत्तरत्वात्। एवं निःस्वभावत्वेऽपि

संवृत्या कर्मफलसम्बन्धव्यवस्थापनेनागमविरोधस्याभावात्तद्विरोधोऽपि नोद्भावनीयः। अथ मतम्। निःस्वभाववादिनः सर्वार्थाभावादाश्रयासिद्धतादयो दोषा दुर्निवारा इति। तदसत्। तथा हि सर्व एवानुमानानुमेयव्यवहारः परस्परपराहतसिद्धान्ताहितधर्मभेदपरित्यागेनाबालजनप्रतीतं धर्मिणमाश्रित्य प्रवर्तते। तत्प्रतिबद्धो हेतुः सिद्धस्तथा दृष्टान्तोऽपि। अन्यथा यदि सिद्धान्ताश्रितो हेतुर्धर्मो दृष्टान्तो वा स्यात्, तदैकसिद्धान्तप्रसिद्धविशेषणविशिष्टो धर्मी विवादास्पदीभूतत्वादपरस्यासिद्ध इति विशिष्टधर्मिणोऽसिद्धेराश्रयासिद्धो हेतुः स्यात्। तथा स्वरूपासिद्धौ दृष्टान्तधर्मिणश्चासिद्धिरिति सर्वथैव धूमसत्त्वादिभ्यो दहनानित्यतादिप्रतीतिवैकल्यात्साध्यसाधनव्यवहारोच्छेदः स्यात्। अविज्ञानादिरूपपरावृत्तज्ञानमात्रादेः कस्यचित् सिद्धत्वादिति यत्किञ्चिदेतत्। स्यादेतत्। यो हि प्रतिभासमानं धर्मिणमाश्रित्य समारोपिताकारनिषेधनाय साधनं प्रयुंक्ते, तस्याश्रयासिद्धतादयो दोषा नावतरन्ति। त्वया तु प्रतिभासमान एव धर्मी निषिध्यते। तत्कथमाश्रयासिद्धतादयस्ते नावतरन्तीति। नैवं तथा हि परमार्थत इति विशेषणात्, प्रतिभासमाने धर्मिणि समारोपितभाविकस्वभावनिषेधः साध्यते न तु धर्मस्वरूपनिषेध इति समानम्। अथ मतम्। पारमार्थिकश्चेत् स्वभावो निषिद्धः किमपरमवशिष्यते, तस्य धर्मिणो रूपं यत् प्रतिभासेतेति। तदप्यसत्। नहि पारमार्थिकस्वभावत्वेन प्रतिभासो व्याप्तो येन तन्निवृत्तौ निवर्तेत। अलीकस्यापि द्विचन्द्रकेशोण्डुकादेर्भासनात्। न चैतच्छक्यते वक्तुं यद्यपि द्विचन्द्रादयो

बहीरूपतयाऽलीका ज्ञानरूपतया तु ते पारमार्थिका एवेति प्रतिभासनं युक्तमिति चित्ररूपतया देशस्थतया च तेषां प्रतिभासनात्। नहि ज्ञानमेकं चित्रं युक्तमेकत्वहानिप्रसङ्गात्। अनेकज्ञानोत्पत्तेश्च पूर्वनिषिद्धत्वात् नापि देशस्थममूर्तत्वात्। तस्मान्न द्विचन्द्रादयः पारमार्थिकाः तथा च प्रतिभासन्त इति पारमार्थिकस्वभावनिवृत्तौ प्रतिभासनता विरुध्यत इति तात्त्विको भावाभ्युपगमो न कार्यः। नाप्यभावाभ्युपगमो भावनिवृत्तिलक्षणत्वात्तस्य, भावासिद्धौ निर्विषयस्य नञोऽप्रयोगेणासति निषेध्ये निषेधस्याप्रवर्तनात्, तत्पूर्वकस्य तस्याप्यसिद्धेरैकान्तिकभावाभावपक्षभाविनो दोषा नास्मानुपालीयन्ते। ततश्चान्योन्यव्यवच्छेदरूपत्वादेकप्रतिषेधनान्तरीयकमपरविधानं बलादापतितमिति यदुच्यते तदसङ्गतं, तत्त्वतो भावरूपस्य व्यवच्छेद्यस्याभावात्। एवञ्च भावाभावस्वरूपाभावे साक्षात् पारम्पर्येण वा ज्ञानज्ञेययोरप्रतिबद्धवृत्तित्वान्न तद्विषयो विकल्पः सर्वथा तात्त्विक इति सिद्धम्। न च मन्तव्यमनादिवासनोद्भूतो भावाभावस्वरूपाभावेऽपि तद्विषयो विकल्पः शशविषाणादिविकल्पवदुपजायत इति। तथा हि यदि नाम बाह्ये वस्तुनि न प्रतिबद्धस्तथाऽपि पूर्वके ज्ञाने तदव्यतिरिक्तवासनाप्रबोधेनोत्पादनात्तदुत्पत्तिलक्षणः प्रतिबन्धोऽस्यास्त्येव तथा समानकालभाविनि विज्ञाने तदव्यतिरिक्तत्वेन तादात्म्यलक्षण इति विकल्पारूढप्रतिबिम्बस्य केनचित् प्रकारेण विधिप्रतिषेधाभ्यां व्यवहारः। यतो यथोदितविधिना वासनाप्रभवज्ञानाभावेन तत्प्रतिबिम्बविरहाद्विकल्पानुत्पत्तेः कुतो भावाभावस्वरूपाभावे

विकल्प इति वक्तव्यम् । एतेन यदेके वर्णयन्ति प्रेक्षावतः प्रमाणोपपन्नेऽर्थे सत्यत्वेनाभिनिवेशोऽन्यथालीकत्वेन युक्तोऽन्यथा प्रेक्षावत्त्वहानिप्रसङ्गादतः सत्यालीकत्वाभिनिवेशस्य दुस्त्यजतया कथं सर्वविपर्यासप्रहाणमिति। तदपि प्रत्युक्तम्। अभिनिवेशस्य ज्ञानादव्यतिभिन्नमूर्तित्वात्तदभावे कथमभिनिवेशस्य युक्तरूपतेति । तदेवं भावाभावविकल्पाभ्यां सर्वविकल्पस्य व्याप्तत्वाद्व्यापकाभावे व्याप्यस्यासम्भवात्तत्त्वतो भावाभावपरामर्शरहितानविचाररमणीयानन्तबहिःसारविरहिणः कदलीस्कन्धनिभान् सर्वभावानेवं सर्वाकारज्ञताद्दष्टाभिसमयक्रमेण प्रज्ञाचक्षुषा निरूपयतो भावनाबलनिष्पत्तौ केषाञ्चिन्मणिरूपादिज्ञानवदुत्सारितसकलभ्रान्तिनिमित्त एव स्वतः प्रमाणभूतो यथाभूतार्थग्राहित्वान्मायोपमाद्वयज्ञानात्मसंवेदनो विशुद्धसांवृतकारणनिर्जातः सर्वविपर्यासप्रहाणादुरुकरुणाप्रज्ञास्वभावः सांवृतो ज्ञानालोकः समुपजायते, प्रतीत्यसमुत्पादधर्मतया यथा न पुनः कल्पनाबीजं प्रादुर्भवति । एवञ्च यदुच्यते कैश्चिद्विद्ययाऽविद्याक्षयो, विद्या च यथार्थज्ञानं तथागतमपि यदि ज्ञानं भवतां सांवृतं तस्मादविद्यारूपत्वाद्विद्यायाः समुत्पादाभावे कथमविद्याविनिवृत्तिर्यावच्चाविद्या न प्रहीणा तावत्कथं मुक्तिरिति । तदसङ्गतम् । तथा हि नित्यत्वादिसमारोपितधर्मप्रतीतिरविद्या । तद्विपरीतप्रमाणाबाधितधर्मप्रतीतिस्तु विद्येति । विपर्यासाविपर्यासनिबन्धनं तयोर्व्यवस्थानमतिप्रतीतमतः सांवृतत्वेऽपि विरुद्धधर्मोदयाद्यथाभूतपदार्थावगमेन विपर्यासनिवृत्तौ कुतस्तन्निबन्धनमविद्यात्वं येन तदप्रहाणान्मुक्तिरसङ्गतेति यत्किञ्चि-

देतत्। तदेवं कस्यचित्पारमार्थिकस्य भावस्य प्रज्ञाचक्षुषाऽदर्शनमेव परमं तत्त्वदर्शनमभिप्रेतं न तु निमीलिताक्षजात्यन्धादीनामिव प्रत्ययवैकल्यादमनसिकारतो वा यद्दर्शनम्। ततो भावादिविपर्यासवासनाप्रहाणाभावादसंज्ञिसमापत्त्यादिव्युत्थितस्येव भावादिविपर्यासवासनाप्रभवक्लेशज्ञेयावरणस्योत्पत्तेरमुक्त एव योगी भवेत्। यस्माच्च यथोक्तमेव तत्त्वज्ञानं मुक्त्यावाहकं नान्यथातिप्रसङ्गादतः प्रागुक्तमेव परमतत्त्वदर्शनं ग्राह्यं, तेन सर्वदोषविरोधिनैरात्म्यदर्शने प्रत्यक्षीकृते सति तद्विरुद्धत्वात् क्लेशावरणं ज्ञेयावरणञ्च प्रहीयते। अतः प्रतिबन्धाभावाद्रविकिरणवदपगतमेघाद्यावरणे नभसि सर्वत्र प्रतीत्यसमुत्पन्ने वस्तुनि तत्त्वोत्पत्त्यादिकल्पनारहितेऽव्याहतो योगिप्रत्यक्षो ज्ञानालोकः प्रवर्तते। तथाहि वस्तुस्वभावप्रकाशरूपं विज्ञानम्। तच्च सन्निहितमपि वस्तु प्रतिबन्धसद्भावान्न प्रकाशयेत्। प्रतिबन्धाभावे सत्यचिन्त्यशक्तिविशेषलाभात् किमिति सकलमेव वस्तु न प्रकाशयेत्। अतः संवृतिपरमार्थरूपेण सकलस्य वस्तुनो यथावत्परिज्ञानात्सर्वाकारज्ञत्वमवाप्यते। अतोऽयमेव सर्वावरणप्रहाणे सर्वाकारज्ञत्वाधिगमे च परमः पन्थाः, विशेषस्त्वयं योगिनां पृथग्जनेभ्यः। ते हि मायाकारा इव मायां यथावत्प्रसिद्धमाचाऽसत्यतापरिज्ञानान्न भावान् सत्यतोऽभिनिविशन्ते। तेन ते योगिन इत्युच्यन्ते। ये तु तां मायां बालप्रेक्षकजनवत्सत्यत्वेनाभिनिविष्टास्तद्वद्भावमपि ते विपरीताभिनिवेशाद्बाला उच्यन्त इति सर्वमविरुद्धम्। ततश्च युक्त्यागमाभ्यां परिविदितमायोपमाद्वयचित्तास्तत्त्वातत्त्वाव-

बोधाभ्युद्यतमतयोऽद्वयं मायोपमं चित्तं तथ्यसंवृतिरूपमेव श्रुतचिन्तामयेन ज्ञानेन व्यवस्थाप्य प्रतीत्यसमुत्पाद-धर्मतया सर्वाकारज्ञताद्यष्टाभिसमयक्रमेण सादरनिरन्तर-दीर्घकालविशेषभावनया भावयन्तः संहृतसकलविकल्प-माभवमनुबद्धं मायोपमाद्वयविज्ञानमात्रप्रबन्धमासादयन्ति योगीशाः। स एव मुख्यः प्रतिपक्षः। प्रथमं तु मायोपम-मिति साभिजल्पं विज्ञानं व्यवस्थापकं तदनुगुणं न तु मुख्य-प्रतिपक्षभूतम्। तथा हि बाह्यार्थनये पुद्गलनैरात्म्यादि-भावनापि न वस्तुरूपञ्चेतस्यवस्थाप्य क्रियते। वस्तुनो निर्विकल्पज्ञानसमधिगम्यत्वात्तस्य चादावसम्भवात्। भावे भावनावैयर्थ्यप्राप्तेः तस्मात्तत्राप्ययं परो नाममात्रानु-स्यूतविकल्पप्रतिबिम्बे तत्त्वावबोधानुकूल्यभाजि वस्त्वध्यव-सायो सन्तुष्यति। तदत्र नामाकाराभ्यासात् कथं जल्पो न विवर्धितो भवति। स्तिमितान्तरात्मनः क्रमेण विकल्प-संहार इति चेत्। तदेतदितरत्रापि समानमित्यलमति-प्रसङ्गेन। तदेवं सर्वाकाररमणीयतथतानिर्देशस्य माहात्म्य-ख्यापनाय न धर्मताबलान्निमित्तमुत्पन्नमित्याह। अस्यां खलु पुनरित्यादि। षड्विकारमष्टादशमहानिमित्तमिति क्रियाविशेषणत्वादेकवचनम्। तत्र च द्वौ विकारौ भाजनलोके, अभिसंस्कृतामनभिसंस्कृतां च पृथिवी-मधिकृत्य यथासंख्यं चलनमुन्नमनञ्च। सत्त्वलोके चतु-र्विधसत्त्वनिकायमकुशलिनं नानादेवताधिमुक्तं मानिनं विद्यावन्तञ्चाधिकृत्य यथाक्रममवनमनमूर्ध्वगमनमधोगमनं घोषोन्नदनं च। अष्टादशमहानिमित्तानि पुनरेषामेव षण्णां विकाराणां मृदुमध्याधिमात्रक्रियाभेदेनाकम्पत्

यावत् संप्रागर्जदित्यर्थनिर्देशाङ्गवन्ति। अथवा मध्यादुन्नमत्यन्तेऽवनमतीत्येकः। अयमेव च विपर्ययेण द्वितीयः। तथा हि पूर्वा दिगुन्नमत्यपरा दिगवनमतीति तृतीयः। अयमेव विपर्ययाच्चतुर्थः। तथा दक्षिणा दिगुन्नमत्युत्तरा दिगवनमतीति पञ्चमः। अयमेव विपर्ययेण षष्ठ इति षड्विकारा भवन्ति। अष्टादशमहानिमित्तानि पुनस्तथैवावगन्तव्यानि। उपसंहरन्नाह। एवं हीत्यादि (p. 309, 9)। तथागतमनुजात इति। एवं सर्वज्ञताकारानुजातत्वेनानुजातः। अजातिस्वभावं कथयन्नाह। पुनरपरं सुभूतिः स्थविरो न रूपमित्यादि। तथैव तत्कस्य हेतोरित्याशङ्क्याह। तथा हीत्यादि,। सुगमम्। एवं हीति। एवं मायोपमत्वान्मार्गज्ञताकारानुजातत्वेन तथागतमनुजातः। तथतानुपलम्भस्वभावं निर्दिशन्नाह। गम्भीरचर्येयमित्यादि। सर्वाकारज्ञताकारस्वभावानुपलम्भात्तथता गम्भीरचर्या। साधूक्तत्वेनानुवदन्नाह। एवमेतदित्यादि। भगवतां न विफला धर्मदेशनेत्याह। अस्मिन्नित्यादि। पूर्वपरिकर्मकृतैरिति। सम्भारभूम्यादौ समुपार्जितपुण्यज्ञानसम्भारैः पूर्वपरिकर्मभिः कृता निष्पादिता ये तैर्मायोपमधर्मभावनायां क्षान्तिरधिमुक्तिः प्रतिलब्धेत्येके। सर्वजगधर्मधातुप्रतिवेधादनुत्पत्तिकधर्मक्षान्तिरधिगतेत्यपरे। केन कारणेन महायानप्रवृत्तानां हीनयानावकाशो भवतीत्याह। को भगवन् हेतुरित्यादि (p. 310, 5)। तत्र हेतुरुपादानकारणं प्रत्ययः सहकारिकारणं, प्रज्ञोपायकौशल्यवैकल्यं कारणमित्याह। एतैः

शारिपुत्रेत्यादि । उपचर्यार्थमाह । किञ्चापीत्यादि । स्पष्टार्थञ्च दृष्टान्तमाह । तद्यथापीत्यादिना । पक्षिणः शकुनेरिति पक्षौ द्वावस्येति पक्षी नरोऽपि मित्रारि-पक्षसद्भावात्पक्षी स्यादिति शकुनिग्रहणम् । शिवादिरपि शकुनिः स्यादिति पक्षीतिवचनम् । नो हीदमित्यादिवचनं (p. 311, 6) निर्युक्तिकमेवेति । तत्कस्य हेतोरित्याशङ्क्याह । गुरुद्रव्यस्योर्ध्वप्रदेशात् पाते वस्तुधर्मत्वेन नियमात् । क्षतत्वादिकमाह । एवं ह्येतदित्यादि । दार्ष्टान्तिकार्थ-माह । एवमेतदित्यादि । पततीति । दानादिप्रयुक्त-स्यापि प्रज्ञापारमितोपायकौशलप्रयोगमन्तरेण श्राव-कादिभूमौ पातो भवति, अनेन च तदुभयप्रयोगस्य निर्याणे प्राधान्यमावेदितम् । यथानिर्दिष्टं षोडशप्रकार-मेव स्वभावलक्षणं ग्राह्यम् । तथा चोक्तम् ।

क्लेशलिङ्गनिमित्तानां विपक्षप्रतिपक्षयोः ।
विवेको दुष्करैकान्तावुद्देशोऽनुपलम्भकः ॥ २९ ॥
निषिद्धाभिनिवेशश्च यश्चालम्बनसंज्ञकः ।
विप्रत्ययोऽविघाती च सोऽपदागत्यजातिकः ॥ ३० ॥
तथतानुपलम्भश्च स्वभावः षोडशात्मकः ।
लक्षीव लक्ष्यते चेति चतुर्थं लक्षणं मतम् ॥ ३१ ॥ इति ।

यथोक्तप्रयोगपरिज्ञानं मोक्षभागीयकुशलमूलवत् एवेति । मोक्षभागीयं वक्तुमाह । पुनरपरं शारिपुत्र बोधिसत्त्व इत्यादि । तत्राभिमुखीकरणात्समन्वाहरति । निश्चयप्रभावेनावधारयति । निमित्तयोगेनेति (p. 312, 2) । एकान्ताभिनिवेशयोगेन । लौकिकलोकोत्तरज्ञानाभ्याम-

नवगमनान्न जानाति, न पश्यतीति योऽयं परिणामयितुमिच्छतीति । शून्यतैवानुत्तरा सम्यक्संबोधिरिति । परिणामनात्पूर्ववत्तत्कस्य हेतोरित्याशङ्क्याह । एवं हीत्यादि । मोक्षभागीयनिर्देशाधिकाराद्यतिरेकनिर्देशेनेदमुक्तं स्यात् । अनिमित्तालम्बनज्ञानाकारेण दानादिसर्वबुद्धधर्माणां स्वसन्ताने प्रादुर्भावात् समुदागमे कर्तव्ये यत् कौशलं प्रज्ञापारमितोपायलक्षणं, तदस्मिन् सर्वाकाराभिसम्बोधे मोक्षभागीयमिष्टम् । मोक्षोऽत्र विसंयोगविशेषस्तद्भागहितत्वान्मोक्षभागीयं प्रथमतः सर्वाकाराभिसम्बोधात्मके शासनेऽवतारहेतुभूतं श्रुतचिन्तामयमतः प्रज्ञोपायकौशलविरहाद्भूमिद्वये पात इति । तथा चोक्तम् ।

अनिमित्तप्रदानादिसमुदागमकौशलम् ।

सर्वाकारावबोधेऽस्मिन् मोक्षभागीयमिष्यते ॥ ३२ ॥ इति

कौशलमेवं स्पष्टयन्नाह । यथाहमित्यादि । भाषितस्येति स्थास्यत्ययं आवादिभूमावित्यस्य यथाहमर्थमाजानामि, तथा बहुपुण्यसम्भारादिना महाबोध्यधिगमे संशयो भवति । कथं तर्हि प्राप्यत इत्याह । तस्मात्तर्हीत्यादि । प्रज्ञापारमिता भावयितव्या । उपायकौशलेन च भवितव्यमिति । तत्र प्रज्ञापारमिता सर्वाकारैर्निखिलधर्मपरिज्ञानम् । उपायो बुद्धादिविषये श्रद्धा । दानादौ वीर्यम् । कल्याणकामतादेः स्मरणम् । कर्मकर्तृक्रियाऽनुपलम्भश्च समाधिः । तदेवमिन्द्रियार्थाभावादनिन्द्रियस्वभावश्रद्धावीर्यसमाधिप्रज्ञास्वभावं पञ्चप्रकारं मोक्षभागीयं कुशलमूलमुपार्जनीयमित्युक्तं भवेत् । तथा चोक्तम् ।

बुद्धाद्यालम्बना श्रद्धा वीर्यं दानादिगोचरम् ।
स्मृतिराशयसम्पत्तिः समाधिरविकल्पना ॥ ३३ ॥
धर्मेषु सर्वैराकारैर्ज्ञानं प्रज्ञेति पञ्चधा ॥ इति

साधूक्तत्वेनानुवदन्नाह । एवमेतदित्यादि । एवमपि न सर्वैरनुत्तरा सम्यक्सम्बोधिः श्रद्धादिभिः प्राप्येत्याह । गम्भीरेत्यादि (p. 313, 6) । मध्यैः श्रद्धादिभिरप्राप्यमाणत्वाद्दुरभिसम्भवा । मृदुभिस्तैरेवानधिगम्यमानतया परमदुरभिसम्भवा । तथैवानुवदन्नाह । एवमेतद्देवपुत्रा इत्यादि । दुःप्रज्ञैरित्यादि । सर्वाकारधर्मपरिज्ञानविरहाद्दुःप्रज्ञाः । दानादिविषयवीर्यवैकल्येन हीनवीर्याः । सर्वाविकल्पनसमाधिवियोगेन हीनादिमुक्तिकाः । बुद्धाद्यालम्बनश्रद्धाऽभावादनुपायकुशलाः । हितवस्त्वादिस्मरणवैधुर्यात्पापमित्रसंसेविनः । अनेनेदमुक्तं स्यात् । धर्मतेयं यतोऽधिमात्रैः श्रद्धादिभिः सम्यक्सम्बोधिः सुबोधा मृदुभिस्तैरेव दुर्बोधेत्यर्थादिदमाक्षिप्तम् । मध्यैः प्रत्येकबोधिर्मृदुभिः श्रावकबोधिरिति । तथा चोक्तम् ।

तीक्ष्णैः सुबोधा सम्बोधिर्दुर्बोधा मृदुभिर्मता ॥३४॥ इति ।

परमार्थसत्याश्रयेण दुरभिसम्भवत्वं विघटयन्नाह । यद्भगवानेवमित्यादि । कथमिति । स्वरूपेणैवेत्यर्थः । कथं न किञ्चिदभिसम्बुध्यत इति । तत्कस्य हेतोरित्याशङ्क्याह । शून्यत्वादिति । अनुत्पन्नत्वादभिसम्बोधव्यो धर्मो नास्तीत्यर्थः । तदेव स्पष्टयन्नाह । तथा हि भगवन्नित्यादि । प्रहाणायेति क्लेशानामानन्तर्यमार्गेण प्रहाणार्थम् । अभि-

सम्बुध्येताभिसम्बोधव्यमिति । विमुक्तिमार्गावस्थायाम् । आजानीयादाज्ञातव्यमिति । विशेषमार्गेण । अनेनापीति कर्तृकर्मक्रियानुपलम्भेनापि । शून्यत्वेऽपि स्वभिसम्भवत्वं नास्तीत्याह । असम्भवत्वादित्यादि (p. 314, 4) । तच्च हेतोरसत्त्वादसम्भवत्वं, कार्याभावादसद्भूतत्वम् । ततो लौकिकलोकोत्तरज्ञानाविषयत्वाद्यथाक्रममविकल्पितत्वमविठपितत्वमिति पदद्वयं योज्यम्, इदमुक्तम्भवति । धर्माणामनुत्पन्नत्वेन ज्ञानाविषयत्वात् कथं स्वभिसम्भवानुत्तरा सम्यक्सम्बोधिः किन्तर्ह्येवं धर्माधिमोक्षेऽपि पुण्यज्ञानसम्भारमुपार्ज्य योगिसंवृत्या मायापुरुषेणेवाधिगम्यमानत्वाद्दुरभिसम्भवेति । एतदेवोपोद्बलयन्नाह । शून्यमित्यनेनापीत्यादि । तथैव तत्कस्य हेतोरित्याशङ्क्याह । न ह्यायुष्मन्नित्यादि । अभिसम्भोत्स्य इति । शून्यत्वेनाकाशस्वभावस्य बोधिसत्त्वस्याहमभिसम्भोत्स्य इत्येवं प्रयोगाभावादेव दुरभिसम्भवेत्यर्थः । एवञ्चेत्यादि । निःस्वभावा एवाभिसम्बोधव्याः । पूर्ववत्तत्कस्य हेतोरित्याशङ्क्याह । आकाशेत्यादि । धर्मा यस्मादाकाशसमास्तथा चोत्पादवैधुर्याद्दुरभिसम्भवा बोधिरित्यर्थः । संवृत्यापि स्वभिसम्भवत्वं निराकुर्वन्नाह । यदि चायुष्मन्नित्यादि विवर्तेरन्नित्यभिलाषसद्भावान्न त्वेवं निवर्तेरन् । व्यतिरेकमुखेन निर्दिश्य, अन्वयमुखेनाह । यस्मात्तर्हीत्यादि । विवृत्तिरेव न सम्भवति । तच्च कथं तया दुरभिसम्भवत्वमिति आह । किं पुनरित्यादि (p. 315, 3) । रूपादयो धर्मिणस्तद्व्यतिरिक्ता वा तथता रूपादितथतालक्षणो धर्मस्तत्पृथग्भूतो वा निवर्तमानो

निवर्तेत। किमिति सर्वत्र प्रश्ने धर्मताभिप्रायेण पृथक्त्वादाह। नो हीदमिति वाक्यार्थः। प्रमुदितादिसप्तभूमिषु सामान्येन विवृत्त्यसम्भवं निर्दिश्याचलादिभूमित्रयेण पुनर्बोधकबोध्यधर्मभेदेनाह। किं पुनरायुष्मन् शारिपुत्र रूपमभिसम्बुध्यत इत्यादि (p. 316, 8)। समन्तप्रभां बुद्धभूमिमधिकृत्याह। तत् किं मन्यस इत्यादि (p. 318, 18)। तत् कतम इति। तस्मान्निवृत्त्यसम्भवादेव कारणाद्यस्तस्यामेव धर्मतायां शून्यतायां सर्वानभिनिवेशयोगेन स्थितः कतमः स धर्मो विवर्तते। नैव कश्चिदित्यर्थः। कतमो वेति (p. 319, 4)। नैव कश्चित्। कच्चिदिति निपातोऽपि नुशब्दार्थे वर्तते। उपसंहरन्नाह। एवमायुष्मन्नित्यादि। सत्यत इति परमार्थसत्यतः। स्थितित इति प्रज्ञप्तिव्यवस्थानत इत्येके। ज्ञानज्ञेयस्वभावतत्त्वविरहाद्यथाक्रमं सत्यतः स्थितितः इत्यपरः। संवृतिसत्याश्रयेण त्वभिसम्भवत्वं निराक्रियमाणं परमार्थतो यदि साध्यते, तदा प्रकृतानुपयोगीत्याह। ययेत्यादि। यया धर्मनयजात्या येन धर्माणामनुत्पादप्रकारेण निर्दिश्यते, तथा न कश्चिद्विवर्तते, किन्तु संवृत्या विवर्तत इति मतिः। संवृतिरेव नास्तीति चेत्। तत्र न केवलं प्रत्यक्षादिबाधा किं तर्ह्यभ्युपेतबाधापीत्याह। ये च खलु पुनरिम इत्यादि। व्यवस्थानं न भवतीति सर्वधर्मानुत्पादधर्मनिर्देशेन यस्मादेकमेव बोध्यात्मकं सत्त्वं चित्तं तदेव यातव्यत्वाद्यानं बोधिसत्त्वयानं बुद्धयानं तथागतभूमिसंगृहीतं, तस्माद्वेत्वव्यवस्थाश्रावकादियानत्रयानुत्पत्तेस्तद्या-

निकबोधिसत्त्वानां त्रयाणां व्यवस्थानं न स्यात्, तथाभ्युपेतविरोध इति भावः। सर्वधर्मानुत्पन्नत्वेऽपि बोधिसद्भावेनान्यतमैकबोधिसत्त्वाभ्युपगमात्कथं त्रिविधबोधिसत्त्वव्यवस्थानमापद्यत इत्याह। किं पुनरायुष्मन्नित्यादि। किमेकमपि बोधिसत्त्वमायुष्मान् सुभूतिः स्थविरो नाभ्युपगच्छति। यतस्त्रिविधपुद्गलासत्त्वश्चोद्यत इत्यर्थः। जानन्नपि तद्वचनेन परिहारं दापयितुमाह। प्रष्टव्यस्तावदयमायुष्मान् सुभूतिः स्थविर इति। तमेव प्रश्नयन्नाह। किम्पुनस्त्वमित्यादि। परिप्रश्नेन परिहरन् वक्तुमाह। किम्पुनरायुष्मनित्यादि (p. 320, 1)। तथतायास्तथतेति। अनुत्पादस्यापि तत्त्वतोऽसत्त्वम्। न ह्येतदिति विवृण्वन्नाह। तथापीत्यादि। त्रिभिराकारैरिति श्रावकयानादिप्रकारैर्व्यवच्छेदफलत्वाद्वाह्यस्यैकेन तन्नोपलभ्यत इत्याह। किं पुनरित्यादि। एकेनापीति। महायानात्मकेनापि प्रकारेण तुल्यत्वान्न्यायस्येत्याह। न ह्येतदिति। आधेयमपि निराकर्तुमाह। कच्चित्पुनरित्यादि। न ह्येतदिति गतार्थम्। प्रकृतार्थमुपसंहरन्नाह। एवमायुष्मन्नित्यादि। कुतस्त्वैवम्भवतीति। योगिसंवृत्यानुत्तरा बोधिरिति न तद्बलात्परमार्थतो बोधिसत्त्वास्तित्वम्। ततश्चायं श्रावकयानिक इत्यादि, कस्मात्तवैवम्भवत्यपि तु नैवञ्चित्तमुत्पादयितव्यमिति यावत्। चोद्यपरंपरया प्रसङ्गागतमेवार्थं मोक्षभागीयलिङ्गत्वे योजयन्नाह। एवमेतेषामित्यादि। प्रविभाव्यमानानामिति निरूप्यमाणानाम्। तत्राविशेषता त्रिविधबोधिसत्त्वस्य भेदानुपलम्भात्। निर्विशेषता तथतैकत्वे-

नावगमात्। निर्नानाकाराणता यथोक्तप्रकारव्यतिरेकेण पृथक्कर्तुमशक्यत्वात्। मृदुमध्याधिमात्रमोक्षभागीयसमन्वागमाद्यथाक्रमञ्चित्तं नावलीयत इत्यादि पदत्रयं योज्यम्। धर्मताऽविरुद्धार्थं कथयन्नाह। साधु साध्वित्यादि। अनेकप्रकारबोधिभेदादाह। कतमयेत्यादि। सुगमम् (p. 321. 6)। उत्पन्नमोक्षभागीयस्योत्साहिनो निर्वेधभागीयार्थमाह। अनुत्तरायां भगवन्नित्यादि। समं स्थातव्यमित्युद्देशं निर्दिशन्नाह। सर्वसत्त्वेष्वित्यादि। समचित्तमनुनयाभावात् न विषमचित्तं द्वेषविरहात्। मैत्रचित्तेनेति। प्रत्युत्पन्नार्थचित्तेनेति। हितचित्तेनेति। अनागतार्थचित्तेन मैत्रहितचित्तयोरेवार्थमाह। कल्याणचित्तेन निहतमानचित्तेनेति। अप्रतिहतचित्तेनेति। प्रतिघविविक्तेन। तदेवाह। अविहिंसाचित्तेनेति। अविहेठनाचित्तेनेति। तयोत्पादरहितेन। मातृसंज्ञामित्यादि सुगमम्। किन्तु भ्रातृभगिनीमित्रामात्यज्ञातिसालोहितसंज्ञाश्चोपलक्षणत्वेनावगन्तव्याः। तत्र च मातापित्रादीनां द्वयं द्वयमेकैकं कृत्वा पञ्चाकारा वक्तव्याः। सर्वसत्त्वानामहं नाथ इति इदमुक्तं स्यात्। सममैत्रहिताप्रतिघाविहेठनाचित्ताकारैः पञ्चभिर्मातापितृभ्रातृभगिनीपुत्रदुहितृमित्रामात्यज्ञातिसालोहितचित्ताकारैश्च सर्वसत्त्वालम्बने सम्यगूष्मगतकुशललाभात्सर्वसत्त्वानां त्रातेति। तथा चोक्तम्।

आलम्बनं सर्वसत्त्वा ऊष्मणामिह शस्यते।
समचित्तादिराकारस्तेष्वेव दशधोदितः॥ ३५॥ इति

मूर्द्धानमधिकृत्याह । स्वयञ्चेत्यादि (p. 322, 1) । इदमुक्तं स्यात् । स्वयं सर्वपापान्निवृत्तस्य दानाद्येषु प्रतिपत्त्या स्थितस्य च । तथैवान्येषां पापनिवृत्तौ समादापनेन कुशलप्रवृत्तौ समादापनवर्णवदनसमनुज्ञानाकारैरालम्बने मूर्द्धगतमुद्यत इति । तथा चोक्तम् ।

स्वयं पापान्निवृत्तस्य दानाद्येषु स्थितस्य च ।
तयोर्नियोजनान्येषां वर्णवादानुकूलते ॥ ३६ ॥

मूर्द्धगम् इति

क्षान्तिमधिकृत्याह । एवं सत्येषु यावद्बोधिसत्त्वन्यामावक्रान्ताविति । यथा मूर्द्धसु स्वपराधिष्ठानभेदेनालम्बनाकारभेदो व्याख्यातस्तथा दुःखादिसत्यचतुष्टयप्रथमफलादिकं प्रमुदितादिभूमिञ्च स्वयं परिजानतोऽन्येषाञ्च तत्रैव समादापनादिभिराकारैरालम्बने क्षान्तिरुत्पद्यत इत्यर्थः । तथा चोक्तम् ।

स्वपराधारं सत्यज्ञानं तथा क्षमा इति ।

अग्रधर्मानधिकृत्याह । सत्त्वपरिपाचन इत्यादि । तत्रानावरणं रूपं बोधिसत्त्वाभिज्ञादि, सर्वधर्मस्थितिर्बुद्धत्वम् । इदमुक्तं स्यात् । स्वयं सत्त्वपरिपाचनादौ स्थितस्यान्येषामपि तत्र समादापनादिभिराकारैरालम्बने ऽग्रधर्मा भवन्तीति । तथा चोक्तम् ।

तथाग्रधर्मा विज्ञेयाः सत्त्वानां पाचनादिभिः ॥ ३७ ॥ इति

एतानि पुनर्निर्वेधभागीयानि मृदुमध्याधिमात्रभेदात्प्रत्येकं त्रिविधानि भवन्ति । तत्र मृदूष्मगतं सममैत्रचित्ताभ्यां तदात्वे पराविहेठनतामुपादाय, मध्यं हितादि-

चित्तत्रयेणायत्यां परहिताशयतामुपादाय। अधिमात्रं मात्रादिचित्तोत्पादेन तदात्वे चायत्याञ्च परेषामिष्टोपसंहारकामतामुपादाय निर्दिष्टम्। मृदुमूर्द्धगतं पापनिवृत्तौ स्वपरनियोजनेनान्येषां दुःखहेतुनिवृत्तिकामतामुपादाय। मध्यं दानादौ स्वपरस्थापनेनान्येषां, सुखहेतुसन्नियोगाभिलाषितामुपादाय। अधिमात्रं द्विधा प्रतीत्यसमुत्पादभावनायामात्मपरप्रवर्तनेनान्येषां, सुखदुःखविपर्यासप्रहाणाभिप्रायतामुपादायोक्तम्। मृद्वी मध्याधिमात्रा च क्षान्तिर्यथाक्रममेव सत्येषु यावद्बोधिसत्त्वन्यामावक्रान्तावित्यनेनान्येषामार्यमार्गे प्रथमफलादौ बुद्धत्वे च नियोक्तुकामतामुपादायोक्तम्। किं त्वधिमात्रा क्षान्तिरेकक्षणिकी ग्राह्या। मृदुमध्याधिमात्रास्त्वग्रधर्मा यथासंख्यं परेषामविशेषेण यानत्रये परिपाचनाय विशेषेण बोधिसत्त्वमार्गे नियोजनाय सर्वसम्पत्प्रकर्षनिष्ठाधिष्ठानकामतामुपादाय सत्त्वपरिपाचनानावरणरूपसङ्घर्मस्थितिवचनेनोक्ताः।

यदुक्तमभिधर्मकोशे।

यथाधिमात्रा क्षान्तिरेव क्षणिकी तथाग्रधर्माः। इति।

तत् स्वार्थाधिकारात्। इह तु परार्थाधिष्ठानानां मृदुमध्याधिमात्रभेदो व्याख्यातः। परार्थस्य तारतम्यावस्थासम्भवादिति न तेनेदं विरुध्यते। प्रत्यभिसमयं कस्मान्निर्वेधभागीयादिनिर्देश इति चेत्। उच्यते। सर्वाकारमार्गवस्तुविभावनाभेदेन यथाक्रमं सर्वाकारज्ञतादित्रिविधेऽभिसमये लौकिकनिर्वेधभागीयाधिगमपूर्वको लोकोत्तरदर्शनभावनामार्गाधिगमः। सर्वाकाराभिसम्बोधादौ तु

त्रिविधेऽभिसमये भावनोत्तरोत्तरावस्थाविशेषेण सर्वाकारविशेषमार्गसङ्गृहीतं ज्ञानमनास्रवं मृदुमध्याधिमात्रक्रमेणोत्पद्यत इति सकृदुत्पत्तिनिरासाय निर्वेधभागीयादिव्यपदेशोऽभिहित इति केचित् ॥

अभिसमयालङ्कारालोकायां प्रज्ञापारमितायां तथतापरिवर्तो नाम षोडशः ॥ ३६२ ॥

---

अवैवर्तिकबोधिसत्त्वसंघस्य यथोक्तनिर्वेधभागीयमन्यदपि दर्शनमार्गादिकमित्यवैवर्तिकबोधिसत्त्वसंघो वक्तव्यः। स तु निर्वेधभागीयप्रयोगमार्गस्थस्तथा क्षान्तिज्ञानसङ्गृहीत-दर्शनमार्गस्थोऽपरश्च प्राबन्धिकभावनामार्गस्थ इति व्यवस्था भवति। तथा चोक्तम्।

निर्वेधाङ्गान्युपादाय दर्शनाभ्यासमार्गयोः।
ये बोधिसत्त्वा वर्तन्ते सोऽत्रावैवर्तिको गणः॥ ३८॥ इति

तत्र रूपादिनिवृत्तिनिर्विचिकित्साद्याकारैर्विंशति-प्रकारैर्निर्वेधभागीयस्थानामवैवर्तिकलक्षणं ज्ञेयम्। तथा चोक्तम्।

रूपादिभ्यो निवृत्त्याद्यैर्लिङ्गैर्विंशतिधेरितैः।
निर्वेधाङ्गस्थितस्येदमवैवर्त्तिकलक्षणम्॥ ३९॥ इति

तथतास्वभावत्वाद्रूपादिभ्यो निवृत्तिं॥ तावत्प्रतिपाद-यितुमाह। अविनिवर्तनीयस्येत्यादि (p. 323, 3)। तत्रा-काराः प्रतिपक्षसंगृहीताः। लिङ्गानि स्वाश्रयचिह्नानि। निमित्तानि तत्परिभोगोपकरणगतानि। अथवाकारः कायिको हर्षविशेषो रोमोद्गमाश्रुपातादिः। लिङ्गं वचन-विशेषः प्रहर्षाध्येषणादिः। निमित्तमनुष्ठानविशेषः। श्रवण-धारणवाचनपूजनादिः। पूर्वपूर्वव्याख्याभूतान्यमूनि वा पदानि। कथं वा वयम्भगवञ्जानीयाम इत्यनेनासङ्कीर्ण-प्रतिपत्तिनिमित्तं प्रश्नयन्नाह। परिहरन्नाह। या च सुभूत इत्यादि। तथताभूमिरिति सर्वभूमेर्मायोपमत्वात्। तदेवाह। सर्वा इत्यादिना। युक्त्यागमाभ्यां निश्चितत्वे-नान्यथा कारणासम्भवाद्यथासंख्यं न कल्पयति। न

विकल्पयति। ततो ऽपीति। पर्षन्मण्डलात्। एवमेतदिति। रूपादिभ्यो निवृत्तत्वेन। एवमेतत्तथतैव सत्या मोहोऽन्य इति चिन्ताश्रवणकालेऽधिमुञ्चत्यवगाहते। भावग्रहापरिदीपनान्न च यत्किञ्चित्प्रलापी भवति। मायोपमप्रकाशकत्वेनार्थसंहितामेव वाचं भाषते नानर्थसंहिताम्। धर्मताभावनाभियोगान्न च परेषां कृताकृतानि कार्याकार्याणि व्यवलोकयति। धारयितव्य इति। हेतुना यः समग्रेण कार्योत्पादोऽनुमीयते, अर्थान्तरानपेक्षत्वात्स स्वभावो ऽनुवर्णित इति न्यायाद्योग्यतानुमानेन निश्चेतव्यः। अवेत्य प्रसादलाभेन विचिकित्साक्षयमावेदयन्नाह। पुनरपरमित्यादि। मुखमुल्लोकयतीति। ज्ञातव्यतत्त्वपरिज्ञानादिसम्भावनाशयेनाराधनतया न मुखं निरीक्षते। व्यपाश्रयत इति (p. 324, 4)। शरणादिभावान्न स्वीकरोति। प्रणिधानसमृद्ध्याऽष्टाक्षणक्षयार्थमाह। स खलु पुनरित्यादि। नापायेषूपपद्यत इति। नरकप्रेततिर्यगुपपत्त्यभावः साक्षात् कथितः। उपलक्षणत्वादस्य मिथ्यादृष्टिबुद्धवचनाश्रवणप्रत्यन्तजनपदोत्पादाभावो ग्राह्यः। न च स्त्रीभावं परिगृह्णातीति। स्त्रीभावप्रतिषेधवचनादिन्द्रियजडमूकभावं न गृह्णातीति लभ्यते। चशब्दान्न दीर्घायुष्कदेवोपपत्तिं गृह्णातीत्यर्थः। कारुणिकतया स्वपरकुशलधर्मनियोजनार्थमाह। पुनरपरमित्यादि। तत्र प्राणातिपातः परेषां जीवित क्षयः। स्थानाच्चौर्येण परद्रव्यस्यावनमदत्तादानम्। अनङ्गादौ स्त्र्याद्यभिगमनं काममिथ्याचारः।

वल्कलैः सगुणैः काचित्क्रियते मधुनाऽपरा।

पिष्टकिण्वजलैरन्या सुरा ज्ञेया त्रिधा बुधैः ।
मैरेयं गुडधात्र्यंबुधातकी संस्कृतं विदुः ॥
मदयेदशितं पीतं यत्तन्मद्यमिति स्मृतम् ।
तदेतत्त्रिविधं सर्वं शुक्लधर्मविपक्षतः ॥

प्रमादस्थानमित्याह प्रसङ्गादागतं पुनः। अभूताभिधानमनृतवचनम्। परभेदकं वचः पिशुनवचनम्। अप्रियाभिधानं परुषवचनम्। सर्वक्लेशजनितं वाक्यं सम्भिन्नप्रलापः। अभिध्या परद्रव्येषु विषयस्पृहा। व्यापादः सत्त्वविद्वेषः। नास्तीति मिथ्यादृष्टिदर्शनम्। सर्वेण मन्त्रप्रयोगादिना। सर्वं निखिलसत्त्वविषयम्। सर्वथा मृद्वादिनाऽपि प्रकारेण। सर्वं तच्चित्तमपि नाध्यापद्येत न कुर्यात्। परात्मपरिवर्तकत्वेन सर्वसत्त्वविषयपरिणामितदानादिकार्थमाह। पुनरपरमित्यादि (p. 329, 14) यं यं धर्ममितिसूत्रादिकं पर्यवाप्नोतीति स्वीकरोति। ददाति। फलेन सह प्रयच्छति। सम्यग्धर्मावबोधेन। गम्भीरधर्माकांक्षणार्थमाह। पुनरपरमित्यादि (p. 326, 1)। तत्र मार्गान्तराभिलाषोऽपर्याप्तितामुपादाय कांक्षा। ऋजुमार्गविलोमनं विमतिः। गोत्रधर्मस्य विविधकुशलवृद्धिगमनाभावेन विचिकित्सनाद्विचिकित्सा। सर्वथा बोधवैकल्याद्धन्धत्वम्। परहितप्रतिपन्नत्वेन मैत्रकायवाङ्मनस्कर्मार्थमाह। हितवचन इत्यादि। तत्र मैत्रकायकर्मणा योगादनागतपथ्याभिधायितया हितवचनः। तथैव वाक्कर्मसद्भावेन परिमितवचनान्मितवचनः। मैत्रीपरिभावितचित्तसमुत्थापितत्वेन श्रोत्रसुखादिकारित्वात् स्निग्धवचनः।

प्रयोगसम्पत्त्या कामच्छन्दो व्यापादः । स्त्यानमिद्धमौद्धत्य-कौकृत्यं विचिकित्सा चेति पञ्चनिवरणासंवासार्थमुपलक्षणत्वेनाह । अल्पस्त्यानमिद्धश्च भवतीति । विभावितप्रतिपक्षत्वेनाविद्यादिसर्वानुशयहानार्थमाह । निरनुशयश्च भवतीति । तत्राविद्यादृष्ट्याश्रवसङ्गृहीतानामनुशयानामभावान्निरनुशयत्वम् । न तु कामभावाश्रवसङ्गृहीतानां बोधिसत्त्वस्य सञ्चिन्त्यभवोपादानात् । नित्यसमाहितत्वेन स्मृतिसम्प्रज्ञानार्थमाह । सोऽभिक्रामत्वेत्यादि । तत्रागमनमभिक्रमः । गमनं प्रतिक्रमः संप्रज्ञानयोगान्न भ्रान्तचित्तः । स्मृतिसद्भावादुपस्थितस्मृतिः । भिन्नेर्यापथपरिहारार्थं नातिमन्दं न विलम्बितम् । शान्तरूपाभिद्योतकत्वात् सुखम् । एकपादस्य सम्यगप्रतिस्थानेऽपरपादानुत्क्षेपान्न च सहसा पादं भूमेरुत्क्षिपति । सप्राणकदेशपरिहारार्थं न च सहसा पादं भूमौ निक्षिपति । चौक्षसमुदाचारत्वेन शुचिपरिभोग्यचीवरादिकार्थमाह । तस्य खलु पुनरित्यादि । तत्राल्पबाधोऽल्पव्याधिः । अल्पादीनवोऽल्पपरोपद्रवः । तदेवमूष्मगतावस्थास्यैकादशाकारा भवन्ति । सर्वलोकाभ्युपगतकुशलत्वेन कायेऽशीतिक्रमिकुलसहस्रासम्भवार्थमाह । यानि खल्वित्यादि । सर्वेणापि रूपेण सर्वं क्रमिकुलम् । सर्वथा वर्णादिप्रकारेण, सर्वमशीतिसहस्रसंख्यम् । तथैव तत्कस्य हेतोरित्याशङ्क्याह । तथा हि तस्येत्यादि । कुशलमूलविशुद्ध्या चित्ताकौटिल्यार्थमाह । यथा यथा चेत्यादि (p. 327, 3) । तत्र कायपरिशुद्धिर्लक्षणाद्यलङ्कृत-

गाचता। वाक्यपरिशुद्धिर्ब्रह्मस्वरादिरूपताद्वयमेतच्चित्तपरिशुद्धिकार्यत्वेनोक्तम्। अत एव चित्तपरिशुद्धिविभजनार्थं प्राधान्यादाह। का पुनरित्यादि। तत्र लाभादिनिरपेक्षत्वाच्चित्ताल्पकृत्यता। भूतदोषपरिलम्बनाभावाच्चित्ताशाठ्यता। सम्यगभूतगुणसन्दर्शनवैकल्याच्चित्तामायाविता। यथाभूतवादित्वाच्चित्ताकुटिलता। मात्सर्यादिविविक्तत्वाच्चित्तावङ्कता। यया चेति महायानप्रवणया लाभसत्कारादिनिरपेक्षत्वेन द्वादशधूतगुणसमादानार्थमाह। पुनरपरमित्यादि। तत्र लाभो द्रव्यप्राप्तिः। सत्कारो बहुमानता। श्लोकः कीर्तिः। न तद्गुरुको न तत्प्रवणो भवति। तत्रेमे द्वादशधूतगुणाः। यदिदं। पांशुकुलिकत्वं, त्रैचीवरिकत्वं, सर्वनामयिकत्वं, पैण्डपातिकत्वं, ऐकासनिकत्वं, पश्चात् खलु भक्तिकत्वं, आरण्यकत्वं, वार्क्षमूलिकत्वं, अभ्यवकाशिकत्वं, श्माशानिकत्वं, नैषद्यिकत्वं चेति। दानादिविशेषप्रतिपक्ष्या पारमिताविपक्षमात्सर्यादिचित्तानुत्पादार्थमाह। नेर्ष्यामात्सर्यबहुला भवतीति। उपलक्षणत्वात्सर्वपारमिताविपक्षो ग्राह्यः। धर्मधातुना सर्वधर्मसंग्रहाद्धर्मताऽविरुद्धप्रज्ञापारमितायोगगमनार्थमाह। न च गम्भीरेत्यत्यादि। चालयितुमशक्यत्वात् स्थिरबुद्धिः। सूक्ष्मार्थदर्शनाद्गम्भीरबुद्धिः। संयोजनात्संस्यन्दयति। स्वात्मीकृतसत्त्वधातुत्वेन परार्थनरकाभिलाषार्थमाह। पुनरपरमित्यादि। गृहीतबोधिचित्तपरित्यागात् प्रतिदेशय (p. 328, 6)। पुनरनुत्पादनात्प्रतिनिःसृज। दोलायमानत्वाभावान्न क्षुभ्यति।

गृहीतापरित्यागान्न चलति। तदेवं मूर्धगतावस्थस्य षडाकारा भवन्ति। अधिगतसंप्रत्ययधर्मत्वेनापरप्रणयनार्थमाह। पुनरपरमित्यादि। दुःखादिसत्यचतुष्टयस्य मायोपमत्वेनावगमाद्धर्मतामित्यादि पदचतुष्कोपादानम्। न परस्य श्रद्धया गच्छतीति (p. 329, 4)। धर्मताप्रत्यक्षकारित्वान्न परमं प्रत्ययेन प्रतिपद्यते। एतदेव दृष्टान्तपूर्वकं स्पष्टयन्नाह। तद्यथापि नाम सुभूत इत्यादि। अनपहरणीयत्वादसंहार्यः। निवृत्त्यसम्भवादप्रत्युदावर्तनीयधर्मा। एकान्तस्थितत्वान्नियतो भवति सर्वज्ञतायाम्। एतदेव विस्तारयन्नाह। सम्यक्सम्बोधिपरायण इति। विदितबुद्धत्वोपायकौशलत्वेन प्रतिरूपमार्गोपदेशकमारस्य मारत्वावबोधार्थमाह। पुनरपरमित्यादि। एषेति प्रज्ञापारमिताचर्या। इहेत्यस्मिन्नेव जन्मनि दुःखस्यान्तं कुरु चतुरार्यसत्यभावनयेति शेषः। अहोवतेत्यादि। अहो कष्टमिहैव तावत्तवायमात्मभावो धर्मताधिगमवैकल्येन यदोत्तरकालमपरिनिष्पन्नोऽनभिनिवृत्तो भविष्यति, तदा कस्मात्पुनस्त्वमन्यमात्मभावं प्रणिधानादिबलेन सत्त्वार्थं प्रतिग्रहीतव्यं मन्यस इत्यर्थः। मारोऽयमित्यन्यमार्गोपदेशिनोऽवबोधेन निवर्तनासम्भवादविनिवर्तनीयः। तदेव क्षान्तिगतावस्थस्याकारद्वयं स्यात्। त्रिमण्डलविशुद्धा सर्वत्र बुद्धानुमोदितप्रतिपत्त्यर्थमाह। स चेद्बोधिसत्त्वस्येत्यादि(p. 330, 16)। चित्तं परतः श्रुत्वैवमिति। परस्मात्परतो मारादेव नैतद्बुद्धभाषितमित्यादीनि विवेकपदानि श्रुत्वा चित्तं धर्मताया न परिहीयत

इत्यर्थः। प्रयोगमौलपृष्ठावस्थासु न परिहीयते न प्रत्युदावर्तते। न चान्यथाभावश्चित्तस्येति यथाक्रमं योज्यम्। तथा चरन्निति। बुद्धानुज्ञातचर्यया चरन्नित्यर्थः। उपसंहरन्नाह। स चेद्बोधिसत्त्वो महासत्त्वेत्यादि (p. 331, 2)। तदेवमग्रधर्मगतावस्थस्यैक आकारः स्यात्। यथोक्तैरेवाकारैर्निर्वेधभागीयस्थितो बोधिसत्त्वोऽनुत्तरबोधेर्न निवर्तते इति लक्षणीयः। तथा चोक्तम्।

रूपादिभ्यो निवृत्तिश्च विचिकित्साऽक्षणक्षयौ।
आत्मनः कुशलस्थस्य परेषां तन्नियोजनम्॥ ४०॥
पराधारञ्च दानादि गम्भीरेऽर्थेऽप्यकांक्षणम्।
मैत्रं कायाद्यसंवासः पञ्चधा ऽवरणेन च॥ ४१॥
सर्वानुशयहानञ्च स्मृतिसंप्रज्ञता शुचि।
चीवरादि शरीरे च क्रमीणामसमुद्भवः॥ ४२॥
चित्ताकौटिल्यमादानं धूतस्यामत्सरादिता।
धर्मतायुक्तगामित्वं लोकार्थं नरकैषणा॥ ४३॥
परैरनेयता मारस्यान्यमार्गोपदेशिनः।
मार इत्येव बोधश्च चर्या बुद्धानुमोदिता॥ ४४॥
ऊष्मामूर्द्धसु सक्षान्तिष्वग्रधर्मेष्ववस्थितः।
लिङ्गैरमीभिर्विंशत्या सम्बोधेर्न निवर्तते॥ ४५॥ इति।

निर्वेधभागीयस्थावैवर्तिकलक्षणानन्तरं दर्शनमार्गस्थावैवर्तिकलक्षणं दुःखे धर्मज्ञानक्षान्त्यादिभिः षोडशभिः क्षणैर्वक्तव्यम्। तथा चोक्तम्।

क्षान्तिज्ञानक्षणाः षट् च पञ्च पञ्च च दृक्पथे।
बोधिसत्त्वस्य विज्ञेयमवैवर्तिकलक्षणम्॥ ४६॥ इति

तत्र रूपादिधर्मावबोधव्यावर्तनेन दुःखे धर्मज्ञानक्षान्तिरिति कथयन्नाह। पुनरपरमित्यादि (p. 331, 6)। व्यवस्थितविशेषानुत्पादान्नाभिसंस्करोति। अपूर्वाकरणान्नोत्पादयति। पूर्ववत्तत्कस्य हेतोरित्याशङ्क्याह। तथा हीत्यादि। स्वलक्षणशून्यैरिति। स्वभावशून्यधर्मतया रूपादिधर्मावबोधानुपलम्भाद्बोधिसत्त्वन्यामं दुःखे धर्मज्ञानक्षान्तिमधिगतोऽवक्रान्तः संस्तमपि धर्मं नोपलभते। यतस्तं नाभिसंस्करोति। नोत्पादयतीत्यर्थः। अनुत्पादज्ञानक्षान्तिक इति यथा निर्दिष्टक्षान्तिलाभी। अनुत्तरबोधिचित्तदृढतया दुःखे धर्मज्ञानमित्याह। पुनरपरमित्यादि। दर्शनभावनाविशेषमार्गेषु सत्त्वप्रतिपादनार्थमाकाशसमेत्यादिपदत्रयोपादानं प्रयोगादिषु वा श्रवणचिन्ताभावनादिष्वेवं ज्ञातव्यमित्यादि योज्यम्। तत्र दृढं चित्तं निरन्तरायसारतया। अप्रकम्प्यं धर्मताप्रत्यक्षकारितया। असंहार्यं परेषामविषयतया। समादानप्रयोगाद्देशापरिभ्रंशार्थेन वा योज्यम्। श्रावकप्रत्येकबुद्धयानचित्तविनिवर्तनात्। दुःखेऽन्वयज्ञानक्षान्तिरित्याह। पुनरपरमित्यादि। श्रावकप्रत्येकबुद्धभूमिनिवृत्तः सर्वज्ञतायां प्रवृत्तो भवतीति (p. 332, 5)। तत्र सत्यां प्रवृत्तौ या विनिवृत्तिः, सत्यां विनिवृत्तौ या प्रवृत्तिः, ते त्विह निवृत्तिप्रवृत्ती निर्दिष्टे। न तु निवृत्तिप्रवृत्तिमात्रे तयोः सम्यगर्थाकरणात्। तथा तृतीये क्षणेऽन्वयज्ञानसम्बन्धे न श्रावकादिभूमिपातः सम्भवति। तस्य त्रैधातुकप्रतिपक्षावाकहत्वादतस्तन्निवृत्त्याकारः कथितः। धर्मप्रविचयसामर्थ्या-

ध्यानाद्यङ्गपरिक्षयेण दुःखेऽन्वयज्ञानमित्याह। स आकांक्षन्नित्यादि। नवानुपूर्वसमापत्त्याद्युपलक्षणम्। अत्र ध्यानानि दृष्टधर्मसुखविहारार्थमभिमुखीकरणाद्ध्यानैर्विहरति, तत्फलसाक्षात्करणाद्ध्यानपरिजयञ्च करोति। तत्तदङ्गप्रहाणेनाधिगतान्वयज्ञानस्य रूपारूप्यधातुप्रतिपक्षत्वज्ञापनार्थमालम्बनाद्ध्यानानि च समापद्यते। अनुकूलात्मभावसंपरिग्रहान्न च ध्यानवशेनोपपद्यते। दुःखेऽन्वयज्ञानावस्थायां बोधिसत्त्वस्य वैराग्यलाभानुपपत्त्या स पुनरेव कामावचारान्धर्मानध्यालम्बत इति योज्यम्। अपगताकुशलत्वेन कायचेतोलाघवात् समुदये धर्मज्ञानक्षान्तिरित्याह। पुनरपरमित्यादि। दर्शनहेयविकल्पानपहृतत्वेन कायचित्तलाघवोत्पादान्न नामादिगुरुको भवति। बाह्याध्यात्मिकयशोभेदात्कीर्तिः श्लोक इति द्वयमुक्तम्। विदितस्वलक्षणशून्यधर्मत्वान्नामाद्यलाभेऽपि वैमनस्याभावेनासंक्षुभितचित्तः। मायोपमभावनोपायकौशलसामर्थ्येनानभिनिवेशकामोपभोगात्समुदये धर्मज्ञानमित्याह। सचेत्सोऽगारमित्यादि। अगारं गृहं प्राप्तेषु कामेषु कामाभिष्वङ्गोऽभिनिवेशः। अप्राप्तेष्वभिप्रायः प्रार्थना। मायोपमनिर्वाणधर्मावगमान्निर्विन्संज्ञा। एतदेव दृष्टान्तेन स्पष्टयन्नाह। तद्यथापि नामेत्यादि। जीवितेन्द्रियादिनिरोधदर्शनादुत्त्रस्तसंज्ञा समयत्वादविश्रब्धम्। अनागतेष्वनर्थिका वर्त्तमानेष्वगृद्धा विनष्टेष्वसक्ता इत्येके। प्रयोगादिषु चेत्यपरे। प्रासादिकसुखदत्वात् प्रियरूपसातरूपाणि। तेऽगारमध्यावसन्तोऽनर्थिका एव च भवन्तीति

(p. 333, 5) पूर्वेण सम्बन्धः । विषयादीनवदर्शनेन सदा ब्रह्मचारित्वात्समुदयेऽन्वयज्ञानक्षान्तिरित्याह । न समविषमेणेत्यादि । न समविषमेण नोद्धारद्वृद्धिन्यायेन । न्यायोपात्तत्वाद्धर्मेण सदा ब्रह्मचारित्वान्नाधर्मेण । शमथस्निग्धसन्तानत्वान्न परेषामपमर्दनमुपघातं कुर्वन्ति । तथैव तत्कस्य हेतोरित्याशङ्क्याह । तथा हि तैरित्यादि । सत्पुरुषैरित्यादिस्तुतिरित्येके । षोडशक्षणदर्शनमार्गलाभाद् यथाक्रमं सत्पुरुषैरित्यादिषोडशपदानीत्यपरे । सत्पुरुषधर्मतया सम्यगुपकरणाजीवविशुद्धत्वात्समुदयेऽन्वयज्ञानमित्याह । पुनरपरमित्यादि । वज्रपाणिरित्येतत्संज्ञकोऽन्यः कश्चित् प्रतिविशिष्टो महायक्षः । अनभिभवनीयकायवाक्चित्तत्वाद्यथासंख्यम् । दुर्धर्षानतिक्रमणीयदुरासदपदानि वाच्यानि । वस्तिगतकोषगुह्यत्वात् पुरुषवृषभेन्द्रियसमन्वागतः । आर्यतारादिमन्त्रप्रकारो मन्त्रजातिः । चन्द्रसूर्यग्रहोत्पादितभृङ्गराजादिरोषधिः । मन्त्रजात्योषध्य एव विद्याभेषजादि । आदिशब्दाद्यन्त्रादिपरिग्रह इत्येके । मन्त्रजातिर्लोकोत्तरा बहुद्रव्यसमाहारलक्षणौषधिः । विद्या लौकिकी भेषजमेकाङ्गिकमित्यपरे । पुरुषदेवतासम्बन्धान्मन्त्रजातिः । उत्पन्नव्याधिप्रतीकारार्थमोषधिः । स्त्रीदेवतासम्बन्धाद्विद्या, भेषजमनागतोत्पातप्रतिषेधार्थमित्यन्ये । कायवाक्कलहाभावान्न विग्रहविवादशीलः । शून्यतावस्थितत्वेन स्कन्धधात्वायतनयोगानुयोगविहारप्रतिषेधान्निरोधे धर्मज्ञानक्षान्तिरित्याह । पुनरपरमित्यादि । "योगानुयोगग्रहणेन दुःखसमुदय-

सत्ययोर्निरोधमार्गसत्ययोश्च यथाक्रमं योगानुयोगयोर्वैपर्यं ज्ञापितमि"त्यार्यविमुक्तिसेनः। स्कन्धादिषु प्रथमोऽभिनिवेशो योगः। पश्चादत्यन्ताभिनिवेशोऽनुयोग इत्यपरे। निरस्तविपक्षत्वेनाधिगमान्तरायधर्मकथायोगानुयोगविहारप्रतिषेधान्निरोधे धर्मज्ञानमित्याह। न सङ्गणिकेत्यादि (p. 334, 15)। कथाग्रहणेन वस्तुविकल्पस्य दुःखसमुदयज्ञानकाल एवोत्सन्नत्वान्निरोधज्ञानस्य कथामात्रविकल्पप्रतिपक्षत्वमावेदितम्। एताञ्चावस्थामधिकृत्योच्यते।

नाममात्रमिदं सर्वं संज्ञामात्रे प्रतिष्ठितम्।
अभिधानात्पृथग्भूतमभिधेयं न विद्यते॥ इति।

परिज्ञातविकल्पदोषत्वेन बोधिसम्भारभूतदानादिप्रचुरविचित्रधर्मसेनाकथायोगानुयोगविहारप्रतिषेधान्निरोधेऽन्वयज्ञानक्षान्तिरित्याह। न सेनाकथेत्यादि। तत्र सेना बोधिसम्भारधर्मसमूहः। निरोधज्ञानावस्थायां प्रभूतसमुदागमस्योपयुक्ततानेन सूचिता। तथा हि प्रकृतिशून्यतायां स्थितो न कस्यचिद्धर्मस्याल्पत्वं वा बहुत्वं वा समनुपश्यतीत्यार्यपञ्चविंशतिसाहस्रिकावचनादित्येके। ग्राह्यग्राहकयोर्हेयत्वेन विपक्षप्रतिपक्षघात्यघातकयुद्धकथायोगानुयोगविहारप्रतिषेधान्निरोधेऽन्वयज्ञानमित्याह। न युद्धकथेत्यादि। एवंभूतावस्थस्य स्वरसत एव विपाकनिरोधश्चतुर्विधो भवति। यदुतेन्द्रियग्रामनिरोधः प्रथमः। तथेन्द्रियाश्रयभूतभौतिकनगरनिरोधो द्वितीयः। तथेन्द्रियविषयनिगमनिरोधस्तृतीयः। यदाह न ग्रामेत्यादि (p. 335, 1)। जनपदादयो निगमप्रभेदाः। आत्माभि-

निवेशनिरोधश्चतुर्थः। यदाह। नात्मकथेत्यादि। आत्मन एवात्मीयसम्बन्धेन प्रभेदार्थं नामात्येत्याद्युपादानम्। स चायं चतुर्विधो विपाकनिरोधः प्रत्येकं त्रैधातुको वेदितव्यः। तत्र कामरूपधात्वोरिन्द्रियाधारविषयनिरोधोऽतिप्रतीतः। आरूप्ये तूपेक्षाजीवितमनःसञ्ज्ञेन्द्रियसद्भावादिन्द्रियनिरोधः।

निकायं जीवितञ्चात्र निःश्रिता चित्तसन्ततिः।

इति कृत्वेन्द्रियाधारनिरोधः। मनोविषयधर्मनिरोधसम्भवादिन्द्रियविषयनिरोधः सम्भवति। सर्वत्रात्माभिनिवेशस्तु विद्यत एवेति तन्निरोधोऽप्युपपन्नः। दानादिविशेषावबोधेन मात्सर्यदौःशील्यादियोगानुयोगविहारप्रतिषेधान्मार्गे धर्मज्ञानक्षान्तिरित्याह। न धर्मविरुद्धकथेत्यादि। धर्मविरुद्धकथानिषेधेन क्षान्तेरानन्तर्यमार्गत्वात् क्लेशविसंयोगकारणत्वं विज्ञापितम्। कायवाक्समारम्भः कलहः। वाक्चित्तकृतं वैरूप्यं भण्डनम्। विग्रहविवादौ व्याख्यातौ। कुशलधर्मानुवर्तनाद्धर्मकामाः। प्रतिपत्तिफलधर्मयोः संस्कृतासंस्कृतत्वाद्यथाक्रमं हानोपादानकथनादभेदवर्णवादिनः। विशिष्टतरावस्थाप्राप्त्यभिलाषान्मित्रकामाः। श्रावकाद्यसाधारणधर्मगदनाद्धर्मवादिनः। उपपत्तिवशितालाभात्तत्रोपपद्यन्ते। यथोक्तक्षान्तिमेव स्पष्टयन्नाह। पुनरपरमित्यादि (p. 336 1)। कोविदा इति पण्डिताः। यद्भूयस्त्वेनेति बाहुल्येन। सर्वधर्मचिविमोक्षमुखस्वभावत्वेनाणुमात्रधर्मानुपलम्भान्मार्गे धर्मज्ञानमित्याह। पुनरपरमित्यादि। मायोपमसर्व-

धर्मावगमेनाणुमात्रधर्मोपलम्भवैकल्यान्नैवं भवत्यविनिवर्तनीयो वाहं न वाहमविनिवर्तनीय इति। प्रयोगाद्यवस्थासु विचिकित्सासंशयसंसीदनापदानि योज्यानि। विचिकित्साद्यभावत्वेन विमुक्तिमार्गत्वाज्ज्ञानस्य विसंयोगप्राप्तिकारणत्वं कथयति। तदेव दृष्टान्तपूर्वकं स्पष्टयन्नाह। तद्यथापि नामेत्यादि। मारकर्मावरोधादिना विसंयोगप्राप्तिकारित्वमेव ज्ञापयति। पुनरपि दृष्टान्तेन विस्तारयन्नाह। तद्यथापि नाम सुभूते पुरुष इत्यादि। सर्वथाऽपनयनात् प्रतिविनोदयितुं तावत्कालासमुदाचारात् विष्कम्भयितुं वा चालयितुं वा कम्पयितुं वेति स्वस्थानादपनेतुं तत्रैवाहढौकर्तुमित्यर्थः। अनेन च सदेवकेन लोकेन शक्यनिवृत्तित्वेन सदेवकं लोकमतिक्रम्य न्यामावक्रमणान्मार्गे धर्मज्ञानस्य त्रैधातुकप्रतिपक्षत्वं ज्ञापितं भवेत्। जातिव्यतिवृत्तस्यापीति (p. 337, 8) जन्मान्तरगतस्यापि श्रावकादिचित्तानुत्पादेन प्रयोगस्य यानान्तरनिर्याणाभावादैकान्तिकत्वमावेदितम्। अभिसम्प्रत्ययलाभेन त्रिसर्वज्ञतात्मकस्वभूमित्रयनिश्चितावस्थानान्मार्गेऽन्वयज्ञानक्षान्तिरित्याह। जातिव्यतिवृत्तस्याप्येवं भवति नाहमित्यादि। स्वस्यां भूमाविति। त्रिसर्वज्ञतायाम्। तथैव तत्कस्य हेतोरित्याशङ्क्याह। तथा हीत्यादि। चित्तेनेति। पञ्चाभिज्ञाधिगमेन। ज्ञानेनेति। सत्याभिसम्बोधेन। तथा तन्नान्यथेति। अर्हत्वं बोधिसत्त्वैर्न साक्षात्कर्तव्यमिति। यथोक्तं भगवता तथैव तन्नान्यथेत्यर्थः। एवं प्रत्यवेक्षते। एवं समन्वाहरतीति (p. 338, 4) प्रत्यक्षानुमानाभ्यामव-

धारयति। बुद्धाधिष्ठानमिति। बुद्धरूपम्। अबद्धा वतायमिति। अवश्यं वतायम्। तथैव तत्कस्य हेतोरित्याशंक्याह तथा ह्यस्येत्यादि। एकान्तनिष्ठत्वेन सर्वाकारज्ञतादिधर्मार्थे जीवितत्यागान्मार्गेऽन्वयज्ञानमित्याह। पुनरपरमित्यादि। तत्र कायत्यागादात्मपरित्यागः। चित्तत्यागाज्जीवितपरित्यागः। उभयाभिधानं व्यस्तसमस्तात्मपरित्यागज्ञापनार्थमित्यन्ये। प्रेम स्नेहः। गौरवं बहुमानता। ममाप्येष (p. 339, 6) इत्यनेन विसंयोगप्राप्तेः सर्वधर्मपरिग्रहसभागता ज्ञापिता। यथोक्तज्ञानमेव विस्तारयन्नाह। पुनरपरमित्यादि। तथैव तत्कस्य हेतोरित्याशंक्याह। तथा हि तेनेत्यादि। यथोक्तैरेवाकारैरचिन्त्योपायवतां बोधिसत्त्वानां धर्मनैरात्म्यद्योतकैः साक्षात्कृताः षोडशक्षणा दर्शनमार्गस्थाऽवैवर्तिकबोधिसत्त्वलक्षणं ग्राह्यम्। तथाचोक्तम्।

रूपादिसंज्ञाव्यावृत्तिर्दार्ढ्यं चित्तस्य हीनयोः।
यानयोर्विनिवृत्तिश्च ध्यानाद्यङ्गपरिक्षयः॥ ४७॥
कायचेतोलघुत्वञ्च कामसेवाभ्युपायिकी।
सदैव ब्रह्मचारित्वमाजीवस्य विशुद्धता॥ ४८॥
स्कन्धादावन्तरायेषु सम्भारे सेन्द्रियादिके।
समरे मत्सरादौ च नेति योगानुयोगयोः॥ ४९॥
विहारप्रतिषेधश्च धर्मस्याणोरलब्धता।
निश्चितत्वं स्वभूमौ च भूमित्रितयसंस्थितिः॥ ५०॥
धर्मार्थं जीवितत्याग इत्यमी षोडश क्षणाः।
अवैवर्तिकलिङ्गानि दृङ्मार्गस्थस्य धीमतः॥ ५१॥ इति

ननु कथं योगिसन्तानप्रत्यात्मवेद्यक्षणाः परप्रतिपत्तये लक्षणानीति चेत् । उच्यते । यतः क्षान्तिज्ञानक्षणाः सम्यगधिगताः सन्तोऽनभिनिविष्टग्राह्यग्राहकाकारशुद्धलौकिकपृष्ठचित्तसंगृहीतं स्वानुरूपकार्यं रूपादिसंज्ञाव्यावर्तनादिकं परप्रतिपत्तिविषयं जनयन्त्यधिगमानुरूप एव सर्वत्र योगिनां व्यवहारोऽन्यच्च सत्त्वविनयप्रयोजनवशादितिकृत्वा तस्मात्ते लक्षणानि भवन्तीति ।

अभिसमयालङ्कारालोकायां प्रज्ञापारमिताव्याख्यायां

अविनिवर्तनीयाकारलिङ्गनिमित्तपरिवर्तो

नाम सप्तदशः ॥

---

भावनामार्गस्थावैवर्तिकलक्षणं प्रतिपादयितुं दर्शनमार्गसम्बन्धेन प्रस्तावयन्नाह। अथ खल्वित्यादि (p. 341, 2)। असाधारणधर्मयोगादाश्चर्यम्। यथोक्तक्षान्तिलाभेन दर्शनहेयक्लेशविसंयोगान्महागुणसम्भारसमन्वागतः। यथानिर्दिष्टज्ञानलाभेन दर्शनहेयक्लेशापुनरुत्पत्तेरप्रमाणगुणसमन्वागतः। तदनु सर्वाकारज्ञताभिनिर्हारज्ञानलाभादपरिमितगुणसमन्वागतः। साधूक्तत्वेनैवमेतत् सुभूत एवमेवैतदित्यनुवादस्य निर्युक्तिकत्वात्तत्कस्य हेतोरित्याशङ्क्याह। अविनिवर्तनीयेनेत्यादि। आकारानन्त्यादनन्तं सर्वतोऽविषयत्वेनापर्यन्तं सर्वलोकाकम्प्यत्वेनासंहार्यम्। सम्बन्धमापाद्यैवं प्रकृतार्थमाह। प्रतिबलो भगवानित्यादि। यस्माद्भगवानाकारादिकं निर्देष्टुं प्रतिबलोऽत एव भगवता भावनामार्गस्थावैवर्तिकलक्षणार्थं गम्भीराणि स्थानानि कथनीयानीत्यर्थः। गम्भीराणि गम्भीराणीति वीप्साभिधानं पौनःपुन्याभ्यासमार्गज्ञापनार्थम्। स्थानानीति स्थित्यभिधानम्। यत्र भावनामार्गे स्थित्वा बोधिसत्त्वाश्चत्वारि स्मृत्युपस्थानानि यावदष्टादशावेणिकान् बुद्धधर्मान् परिपूरयेयुः, तस्य निरवशेषाधिगमपरिपूरिकारणत्वज्ञापनेन प्राबन्धिकताख्यापनार्थम्। "नागृहीतविशेषणा विशेष्ये बुद्धिरुत्पद्यत" इति न्यायाद्भावनामार्गं विशेषयन्नाह। साधु साध्वित्यादि। गम्भीराणीति। गम्भीरो भावनामार्ग इत्यर्थः। निगमयितुकाम इति। प्रतिपादयितुकामः। कतमत्पुनरस्य गाम्भीर्यमित्याह। गम्भीरमित्यादि। भावप्रधानोऽयं निर्देशो गाम्भीर्य-

मित्यर्थः। तत्र ग्राहकविवेकेन शून्यता। ग्राह्याभावादानिमित्तम्। ग्राह्यग्राहकविविक्ताद्वयज्ञानस्यापि वस्तुसतोऽधिगन्तव्यस्यासत्त्वादप्रणिहितम्। जात्यादिलक्षणत्रयविसंयोगादनाभोगप्रवृत्तत्वाद्वाऽनभिसंस्कारः। हेतोरसत्त्वादनुत्पादः। प्रतिसन्धिविगमादजातिः। दर्शनमार्गविपक्षविरहादभावः। भावनामार्गविपक्षविश्लेषाद्विरागः। आयत्यां दुःखानुत्पत्तिधर्मत्वान्निरोधः। अनिमित्तशान्तसुखविहारपदस्थानत्वान्निर्वाणम्। दृष्टधर्मे दुःखाप्रचारफलत्वाद्विगम इत्येवमेषां शून्यतादीनामर्थभेदो वाच्य इत्येके। सर्वैरप्येतैः पदैः व्यावृत्तिभेदाद्धर्मधातुरेव निर्दिश्यत इति योज्यम्। सा च शून्यतादीनां गम्भीरता समारोपापवादान्तद्वयरहिततेति प्रतिपादनार्थं काक्वा प्रश्नयन्नाह। एतेषामेवेत्यादि (p. 342, 1)। भगवन्नित्यनन्तरं किमिति शेषः। परिहारार्थमाह। सर्वधर्माणामित्यादि। तथैव तत्कस्य हेतोरित्याशङ्क्याह। रूपं हीत्यादि। एतदेव कुत इति प्रश्नयन्नाह। कथञ्च सुभूत इत्यादि। परिहरन्नाह। यथा सुभूते तथता तथा गम्भीरं रूपमित्यादि। यथा शून्यता गम्भीरा तथा तत्त्वतोऽनुत्पन्नत्वेन रूपादिकमपि गम्भीरमित्यर्थः। अनेन च तथतायां न रूपादिकमिति समारोपान्तः प्रतिषिद्धः। यथा रूपंतथता तथा गम्भीररूपमिति।

यः प्रतीत्यसमुत्पादः शुन्यता सैव ते मता।

इति वचनाद्रूपादितथतैव संवृत्या रूपादिकमविचारैकरम्यमिति यावत्। अनेन च नान्यत्र रूपादिकात्तथते-

त्यपवादान्तः प्रतिक्षिप्तः। उपसंहरन्नाह। यच्च सुभूते न रूपमित्यादि। आश्चर्यमिति। एकस्यैव युगपदर्थद्वयकथनाद्विस्मयः। यावद्वचनेनाभिनिवेशप्रतिषेधानभिनिवेशविधानादिपरिग्रहः। सूक्ष्मेणोपायेनेति। अनुत्रासक्रमेण रूपतश्च निवारितो निर्वाणञ्च सूचितमिति। तथतायां रूपादिप्रतिषेधाद्रूपादौ प्रवृत्तिनिराकरणाय निवारितः। तत्रैव शून्यत्वेनाभ्यासकरणान्निर्वाणञ्च कथितं स्यात्। तदयं समासार्थः। शून्यतादिके न रूपादिकं, न ततोऽन्यच्छून्यतादिकमिति। यथाक्रमं या समारोपापवादान्तमुक्तता सा शून्यतादेर्गाम्भीर्यं शून्यतादिकमिति। गाम्भीर्ययोगाद्गम्भीरोऽभ्यासपथ इति। तथा चोक्तम्।

गम्भीरो भावनामार्गो गाम्भीर्यं शून्यतादिकम्।
समारोपापवादान्तमुक्तता सा गभीरता॥ ५२ ॥ इति

विशेषणं निर्दिश्यैवं विशेष्यभावनामार्गार्थमाह। इमानि सुभूत इत्यादि। चिन्तयिष्यतीति। श्रुतमय्या प्रज्ञया। तुलयिष्यतीति चिन्तामय्या। उपनिध्यास्यतीति। भावनामय्या। समाधौ वा प्रयोगमौलपृष्ठभाविन्या प्रज्ञयेति यथाक्रमं योज्यम्। कस्मिन् पुनर्विषये भावनामार्ग इत्याह। एवं मयेत्यादि। तत्र एवं मया स्थातव्यम्। यथा निर्वेधभागीयाधिकारेण प्रज्ञापारमितायामाज्ञप्तम्, एवं मया शिक्षितव्यम्। यथा दर्शनमार्गाधिकारेण प्रज्ञापारमितायामाख्यातम्, एवं मया प्रतिप-

त्तव्यम्। यथा भावनामार्गाधिकारेण प्रज्ञापारमितायामुपदिष्टमिति वाच्यम्।

तथा चोक्तम्।

चिन्तातुलननिध्यानान्यभीक्ष्णां भावनापथः।

निर्वेधाङ्गेषु दृङ्मार्गे भावनामार्ग एव च॥५३॥ इति

अत एव चत्वारि निर्वेधभागीयानि, दर्शनभावनामार्गौ चाधिकृत्य, तथा सम्पादयमानस्तथोपनिध्यायंस्तथोपपरीक्षमाणस्तथा प्रयुज्यमानस्तथा घटमानस्तथा व्यायच्छमान इति षट्पदानि भवन्ति। कथं भावनामार्गस्य स एव विषयः। प्राबन्धिकत्वात्पूर्वपूर्वस्योत्तरोत्तर इत्यदोषः। भावनामार्गानुशंसार्थं प्रश्नयन्नाह। अयमित्यादि (p. 343, 3)। यो बोधिसत्त्वश्चिन्तादिप्रयुक्तः सम्यगेकदिवसमध्यच भावनामार्गे योगमापद्यते सोऽयं तेनैकदिवसेन कियत्पुण्यं करोति। परिहारार्थमाह। तद्यथेत्यादि। न्यूनेऽपि विषयेऽधिकरागत्वाद्रागचरितः। रागविकल्पबाहुल्याद्वितर्कचरितः। समुदायावयवशोभत्वाद्यथाक्रमं योषिदभिरूपा प्रासादिका। दृष्ट्यनुकूलत्वेन दर्शनीया। अस्मिन् स्थाने त्वया गन्तव्यमित्यभिधानं सङ्केतः। न वशयेदिति। न लभतेत्येके। न पश्येदित्यपरः। आदिमध्यपर्यवसानेषु स्वाभिमतसुरतानुकूलव्यापारनिर्वर्तनाद्यथासंख्यमेवं करिष्यामि। एवं रमिष्यामि। एवं क्रीडिष्यामि। सर्वच यथेष्टप्रवर्तनादेवं प्रविचारयिष्यामीति योज्यम्। इयत इति रागचरितपुरुषवितर्कसंख्यानित्यर्थः। कर्मणः क्षयाच्छोरयति।

विष्कम्भणाद्विपृष्ठीकरोति । अपूर्वस्यानुत्पादनेन संसाराज्जन्मप्रबन्धतो व्यन्तीकरोति । तदेवमप्रमाणकुशलसम्परिग्रहादपरिमितकल्पानां क्षीरणपृष्ठीकरणव्यन्तीकरणलक्षणस्त्रिविधोऽनुशंसो भावनामार्गकारित्वज्ञापनार्थं कथितः स्यात् । य इहेत्यादि । निर्वेधभागीयाधिकारेण यथाज्ञप्तं तिष्ठति । दर्शनमार्गाधिकारेण यथाख्यातं शिक्षते । मृदुमध्याधिमात्रभावनामार्गाधिकारेण यथोपदिष्टं यथानिर्दिष्टं प्रतिपद्यते, उपनिध्यायति, योगमापद्यत इति सम्बन्धः । उपसंहरन्नाह । एवं सुभूते बोधिसत्त्व इत्यादि (p. 344, 1) । एकदिवसेन तावत्कर्म करोतीत्यनन्तरं जन्मप्रबन्धतोऽपरिमितकल्पान् यावता परित्यजतीति शेषः । भावनामार्गस्येदानीं प्रकारभेदो द्रष्टव्यः । त्रयो हि मूलप्रकारा मृदुमध्याधिमात्रास्तेषां पुनः प्रत्येकं मृदुमध्याधिमात्रभेदे क्रियमाणे नवप्रकारा भवन्ति । यथा प्रतिपक्षस्यैवं विपक्षस्यापि नवप्रकारा वेदितव्याः । तत्र च मृदुमृदुना मार्गेणाधिमात्राधिमात्रविकल्पस्य प्रहाणं यावदधिमात्राधिमात्रेण मृदुमृदुविकल्पस्येति ग्राह्यम् । आदित एवाधिमात्रमार्गासम्भवादुत्पन्नाधिमात्रमार्गस्य चाधिमात्रक्लेशाभावात् । यथौदारिको मलश्चैलात्पूर्वं निर्धूयते पश्चात् सूक्ष्मः । यथौदारिकञ्च तमः सूक्ष्मेणालोकेन हन्यते, सूक्ष्मञ्चाधिमात्रेण, शुक्लाश्च धर्मा बलवन्तो दुर्बलास्तु कृष्णाः, क्षणिकमृदुकेनाप्यार्यमार्गेणानादिसंसारपरम्पराप्यायितानामधिमात्रक्लेशानामुन्मूलनात् । बहुकालसंवर्धितदोषाणां चिरोत्कर्षनिष्कर्षणवत्, क्षणिकाल्पप्रदीप-

महातमोघातवच्चेत्याचार्यवसुबन्धुः। तच्चान्यापदेशेनोत्तरोत्तरपुण्याधिकत्वप्रतिपादनात्। प्रतिपक्षप्रभेदमभिभूयमानपुण्यवचनेन च विपक्षप्रभेदं निर्दिशन् विकल्पक्लेशा बोधिसत्त्वा इति कृत्वाऽधिमात्राधिमात्रविकल्पप्रकारं वक्तुमाह। यश्च प्रज्ञापारमिताविरहित इत्यादि। मृदुमृदुमार्गार्थमाह। अयमेव तत इत्यादि। तत इति दानं दातुः सकाशाद्विशिष्यत इति। असंख्येयाप्रमेयाप्रमाणपुण्यपरिग्रहाद्विशिष्टतरः। अधिमात्रमध्यविकल्पं कथयन्नाह। पुनरपरमित्यादि। दद्यात्प्रतिष्ठापयेदिति। निर्यातयेच्चिरस्थितिकञ्च कुर्यादित्यर्थः। मृदुमध्यमार्गार्थमाह। यश्च बोधिसत्त्व इत्यादि। बहुतरमित्यसंख्येयादिस्वभावम्। अधिमात्रमृदुविकल्पं प्रतिपादयन्नाह। पुनरपरमित्यादि। यावद्वचनादनागामिप्रभृतीनां ग्रहणम्। अणुमात्रभयदर्शित्वेन शीलेषु च परिपूर्णकारी। मृद्वधिमात्रमार्गार्थमाह। यश्च बोधिसत्त्व इत्यादि (p. 345. 3)। ततो मनसिकारादिति। प्रज्ञापारमिताभावनातः। मध्याधिमात्रविकल्पं ख्यापयन्नाह। पुनरपरमित्यादि। क्षान्त्या च समन्वागत इति। परापकारमर्षणादिक्षान्त्या युक्तः। मध्यमृदुमार्गार्थमाह। यश्चेत्यादि। धर्मदानमिति सम्यगर्पणम्। अत एव धर्मं देशयेदिति पूर्वस्मादिदं विशिष्यते। मध्यमध्यविकल्पमावेदयन्नाह। पुनरपरमित्यादि। उत्तप्तवीर्यत्वादारब्धवीर्यः। मध्यमध्यमार्गार्थमाह। यश्च खलु पुनरित्यादि। परिणामयेदिति। उपलम्भदृष्ट्या निर्यातयेत्। अत एवानन्तरं प्रज्ञापार-

मितोक्तेन परिणामेनेति विशेषो वक्ष्यते। अयमेव धर्मदानपूर्वकोपलम्भपरिणामो मध्यमृदुविकल्पो वक्ष्यमाणपरिणामापेक्षया स्यात्। मध्याधिमात्रमार्गार्थमाह। पुनरपरमित्यादि। प्रज्ञापारमितोक्तेनेति। सर्वधर्मानुपलम्भयोगेन। तत इत्युपलम्भयोगेन परिणामयितुः सकाशात्। मृद्वधिमात्रविकल्पं निर्दिशन्नाह। पुनरपरमित्यादि। प्रतिसंलाने पुनरेव योगमापद्यत इति। परिणामोत्तरकालं प्रज्ञापारमिताविहारे चित्तसमाधानतां कुर्यात्। अधिमात्रमृदुमार्गार्थमाह। यश्च खलु पुनरित्यादि। प्रतिसंलाने पुनरेव योगमापद्येतेति (p. 346, 2)। भूयोऽपि मनसिकुर्यात्। एतदेव स्पष्टयन्नाह। प्रतिसंलाने च पुनरेव योगामापद्यमान इत्यादि। मृदुमध्यविकल्पं वक्तुमाह। यदा भगवन्नभिसंस्कार (p. 346, 6) इत्यादि। अभिसंस्कारश्चित्ताभोगो विकल्पो विपर्यासो यदा कथं विकल्पबीजानुगमात्तदा बहुतरं पुण्यं परिणामनाकाले प्रसवतीत्युच्यते विकल्पस्यापि मायोपमत्वेनानुगमादविपर्यासप्रवृत्तत्वेन संवृत्या बहुतरं पुण्यमिति परिहरन्नधिमात्रमध्यमार्गार्थमाह। सोऽपीदानीमित्यादि। स इत्यभिसंस्कारप्रभवः पुण्यराशिः। इदानीमिति। अष्टमप्रकारभावनामार्गावस्थायाम्। न तु पूर्वं तत्र विपर्यासप्रभवत्वात्। अध्यात्मबहिर्धोभयशून्यताभिः शून्यकः। शून्यमहापरमार्थशून्यताबलाद्रिक्तः। संस्कृतासंस्कृतात्यन्तानवराग्रानवकारशून्यताभिस्तुच्छकः। प्रकृतिशून्यतादिभिर्नवप्रकारैरसारकः। सन्नाहप्रस्थानसम्भार-

निर्याणप्रतिपत्तिभिर्यथाक्रमं शून्यक इत्यादिपदचतुष्टयमित्यन्ये। मृदुमृदुविकल्पं कथयन्नाह। यथा यथा खलु पुनरित्यादि। यथा यथेति। येन येनाध्यात्मादिशून्यताद्याकारेण बोधिसत्त्वो महासत्त्व इत्यनन्तरं संख्येयप्रमेयाद्यधिगमसंगृहीत इति शेषः। एवं धर्मानिति। मायोपमान्। अधिमात्राधिमात्रमार्गार्थमाह। यथा च यथा च सुभूते बोधिसत्त्व इत्यादि। सर्वविकल्पबीजविगमादप्रमेयमसंख्येयं पुण्यं प्रसवति। अप्रमेयमित्यनेनाप्रमाणमप्याक्षिप्तम्। कोऽर्थभेद इति प्रश्नयन्नाह। अप्रमेयस्य चेत्यादि। किं नानाकरणमिति। किं उपलक्षणं किं सामान्यलक्षणमितियावत्। कः प्रतिविशेष इति। किं स्वभावलक्षणं किं स्वलक्षणमित्यर्थः। सामान्यलक्षणार्थमाह। अप्रमेयमित्यादि। यत्र प्रमाणान्युपरमन्त इति। यस्मिन् पुण्यविषये प्रत्यक्षेण विषयीकर्तुमनुमानेन च मातुमशक्यत्वात्प्रत्यक्षानुमानप्रमाणानि न प्रवर्तन्ते, तदप्रमेयमप्रमाणम्। अनेनाधिगमस्यासंस्कृतत्वं विभुत्वञ्च ज्ञापितमिति केचित्। यन्न शक्यं संख्यया क्षपयितुमिति। अविद्यमानसंख्यत्वेन यत्पुण्यं संख्यया निष्ठापयितुमशक्यं तदसंख्येयम्। अनेन तस्य समताधिगमो ज्ञापित इत्येके। स्वभावलक्षणार्थमाह। स्याद्भगवन्नित्यादि। पर्यायः प्रभेदः। यदित्यव्ययत्वाद्येनेत्यर्थः। अप्रमेयमित्यसंख्येयाद्युपलक्षणम्। साधूक्तत्वेन तद्वचनमनुवदन्नाह। यत्सुभूतिरेवमिहेत्यादि। एवमनूद्य प्रतिपादयन्नाह। स्यात्सुभूत इत्यादि

(p. 347, 1)। येनेति। धर्मधातुस्वभावात्मकेनेति। परमार्थतः शून्यतालक्षणोऽपि विकल्पप्रतिपक्षयोर्भेदादनागम्यध्यानान्तरादिनवभूमिषु महोपायकौशलबलेन वा कामधात्वादिनवभूमिषु यथासंख्यं यथोक्तनवप्रकारः प्रबन्धेन प्रवर्तमानो भावनामार्गोऽवसातव्यः। तथा चोक्तम्।

प्राबन्धिकत्वादिष्टोऽसौ नवधा च प्रकारतः।
मृदुमध्याधिमात्राणां पुनर्मृद्वादिभेदतः ॥ ५४ ॥ इति

नन्वेकैकमेव प्रकारमधिकृत्य भिन्नार्थासंख्येयाप्रमाणपुण्यप्रसवकार्यवचनस्य प्रयोगेण कारणानामपि बहुधा भेदात्कथं नवप्रकारो भावनापथ इत्यभिप्रायवानाह। कस्य पुनरित्यादि। परिहरन्नाह। शून्यताया इत्यादि। त्रिविमोक्षमुखस्वभावभावनामार्गप्रकारस्येत्यर्थः। प्रकर्षपर्यन्तवर्तित्वान्नवमप्रकारस्यैवाधिवचनमित्यवगमादाह। किं शून्यताया इत्यादि। नान्येषामिति। अतोऽन्येषां सर्वधर्माणां प्रथमादिप्रकाराणां किन्नाधिवचनम्। तद्वचनेन परिहर्तुमाह। तत्किं मन्यस इत्यादि। सर्वधर्मा इति प्रथमादिप्रकाराः शून्या एवेति न्यायस्य सर्वत्र तुल्यत्वात्त्रिविमोक्षमुखस्वभावाः। सर्व एव प्रकारास्तथागतेनाख्याताः। सर्वप्रकाराणां शून्यतादिवचनमिति प्रतिपाद्य पर्यायार्थमाह। ये च सुभूत इत्यादि। अप्रमेयतापीति। अपिशब्दादसंख्येयतादयः। यस्मादसंख्येयाप्रमेयादिनिर्देशा वागभिलापस्वभावा व्यावृत्त्यपेक्षोपजनितनानात्वरूपेणैकस्मिन्नर्थे प्रयुक्तास्तस्मात्परमार्थेन यथोक्तलक्षणस्य भावनामार्गस्य भेदं कर्तुं न क्षमा इत्याह। तस्मात्तर्हीत्यादि।

एषामित्यसंख्येयादीनाम्। संवृत्या त्वनालम्बनमहाकरुणास्वभावधर्मधातुनिःष्यन्दभूतास्ते देशनाधर्मस्वभावा यथोक्तनिर्देशा बालजनानां महाफलोदयप्रकाशकत्वेनाभिमतास्तथागतस्येत्याह। अभिलापा इत्यादि। एत इत्यसंख्येयादयः। देशनाभिनिर्हारनिर्देश इति। देशनाऽभिनिर्ह्रियते जन्यतेऽनेनेति देशनाभिनिर्हारो धर्मकायस्तस्योद्भावनासंवृत्या निर्देश इति विग्रहः।

तथा चोक्तम्।

असंख्येयादिनिर्देशाः परमार्थेन न क्षमाः।

कृपानिष्यन्दभूतास्ते संवृत्याभिमता मुनेः॥ ५५॥ इति।

तथागतस्य करुणानिष्यन्दनिर्देशत्वादेतैः सर्वविषयैर्भवितव्यमित्याह। आश्चर्यमित्यादि (p. 348, 1)। यावद्वचनादप्रमेयतादिपरिग्रहः। सर्वधर्माणामिति। प्रथमादिनवप्रकाराणां धर्मतेति निर्वाणरूपता, व्यञ्जनार्थयोर्भेदानुपलम्भादनभिलाप्या। भाषितस्येत्यनन्तरनिर्देशस्य। तथा सर्वधर्मा इति। रूपादयः। साधूक्तत्वादेवमेतदित्याद्यनूद्य पूर्ववत्। तत्कस्य हेतोरित्याशङ्क्याह। या सुभूत इत्यादि। सर्वधर्माणां शून्यतेति। ज्ञेयत्वादिभेदान्तरप्रतिक्षेपेण शून्यतेत्युक्ता। ततः शून्याः सर्वधर्मा एवाभिलपितुं न शक्या इत्यर्थः। ननु निःस्वभावतया तत्त्वान्यत्वाभ्यामवाच्यस्य परमार्थतो धर्मतास्वरूपस्याभिमतमार्गवस्तुनो विपक्षप्रतिपक्षयोर्यथाक्रममपगमोदयौ न युज्येते। सर्वथातिशयाधानाभावादित्याह। किं पुनर्भगवन्नित्यादि। नो हीदं सुभूत इत्यादि। यद्येवं

भावनासंज्ञकेन मार्गेण नैव किञ्चिदधिमात्रादि नवविधं विकल्पजातं परित्यक्तं, नापि किञ्चिन्मृदुमृद्वादिनवप्रकारं मार्गजातं प्राप्तम् । अतोऽनुपन्यसनीय एवेत्यभिप्रायेणा- निष्टमापादयन्नाह । सचेद्भगवन्नित्यादि । अनभिलप्य- स्येति । भावनामार्गस्य तत्प्रभेदत्वादेव दानादीनामपि हानिवृद्ध्यभाव इत्यादि । दानपारमिताया अपीत्यादि । भवत्वेवं को दोष इति चेदाह । सचेद्भगवन्नित्यादि । कथ- मिति क्षेपेणैवेत्यर्थः । उपचयार्थमाह । न च भगवन्नि- त्यादि । तथा चोक्तम् ।

हानिवृद्धी न युज्येते निरालापस्य वस्तुनः ।
भावनाख्येन किं हीनं वर्त्मना किमुदागतम् ॥ ५६ ॥ इति ।

परमार्थतोऽनिष्टापादनमपि न भवतीत्याह । एव- मेतदित्यादि (p. 349, 1) । संवृत्या तु यथानुत्तरा सम्यक्- संबोधिस्तथा भावनामार्गोऽर्थक्रियाकारीति कथयन्नाह । अपि तु खलु पुनरित्यादि, नैवं भवतीति । दानपारमिता विवर्धते वा परिहीयते वेति वस्तूपलम्भयोगेनैवश्चित्त- मुत्पद्यते । यथानुत्तरेति । यथाधिपत्यमात्रेण निरति- शयाधानाऽनुत्तरा सम्यक्सम्बोधिर्विनेयानां पुण्यज्ञानानु- रूपतया विशिष्टार्थप्रतिभासिचित्तजननद्वारेण परिणा- मितपुण्यवर्धनात्संवृत्याभिमतार्थस्य साधिका तथा परि- णामयतीत्यर्थः । तद्वदयमप्यागन्तुकमलापगमाद्भावनया साक्षात्कृतो भावनामार्गो मायोपमत्वान्निरतिशयाधानो यथासंवृत्या विपक्षप्रतिपक्षयोरपगमोदयक्रमेणार्थक्रिया- कारी तथोपन्यस्यत इति मतिः । तथा चोक्तम् ।

यथा बोधिस्तथैवासाविष्टस्यार्थस्य साधकः । इति ।

अस्यैवार्थस्य विस्तरेण निर्देशार्थं पुनरपरमित्यादिपञ्च-हारकोपादानम्। किं लक्षणा बोधिरित्याह। का पुनरेषेत्यादि (p. 350, 21)। तथतैषेति (p. 351, 1)। तथता-स्वरूपामायोपमनिष्प्रपञ्चज्ञानात्मकधर्मकायादिमयतथा-गतस्वभावेति यावत्। भावनामार्गोऽपि तथतास्वभाव एवेत्यभिप्रायः।

तथा चोक्तम्।

तथतालक्षणा बोधिः सोऽपि तल्लक्षणो मतः॥४७॥ इति।

न च सुभूते तथता विवर्धते वा परिहीयते वा तत्स्व-रूपत्वात्तथा बोधिमार्गाविपीति शेषः। एवं हि हेतुफलयोः फलहेत्वर्थापरस्परस्वभावानुविधानाद्धेतुफलसम्बन्धावैप-रीत्यमुद्भावितं स्यात्। पुनरपि संवृत्या मार्गस्य सामर्थ्य-मावेदयन्नाह। सचेद्बोधिसत्त्व इत्यादि। तत्प्रतिसंयुक्तैरिति। भावनामार्गप्रतिबद्धैः। अभीक्ष्णं बहुलमिति। प्रयोग-पृष्ठावस्थाभेदेन द्वयोपादानम्। मौलावस्थायां तन्मयत्वेन विहरणानुपपत्तेः। एवमिति। तथारूपेण। उपसंहरन्नाह। एवं खलु सुभूत इत्यादि। अर्थस्येति। भावनामार्गस्य॥

अभिसमयालङ्कारालोकायां प्रज्ञापारमिताव्याख्यायां

शून्यतापरिवर्तो नामाष्टादशः॥

---

संवृत्याप्यर्थक्रियाविशिष्टार्थप्रतिभासिचित्तजननद्वारेण न घटत इत्याशङ्कयन्नाह। किं पुनर्भगवन्नित्यादि (p. 352, 2)। एकैकस्मिंश्चित्ते पूर्वापरीभूते बुद्धबोधिनिष्पादकसर्वाकारज्ञतादिसमस्तार्थाप्रतिभासनान्नैवैकैकेन प्रथमेन चित्तोत्पादेन पश्चिमेन वा बोधिमभिसंबुध्यते बोधिसत्त्व इत्यर्थः। एकविज्ञानसन्ततयः सत्त्वा इति वचनादसम्भवित्वेन किं युगपदुत्पन्नसमीहितार्थनिष्पादकधर्मप्रतिभासेनानेकचित्तक्षणेन बोधिमभिसम्बुध्यत इति पक्षो नाशंकितः। विदितानुत्तरबुद्धबोधिनिष्पादकधर्मस्वरूपेण क्रमोत्पत्त्युपपन्नपूर्वापरीभूतानेकचित्तक्षणेन बोधिमभिसम्बुध्यत इत्ययमपि पक्षो न संगच्छत इत्याह। पौर्वको भगवन्नित्यादि। असमवहित इति। पश्चिमप्रथमयोर्यथाक्रमं निरन्वयोदयविनाशेन परस्परमसम्बन्धादसंश्लिष्टः। कथमिति। सम्बन्धाभावाद्विशिष्टार्थप्रतिभासिचित्तानुत्पादान्नैव कुशलमूलानामुपचयो भवति। ततो नानुत्तरा सम्यक्संबोधिरिति भावः। पूर्वोक्तपक्षस्यानभिमतत्वात् पश्चिमपक्षे प्रसिद्धदीपदृष्टान्तयोगेन परिहारार्थमाह। तत् किं मन्यस इत्यादि। तैलप्रद्योतस्येति। प्रदीपस्य। प्रथमाभिनिपातेनेति। प्रथमक्षणमीलितेन। नो हीदमिति प्रत्येकमसामर्थ्यादुक्तम्। तदेव स्पष्टयन्नाह। नहि भगवन्नित्यादि। प्रथमे ज्वालावर्त्योर्मीलनक्षणे द्वितीयक्षणमन्तरेण स्वकारणपरम्पराक्रमायातसमानकालसंहतोत्पत्त्यविशिष्टत्वात्। कार्यकारणलक्षणदाह्यदाहकभावानुपपत्तौ नार्चिषा प्रथमाभिनिपातेन सा वर्तिर्दग्धा।

पश्चिमेनैव दीपक्षणेन तर्हि दग्धेति चेदाह। न च प्रथमाभिनिपातमनागम्यार्चिषा सा वर्तिर्दग्धेति। अपि तु प्रथमं दीपक्षणमपेक्ष्यार्चिषा पश्चिमेन सा वर्तिर्दग्धा। प्रथमक्षणमन्तरेण पश्चिमक्षणासम्भवात्। प्रथमक्षणवत्पश्चिमक्षणस्यापि नय इत्याह। न च भगवन्नित्यादि। द्वितीयेऽपि विशिष्टज्वालावर्त्योरुत्पत्तिक्षणे प्रथमक्षणमन्तरेण नित्यसत्त्वादिप्रसङ्गतया संहत्युत्पादाभावात्कार्यकारणलक्षणदाह्यदाहकभावविरहे पश्चिमाभिनिपातेनार्चिषा न सा वर्तिर्दग्धा। प्रथमेनैव तर्हि दीपक्षणेन दग्धेति चेदाह। न च पश्चिमेत्यादि। अपि तु पश्चिमं दीपक्षणमपेक्ष्यार्चिषा पूर्वेण वर्तिर्दग्धा। पश्चिमक्षणमन्तरेण प्रथमक्षणस्य दाहेऽसामर्थ्यात्। प्रत्येकमसामर्थ्येऽर्थादुभयोरभ्युपगतसामर्थ्यस्याहत्यप्रतिपादनार्थं पुनरपि प्रश्नयन्नाह। तत्किं मन्यसे सुभूतेऽपि नु सा वर्त्तिर्दग्धेति। अभ्युपगतार्थस्यान्यथाकर्तुमशक्यत्वादाह। दग्धा भगवन्नित्यादि। यदि नाम पूर्वोत्तरक्षणयोर्यथाक्रमं तुल्यकालनिरन्वयविनाशोदयात् परस्परासंस्पृष्टत्वं, तथापि यदा संहतविशिष्टोत्पन्नं प्रथमदीपवर्तिक्षणमिदं प्रत्ययतात्मकप्रतीत्यसमुत्पादधर्मतया समपेक्ष्याविचारैकरम्यत्वेन हेतुफलसम्बन्धबलात्तदाहितसामर्थ्यातिशय एव विशिष्टो द्वितीयदीपवर्त्तिक्षणः स्यात्, तदा निर्हेतुकविनाशेऽपि कार्यकारणलक्षणदाह्यदाहकभावसद्भावात् प्रथमपश्चिमक्षणाभ्यां वर्तिर्दग्धेत्यर्थः। अनन्तरमर्थं प्रकृतार्थेन योजयन्नाह। एवमेव सुभूत इत्यादि। सुबोधम्। पूर्वापरीभूताभ्यां

प्रत्येकमनभिसम्बोधिर्युगपदुत्पन्नैस्तर्ह्यभिसम्बुध्यत इति चेदाह। न च तैश्चित्तोत्पादैरिति (p. 353, 3)। युगपदुत्पन्नैरपि बहुभिश्चित्तक्षणैर्नाभिसम्बुध्यते। एकविज्ञानसन्ततयः सत्त्वा इति वचनादसंभवित्वेनेति भावः। अन्यथा तर्हि बुध्यत इति चेदाह। न चान्यत्र तेभ्यश्चित्तोत्पादेभ्योऽभिसंबुध्यत इति। यथोक्तचित्तव्यतिरेकेण चित्तान्तरेण नाभिसम्बुध्यते, असंभवात् सर्वथा तर्हि बोध्यसम्भवः स्यादित्याह। अभिसम्बुध्यते चेत्यादि। पूर्वापरीभूतक्षणयोरेकविषयोपयोगज्ञापनपरेण दीपदृष्टान्तन्यायेन बोधिनिष्पादककतिपयपदार्थप्रतिभासि प्रथमविज्ञानं पूर्ववत्प्रतीत्य तत्प्रतिभासाभ्यधिकविशिष्टार्थप्रतिभासिपश्चिमविज्ञानोदयादाभ्यां चित्तोत्पादाभ्यामभिसम्बुध्यते। बोधिसत्त्वोऽनुत्तरां बोधिमित्यर्थः। यथोक्तेनैव च दीपदृष्टान्तेनाष्टप्रकारा गम्भीरधर्मता प्रतिसर्तव्या। तथा चोक्तम्।

पूर्वेण बोधिर्नो युक्ता मनसा पश्चिमेन वा।
दीपदृष्टान्तयोगेन गम्भीरा धर्मताष्टधा ॥५८॥ इति।

प्रसङ्गागतं निर्दिश्येदानीं भावनामार्गस्थबोधिसत्त्वानामवैवर्तिकलक्षणकथनाय यस्मिन् विषयेऽष्टविधगाम्भीर्यं तद्वक्तव्यमित्युत्पादगाम्भीर्यं तावत्कथयन्नाह। गम्भीरोऽयं भगवन्नित्यादि। अभिसंबुध्यते चेत्यादिना संवृत्या क्षणद्वयेन बोध्यधिगमोऽभ्युपगतः। सोऽपि न युक्त इत्याह। तत्किं मन्यस इत्यादि। यच्चित्तं प्रथमक्षणवर्ति निरुद्धमपि नु तत्किं द्वितीयक्षणे संवृत्या पुनरुत्पत्स्यते, यतः क्षणद्वयेन बोधिर्युक्ता स्यात्। निरवयवविनष्टस्य पुनरुत्पादासम्भवा-

दाह। नो ह्येदमिति। हेतुमन्तरेण फलासम्भवात् पश्चिमक्षणव्यापारेऽपि पारम्पर्येण प्रथमक्षणव्यापारोपचारात् क्षणद्वयेन बोधिर्युक्ता न तु संवृत्यापि प्रथमक्षणस्य मुख्यतो व्यापार इत्यर्थः। ततश्चेदमुक्तं स्यात्। न पूर्वापरक्षणाभ्यां न च भावनागम्य विशिष्टार्थोत्पादनमिदमुत्पादगाम्भीर्यमिति। निरोधागाम्भीर्यार्थमाह। तत् किं मन्यसे सुभूते यच्चित्तमुत्पन्नमपि नु तन्निरोधधर्मीति। तच्चोत्पन्नमतीतं विनष्टसत्ताकमिति यावत्। तत्त्वेन निरोधरूपत्वादाह। निरोधधर्मीति। निरोधः शून्यता स एव धर्मोऽस्य विद्यत इति निरोधधर्मि। तथतात्मकमित्यर्थः। तस्य किं द्वितीये क्षणे निरोध इत्याह। तत् किं मन्यसे यन्निरोधधर्मि अपि नु तन्निरोत्स्यत इति। उत्पन्नमात्रमेव तन्निरोधग्रासतां गतं तत्प्रकृतित्वात् किं पुनर्निरोत्स्यत इत्यभिप्रायादाह। नो हीदं भगवन्निति (p. 354, 1)। अनागतं किं निरोधधर्मोपेतमित्याह। तत्किं मन्यसे सुभूते यच्चित्तमनुत्पन्नमपि नु तन्निरोधधर्मीति। नो हीदमिति। भावनिवृत्तिस्वभावत्वाद्विनाशस्य नैवानुत्पन्नं निरोधधर्मि। तस्य किं निरोधोऽस्ति क्षणान्तर इत्याह। तत् किं मन्यसे सुभूते यन्निरोधधर्मि अपि नु तन्निरोत्स्यत इति। नो हीदमिति। प्रथमक्षणाभावेन द्वितीयक्षणनिरोधविरहान्नैव क्षणान्तरे निरोत्स्यते। वर्तमानस्य तर्हि निरोध इति चेदाह। तत्किं मन्यसे सुभूते यच्चित्तमनुत्पादानिरोधधर्मि अपि नु तन्निरोत्स्यत इति। वर्तमानमपरोत्पादवैयर्थ्या-

दनुत्पादधर्मि । सत्ताकाले विनाशाभावादनिरोधधर्मि । नो ह्रीदमिति । एकानेकस्वभाववैधुर्यादिति मतिः। यद्येवमभावस्तर्हि निरुध्यत इत्याह। तत् किं मन्यसे सुभूते यो धर्मः प्रकृत्या स्वभावनिरुद्ध एव स धर्मो निरोत्स्यत इति। स्वरूपेण स्वभावनिरुद्धो रूपादिस्वभावरहितो यो धर्मोऽभावसञ्ज्ञकः स एव धर्मः किं निरोत्स्यते। नो ह्रीदमिति। अनन्तरं त्रैयध्विकवस्तुनिरोधनिराकरणादविद्यमानत्वेनाभावो नैव निरुध्यते। मायोपमता तर्हि निरुध्यत इत्याह। तत् किं मन्यसे सुभूते या धर्माणां धर्मता सा निरोत्स्यत इति। नो ह्रीदं भगवन्निति। धर्मताऽविचारैकरम्यताऽलीकरूपत्वात्तत्त्वेन नैव निरुध्यते। किन्तु सर्वस्यैवोत्पन्नस्य वस्तुनः प्रकृत्या मायोपमस्य संवृत्या निरोधान्निरोधगाम्भीर्यमित्युच्यते। तथतागाम्भीर्यार्थमाह। तत् किं मन्यसे सुभूते तथैव स्थास्यति यथा तथतेति। बोधिसत्त्व इति शेषः। अविकल्पज्ञानविषयोपेतत्वादाह। तथैव भगवन् स्थास्यति यथा तथतेति। त्रैयध्विकबोधिसत्त्वानां तथतावदवस्थानेऽनित्या तथता स्यादिति चेदाह। तत् किं मन्यसे सुभूते यदि तथैव स्थास्यति यथा तथता तदा मा कूटस्थाभूदिति (p. 355, 1)। अकारप्रश्लेषादकूटस्थाऽनित्या माभूत्, अपि तु नित्या कूटस्था स्यादिति किं मन्यसे।

यः प्रतीत्यसमुत्पादः शून्यता सैव ते मता।

इति वचनात् सांवृतक्षणिकपदार्थस्वभावत्वादाह। नो ह्रीदमिति। पदार्थरूपत्वान्नैव तर्हि गम्भीरेति चेदाह।

तत् किं मन्यसे सुभूते गम्भीरा तथतेति। गम्भीरा भगवन्निति। रूपादिपदार्थावगमेऽपि तद्व्यतिरिक्ता साक्षात्कर्तुमशक्यत्वात्तथता गम्भीरा दुर्बोधेति यावत्। ज्ञेयगाम्भीर्यार्थमाह। तत् किं मन्यसे सुभूते तथतायाश्चित्तमिति। तथतायामाधारभावस्याविद्यमानत्वादाह। नो हीदमिति। तथताऽव्यतिरिक्तं तर्हि चित्तं स्यादित्याह। तत् किं मन्यसे सुभूते चित्तं तथतेति। नो हीदमिति। संवृतिपरमार्थयोः परस्परपरिहाराच्चित्तं तथता नैव। अर्थादन्यच्चित्तं तथतायाः सकाशादिति चेदाह। तत् किं मन्यसे सुभूतेऽन्यत्तथतायाश्चित्तमिति।

धर्मधातुविनिर्मुक्तो यस्माद्धर्मो न विद्यते।

इत्यभिप्रायवानाह। नो हीदमिति। एतदुक्तम्। तथतातो न व्यतिरिक्तं नाप्यव्यतिरिक्तं चित्तमात्रमिदं सर्वं वस्तु ज्ञेयगाम्भीर्यमिति। ज्ञानगाम्भीर्यार्थमाह। समनुपश्यसि त्वं सुभूते तथतामिति। नो हीदमिति। तथतास्वभावत्वात्तथतां तत्त्वतो न पश्यामि। अतोऽदर्शनमेव दर्शनं ज्ञानगाम्भीर्यमिति मतिः। चर्यागाम्भीर्यार्थमाह। तत् किं मन्यसे सुभूते य एवं चरति स गम्भीरे चरतीति। एवमिति। तथतारूपेण। तत्त्वेन नैव क्वचिच्चरतीत्याह। यो भगवन्नेवं चरति स न क्वचिच्चरतीति। एतदेव स्पष्टयन् तत्कस्य हेतोरित्याशङ्क्याह। तथा हीत्यादि। एतदुक्तम्। यस्मात्तथतायां स्थितस्य तेऽनुस्थानविशेषाः समुदाचारास्तात्त्विकहेतुफलाभावाद्यथाक्रमं न प्रवर्तन्ते, न समुदा-

चरन्ति, तस्माद्धर्मतया सर्वचाचरणमेव चरणमिदं चर्यागाम्भीर्यमिति। अद्वयगाम्भीर्यार्थमाह। यः सुभूते बोधिसत्त्व इत्यादि। क्व चरतीति कस्मिन् विषयेऽनुतिष्ठति। परमार्थ इति। निमित्तानिमित्तद्वयसमुदाचाराभावाद्धर्मधातौ चरत्येवमद्वयगाम्भीर्यं स्यादिति भावः। तदेव स्पष्टयन्नाह। तत् किं मन्यसे सुभूते यो बोधिसत्त्वो महासत्त्व परमार्थे चरति स निमित्ते चरति (p. 356, 2)। नो ह्रीदमिति। निमित्तानिमित्तसञ्ज्ञाप्रतिषेधाद्भावाभावाभिनिवेशलक्षणे निमित्ते नैव चरति। उपायकौशलगाम्भीर्यार्थमाह। तत् किं मन्यसे सुभूतेऽपि नु तस्य निमित्तमविभावितमिति। अविभावितमप्रहीणमत्यक्तमिति यावत्। नो ह्रीदमिति। सर्वधर्मानुपलम्भबलान्नैव निमित्तमविनष्टमस्ति। यद्येवं तर्हि निमित्तं प्रहीणमिति चेदाह। तत् किं मन्यसे सुभूतेऽपि नु बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमितायां चरतो निमित्तं विभावितं भवतीति। प्रहाणे यत्नाभावान्नैव निमित्तं प्रहीणमित्याह। न स भगवन्नित्यादि। बोधिसत्त्वचर्यां चरन्निहैव प्रत्युत्पन्ने जन्मनि कथमहं निमित्तप्रहाणमनुप्राप्नुयामिति नैवं बोधिसत्त्वो घटते व्यायच्छत इति यावत्। तत्प्रहाणे च को दोष इत्याह। सचेत्पुनरित्यादि। कथमेकस्य प्रहाणाप्रहाणे चेत्याह। एतद्भगवन्नित्यादि। एतद्रूपं संवृत्या मायोपमं यल्लक्षणं यत्स्वरूपं यन्निमित्तं यद्धेतुकं रूपादि जानाति। तत्त्वतोऽनुत्पन्नत्वादानिमित्ते च धर्मधातौ

परिजयं करोत्येवं परमार्थेन प्रहाणं संवृत्या चाप्रहाण-मिदमुपायकौशलगाम्भीर्यमिति। तदेवमचिन्त्यविमोक्ष-मुखलाभात्, परस्परविरुद्धार्थानुष्ठानेनोत्पादाद्यष्टविध-गाम्भीर्यमधिगमानुरूपव्यवहारप्रवर्तनात्, षोडशक्षणवत् भावनामार्गस्थावैवर्तिकलक्षणं ग्राह्यम्।

तथा चोक्तम्।

उत्पादे च निरोधे च तथतायां गभीरता।

ज्ञेये ज्ञाने च चर्यायामद्वयोपायकौशले॥ ५९॥ इति

अवैवर्तिकलक्षणकथनेन शैक्षो बोधिसत्त्वसङ्घोऽभिहितः तदनु संक्लेशव्यवदानविकल्पप्रहाणेन तदुभयसमताधि-गमादशैक्षो भवति, परेण शिक्षितव्याभावात् अतोऽशैक्ष-सङ्घलक्षणपरिदीपनाय संसारनिर्वाणसमता वक्तव्येत्याह। य आयुष्मन् सुभूते बोधिसत्त्व इत्यादि। अपिनुशब्दः किंशब्दार्थे प्रश्ने वर्तते। किं प्रज्ञापारमिता विवर्धते। वृद्धिमुपयातीत्यर्थः। नैव विवर्धत इत्याह। सचेदित्यादि। अत्र संसारव्यवदानाविकल्पज्ञानं यथाक्रमं स्वप्नादिवसाभि-सन्धिनोक्तम्। अभिप्रायस्त्वेवं लक्ष्यते। यदि विपक्षप्रतिपक्ष-विकल्पप्रहाणमधिकृत्य तदुभयसमतावगमाद्यथा दिवस-गतस्य भावनावृद्धिः, तदा तथा स्वप्नान्तरगतस्यापि विवर्धेत यावता यथा दिवसे न विवर्धेत तथा स्वप्नेऽपीति। एतदेव स्पष्टयितुं तत्कस्य हेतोरित्याशङ्क्याह। अविकल्पो हीत्यादि। यदि दिवसे चरतः प्रज्ञापारमिता विवर्धेत तदा-भ्याससामर्थ्यात् स्वप्नेऽपि विपुलता स्याद्यावता नैव, यस्मात्सांसारिक-वैयवदानिकधर्माणां प्रतिभासमात्रस्व-भावस्वप्नसदृशत्वेनावगमात्संसारनिर्वाणयोः स्वप्नदिवसस्व-

भावयोर्नानात्वेन विपक्षप्रतिपक्षविकल्पाभ्यां विकल्पयितुमशक्यत्वात् स्वप्नश्च दिवसश्चाविकल्पः समतात्मक इत्युक्तो भगवतेति यावत् । तथा चोक्तम् ।

स्वप्नोपमत्वाद्धर्माणां भवशान्त्योरकल्पना । इति

ननु सर्वधर्माणां स्वप्नसदृशत्वे सति दशकुशलादीनामभावः स्वप्नावस्थायामिव जाग्रद्दशायामपि स्यादित्याह । यत्पुनरायुष्मन् सुभूते स्त्री वेत्यादि (p. 357, 4) । किमिति क्षेपाभिधायित्वान्नैवेत्यर्थः । स्वरूपोपचयादाचयः । कार्यजननसामर्थ्यादुपचयः । तद्वत्स्वप्नतुल्यत्वेन प्रयोगादीनामभावाद्दिवसेऽपि शुभाशुभकर्मणोऽभावः स्यादिति भावः । परमार्थतो नैवाचयोपचयावित्याह । यथा स्वप्नोपमा इत्यादि । संवृत्या तु कर्मफलसम्बन्धस्याभीष्टत्वात् मिद्धेनोपहतं चित्तं स्वप्ने तेनासमं फलमिति दृष्टान्तासिद्धिः स्यादित्याह । अथ पुनरायुष्मन्नित्यादि । तस्य कर्मण इति स्वप्नावस्थाभाविनः । एतदेव स्पष्टयन्नाह । कथञ्चेत्यादि । तच प्रयोगादिनिष्पादनात् कायवाक्चित्तोपघाताद्वाऽहो हतः साधु हतः सुष्ठु हतः सर्वचात्मव्यापारोपलम्भान्मया हत इत्यर्थभेदो वाच्यः । एतदुक्तम् । यथा बाह्यार्थनये क्षणिकतया निर्हेतुकविनाशे कर्मजं लोकवैचित्र्यमिति सिद्धान्ताच्च परमार्थतो न कश्चिन्न केनचिद्धतो नापि कस्यचिद्द्रव्यं केनचिद्गृहीतमित्याद्युपगमे प्रवृत्तसन्ताननिरुद्धपदार्थोत्पादनात्मारणाद्यध्यवसायद्वारेणायोनिशोमनस्कारादिमतोऽकुशलादिवत् प्राणातिपातादयो दिवसे व्यवस्थाप्यन्ते, तथा स्वप्नेऽप्युपचितकुशलाकुशलस्य प्रबुद्धावस्थायामहो हत इत्यादिविकल्पेन प्रयोगावस्थाद्यभि-

निवेशपरिपुष्ट्या परिपोषप्राप्तेर्बहिरर्थनयेनापि स्वप्नावस्थायामिवेति दृष्टान्तासिद्धिः। अतो मध्यमकनयेन जाग्रदवस्थायामपि स्वप्नसदृशे वस्तुनि तदनुरूपार्थे भावाद्यभिनिवेशेनाखण्डितसकलविपर्यासबन्धनानां कुशलादयो व्यवस्थाप्यन्ते। किन्तु मिद्धादिकभ्रान्तिकारणत्वेनास्पष्टाकुशलप्रतिपत्त्या स्वप्ने न्यूनं फलं जाग्रदवस्थायां तु मिद्धादिकभ्रान्तिकारणविगमात्स्पष्टानाकुलप्रतिभासत्वेनाधिकं फलम्। स्वप्नावस्थायामपि कर्मफलसद्भावस्याभिमतत्वादभिक्षुत्वादिदोषो नोद्भावनीयः। शिक्षादत्तकवत् संवरासंवरत्वस्य भगवत्प्रज्ञप्तिवशादेवावस्थाप्यमानत्वादिति। विकल्पबलाद्यदि कर्मणः परिपोषस्तदा प्रतिपक्षविरोधेऽपि विकल्पानुवृत्त्या तथागतस्यापि स्यादित्याह। सचेदायुष्मन् सुभूत इत्यादि। विकल्पयन् क्षयसंज्ञामुत्पादयति क्षीणा मे संसारिणः स्कन्धा इत्यादि क्षयसंज्ञां करोति। तस्यापि कर्मण इति क्लेशप्रहाणकारिणो मनस्कारस्य कर्मणः स्वरूपोपचयादाचयः। कार्यजननसामर्थ्यादुपचयः स्यात्। ततश्चोपचितस्य कर्मणः प्राप्तव्यफलविशेषसद्भावादपरिनिष्पन्न एव तथागतः स्यादिति भावः। विनेयानुरोधेन तथागतस्य क्षीणा मे जातिरित्यादिविकल्पो व्यवस्थापितो न तु तत्त्वत इत्याह। नो हीदमिति (p. 358, 1)। एतदेव समर्थयितुं तत्कस्य हेतोरित्याशङ्क्याह। सर्वकल्पविकल्पेत्यादि। सर्वकल्पा रूपादयः स्वसामान्यलक्षणात्मका निर्विकल्पसविकल्पज्ञानालम्बनस्थानीयास्तेषु विकल्पस्तदुपलम्भस्तेन प्रहीणो रहितो निर्विकल्पधर्मताधिगमादित्यर्थः। आलम्बनोपलम्भमन्तरेण मानसं कर्म चित्तं चान्येषां

कस्मान्न प्रवर्तत इति चेदाह। एवमेवेत्यादि। धर्मतैषा प्रतीत्यसमुत्पादधर्मतया यस्मादनालम्बनं कर्म चित्तं च नोत्पद्यते, तस्मात्सालम्बनमेवोत्पद्यत इति। एतदेव स्पष्टयन्नाह। दृष्टश्रुतेत्यादि। तच्च,

तदतद्रूपिणो भावास्तदतद्रूपहेतुजाः।

इति न्यायेन काचिद्बुद्धिः संक्लेशालम्बना संक्लेशं परिगृह्णाति। काचिद्बुद्धिर्व्यवदानालम्बना व्यवदानं परिगृह्णाति। चेतनेति बुद्धिरित्येके। चेतना मानसं कर्मेति वचनात् कर्मैव पर्यायेणोक्तमित्यपरे। उपसंहरन्नाह। तस्मात्तर्ह्यायुष्मन्नित्यादि। अतीतानागतस्यासत्त्वेनालम्बनभावानुपपत्तेर्वर्तमानस्य चार्थस्य साकारज्ञानादिभिर्ग्रहीतुमशक्यत्वेन सर्वालम्बनशून्यत्वे सालम्बनापि चेतना कथमुत्पद्यत इत्याह। यदायुष्मन् सुभूत इत्यादि। विविक्तानीति। आलम्बनभावरहितत्वेन शून्यानि। संवृत्याऽभूतपरिकल्पालम्बनादुत्पद्यत इत्याह। निमित्तीकृत्येत्यादि। रूपादिगतमसाधारणं चिह्नं तत्त्वेनानिमित्तमपि यथादर्शनं निमित्तीकृत्यारोप्येति यावत्। यावदित्यनेन विज्ञानप्रत्ययं नामरूपमित्यादिपरिग्रहः। लोकव्यवहारमुपादायेति संवृतिमधिकृत्योत्पद्यत इत्यनन्तरं उच्यत इति शेषः। स्वप्नेऽपि कर्मफलसम्बन्धास्तित्वे प्रतिपादिते पुनरौपलम्भिकजनानुरोधेनाशङ्कयन्नाह। यदायुष्मन् सुभूत इत्यादि। परिहृतेऽप्यर्थे पुनराशङ्कायामानन्त्येन कः सचेताः परिहरतीत्यभिप्रायादाह। अयमायुष्मन् शारिपुत्र मैत्रेय इत्यादि (p. 359, 1)। कायसाक्षीति। अर्हत्त्वप्रतिपन्नको-

ऽनागामी निरोधलाभी कायसाक्षी। तद्वद्बुद्धत्वप्रतिपन्नकत्वेनार्यमैत्रेयः कायसाक्षी। एतमर्थमिति स्वप्ने परिणामितम्। किन्तद्दानमिति प्रश्नम्। सुभूतिवचनादेवार्यमैत्रेयमामन्त्रयन्नाह। अथ खल्वायुष्मन्नित्यादि। प्रतिपादितेऽप्यर्थे प्रत्येकविनेयभेदेन पुनः पुनराशङ्कायां भूयो भूयः परिहाराभिधानेऽपि न सर्वेषामेकबुद्धोत्पादकाल एव विपर्यासापनयनं शक्यं कर्तुं भव्यानामेवार्थकरणादित्येतत्प्रश्नविसर्जनाधिकारेणैवानागतबुद्धपरम्परोत्पत्तिरित्यपरिसमाप्तिनिर्देशोऽयं प्रश्नस्तत्परिसमाप्तौ सत्यां कर्तव्याभावादनागतबुद्धोत्पादवैयर्थ्यप्रसङ्गश्चेत्यभिप्रायवान् परिहर्तुकामत्वेनाह। यदायुष्मान् सुभूतिरेवमाहेत्यादि। सम्भवमधिकृत्य विकल्पयन्नाह। किं पुनरायुष्मन् सुभूते यदेतन्नामधेयमित्यादि। तच्च तावन्न शून्यता विसर्जयतीत्याह। या खलु पुनरित्यादि। न सा प्रतिबलेति। अविद्यमानत्वान्न सा समर्था। रूपादयोऽपि न शक्ता इत्याह। तमप्यहमित्यादि (p. 360, 1)। कर्तृकर्मक्रियानुपलम्भभेदेन यो धर्मो विसर्जयेत्, यो धर्मो विसर्जयितव्यः, येन धर्मेण विसर्जयेदित्युपादानम्। आत्मानं विषयीकृत्योक्तम्। यो धर्मो व्याकृत इति। सर्वधर्मानुपलम्भो न घटत इत्याह। कच्चित् पुनरित्यादि। कच्चिदिति यदि। एतदुक्तम्। यदि त्वया एते रूपादयो धर्मा एवं साक्षात्कृता यथैनान् धर्मान् वाचा भाषसे, तदा विकल्पार्थोपलम्भवदधिगतार्थोपलम्भसद्भावे विसर्जकभावेन कथं सर्वधर्मानुपलम्भ इति। नैवमधिगत इत्याह। न मयायुष्म-

न्नित्यादि। प्रयोगाद्यवस्थासु न वेझीत्यादि योज्यम्। कथं तर्हीत्याह। अपि तु खलु पुनरित्यादि। एतदुक्तम्। सर्वधर्मानुपलम्भलक्षणनिर्विकल्पकज्ञानेनैवं स्वभावाः सर्वधर्मा मायोपमत्वेन स्वभावत्वात् साक्षात्कृता यथाधिगमावस्थायां विकल्पासमुदाचारान्न कायेन स्पृश्येत, न वाचा भाष्येत, न मनसा समन्वाह्रियेत। यस्माद्विकल्पानुगमे विपर्याससमुद्भवादधिगमो न स्यात्ततश्चाधिगमोत्तरकालमुद्भावनासंवृत्या व्यवहार इति। श्रावकागोचरो निर्विकल्पकज्ञानाधिगम इत्याह। गम्भीरप्रज्ञ इत्यादि। श्रावकाणामीदृश एवाधिगम इत्याह। कुतस्ते शारिपुत्रेत्यादि। निर्विकल्पज्ञानमात्रेणाधिगमस्य तुल्यत्वाद्गम्भीरप्रज्ञोऽयमिति। नैवञ्चित्तमुत्पादनीयमित्यर्थः। तुल्यत्वमेव कथयन्नाह। समनुपश्यसि त्वमित्यादि। तं धर्मक्षयानुत्पादज्ञानलक्षणमर्हत्वं विकल्पज्ञानेनाधिगमकाले किं त्वं पश्यस्युपलभस इति यावत्। विपर्यस्तत्वेनाधिगमविरोधित्वान्नैवेत्याह। नो हीदमिति। बोधिसत्त्वानामीदृश एवाधिगमकाले न्याय इत्याह। एवमेव शारिपुत्रेत्यादि (p. 361, 1)। तदेवं कर्माभावादिचोद्यानां यथोक्ता एव प्रतिसमाधयो ग्राह्याः। तथा चोक्तम्।

कर्माभावादिचोद्यानां परिहारा यथोदिताः॥६०॥ इति

संसारनिर्वाणसमतामुपसंहर्तुं तद्देशनायास्तादात्विकं प्रयोजनमधिकृत्याह। स चरन्नोत्त्रस्यतीत्यादि। अनुपलम्भचर्यया लब्धशक्तित्वान्नाहं नाभिसम्भोत्स्येऽपितु नियतमभिसंभोत्स्य इत्येवायं योगमापद्यते। विभावितोभय-

समतो बुद्धो भवति । स्वबुद्धक्षेत्र इत्यनन्तरं सत्त्वभाजन-लोकभेदेन द्विविधबुद्धक्षेत्रविशुद्धिं निर्दिशन्नाह । पुनरपरं शारिपुत्रेत्यादि । तत्र सत्त्वलोकस्याशुद्धिर्या जिघत्सादिका तस्याः प्रतिपक्षेण दिव्योपभोगादिशुद्ध्युपसंहारतः, तथा भाजनलोकस्याशुद्धिर्या स्थाणुकण्टकादिका तस्याः प्रति-पक्षेण समपाणितलजातादिशुद्ध्युपसंहारतो यथाक्रमं द्विविधबुद्धक्षेत्रविशुद्धिरित्यभिसंक्षेपतः । तथा चोक्तम् ।

सत्त्वलोकस्य याऽशुद्धिस्तस्याः शुद्ध्युपहारतः ।

तथा भाजनलोकस्य बुद्धक्षेत्रस्य शुद्धता ॥६१॥ इति ।

विस्तरस्तु यथासूत्रं सुबोधम् । तत्र किञ्चिदुच्यते । तथैव तत्कस्य हेतोरित्याशङ्क्याह । तथा हि तेन सर्वमित्यादि । एतदेव स्पष्टयन्नाह । तेनैवं चित्तमित्यादि । तत्र सर्वेण वर्णसंस्थानवस्तुरूपेण, सर्वं तज्जातिभेदभिन्नं वस्तु, सर्वथा तदेकैकजातिप्रकारभेदेन, सर्वं यथासम्भवप्रकारम् । स्व-रूपविरहान्न भविष्यन्ति, तत्कृतचिह्नाभावान्न प्रज्ञास्यन्ते । तथैव तत्कस्य हेतोरित्याशङ्क्याह । सर्वस्वपरित्यागकुश-लाभिरता हीत्यादि । एतदेव विस्तारयन्नाह । तेनैवं चित्तमित्यादि । व्यापादक्रोधरोषा (p. 362, 2) इति । व्यापादः सत्त्वविद्वेषः । क्रोधः सत्त्वासत्त्वयोराघातः । रोषो वैरानुबन्धः । चित्तविशेषोत्पादात्तथा च करिष्यामि । प्रतिपत्त्या सम्पादनात्तथा च प्रतिपत्स्ये । अतिशयवीर्य-करणाद्यापत्स्ये । पानीयाभावात्पानीयकान्तारं तद्भयम् । तथैव तत्कस्य हेतोरित्याशङ्क्याह । असंत्रस्तेत्यादि ।

अष्टाङ्गोपेतपानीयं सुगन्धिस्वादुशीतलम् ।
लघ्वच्छं शुचि पातुश्च कुक्षिकण्ठौ न बाधते ॥

इत्युदकलाभादष्टाङ्गोपेतपानीयलाभिनः । मृदुमध्याधिमात्रभेदेन सुखिताः सुखसमङ्गिनः सर्वसुखसमर्पिताः (p. 363, 13) । दर्शनपथप्राप्तत्वे प्रादुर्भविष्यति । उपभोगयोग्यत्वेनोत्पत्स्यते । स्थितिहेतुत्वादन्नादयो जीवितपरिष्काराः । चिरेणेत्यतिदीर्घकालेन । पूर्ववत्तत्कस्य हेतोरित्याशङ्क्याह । यो हि चित्तक्षण इत्यादि (p. 364, 9) । यस्माद्यश्चित्तक्षणस्तत्त्वतोऽनुत्पन्नः संवृत्या सैषा चिरकालवती प्रथमकारणरहितत्वादनादिरपूर्वा कोटिः । पर्यन्तो भागो बुद्धत्वावस्था शून्यतास्वभावत्वाद्यदुताकोटिस्तस्माच्चिरेणाभिसम्बोधादुत्त्रासादि न कर्तव्यम् । दुष्करसंज्ञा च नोत्पादयितव्येत्यर्थः । भयभैरवेभ्य इति । बाह्यं व्याडादिभयम् । अध्यात्मं ज्वरादिभैरवम् । यथोक्तबुद्धक्षेत्रपरिशोधनेऽशक्यानुष्ठानत्वान्न कश्चित्प्रवर्तत इति चेदाह । अथ खलु तत्र पर्षदीत्यादि (p. 365, 7) । अत्र स्थान इति । अभ्यासयोगेन शक्यत्वान्निर्दिष्टबुद्धक्षेत्रपरिशोधने, तदाशयसम्पत्तिबलाद्याकरणनिमित्तं जातमित्याह । अथ खलु भगवानित्यादि । मूर्धन्यन्तरधीयत इति । धर्मतैषा यदा तथागतत्वेन व्याकरणं कर्तव्यं, तदोष्णीषसन्धौ रश्मयोऽन्तर्लीनाः । निमित्तदर्शनात्सञ्जातातिशयत्वेनार्यगङ्गदेवा विहितपूजेत्यादि । समनन्तरप्रादुष्कृते चेत्यादि । बहुधा गृहीतसम्बन्धत्वेन स्मितप्रयोजनं प्रश्नयन्नाह । अथ खल्वायुष्मानानन्द इत्यादि (p. 366, 3) । स्वरूपमावेदयन्नाह ।

इयमानन्देत्यादि। सम्यक्सम्बोधिमभिसम्भोत्स्यत इति व्याकरणेन पार्षदानामेवंविधबुद्धक्षेत्रविशुद्धिलाभसम्प्रत्यये साक्षिभावः सूचित इति केचित्। अभिसम्बोध्यवस्थातः प्रागपि व्याकुर्वन्नाह। सेयमानन्देत्यादि। व्याकृतानामेव तत्रोत्पादाद्विस्मय इत्याह। अथ खल्वायुष्मत (p. 367, 5) इत्यादि। साधूक्तत्वादाह। एवमेतदित्यादि। तत्र क्लेशावरणप्रहाणादुत्तीर्णपङ्काः। मूर्धाभिसमयेऽवस्थितत्वाद्बोधिपरिनिष्पत्त्युपगताः। श्रावकसङ्घमपि व्याकुर्वन्नाह। तस्य खलु पुनरित्यादि। तथैव तत्कस्य हेतोरित्याशङ्क्याह। तावन्त इत्यादि। कृतपुण्यानां निष्पन्नप्रणिधानत्वेनाह। तेन खलु पुनरित्यादि। उपसंहरन्नाह। सुवर्णपुष्पस्येत्यादि (p. 368, 2)। अत्याश्चर्यं श्रुत्वा पूर्वयोगं प्रश्नयन्नाह। अनया भगवन्नित्यादि। स्वरूपमावेदयन्नाह। अनयानन्देत्यादि। प्रणिधानानुरूपमेवेदं सर्वप्रकारव्याकरणमित्याह। कृतपरिकर्मेत्यादि (p. 369, 5)। तत्र प्राप्तदर्शनमार्गत्वात्कृतपरिकर्मा। विदितभावनापथस्वभावत्वात्कृतपर्यन्ता। तथैव स्वहस्तयन्नाह। एवमेतदित्यादि॥

अभिसमयालङ्कारालोकायां प्रज्ञापारमिताव्याख्यायां गङ्गदेवा भगिनीपरिवर्तो नामैकोनविंशतितमः॥

---

निष्पादितबुद्धक्षेत्रविशुद्धिनोपायकौशलेन सम्भारं परिपूर्य पश्चाद्यथाभव्यतया बुद्धकृत्यं स्वबुद्धक्षेत्रे करणीयमित्युपायकौशलं वक्तव्यम्। तत्रास्य विषयं प्रतिपादयितुं प्रश्नयन्नाह। प्रज्ञापारमितायामित्यादि (p. 370, 1)। परिहारार्थमाह। इह सुभूत इत्यादि। रूपमिति तां धर्मतां धर्मतयेति तां शून्यतां धर्मतया शून्यतया रूपं वस्त्विति प्रत्यवेक्षमाणो यथा न समनुपश्येच्छून्यतां शून्यतास्वभावेनास्तीति यथा नोपलभते तथा प्रत्यवेक्षितव्यमिति यावत्। एतदुक्तम्। मायोपमः शून्यतादिरुपायकौशलविषय इति। कथं पुनरभ्यासेऽपि नाधिगच्छतीत्याह। यद्भगवन्नित्यादि। अस्य परिहारेणोपायकौशलप्रयोगं निर्दिशन्नाह। यतः सुभूत इत्यादि। सर्वाकारवरोपेतामिति दानाद्यविकलाम्। असमाहित एवेति। प्रज्ञापारमिता च महोपायकौशलात्मिका मया परिगृहीता भविष्यति। न च शून्यता साक्षात्कृतेत्यभिप्रायादेतन्निष्ठ एव शून्यतासमाधौ चित्तं धारयति। अत्र च मध्ये जिनजननीसामर्थ्यान्न परिहीयते बोधिपक्षैर्धर्मैः, न चास्रवक्षयं कामभवास्रवप्रहाणं सञ्चिन्त्य सत्त्वार्थं प्रतिजन्मप्रतिग्रहात् करोति शून्यतासमाध्यालम्बनादास्रवक्षये च परिजयं करोतीत्यर्थः। एतदेव स्पष्टयन्नाह। यस्मिन् समय इत्यादि (p. 371, 3)। कथमभ्यासेऽपि न साक्षात्कर्तव्यमिति। तत्कस्य हेतोरित्याशङ्क्याह। एवमारूढकुशलेत्यादि। भूतकोटिं न साक्षात्करोतीति। एतदुक्तम्। सर्वाकारभावनापरिजयप्रत्यवेक्षासाक्षात्करणकालाकालज्ञानप्रयोगसामर्थ्यात्तस्मिन् समाधौ स्थितोऽपि न शून्यता-

मधिगच्छेदिति। उपायः पुनर्दशविधो भवति। तत्र तावत् प्रतिबन्धसमतिक्रमणेनान्तरायिकधर्मसमतिक्रमणोपायार्थमाह। तद्यथापि नामेत्यादि। तत्र शौर्यरूपगुणैर्मृदुमध्याधिमात्रैः यथाक्रममुपेतत्वात्परमशूरश्च भवेदित्यादि नवपदानि वाच्यानि। ग्रन्थार्थग्रहणसमर्थत्वान्मेधावी। करणपाटवाद्वचनसमर्थः। प्रश्नपरिहारात् प्रतिवचनसमर्थः। स्तम्भितत्वाभावात्प्रतिभानसम्पन्नः। स्वीकारार्थसम्पादनात्प्रतिपत्तिसम्पन्नः। हेयोपादेयत्वेन कालादीनां परिज्ञानात्कालदेशज्ञः, स्थानज्ञः। मुख्यतो धनुषि सुशिक्षितत्वादिष्वस्त्रेषु परमगतिं गतः। बहूनां दृढानाञ्च प्रहरणानां निवारकत्वाद्बहुप्रहरणावरणो दृढप्रहरणावरणः। पराऽवर्जनकराः कायादिविकाराः कलाः। चित्रकर्मादीनि शिल्पस्थानानि। स्मृतिमानित्यादि। सुगमम्। निर्वर्तनसामर्थ्यान्निस्तरणसमर्थः। केनचिदेव कारणसामग्रीयोगेनामित्राद्युपनिपातेन। चित्तवाक्कायविकारापादनाद्यथाक्रमं महाप्रतिभयं भीषणं रोमहर्षणम्। सर्वोपद्रवरहितत्वेन शान्त्या क्षेमेणापक्रमयिष्यामि। शरीरसौस्थित्यात्पुष्ट्या स्वस्तिना परिमोचयिष्यामि। एकद्रव्याभिलाषाद्वैरानुबन्धेन प्रत्यर्थिकाः। अमित्रपक्षपतिताः प्रत्यमित्राः। दयालुत्वादतिस्निग्धः। दाक्षिण्ययोगात्सानुक्रोशः। तथैव तत्कस्य हेतोरित्याशङ्क्याह। तथा हि भगवन्नित्यादि (p. 373, 3)। कायचित्तपीडारहितत्वादक्षतोऽनुपहतः। दृष्टान्तमेवं निर्दिश्य दार्ष्टान्तिकार्थमाह। एवमेव सुभूते बोधिसत्त्व इत्यादि। तत्र सत्त्वेषु सुखसंयोगदुःखवियोग-

सुखाविश्लेषहितकरणाशयसमृद्धौ सपरिवाराः समाधयो यथाक्रमं मैत्रीकरुणामुदितोपेक्षाः । तथैव तत्कस्य हेतोरित्याशङ्क्याह । तथा ह्यस्येत्यादि । एतदेव स्पष्टयन्नाह । यस्मिन् समय इत्यादि । मारपक्षं चातिक्रम्येत्यनेनान्तरायिकधर्मसमतिक्रमणोपायः सूचितः स्यात् । उपसंहरन्नाह । यस्मिन्नित्यादि (p. 374, 2) । विभावितसर्वसमत्वेनाप्रतिष्ठितविहारोपायं कथयन्नाह । तद्यथापि नाम सुभूते पक्षीत्यादि । न च तत्रापि निश्रितो न च प्रतिष्ठित इति । आकाशस्यासत्त्वान्न तत्र बुद्ध्या निश्रितो नापि कायेन स्थितोऽथ च तस्मिन्नेव विहरतीत्यप्रतिष्ठितविहारोपायो ज्ञापितः स्यात् । दार्ष्टान्तिकार्थमाह । एवमेव सुभूते बोधिसत्त्व इत्यादि । प्रणिधानसमृद्ध्या पूर्वप्रणिधानानुवृत्त्युपायं निर्दिशन्नाह । तद्यथापि नाम सुभूते बलवानित्यादि । यावन्नाकांक्षेदित्यनेन प्रणिधानावेधमुपादायानुवृत्तिर्ज्ञापिता । प्रकृतार्थं बोधिसत्त्वे नियोजयन्नाह । एवमेव सुभूत इत्यादि । भावनाविशेषमार्गाभ्यां यथाक्रमं परिपक्वानि सुपरिपक्वानि । उपसंहरन्नाह । तस्मात्तर्हि सुभूत इत्यादि (p. 375, 1) । स्वभ्यस्तसर्वदुष्करत्वेनासाधारणोपायं प्रतिपादयन्नाह । दुष्करकारको भगवन्नित्यादि । श्रुतचिन्ताभावनाभिर्यथाक्रमं शून्यतायां चरतीत्यादि योज्यम् । साधूक्तत्वेनानुवदन्नाह । एवमेतदित्यादि । तथैव तत्कस्य हेतोरित्याशङ्क्याह । तथा हीत्यादि । अमुमेवार्थं समर्थय-

न्नाह। यदा बोधिसत्त्व इत्यादि। पूर्ववत्तत्कस्य हेतोरित्याशङ्क्याह। तथा ह्यस्येत्यादि। न साक्षात्करोतीति (p. 376, 2)। सर्वसत्त्वापरित्यागाशयसामर्थ्येन भूतकोटेरनधिगमादसाधारणोपायो ज्ञापितः स्यात्। सर्वधर्मानुपलम्भादसक्तोपायं वक्तुमाह। पुनरपरं सुभूते यदा बोधिसत्त्व इत्यादि। सत्त्वसंज्ञयेति। भावाभिनिवेशेन। न च परिहीयत इति। आस्वादनोपलम्भेन परिहाणिसम्भवान्मैत्र्यादिसर्वकुशलधर्मापरिहाणिवचनादनास्वादनोपायः सूचितः स्यात्। तथैव तत्कस्य हेतोरित्याशङ्क्याह। उपायकौशल्यपरिगृहीतो हीत्यादि। शून्यताविमोक्षमुखत्वेनानुपलम्भोपायार्थमाह। पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्यैवं भवति। दीर्घरात्रममी सत्त्वा उपलम्भे चरन्तीत्यादि। शून्यतासमाधिविमोक्षमुखं समापद्यत इत्यादि (p. 377, 2)। शून्यतासमाधिविमोक्षमुखभावनापरिपूरिगमनादनुपलम्भोपायः परिदीपितः। निमित्तानुपलम्भादनिमित्तोपायार्थमाह। पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्यैवं भवति। दीर्घरात्रममी सत्त्वा निमित्तसंज्ञयेत्यादि। अनिमित्तं समाधिविमोक्षमुखं समापद्यत इति। अनिमित्तसमाधिविमोक्षमुखभावनापरिपूरिगमनेनानिमित्तोपायो गदितः। प्रणिधानानुपलम्भेनाप्रणिधानोपायार्थमाह। पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्यैवं भवति। दीर्घरात्रममी सत्त्वा नित्यसञ्ज्ञयेत्यादि।

अप्रणिहितं समाधिविमोक्षमिति (p. 378, 2)। अप्रणिहित-समाधिविमोक्षमुखभावनापरिपूरिगमनेनाप्रणिधानोपायः सूचितः। शून्यतादीनां श्रावकादिसाधारणत्वेऽपि तदु-पायविशेषणार्थमाह। यो हि कश्चित् सुभूते बोधिसत्त्व इत्यादि। तत्र शून्यतादित्रिविमोक्षमुखविपर्ययेणोपलम्भे चरिताविन इत्यादि त्रिधोक्तं तस्यैव च व्याख्यानं पिण्डसंज्ञायामित्यादिना यथाक्रमं कृतम्। शून्यतात इत्यादावाद्यादित्वेन सप्तम्यन्तात्तसिः। एतदुक्तम्। रूपादियोगादेवं ज्ञानधर्मसमन्वागतो बोधिसत्त्वः शून्यतादौ यतेदित्यस्थानमेतदिति। प्रश्नपूर्वकावैवर्तिकधर्मकथनेना-वैवर्तिकलिङ्गोपायार्थं प्रश्नं कर्तुं शिक्षयन्नाह। एवं हि बोधिसत्त्व इत्यादि (p. 379, 3)। व्यतिरेकमुखेन निर्दिश-न्नाह। सचेदित्यादि। तथैव तत्कस्य हेतोरित्याशङ्क्याह। यो ह्यसावित्यादि। तत्रावेणिको धर्मः सर्वसत्त्वापरि-त्यागस्तं श्रुतचिन्ताभावनामयज्ञानोत्पादनार्थं यथाक्रमं न सूचयति, न प्रभावयति, नोपदर्शयति, यतो न प्रजानाति परिपृष्टो न व्याकरोति न विसर्जयतीति यथा-संख्यं योज्यम्। तां भूमिमित्युपायकौशल्यम्। अन्वयमुखेन प्रतिपादयितुं काङ्क्षा प्रश्नयन्नाह। स्यात्पुनर्भगवन्नित्यादि (p. 380, 1)। तथैव परिहरन्नाह। स्यात्सुभूते इत्यादि। एवं प्रतिपद्येतेत्यादि। उपायकौशल्यं सर्वसत्त्वापरित्याग-श्चाभ्यसनीय इत्यवगच्छेत्। एवं विसर्जयेदिति। परैः पृष्टस्यावैवर्तिकाधिगमानुरूपव्याकरणाव्याकरणाभ्यामवैव-

र्तिकानवैवर्तिकभावधारणेनावैवर्तिकलिङ्गोपायः सूचितः स्यात्। सर्वविषयज्ञानत्वेनाप्रमाणविषयोपायार्थं चाह। तेन हि भगवन्नित्यादि। असंहार्या इति। तेषां बोधिसत्त्वानामसंहार्यत्वेनोपायस्य विषयाप्रमाणता ज्ञापिता भवेत्। तदेवं विषयप्रयोगाभ्यां समन्वागतं यथोक्तमेव दशविधमुपायकौशलं ग्राह्यम्। तथा चोक्तम्।

विषयोऽस्य प्रयोगश्च शात्रवाणामतिक्रमः।
अप्रतिष्ठो यथावेधमसाधारणलक्षणः ॥ ६२ ॥
असक्तोऽनुपलम्भश्च निमित्तप्रणिधिक्षतः।
तल्लिङ्गं चाप्रमाणं च दशधोपायकौशलम् ॥६३॥ इति

कः पुनस्त्रिसर्वज्ञतायाः सर्वाकाराभिसम्बोधस्य च विशेषः। प्रतिनियताकारविषयास्तिस्रः सर्वज्ञता यथोक्तेनाकारप्रतिनियमेन, समस्ताकारविषयस्तु सर्वाकाराभिसम्बोध इति केचित्। लाक्षणिकं त्रिसर्वज्ञताव्यवस्थानं प्रायोगिकस्तु सर्वाकाराभिसम्बोध इत्यन्ये। विपक्षप्रतिपक्षव्यवस्थानप्रभावितः सर्वाकाराभिसम्बोधस्त्रिसर्वज्ञतास्तु न चैवं प्रकृतिशान्ताकारत्वादित्यपरे। समाप्तः सर्वाकाराभिसंबोधः ॥

प्राप्तसर्वाकाराभिसम्बोधस्येदानीं प्रकर्षपर्यन्तोऽधिगम इति मूर्धाभिसमयो वक्तव्यस्तत्र लिङ्गं तावदस्याभिधानीयं येनासौ लिङ्ग्यते। ततः स्वप्नावस्थायामप्यत्यभ्यासात्स्वप्नसदृशसर्वधर्मेक्षणं प्रथमं लिङ्गं वक्तुमाह। सचेत्पुनः सुभूते बोधिसत्त्वो महासत्त्वः स्वप्नान्तरगतोऽपीत्यादि। एतदुक्तम्। एवं प्रज्ञोपायपरिगृहीता बोधिसत्त्वस्य योग-

धर्मभावना मूर्धप्राप्ता यत् स्वप्नान्तरेऽप्यस्य योगविदर्शनामनस्कारास्तथाभूतधर्मा साक्षात्करणेन सत्त्वधातुसापेक्षा एव प्रवर्तन्त इति। द्वितीयश्रावकादिभूमिस्पृहाचित्तानुत्पादनलिङ्गार्थमाह। पुनरपरं सुभूत इत्यादि। तत्रापूर्वप्राप्त्यभिलाषः स्पृहा। प्राप्तावियोगेच्छा अनुशंसा चित्तम्। तृतीयतथागतादिदर्शनलिङ्गार्थमाह। अनेकशतायाः पर्षद इत्यादि। चतुर्थबुद्धर्द्धिविकुर्वितोपलब्धिलिङ्गार्थमाह। वैहायसमभ्युद्गम्येत्यादि (p. 381, 5)। पञ्चमस्वप्नोपमधर्मदेशनाचित्तोत्पादलिङ्गार्थमाह। बोधिसत्त्वो महासत्त्वो नोत्त्रस्यतीत्यादि। षष्ठबुद्धक्षेत्रोपायप्रहाणानुस्मरणलिङ्गार्थमाह। नैरयिकान् सत्त्वानित्यादि। किमिदमपायविशुद्धिर्लक्षणं नामेति प्रश्नयन्नाह। तत्र सुभूते कथमित्यादि (p. 382, 4)। परिहरन्नाह। सचेत्सुभूते बोधिसत्त्व इत्यादि। सप्तमनगरादिदाहप्रशमनसत्याधिष्ठानसमृद्धिलिङ्गार्थमन्वयमुखेनाह। नगरदाहे वेत्यादि। मृदुमध्याधिमात्रभेदेनापगमाद्यथाक्रममुपशाम्यतु शीतीभवतु अस्तं गच्छत्विति योज्यम्। व्यतिरेकमुखेनापि कथयन्नाह। सचेन्नोपशाम्यतीत्यादि (p. 383, 2)। उभयथापि निर्दिशन्नाह। सचेत्पुनरित्यादि। कर्म विपच्यत इति। सद्धर्मप्रत्याख्यानम्। दृष्टधर्मसंवर्तनीयमेव कर्म सत्याधिष्ठानानिष्पत्तेर्दौर्मनस्यादि नानुभूयते। तत एवेति। जन्मान्तरसङ्गृहीतात्। अष्टमयक्षाद्यमनुष्यापगमसत्यवाक्यनिष्पत्तिलिङ्गार्थं व्यतिरेकमुखेनाह। पुनरपरं सुभूते

यैराकारैरित्यादि। तत्र स्वयंप्रवेशाद्गृहीतः सामर्थ्याधानेन कायादिविकारापादनादाविष्टः। सर्वाकारज्ञतादिपञ्च-विधाभिसमयेन सर्वपदार्थावगमाद्यथाक्रममज्ञातमित्या-दीनि पञ्चपदानि नेति पूर्वेण योज्यानि। अन्वयमुखेनापि कथयन्नाह। सचेत्पुनः सुभूत इत्यादि॥

अभिसमयालङ्कारालोकायां प्रज्ञापारमिताव्याख्यायामुपायकौशल्य-मीमांसापरिवर्तो नाम विंशतितमः॥

---

माराधिष्ठानेनापक्रमणे सति नेदमष्टमं लिङ्गमित्याह। तत्र खलु पुनरित्यादि (p. 384, 2)। तथैव तत्कस्य हेतोरित्याशङ्क्याह। मारो हीत्यादि। अचिरयानसम्प्रस्थितस्येति। मूर्धाभिसमयेऽधुना प्रवृत्तस्य स्वरूपमहत्त्वाद्बलवत्तरं, कार्यनिवर्तकत्वात्तेजोवत्तरं, गौरवाकरणादवमंस्यते, हास्यस्थानीयत्वादुच्चग्घयिष्यति। अतिशयोन्नत्यभिधानादुल्लापयिष्यति। निन्दाकरणात्कुत्सयिष्यति। वैरूप्यनिश्चारणात्पंशयिष्यति। मानस्योत्पादनविशेषाधानान्मानं जनयिष्यति। मानं सञ्जनयिष्यति। तथैवातिमानमानातिमानाभिमानभेदेन पदषट्कं मानं वर्धयिष्यति। मानं संवर्धयिष्यति। मानं स्तम्भयिष्यति। मानमुपस्तम्भयिष्यति। मानं बृंहयिष्यति। मानमुपबृंहयिष्यतीति यथाक्रमं योज्यम्। मिथ्यामानकरणान्मानमुत्पादयिष्यति। स तेन मानेनेत्यादि। हीनादहं श्रेयान् सदृशेन वासदृश इति चित्तोन्नतिर्मानः। सदृशादहं श्रेयान् श्रेयसा वा सदृश इत्यतिमानः। श्रेयसः श्रेयानहमिति मानातिमानः। अप्राप्ताधिगमे प्राप्त्यभिप्रायादभिमानः। अगुणवतोऽपि गुणवानहमिति मिथ्यामानः। दूरीकरिष्यति सर्वज्ञतामित्यादि। एतदुक्तम्। मानेन दूरीकरिष्यति सर्वज्ञतां त्रिसर्वज्ञतात्मिकाम्। अतिमानमानातिमानाभिमानैर्यथाक्रमं दूरीकरिष्यत्यनुत्तरं बुद्धज्ञानं सर्वाकाराभिसम्बोधम्। स्वयम्भूज्ञानं मूर्धाभिसमयम्। सर्वज्ञज्ञानमनुपूर्वाभिसमयम्। मिथ्यामानेन च दूरीकरिष्यत्यनुत्तरां सम्यक्सम्बोधिमेकक्षणाभिसम्बोधपूर्वकं धर्मकायाभिसमय-

मिति। **न सेविष्यत इत्यादि** (p. 381, 5) पदत्रयं श्रुतादिज्ञानोत्पादनार्थम्। कल्पितपरतन्त्रपरिनिष्पन्नस्वरूपपरिज्ञानार्थं वा यथासंख्यं योज्यम्। प्रसङ्गान्मारकर्मप्रभेदं निर्दिशन् मृदुमारकर्मार्थमाह। पुनरपरमित्यादि। नामापदेशेनेति तन्नामकथनेन। नामाधिष्ठानेनेति मात्रादिनामव्यपदेशेन। तथैव तत्कस्य हेतोरित्याशङ्क्याह। तव हीदं नामधेयमित्यादि। तत्र ग्रामं परित्यज्य क्रोशमात्रेणावस्थानादारण्यकः। गृहीतपिण्डपातसमादानत्वात्पैण्डपातिकः। रथ्याकर्पटचीवरत्वेन पांशुकूलिकः। समस्तं भक्तादिकमादाय भोजनात्पश्चात्खलुभक्तिकः। एकासनोपवेशेन यथेष्टं परिभोगादैकासनिकः। यथा संस्तीर्णकर्पटादौ शयनाद्याथासंस्तरिकः। संघाट्यादित्रिचीवरमात्रत्वात्त्रैचीवरकः। श्मशाने स्थितत्वेन श्माशानिकः। तथा वृक्षमूलिकः। निषद्यया रात्रौ स्थानान्नैषद्यिकः। उपर्यावरणाभावेनाभ्यवकाशिकः। छूर्णाचीवरादित्वेन नामतिकः। अधिकाभिलाषाभावादल्पेच्छः। तावन्मात्रेण सन्तोषात्सन्तुष्टः। आपत्तिरहितत्वेन प्रविविक्तः। अल्पेच्छत्वादपगतपादम्रक्षणः। पूर्ववत्तत्कस्य हेतोरित्याशङ्क्याह तथा हीत्यादि (p. 387, 13)। मध्यं मारकर्मार्थमाह। तं च मार इत्यादि। तथैव तत्कस्य हेतोरित्याशङ्क्याह (p. 388, 1)। तथा हि तवेत्यादि। अधिमात्रकर्मार्थमाह। तस्य खलु पुनरित्यादि। पूर्ववत्तत्कस्य हेतोरित्याशङ्क्याह। तथा हीत्यादि। सद्भूतत्वे कथं पुनरिदं मारकर्मेत्याशङ्क्याह। ये खलु पुनरित्यादि।

तथैव तत्कस्य हेतोरित्याशङ्क्याह। ये हीत्यादि। प्रधानबुद्धत्वावस्थानामव्याकरणेन मारकर्मार्थमाह। पुनरपरमित्यादि। तत्र प्रयोगाद्यवस्थासु यथाक्रममनुवर्तितमनुवितर्कितमनुविचारितम्। श्रुतमयादिज्ञानेन वेति केचित्। तदुभयं तुलयित्वेति (p. 389, 14)। यत्तेन विचिन्तितं, यच्च मारेण निर्दिष्टं नामधेयं तदेतदुभयं समेति सङ्गच्छत इति निरूप्य मंस्यत इति सम्बन्धः। तथैव सत्यत्वे कथं मारकर्मेत्याशङ्क्याह। यानि च मयेत्यादि। एवं नामापदेशेन बोधिसत्त्वानां तिरस्कारिणो दुर्लभा बोधिरित्यादि। सचेत्पुनरित्यादि (p. 390, 7)। संधाव्य संसृत्येति। पापदेशनयात्मानं निर्मलीकृत्य निरभिमानतां प्राप्येत्यर्थः। एतदेव स्पष्टयन्नाह। यदि चासावित्यादि। तत्र विदूषणाप्रतिपक्षेण विगर्हिष्यति। समुदाचारप्रतिपक्षेण वान्तीकरिष्यति। स्वपरोपेक्षलज्जया जुगुप्सिष्यति। आश्रयबलात् प्रतिनिःस्रक्ष्यति। प्रत्यापत्तिबलात् प्रतिदेशयिष्यति। दीर्घकाललभ्यत्वेन दुर्लभा। तथैव तत्कस्य हेतोरित्याशङ्क्याह। तावद्गुरुतरं हीत्यादि। परापमानसमुत्थत्वेन यस्मान्मननापत्तिस्थानं तावद्गुरुतरं, येन बोधिदुर्लभा भवति, न त्वसम्भविनीत्यर्थः। तथा हि ये प्रतिपक्षसन्निधावपचयधर्माणस्ते सम्भवदत्यन्तोन्मूलनदक्षप्रतिपक्षास्तद्यथा कनकमलादयः। यथोक्तधर्माणश्च सर्व एव सद्धर्मावरणादय इति न्यायान्निःशेषं क्षयं यात्येव मननापत्तिस्थानम्। यत्पुनः प्रणश्यन्तीत्यादि वचनं तदसत्यां प्रतिपक्षभावनायामिति ज्ञेयम्। अन्यथा युक्तिविरोधो

बहुतरसूत्रान्तविरोधश्च स्यात्। नियतवचनमप्येतेनैव व्याख्यातम्। अनियतवचनं पुनरसत्यामपि प्रतिपक्षभावनायां कादाचित्कफलत्वादित्यवसातव्यम्। मननापत्तिस्थानस्य गुरुत्वमेवं दृष्टान्तेन स्पष्टयन्नाह। तद्यथापि नामेत्यादि। चतस्रो मूलापत्तय इति। वधस्तेयमैथुनान्तसंज्ञिताः प्रधानापत्तयः। भिक्षुसंवरभ्रंशादभिक्षुः। श्रामण्येरत्वाभावादश्रमणः। उपासकभावविद्योगादशाक्यपुत्रीयः। जन्मान्तरेऽप्यधिगमाभव्यत्वाद्गुरुतरापत्तिरियं मननापत्तिः। अतिगुरुत्वमावेदयन्नाह। तिष्ठन्त्वित्यादि। पञ्चेभ्य इति तथागतदुष्टचित्तरुधिरोत्पादादिभ्यः। गुरुतर इति। मानसहगतचित्तोत्पादसंख्यावच्छिन्ननरकवासानुभवनात्। नामापदेशेनैवं मारकर्म निर्दिश्य विवेकगुणेनापि मृदु (p. 391, 5) मारकर्मार्थमाह। पुनरपरमित्यादि। तच्च वनप्रस्थो वनविशेषः। पश्चाद्विप्रतिसारित्वेन यावत्समाधेरनधिगमादपरिशुद्धकायवाङ्मनस्कर्मान्तस्तद्विपर्ययात्परिशुद्धकायवाङ्मनस्कर्मान्तः। तथैव तत्कस्य हेतोरित्याशङ्क्याह। तथा हीत्यादि (p. 393, 3)। मध्यमारकर्मार्थमाह। किञ्चापीत्यादि। इमं विवेकमिति। प्रज्ञापारमितोपायकौशल्यात्मकं निःश्रित इत्यादि। मृदुमध्याधिमात्रावग्रहभेदात्तत्र विवेकेऽरण्यवासादौ यथाक्रमं निःश्रित आलीनोऽध्यवसितस्तेनैवात्मोत्कर्षादध्यवसायमापन्नः। पूर्ववत्तत्कस्य हेतोरित्याशङ्क्याह। यः सुभूत इत्यादि। तेन विवेकेनेति। तेनारण्यवासादिना विवेकेन विहरन्नस्मिन् बोधिसत्त्वविवेके महोपायकौशलादौ न संदृश्यते। अधि-

मात्रमारकर्मार्थमाह । तमेनमित्यादि । संकीर्णविहारेणेति (p. 394, 5) । श्रावकादिमनस्कारोपेतत्वात् । आकीर्णविहारेणेति । महायानाद्बहिर्गतविहारत्वात् । अन्यैर्बोधिसत्त्वैरस्पृश्यत्वाद्बोधिसत्त्वचण्डालः । स्वपरबोधिसत्त्वविदूषणाद्बोधिसत्त्वदूषी । वाङ्मात्रेण बोधिसत्त्वचर्याभ्युपगमाद्बोधिसत्त्वप्रतिरूपकः । बोधिसत्त्वधर्मवियोगाद्बोधिसत्त्वप्रतिवर्णिकः । बोधिसत्त्वसङ्घोपघाताद्बोधिसत्त्वकारण्डवकः । अकल्पिकपरिभोगाच्चौरः । तथैव तत्कस्य हेतोरित्याशङ्क्याह । अभिमानपतिता हीत्यादि । पापधर्मयोगादविशुद्धधर्माणः । कल्याणमित्रविरहादनाचार्यः । अन्यथावादित्वादनार्यधर्माणः । नवमस्वयमभिज्ञापराक्रमकल्याणमित्रसेवनलिङ्गार्थमाह । यस्य खलु पुनरित्यादि (p. 395, 4) ॥

अभिसमयालङ्कारालोकायां प्रज्ञापारमिताव्याख्यायां
मारकर्मपरिवर्तो नामैकविंशतितमः ॥ २१ ॥

---

नवममेव लिङ्गं कथयन्नाह । अथ खलु भगवन्नित्यादि (p. 396, 3) । तत्र फलावस्थाः षट्पारमिताः शास्ता, प्रथमाधिगममार्गसन्दर्शनाल्लब्धालोकावस्था मार्गः, अधिकालोकरूपत्वात् वृद्धालोकावस्था आलोकः, ग्राह्यग्राहकाभावतत्त्वैकदेशप्रविष्टत्वात् तत्त्वार्थैकदेशप्रसृतावस्था उल्का, अनन्तरं तत्त्वज्ञानोदयादानन्तर्यसमाध्यवस्था अवभासः, सर्वोपद्रवनिवारणात् प्रथमायां भूमौ त्राणं, तदाशयप्रयोगावन्ध्यत्वपदस्थानेन द्वितीयायां शरणं । निरवद्यरतिवस्तुत्वात्तृतीयायां लयनं, परमार्थत्वागमनपदस्थानेन चतुर्थ्यां परायणं, त्रैधातुकपरिच्छिन्नत्वात्पञ्चम्यां द्वीपः, प्रज्ञापारमितास्वभावत्वात् षष्ठ्यां माता, उपायरूपत्वात्सप्तम्यां पिता, प्रणिधानात्मकत्वादष्टम्यां ज्ञानाय, बलपारमितालक्षणत्वान्नवम्यां बोधाय, ज्ञानपारमितातिरिक्तत्वेन दशम्यामनुत्तरायै सम्यक्सम्बोधये संवर्तन्त इत्यर्थभेदः। अनुच्चलनकारणभोगागारसक्तिप्रतिपक्षेण यथाक्रमं दानशीलपारमिते। निवृत्तिकारणसांसारिकसत्त्वविप्रतिपत्तिजदुःखदीर्घकालिकशुक्लपक्षप्रयोगपरिखेदप्रतिपक्षेण यथासंख्यं क्षान्तिवीर्यपारमिते । विप्रणाशकारणविक्षेपदौष्प्रज्ञप्रतिपक्षेण तथैव ध्यानप्रज्ञापारमिते चेत्येवं विपक्षप्रतिपक्षव्यवस्थानतः षडिति संख्याव्यवस्थानम्। तथा चतसृभिः पारमिताभिरविक्षेपकारणैरेका पारमिताऽविक्षेपः सम्पद्यते यमविक्षेपं निश्रित्य यथावद्धर्मतत्त्वावबोधाद्बुद्धधर्माः समुदागच्छन्तीत्येवं सर्वबुद्धधर्मसमुदागमपदस्थानतः संख्याव्यवस्थानम् । तथा दानपारमितया सत्त्वानुग्रहाच्छीलपारमितयाऽनुपघातात्,

क्षान्तिपारमितयोपघातमर्षणात्, वीर्यपारमितया कृत्य-व्यापारगमनात्, सत्त्वान् परिपाचने योग्यान् कृत्वा विक्षिप्तचित्तानां समाधानाय ध्यानपारमितया, समाहितचित्तानां विमोक्षाय प्रज्ञापारमितया, अववादनात् परिपाक इत्येवं सत्त्वपरिपाचनानुकूल्यतोऽपि संख्याव्यवस्थानमवसेयम्। तथैव तत्कस्य हेतोरित्याशङ्क्याह। अत्र हीत्यादि (p. 397, 3)। कल्याणमित्रार्थमेव स्पष्टयन्नाह। येऽपि ते सुभूत इत्यादि। पूर्ववत्तत्कस्य हेतोरित्याशङ्क्याह। आसु हीत्यादि। यावांश्च कश्चिद्बुद्धधर्म इत्यस्य सर्वाकारज्ञताद्यष्टाभिसमयक्रमेण विभञ्जनाद्बुद्धज्ञानमित्यष्टपदानि। उपसंहरन्नाह। तस्मात्तर्हीत्यादि। दशमसर्वप्रकारप्रज्ञापारमिताशिक्षणलिङ्गार्थमाह। आसु खलु पुनरित्यादि (p. 398, 8)। तथैव तत्कस्य हेतोरित्याशङ्क्याह। एषा हीत्यादि। दर्शनभावनाविशेषाशैक्षमार्गप्रापणाद्यथाक्रमं नायिकेत्यादि पदचतुष्टयम्। आदावुत्पादनाज्जनयित्री। पश्चात्संवर्धनाद्धात्री। पूर्ववत् तत्कस्य हेतोरित्याशङ्क्याह। प्रज्ञापारमितेत्यादि। एकादशसर्वानभिनिवेशलिङ्गार्थमाह। किं लक्षणेत्यादि। असङ्गलक्षणेति (p. 399, 1)। अनभिनिवेशस्वभावा। पदपरमत्वादाह। स्याद्भगवन्नित्यादि। न्यायस्य तुल्यत्वादाह। एवमेतदित्यादि। तथैव तत्कस्य हेतोरित्याशङ्क्याह। सर्वधर्मा हीत्यादि। तत्र हेतुफलभावरहितत्वाद्यथासंख्यं विविक्ताः शून्या इति केचित्। शून्यत्वे संक्लेशाद्यभाव इत्याह। यदि भगवन्नित्यादि। सर्वधर्मो नोपलभ्यत इति। शून्यत्वादेवेति

भावः। अस्य भाषितस्येति। संक्लेशाद्यनुपपत्तौ विविक्तशून्यतादेशनायाः। प्रतिप्रश्नेन परिहर्तुमाह। तत्किं मन्यस इत्यादि। संक्लेशो व्यवदानञ्च प्रज्ञायत इति शून्यत्वेऽपि सर्वधर्माणां संवृत्या कर्मफलसम्बन्धस्य विद्यमानत्वाद्यथाभिनिवेशस्तथा संक्लेशो यथा चानभिनिवेशस्तथा व्यवदानं प्रज्ञायत इति। द्वादशबुद्धबोध्यासन्नीभवनलिङ्गार्थमाह। एवं च भगवंश्चरन् बोधिसत्त्व इत्यादि (p. 401, 1)। तथैव तत्कस्य हेतोरित्याशङ्क्याह। अनविभूतमित्यादि। आदर्शादिज्ञानचतुष्टयभेदेन बुद्धत्वमित्यादि पदचतुष्टयम्। तथैवानुवदन्नाह। एवमेतदित्यादि। एतावन्त्येव लिङ्गान्यवसातव्यानि। तथा चोक्तम्।

स्वप्नान्तरेऽपि स्वप्नाभासर्वधर्मेक्षणादिकम्।
मूर्धप्राप्तस्य योगस्य लिङ्गं द्वादशधा मतम् ॥१॥ इति

लिङ्गेनैवं लक्षितस्य कतिप्रकारा विवृद्धिरिति। जम्बूद्वीपकादिसत्त्वतथागतसत्कारादिपुण्यादिकां प्रथमां विवृद्धिं वक्तुमाह। सचेत् पुनः सुभूते ये जम्बूद्वीपे सत्त्वा इत्यादि। जम्बूद्वीपस्योपलक्षणत्वात्त्रिसाहस्रमहासाहस्रलोकधातवीयसत्त्वानामप्यत्र ग्रहणं पञ्चविंशतिसाहस्रिकायां तथाभिधानात्। तथैव तत्कस्य हेतोरित्याशङ्क्याह। यथा यथा हीत्यादि (p. 402, 11)। दक्षिणीयतां गच्छतीति। पुण्यक्षेत्रतां प्रतिपद्यते। एतदेव कुत इति। तत्कस्य हेतोरित्याशङ्क्याह। तथा हीत्यादि। स्थापयित्वेति। परित्यज्य। पूर्ववत्तत्कस्य हेतोरित्याशङ्क्याह। अप्रतिपुद्गला हीत्यादि। प्रत्यक्षानुमानागमार्थानधिगमादप्रतिपुद्गला

इत्यादिपदचयं दैशिकत्वादित्यपरे। प्रकारान्तरेणापि पुण्याभिभवत्वं वक्तुमाह। कथञ्चेत्यादि। बध्यगतानिवेति। मरणार्हानिव। क्षणांश्च विराजयत इति (p. 403, 4) पापानुष्ठानेन मनुष्यादिभावान्नाशयतः। दायकानामिति। समादायकानां। दानपतीनामिति। साक्षाद्दातॄणाम्। दक्षिणां विशोधयन्तीति सम्यक् फलवतीं कुर्वन्तीत्यर्थः। अनेन मनसिकारेणेति (p. 404, 3)। सत्त्वानां मार्गोपदेशादिस्वभावेन। तथैव तत्कस्य हेतोरित्याशङ्क्याह। यो ह्येनानित्यादि। स एवेति। महोपायकौशलाया मातुरालम्बने स एव सत्त्वोपकारमनस्कारः। यथाऽयमिति मैत्र्यादिस्वभावो मनस्कारः। क्षपयेदित्यतिक्रामेत्। द्वितीयविशिष्टप्रज्ञापारमितामनस्कारस्वभावविरुद्ध्यर्थमाह। तद्यथापि नाम सुभूते केनचिद्देवेत्यादि। मणिरत्नज्ञाने वर्तमानेनेति। तत्परीक्षाशास्त्रपरिज्ञानात्। मणिरत्नजातिज्ञेनेति। लक्षणपरिजयात्। यावत् सा वाऽन्या वा प्रतिलब्धा भवतीति (p. 405, 2)। सा वा प्रज्ञापारमिता अन्या वा समाधिराजादिसूत्रान्तधर्मता प्राप्ता भवति। पुस्तकापेक्षया सा वाऽन्या वेति केचित्। शून्यत्वादविरहितत्वं घटत इत्याह। यत्पुनरित्यादि। परिहरन्नाह। सचेत्यादि। तथैव तत्कस्य हेतोरित्याशङ्क्याह। प्रज्ञेत्यादि। एतदुक्तम्। यस्मात्प्रज्ञापारमिता शून्या तत्त्वतो विरुद्धिपरिहाणिरहिता, तस्माच्छून्याः सर्वधर्मा इत्यालम्बनात्मनस्कारस्यापि शून्यत्वाधिमोक्षे सत्यविपर्यत्वात् प्रज्ञापार-

मितामनस्कारादिविरहित इत्यादि। तृतीयातिशयानुत्पत्तिकक्षान्तिलाभस्वरूपविवृद्ध्यर्थं प्रश्नयन्नाह। सचेद्भगवन्नित्यादि। परिहरन्नाह। न खलु पुनरित्यादि। बोधये समुदागच्छतीति (p. 406, 7)। एतदुक्तम्। यतः प्रज्ञापारमिताया हानिवृद्धिप्रतिषेधवद्बोधिसत्त्वस्य परमार्थतो हानिवृद्धिप्रतिषेधस्ततो मायोपमभावनया संवृत्या पुण्यज्ञानसंभारं समुदानयत्यनुत्तराञ्च सम्यक्संबोधिमभिसंबुध्यतेऽन्यथा तत्त्वतो हानिवृद्धिसम्भवे विपर्यासोऽसन्नेवैति। एतदेव तत्त्वमित्याह। सचेत् सुभूते बोधिसत्त्व इत्यादि (p. 406, 8)। चरत्ययं बोधिसत्त्व इत्यनेन कश्चित् तात्त्विको धर्मः समाक्षिप्त इत्यभिप्रायादाह। किं पुनर्भगवन् प्रज्ञापारमिता चरतीत्यादि। कथं पुनरित्यादि। यदि यथोक्तप्रकारप्रतिनिषेधेन सर्वच। नो हीदमित्युच्यते। भगवता कथं पुनः प्रकारान्तरेण चरति। येन चरत्ययं बोधिसत्त्व इति प्रागुक्तमित्यर्थः। संवृत्या तदुक्तमित्याह। किं पुनः सुभूते समनुपश्यसीत्यादि (p. 407, 20)। तत्त्वत इति भावः। उपसंहरन्नाह। एवं खल्वित्यादि (p. 408, 8)। सर्वधर्मानुपलम्भादेव परमार्थद्वारेणानुपपत्तौ मायोपमभावनया संवृत्या चरणादनुत्पत्तिकेषु धर्मेषु विशिष्टाधिमुक्तिर्भवति। वैशारद्यप्रतिपदादिभिः सर्वोपलम्भभयाभावान्निर्भीकता प्रतिपत्। श्रुतमयादिज्ञानोत्पादायैवं चरन्नित्यादिपदत्रयम्। आदर्शादिज्ञानभेदेन चानुत्तरं बुद्धज्ञानमित्यादिपदचतुष्टयं योज्यम्। चतुर्थबोध्यबोधकधर्मानुपलम्भलक्षणविवृद्ध्यर्थमाह।

या भगवन् सर्वधर्माणामित्यादि । संवृत्या व्याकरणमिति प्रतिप्रश्नेनाह । किम्पुनः सुभूत इत्यादि । तथैव तत्कस्य हेतोरित्याशङ्क्याह । सर्वधर्मेष्वित्यादि । न मे एवं भवतीति (p. 409, 5) । अनेनाविकल्पा मूर्धाभिसमये प्रज्ञापारमितेति कृत्वा बोधिसत्त्वस्यैवं विकल्पाभावं स्वव्याजेनाह ॥

अभिसमयालङ्कारालोकायां प्रज्ञापारमिताव्याख्यायां
कल्याणमित्रपरिवर्तो नाम द्वाविंशतितमः ॥

---

पञ्चमविशिष्टकुशलमूलसमन्वागमात्मकत्वद्ध्यर्थमाह। तेन खलु पुनरित्यादि (p. 410, 2)। बालजनोत्त्रासकत्वादाकाशगम्भीरतया गम्भीरा। हेतुफलभावरहितत्वेन यथाक्रमं विविक्तत्वाद्दुर्दृशा शून्यत्वाद्दुरनुबोधा। दर्शनभावनाविशेषमार्गोत्पादनार्थं यथासंख्यं शिक्षिष्यन्ते, प्रतिपत्स्यन्ते, योगमापत्स्यन्त इति वाच्यम्। संवरसत्त्वार्थक्रियाकुशलधर्मसंग्राहकत्रिविधशीलस्कन्धानां विपक्षधर्मरहितत्वादखण्डेनेत्यादि पदत्रयम्। तेषामेवानुकूलधर्मसद्भावात्परिपूर्णेनेत्याद्यपरं पदत्रयमिति केचित्। कायिकवाचिकमानसाविद्याभावादखण्डाच्छिद्राकल्माषः। श्रुतचिन्ताभावनाज्ञानसम्पन्नत्वात्परिपूर्णः परिशुद्धोऽशबलः शीलस्कन्ध इत्यपरे। क्षान्तिसम्पन्ना इत्यादि पदत्रयं दुःखवासनादित्रिविधक्षान्तिभेदात्। आलब्धवीर्या इत्यादिपदचतुष्टयमालम्भपरिकर्मप्रत्यवेक्षाप्रतिपत्तिवीर्यभेदात्। ध्यानारामा (p. 413, 10) इत्यादि षट्पदानि। अनागम्यध्यानान्तरप्रथमद्वित्रिचतुर्थध्यानाभिधमयोगात्। पूर्ववत्तत्कस्य हेतोरित्याशङ्क्याह। यो हि बोधिसत्त्व इत्यादि। षष्ठसर्वदेवनिकायोपसंक्रमस्वभावविवृद्ध्यर्थमाह। एवं शिक्षमाणश्च प्रज्ञापारमितायामित्यादि (p. 414, 3)। अहमपीति शक्रः। नोत्पत्स्यन्त इति। तथागताद्यधिष्ठानादिति भावः॥

अभिसमयालङ्कारालोकायां प्रज्ञापारमिताव्याख्यायां

शक्रपरिवर्तो नाम त्रयोविंशतितमः॥

---

सप्तमसर्वमाराभिभवेन स्वरूपविष्टद्यर्थमाह। अथ खलु भगवानित्यादि (p. 416, 2)। शिक्षत इत्यादि पदत्रयं प्रयोगानन्तर्यविमुक्तिमार्गभेदादुक्तम्। शोकशल्यविद्धा इति स्वगोचरातिक्रमेण वैमनस्यप्राप्ताः। चरत्यसमाहितेन चित्तेन, योगमापद्यते ससमाहितेन। न ह्येवमत्र युज्यमानमिति (p. 418, 7)। यथान्येषु सूत्रान्तेषु भाषितं, तथा नैवात्र घटमानवस्तु निर्दिष्टमतोऽस्य भाषितस्य श्रुतचिन्तामयज्ञानेन बोद्धुमशक्यत्वाद्यथाक्रममगाधमास्वादञ्च न प्राप्नुयामित्यर्थः। मृदुमध्याधिमात्रसुखोदयेन तुष्ट उदग्र आत्तमनास्तथैव त्रिविधसौमनस्योत्पादात्प्रमुदितः प्रीतिसौमनस्यजातः। प्रयोगादिषु विघ्नकरणासामर्थ्यात्संहर्षजातो हर्षितचित्तः प्रीतिप्रामोद्यजातः। तथैव तत्कस्य हेतोरित्याशङ्क्याह। दूरीकरोतीत्यादि। उन्नता इत्युत्सदाः (p. 419, 8)। अध्याक्रान्ता इत्यभिभूताः। अनिर्दिष्टत्वायेत्यादि पदचतुष्टयं नरकतिर्यक्प्रेतासुरगतिसंवर्तनीयत्वादिति केचित्। तत्र स्वस्थाने बाह्यमारम्भात् कलहायति (p. 420, 4)। राजकुलादौ विवदनाद्विवदति। दण्डादिग्रहणाद्विगृह्णीते। दुःखं प्रति समाज्ञानादाक्रोशति। प्रहारनियमनात्परिभाषते द्वेषोपनिपाताद्व्यापद्यते। क्रोधोत्पादात् दोषमुत्पादयति। सन्नाहः सन्नह्य इति। यदि सा सर्वज्ञता परित्यक्ता तदा कलहादिसमुत्थपापापनयनार्थम्। चित्तोत्पादसंख्यावच्छिन्नकल्पप्रमाणं वीर्यं करणीयमित्यर्थः। गुरुतरत्वात् पापस्यानिःसरणसम्भवप्रश्नार्थमाह। अस्ति भगवन्नित्यादि। सम्भवप्रतिपत्तिपक्षत्वेन

सर्वेषामेव सम्प्रतिकर्मको धर्म इति व्याप्तमावेदयन्नाह । सन्निःसरण इत्यादि । एतदुक्तं श्रावकयानिकानां संयाने संघादिशेषाद्यापत्तेः प्रतिक्रियादेशनया सम्प्रतिकधर्मको धर्मदेशिकस्तथा महायानिकानां बोधिसत्त्वपिटकादौ देशित इति । प्राधान्याद्बोधिसत्त्वानामारभ्य स्पष्टयन्नाह । तत्रानन्द योऽमित्यादि (p. 421, 5) । कृतपापदेशनान्न देशयति । अकरणसंवराकरणान्नायत्यां संवराय प्रतिपद्यते । उत्सारयितव्या इत्यादि पदत्रयं मृदुमध्याधिमात्रविग्रहाद्यपनयनात् । दुर्लब्धा इति । योऽहं जल्पिते सति परस्मिन् प्रतिजल्पामीति कलहादयः प्रशस्तत्वेन दुर्लब्धा इत्येवं चित्तमुत्पादयतीत्यर्थः । परुषं वा कर्कशं वेति । श्रोत्रासुखकारित्वात्परुषं वैमनस्यकरत्वात् कर्कशम् । दुरुक्तानीत्यादि । पैशुन्यपारुष्यसम्भिन्नप्रलापभेदादुक्तं । तथैतत्कस्य हेतोरित्याशङ्क्याह । न मयाऽध्यास इत्यादि (p. 422, 3) । क्षोभः संरम्भः । भ्रूकुटिर्ललाटसंकोचः । सर्वसत्त्वानामन्तिके स्थातव्यमिति । यथोक्तक्रमेण मारकर्मणामभिभवनात् सत्त्वविषये वर्तितव्यम् । अष्टमशास्त्रसदृशजनसमानावस्थालक्षणविरुद्धार्थमाह । कथं चानन्देत्यादि । तत्र एकयानसमारूढास्तुल्यसन्नाहप्रतिपत्त्या । एकमार्गसमारूढाः सदृशप्रस्थानप्रतिपत्त्या । समानाभिप्रायाः सम्भारप्रतिपत्तेरेकत्वेन समयानसम्प्रस्थिता निर्याणप्रतिपत्तेस्तुल्यत्वेन । यत्रेति दानादौ, यथेत्यनुपलम्भयोगेन ॥

अभिसमयालङ्कारालोकायां प्रज्ञापारमिताव्याख्यायामभिमानपरिवर्तो नाम चतुर्विंशतितमः ॥ २० ॥

नवमोपायकौशलपरिशुद्धशिक्षास्वरूपविवृद्धयर्थं प्रश्नयन्नाह । क्व पुनरित्यादि (p. 425, 2) । क्षयादौ शिक्षमाणो बुद्धत्वे शिक्षत इत्यावेदयन्नाह । सचेदित्यादि । तथतैव व्यावृत्तिभेदाद्यथा क्षयानुत्पादादिभिर्व्यपदिश्यते तथा व्याख्यातम् । कथमन्यत्र शिक्षायामन्यत्र शिक्षा विधीयत इति पृच्छयन्नाह । किङ्कारणमित्यादि । यत्सुभूत इत्यादिना । तद्वचनमनूद्य परिप्रश्नेन परिहरन्नाह । तत् किं मन्यस इत्यादि । तथतेति सर्वज्ञताबुद्धत्वमितियावत् । तथैव तत्कस्य हेतोरित्याशङ्क्याह । अक्षयो हि भगवन् क्षय इति । क्षीयन्तेऽस्मिन् सर्वविकल्पा इति बुद्धत्वं क्षयो धर्मधातुर्विनाशरहितत्वादक्षय इति । तादात्म्यसम्बन्धेन क्षयादिस्वभावा सर्वज्ञतेत्यर्थः । उत्पद्यत इत्याद्यनुत्पादादिविपर्ययेनावगन्तव्यम् । परिशुद्धशिक्षत्वेन प्रशंसार्थमाह । तस्मात्तर्हीत्यादि । पूर्ववत्कस्य हेतोरित्याशङ्क्याह । सर्वसत्त्वसारा हीत्यादि (p. 426, 10) । तत्र पक्षिघाटकाः शाकुनिकाः मांसविक्रयकारिणो निषादाः । कैवर्ताः धीवराः । मृगादिघाटनादौरभ्रिकाः । चक्षुःश्रोत्रविज्ञानाभावादन्धबधिरौ । एकाक्षिवैकल्यात्काणः । हस्तादिच्छेदात्कुण्ठः । वक्रपृष्ठत्वात् कुब्जः । कुर्परोपरिह्रस्वपर्वत्वात्कुणिः । विसदृशजंघोरुत्वात्खञ्जः । स्खलद्गतित्वात् खंजः । सहसा वक्तुमसमर्थत्वाज्जडः । क्वचिज्जड्डु इति पाठस्तत्राप्ययमेवार्थ इति केचित् । लाल इत्युच्चार्यवचनाल्लोलः । गुरुलकारमुच्चार्याभिधानाल्लल्लः । उच्चैःश्रवणात्कल्लः । हस्तपादाद्यल्पप्रमाणत्वेन हीनाङ्गः । न्यूनातिरेकाङ्गत्वाद्विकलाङ्गः ।

वैरूप्यादिक्षताङ्गः । तथैव तत्कस्य हेतोरित्याशङ्क्याह । अस्ति हि तस्येत्यादि (p. 427, 12) प्रकृतिपरिशुद्धित्वेन बलादिविशुद्ध्याधिगमो नोपपद्यत इत्याह । यदा भगवन्नित्यादि (p. 428, 3) संवृत्यधिगमादाह । एवमेतदित्यादि । पूर्ववत् तत्कस्य हेतोरित्याशङ्क्याह । सर्वधर्मा हीत्यादि । एतदुक्तं प्रकृतिपरिशुद्धित्वेऽपि सर्वधर्माणां स्वभावशुद्धधर्मापरिज्ञानवतां सत्त्वानां तथाभूतज्ञानोत्पादनार्थं मायोपमधर्मभावनया संसीदनत्वेन संवृत्या बलादिपरिशुद्धिं प्राप्नोतीति । दशमबुद्धगोत्रीभवनलक्षणविवृद्ध्यर्थमाह । तद्यथापि सुभूते ऽल्पकास्ते महापृथिव्यामित्यादि । क्षारप्राचुर्यादूषराः । रूक्षत्वादुज्जङ्गलाः । अल्पकास्ते बोधिसत्त्वा इत्यनेन (p. 429, 5) बुद्धगोत्राणामूर्ध्वाभिगमनसमये वैवृद्धिलाभयोग्यानामल्पीयस्त्वं ज्ञापितं स्यात् । एकादशमबुद्धत्वफलप्राप्तिनिमित्तात्मकविवृद्ध्यर्थं मृदुमध्याधिमात्रदृष्टान्तभेदेन हारकत्रयमाह । पुनरपरं तद्यथापि नामेत्यादि । प्रज्ञापारमितामार्गमिति । तथागतप्राप्तिनिमित्तामेकदशां विवृद्धिमित्यर्थः । द्वादशपारमिताविपक्षचित्तानुत्पादस्वभावविवृद्ध्यर्थमाह । एवं हि सुभूते प्रज्ञापारमितायामित्यादि (p. 430, 21) । तत्र कल्पितपरतन्त्रपरिनिष्पन्नवस्त्वभिनिवेशेन यथाक्रमं संगृहीताः परिगृहीता उद्गृहीताः । विपर्यासरहितत्वेनावबोधादनुगताः । चतुर्दशसर्वपारमितासंग्रहज्ञानलक्षणविवृद्ध्यर्थमाह । तद्यथापि नाम सुभूते सत्कायदृष्टावित्यादि (p. 431, 2) ।

द्वाषष्टिद्वष्टयो ब्रह्मजालपरिपृच्छादौ द्रष्टव्याः । ग्रन्थप्राचुर्यान्न लिख्यन्ते । यथोक्तविवृद्धिमेव स्पष्टयन्नाह । तद्यथापि नाम सुभूते पुरुषस्येत्यादि । पञ्चदशसर्वसम्पत्प्रतिलम्भार्थविवृद्ध्यर्थमाह । तस्मात्तर्हि सुभूते बोधिसत्त्वेत्यादि । तथैव तत्कस्य हेतोरित्याशङ्क्याह । पुण्याग्रत्वादिति । अमुमेवार्थं विस्तारयितुं प्रश्नयन्नाह । तत्किं मन्यस इत्यादि । पूर्ववत्तत्कस्य हेतोरित्याशङ्क्याह । एवं महार्थिका हीत्यादि । तत्र दर्शनादिमार्गचतुष्टयाधिगमादनुत्तरतां गन्तुकामेनेत्यादि पदचतुष्टयम् । धर्मसम्भोगनिर्माणकायत्रयप्रतिलम्भाय बुद्धविक्रीडितमित्यादिपदत्रयं वाच्यम् । सर्वसम्पत्प्राप्तौ श्रावकोऽपि स्यादित्याह । किं पुनरित्यादि । अन्यार्थतयाभ्यसनान्नैव श्रावक इत्याह । श्रावकसम्पत्तिरपीत्यादि । षोडशसम्यक्सम्बोध्यासन्नीभावस्वभावविवृद्ध्यर्थमाह । एवं शिक्षमाणः सुभूते बोधिसत्त्वो महासत्त्व इत्यादि (p. 433, 3) । तत्राप्यभिनिवेशो बन्धनमित्याह । सचेत्पुनरित्यादि । न चरतीति भावोपलम्भविपर्यासादिति भावः । अनभिनिवेशस्तत्त्वमित्याह । अथ तामपीत्यादि । यथोक्ता एव विवृद्धयो ग्राह्याः । तथा चोक्तम् ।

जम्बुद्वीपजनैयत्ताबुद्धपूजाशुभादिकाम् ।
उपमां बहुधा कृत्वा विवृद्धिः षोडशात्मिका ॥ २ ॥ इति

अभिसमयालङ्कारालोकायां प्रज्ञापारमिताव्याख्यायां
शिक्षापरिवर्तो नाम पञ्चविंशतितमः ॥

---

विवृद्धैवं वर्धितस्य मूर्धाभिसमयस्य सात्मीभावगमनपर्यन्तलक्षणां निरूढिं वक्तुं प्रसंशयन्नाह। चरन्नेव तावदित्यादि (p. 434, 2)। स्पृहणीयास्त इति। अनेन मूर्धाभिसमयलाभिनां दुर्लभतां कथयति। संजातप्रसादातिशयत्वादिष्टाशंसनां कुर्वन्नधुना निरूढिमावेदयन्नाह। यैर्बोधिसत्त्वयानिकैरित्यादि। उह्यमानानिति प्रेर्यमाणान्। सर्वदोषवैषम्याभावात्समे पारिमे तीरे निर्वाणे बुद्धत्व इति यावत्। स्वपरोभयार्थसम्पत्सम्पादकत्वेन यथा क्रममभीप्सिताः परिचिन्तिताः परिगृहीता इति केचित्। त्रिसर्वज्ञतानिष्पादकत्वेनेत्यन्ये। बुद्धधर्माणामित्युपदेशपदं सर्वज्ञताप्रतिसंयुक्तधर्माणां स्वयम्भूधर्माणामसंहार्यधर्माणामिति। सर्वाकारज्ञतादित्रिसर्वज्ञताभेदेन निर्दिष्टम्। तदेवं त्रिसर्वज्ञताधर्माणामनुत्तरा परिपूरिः कथिता स्यात्। सा चापरित्यक्तसत्त्वार्थनिरूढिरित्यर्थः। न मे भगवन्नित्यादि। महाकरुणया समन्वागता इति। एवम्भूताधिगमावस्थायामपि निर्वाणपातपरिहारार्थं महाकरुणासंमुखकरणात् सत्त्वावतारणादिचित्तोत्पादाच्च महाकरुणया युक्ताः। तथैव तत्कस्य हेतोरित्याशङ्क्याह। तथा महाकरुणयेत्यादि (p. 435, 5)। दर्शनभावनाविशेषाशैक्षमार्गाधिगमभेदाद्यथाक्रमं वयं तीर्णा इत्यादि पदचतुष्टयम्। एतदुक्तम्। सम्यगुपायकौशलबलेनैवं निर्विकल्पाधिगमावस्थायां महाकरुणादिसम्मुखीकरणभावेनापरित्यक्तसत्त्वार्थलक्षणा यथोक्तसर्वाकारज्ञतादित्रिसर्वज्ञताधर्माणामनुत्तरा परिपूरिनिरूढिरिति। तथा चोक्तम्।

त्रिसर्वज्ञत्वधर्माणां परिपूरिरनुत्तरा ।
अपरित्यक्तसत्त्वार्था निरूढिरभिधीयते ॥ ३ ॥ इति ।

निरूढ्यैवं निरूढस्य स्थिरीभावलक्षणाञ्चित्तसंस्थितिं प्रतिपादयितुं प्रश्नयन्नाह । यस्तेषां भगवन्नित्यादि । योऽनुमोदते कियत्स पुण्यं प्रसवतीति सम्बन्धः । प्रथमयानसंप्रस्थितानां चर्याप्रतिपन्नानामनिवर्तनीयानामेकजातिबद्धानामित्यनेन यथासम्भवं पूर्वोक्तचतुर्विकल्पप्रतिपक्षयोर्दर्शनभावनामार्गयोश्चतुर्विधाधिगन्तृव्यपदेशाच्चातुर्विध्यं ख्यापितमित्येके । लिङ्गविवृद्धिनिरूढिचित्तसंस्थितिस्वरूपावबोधभेदादित्यन्ये । अधिमुक्तिचर्याभूमौ प्रथमयानसंप्रस्थिताः । प्रमुदितादिसप्तभूमिषु चर्याप्रतिपन्नाः । अचलादिभूमित्रितयेऽविनिवर्तनीयाः । दशम्यां भूमावेकजातिप्रतिबद्धा इत्यपरे । चित्तसंस्थितिमावेदयन् प्रश्नपरिहारार्थमाह । स्यात् खलु पुनरित्यादि । पलाग्रेणेति । पलप्रमाणेन । एतदुक्तं । सम्भवत्प्रमाणस्य वस्तुनो योगिभिरियत्तया पलप्रमाणेन परिमाणं प्रमातुं शक्यत इति न्यायाच्चतुर्द्वीपादित्रिसाहस्रलोकधातुप्रमाणं गृह्यते । न त्वनुमोदनापुण्यप्रमाणमित्यर्थान्तरव्याजेन प्रमाणातिक्रान्तपुण्यस्वरूपा समाधिलक्षणा चित्तसंस्थितिः कथितेति । तथा चोक्तम् ।

चतुर्द्वीपकसाहस्रद्वित्रिसाहस्रकोपमाः ।
ज्ञात्वा पुण्यबहुत्वेन समाधिः परिकीर्तितः ॥ ४ ॥ इति

एतानि च लिङ्गादीनि यथाक्रममूष्मादिचतुर्निर्वेधभागीयस्वरूपाणि मूर्धाभिसमये वेदितव्यानि ।

निर्वेधभागीयानन्तरं दर्शनमार्गः। तत्र चतुर्विधो विपक्षो ग्राह्यग्राहकविकल्पः सप्रतिपक्षो वक्तव्य इत्यादौ तावत्सकलप्रवृत्तिपक्षाधिष्ठानं प्रथमं ग्राह्यविकल्पमावेदयन्नाह। माराधिष्ठितास्ते भगवन्नित्यादि (p. 436, 9)। माराधिष्ठितामारपाक्षिकामारभवनच्युता इति। मृदुमध्याधिमात्रनिन्दाभिधानात्पदत्रयम्। तथैव तत्कस्य हेतोरित्याशङ्क्याह। मारभवनविध्वंसनकरा हीत्यादि। व्यतिरेकमुखेन निर्दिश्यान्वयमुखेन तमेव विकल्पं कथयन्नाह। अनुमोदितव्या भगवन्नित्यादि। मायोपमभावनया द्वयाद्वयसंज्ञाविगतानां बोधिसत्त्वानामेवंविधचित्तोत्पादानुमोदनादौ प्रवृत्तिः कार्येत्यर्थः। साधूक्तत्वादनुवदन्नाह। एवमेतत्कौशिकेत्यादि। (p. 437, 4)। द्वितीयं निवृत्तिपक्षाधिष्ठानं ग्राह्यविकल्पं कथयन्नाह। यैः कौशिक कुलपुत्रैरित्यादि। न विरागयिष्यन्तीति। हेये वस्तुनि निवृत्तिग्राह्यविकल्पबलादिति भावः। तथैवाविपरीतत्वेन प्रसंशयन्नाह। एवमेतद्भगवन्नित्यादि। एतदुक्तम्। अनुपलम्भोपलम्भस्वभावौ प्रवृत्तिनिवृत्तिपक्षौ यथाक्रममादानसंत्यागाकारेण ग्राह्याविति प्रवृत्तिनिवृत्तिपक्षाधिष्ठानौ ग्राह्यविकल्पौ वस्तुन्यप्रतिबद्धवृत्तित्वेन वितथप्रतिभासित्वादयथाविषयस्वरूपौ वक्ष्यमाणविषयप्रभेदेन प्रत्येकं नवप्रकारौ विबन्धकत्वात् क्लेशवद्विपक्षौ ज्ञेयाविति। तथा चोक्तम्।

प्रवृत्तौ च निवृत्तौ च प्रत्येकं तौ नवात्मकौ।
ग्राह्यौ विकल्पौ विज्ञेयावयथाविषयात्मकौ ॥५॥ इति

ग्राह्यविकल्पद्वयं निर्दिश्यैव ग्राहकविकल्पद्वयं वक्तव्यमिति, प्रथमं द्रव्यसत्पृथग्जनपुरुषाधिष्ठानं ग्राहकविकल्पं कथयन्नाह । एवं तैरनुमोदनासहगतैरित्यादि । तथैव तत्कस्य हेतोरित्याशङ्क्याह । तथा हि तैरित्यादि(p. 438, 3) । द्रव्यसन्नेव आत्मा ग्राहक इति विकल्पाभिनिवेशेन पृथग्जनैरनुमोदितानि कुशलमूलानि यतस्तस्मात्सत्कारादिकं फलमुक्तं न त्वन्यद्बुद्धत्वादिकमित्यर्थः । ननु चानात्मानः सर्वधर्मा इत्यपि पृथग्जनाः प्रतिपद्यन्त इत्यव्यापिनी प्रथमग्राहकविकल्पव्यवस्था । अधिमुक्तिमनस्कारः स तेषां तत्त्वमनस्कारश्चेह विवक्षित इत्यसारम् । द्वितीयं प्रज्ञप्तिसदार्यपुद्गलाधिष्ठानं ग्राहकविकल्पं वक्तुमाह । यैरपि भगवंश्छन्दमुत्पाद्येत्यादि । सम्यक्सम्बोधेराहारका भविष्यन्तीति । प्रज्ञप्तिसन्नेवात्मा ग्राहक इति कल्पाभिनिवेशेनार्याणामनुमोदनाचित्तोत्पादाद्विविवर्धमाना बोधेरनुत्तरायाः समुत्पादका मुख्यतो भविष्यन्तीत्यर्थः । धर्मतोऽविरुद्धत्वादनुवदन्नाह । एवमेतत्कौशिकेत्यादि । मृदुमध्याधिमात्रानुमोदनाभेदादनुमोदितानीत्यादि पदत्रयं वाच्यम् । ननु चार्यस्याप्येवं भवत्यश्रौषमहं भिक्षवो रात्र्याः प्रत्यूषसमये शृगालस्य प्राणिनो वाशितशब्दं तथाहं स तस्मिन् समयेऽनिन्दितो नाम मृगराजोऽभूवमित्यव्यापिनी द्वितीयग्राहकविकल्पव्यवस्था । व्यवहारिकमार्याणामेवंविधं वचनं न पारमार्थिकमित्यसारम् । एतदुक्तम् । पृथग्जनार्यपुद्गलयोर्यथाक्रमं द्रव्यप्रज्ञप्तिसत्पुरुषाधिष्ठानौ ग्राहकाविति द्वावेतौ ग्राहकविकल्पौ । यदा

तद्विषयभावापन्नग्राह्यावर्थौ न तथा ग्राह्यरूपेण भवतस्तदा न कस्यचित्तौ ग्राहकाविति। ग्राहकरूपेणानयोर्विविक्तरूपमिति वितथप्रतिभासित्वादयथाविषयस्वरूपौ वक्ष्यमाणविषयभेदेन प्रत्येकं नवप्रकारौ विबन्धकत्वाद्विपक्षाविति। तथा चोक्तम्।

द्रव्यप्रज्ञप्तिसत्सत्त्वविकल्पौ ग्राहकौ मतौ।
पृथग्जनार्यभेदेन प्रत्येकं तौ नवात्मकौ ॥ ६ ॥
ग्राह्यौ चेन्न तथा स्तोऽर्थौ कस्य तौ ग्राहकौ मतौ।
इति ग्राहकभावेन शून्यतालक्षणं तयोः ॥ ७ ॥ इति

तत्र कथं विषयभेदेन प्रथमो ग्राह्यः विकल्पो न च वेति प्रथमविकल्पार्थमाह। कथं भगवन्नित्यादि। कथमिति केन प्रकारेण मायोपमं चित्तं न माया नाप्यन्यो धर्मस्तत्त्वेन कथञ्चिदभिसम्बुध्यत इति। प्रतिप्रश्नेन प्रतिपादयन्नाह। तत्किं मन्यस इत्यादि। यश्चात्यन्तविविक्तो धर्म इति (p. 439, 10) यो धर्मः स्वभावशून्यः सोऽनुत्पन्नत्वादस्तितां न प्रतिपद्यते। न च निर्विषयः साधुः प्रयोगो विद्यते नञ्चः विकल्पापाश्रयत्वे वा सांवृतः स्यान्न तात्त्विक इति न्यायान्नास्तितां च न प्रतिपद्यत इत्यर्थः। पूर्ववत्तत्कस्य हेतोरित्याशङ्क्याह। नहि भगवन्नित्यादि। विविक्तत्वादेव सर्वधर्माणां न हेतुफलभाव इत्याह। यश्च धर्मोऽत्यन्तविविक्त इत्यादि। आवाहको वा निर्वाहको वेति। उत्पादको वा नाशको वेत्यर्थः। अमुमेवार्थं विस्तारयन्नाह। कथञ्च भगवन्नित्यादि। तत्त्वतो नैव बोध्यबोधकमित्युपसंहरन्नाह। यदा भगवन्नित्यादि। सुभाषितत्वा-

त्वहस्तयन्नाह। साधु साध्वित्यादि (p. 440, 3)। किन्तु संवृत्या सुविशुद्धात्कारणात्सुविशुद्धं फलमित्याह। यत एव सुभूत इत्यादि। मायोपमत्वेन कार्यकारणयोरविपर्यस्तत्वादिति भावः। विविक्ततेत्यप्यभिनिवेशो न कार्य इत्यादि। सचेत्सुभूते बोधिसत्त्व इत्यादि।

शून्यता सर्वदृष्टीनां प्रोक्ता निःसरणं जिनैः।
येषां तु शून्यतादृष्टिस्तानसाध्यान् बभाषिरे॥

इति न्यायाद्विविक्ताभिनिवेशस्यापि विपर्यासरूपत्वान्नैव प्रज्ञापारमिता स्यात्। कथन्तर्हि तामागम्याभिसम्बुध्यत इति चेदाह। एवं खलु सुभूते इत्यादि। एवमविचारैकरम्यत्वेन संवृतिरूपतयेतियावत्। अत एव परमार्थमधिकृत्याह। नापि सुभूते प्रज्ञापारमितामित्यादि। संवृत्योपसंहरन्नाह। अभिसम्बुध्यते चेत्यादि। भाषितस्येति। नाभिसम्बुध्यतेऽभिसम्बुध्यते चेत्यस्य। तथैवानुवदन्नाह। एवमेतदित्यादि। दुष्करकारक इति संवृतिसत्याश्रयेणेति भावः। अत एव परमार्थसत्यमधिकृत्याह। यथाहं भगवन्नित्यादि। भाषितस्येति दुष्करकारक इत्यस्य तत्कस्य हेतोरित्याशङ्क्याह। तथा हि भगवन्नित्यादि (p. 441, 1)। कर्तृकर्मक्रियानुपलम्भदेशनायामनवसादादिना स्वभावविकल्पविरहात् सम्यक्प्रवृत्तत्वेन जिनजनन्याञ्चरतीति आह। सचेद्भगवन्नित्यादि। द्वितीयविकल्पार्थमाह। तद्यथापि नाम भगवन्नित्यादि। अविकल्पत्वाद्भगवन्नित्यनेन गोचविकल्पनिरासो

ज्ञापितः। तृतीयविकल्पार्थमाह। मायापुरुषस्येत्यादि। नैवं भवत्यनुत्तरेत्यनेन प्रतिपत्तौ समुदागमविकल्पनिषेधः कृतः। चतुर्थविकल्पार्थमाह। प्रतिभासस्येत्यादि (p. 442, 4)। प्रतिभासदृष्टान्तेनालम्बनविकल्पापोहो दर्शितः। पञ्चमविकल्पार्थमाह। तथागतस्य कश्चित्प्रियो वेत्यादि। अविकल्पत्वादेव भगवन्नित्यनेन बोधिसत्त्वस्यापि तथागतप्रियाप्रियासंविद्यमानदृष्टान्तेन प्रतिपक्षविपक्षविकल्पापोहो दर्शितः। षष्ठविकल्पार्थमाह। यथैव हि भगवन्नित्यादि। सर्वकल्पविकल्पप्रहीण इति स्वाधिगमविकल्पानुपलम्भो दर्शितः। सप्तमविकल्पार्थमाह। तथागतेनार्हतेत्यादि। तथागतनिर्मितोदाहरणेन निर्माणान्वयकर्तृविकल्पापोहो दर्शितः। अष्टमविकल्पार्थमाह। स निर्मितको यस्येत्यादि (p. 443, 1)। अनेन च दृष्टान्तेन कारित्रविकल्पविवेको निवेदितः। नवमविकल्पार्थमाह। दक्षेण पल्लगण्डेनेत्यादि। स च दारुसंहातोऽविकल्प इत्यनेन क्रियासाफल्यविकल्पविरहो निगदितः। एतदुक्तम्। विविक्तेन विविक्तानवबोधस्वभावेऽचलादिभूमिप्रवेशेन वियतबुद्धगोचमायोपमप्रतिपत्त्या दर्शनादिमार्गसमुदागमे प्रतिभासमात्रेणाभ्रान्तज्ञानालम्बने गुणदोषपूर्वकोपादेयहेयत्वेन प्रतिपक्षविपक्षे सर्वज्ञगादित्वेन स्वाधिगमे हीनाप्रणीतत्वेन श्रावकादिभूमिदूरीकरणे यथाशयानुरूपनिर्माणेन सत्त्वार्थव्यापारे सम्यगुपायकौशलबलेन सर्वजननिर्वाणप्रतिष्ठापनक्रियाफले च निर्दोषतया सर्वथोपादेयत्वेन प्रवृत्तिः कार्येत्येवं प्रवृत्तिपक्षाधिष्ठानः प्रथमो ग्राह्यविकल्पो नव-

प्रकारो मूर्द्धाभिसमये दर्शनमार्गप्रयोगावस्थायां बोधिसत्त्वानां प्रहेयस्तत्तत्प्रतिपक्षावस्थाप्रतिपादेन व्यतिरेकमुखेन प्रतिपादित इति। तथा चोक्तम्।

एष स्वभावे गोचे च प्रतिपत्समुदागमे।
ज्ञानस्यालंवनाभ्रान्तौ प्रतिपक्षविपक्षयोः॥
स्वस्मिन्नधिगमे कर्तृतत्कारित्रक्रियाफले।
प्रवृत्तिपक्षाधिष्ठानो विकल्पो नवधा मतः॥ ६॥

इति।

अभिसमयालङ्कारालोकायां प्रज्ञापारमिताव्याख्यायां
मायोपमपरिवर्त्तो नाम षड्विंशतितमः॥

---

कथं निवृत्तिपक्षाधिष्ठानो द्वितीयो ग्राह्यविकल्पो नवधेति प्रथमविकल्पार्थमाह। सारे वतायमित्यादि (p. 444, 3)। प्रज्ञाकरुणयोः संसारनिर्वाणापातकारित्वेन सकलाधिगमाधिपत्याद्यः प्रज्ञापारमितायाञ्चरति स सारे प्रधाने चरतीत्यनेन न्यूनताधिगमविकल्पो निषिद्धः। किन्तु तत्रापि सारत्वाभिनिवेशो न कार्य इत्याह। असारे वतायमित्यादि। सारत्वावग्रहाभावादसारः। द्वितीयविकल्पार्थमाह। नमस्कर्तव्यास्त इत्यादि। कल्याणमित्रादिसम्परिग्रहेण युक्ता ये प्रज्ञापारमितायां चरन्ति, ते नमस्करणीया इत्यनेन सम्परिग्रहाभावविकल्पो निरस्तः। तृतीयविकल्पार्थमाह। ये चेह गम्भीरायां प्रज्ञापारमितायामित्यादि। न च तां धर्मतां साक्षात्कुर्वन्तीत्यनेन प्रतिपत्तिविशेषज्ञापनात् प्रतिपत्तिवैकल्यविकल्पाभावो दर्शितः। चतुर्थविकल्पार्थमाह। अथ खल्वायुष्मानित्यादि। न साक्षात्कुर्वन्तीति। यद्बोधिसत्त्वानां भूतकोटेरसाक्षात्करणं नैतद्दुष्करमधिगमे स्वातन्त्र्यलाभादिति भावः। अतः परप्रत्ययगामित्वविकल्पो निरस्तः। पञ्चमविकल्पार्थमाह। इदन्तु देवपुत्रा इत्यादि। सत्त्वान् विनेष्याम इति (p. 445, 5)। मायोपमत्वेऽपि सर्वधर्माणां सत्त्वविनेयार्थमव्यावृत्तिगमनयोगेनान्ययानगमनाभावेन चानुत्तरबोध्यधिगमप्रस्थानात्सर्वाकारज्ञातोद्देशापरिभ्रंशेनोद्देशनिवृत्तिविकल्पविरहः सूचितः। षष्ठविकल्पार्थमाह। आकाशं स देवपुत्रा इत्यादि। तथैव तत्कस्य हेतोरित्या-

शङ्काह । आकाशविविक्ततयेत्यादि । सत्त्वानां कृतशः सन्नाहं सन्नह्यन्त इति । आकाशोपमनिखिलसत्त्वधातुविनयनार्थं सन्नहनेनाप्रादेशिकमार्गव्यापारकथनात् प्रादेशिककारित्वविकल्पविवेकोऽर्थात्कथितः । सप्तमविकल्पार्थमाह । आकाशेन स इत्यादि । सत्त्वानामाकाशस्वभावोपगमनज्ञापनादनेनाधिगमनानात्वविकल्पाभावो दर्शितः । अष्टमविकल्पार्थमाह । अयञ्च सन्नाह इत्यादि । सत्त्वानामर्थाय सन्नहनेन प्रेक्षापूर्वकारित्वात् स्थानगमनाज्ञानविकल्पासंश्लेषो दर्शितः । नवमविकल्पार्थमाह । सा चात्यन्ततयेत्यादि । तथैव तत्कस्य हेतोरित्याशङ्काह । सत्त्वविविक्ततयेत्यादि । पारमार्थिकद्रव्यानुपलम्भाद्रूपादीनां मायोपमताऽनुगन्तव्या । यावदित्यनेन (p. 446, 2) द्वादशायतनादिपरिग्रहः । तथागताद्यधिगमधर्माणामपि शून्यत्वात्सर्वधर्मविविक्तता । उपसंहरन्नाह । एवं देवपुत्राः सर्वधर्मविविक्तता द्रष्टव्येति । एवमनुपलम्भदेशनायामनवसादाच्चरणमित्यादि । एवं देवपुत्राः सर्वधर्मविविक्ततायामित्यादि । अनुत्रासे को हेतुरित्याह । किं कारणमित्यादि । कर्तृकर्मक्रियानुपलम्भात्परिहरति । विविक्तत्वादिति । उपसंहरन्नाह । अनेन भगवन्नित्यादि । एतदुक्तम् । शून्यत्वादेवभेष्यतीति भेतव्यानामभावाद्यतो न संसीदति । ततश्चरति मुख्यतो निर्याणस्वभावायां प्रज्ञापारमितायामेवञ्च पृष्ठतो निर्याणविकल्पापोहो दर्शितः स्यात् । एतदुक्तम् । संसारनिर्वाणान्यतरप्रपातित्वेन शून्यताधिगमे कल्याणमित्रोपायकौशलविकलत्वेन संपरिग्रहाभावे

समस्तज्ञेयावरणाप्रतिपक्षत्वेन प्रतिपद्वैकल्ये तथागताद्युपदेशसापेक्षत्वेन परप्रत्ययगामित्वे सर्वसत्त्वाग्रतामहत्त्वाद्यप्रवृत्तत्वेनोद्देशनिवृत्तौ क्लेशावरणप्रतिपक्षत्वेन प्रादेशिकमार्गव्यापारे सोपलम्भेन प्रथमफलाद्यधिगमनानात्वे सर्वाविद्यानुशयाप्रहीणत्वेन स्थानगमनाज्ञाने महायानसर्वसंग्राहकत्वेन सर्वाकारज्ञतासर्वनिर्वाणपश्चादनुगमने च सदोषतया ग्राह्यत्वेन निवृत्तिः कार्या। इत्येवन्निवृत्तिपक्षाधिष्ठानश्रावकप्रत्येकबुद्धसन्तानोपादेयत्वसमुद्भवो द्वितीयो ग्राह्यविकल्पो बोधिसत्त्वानां दर्शनमार्गे चित्तचैत्तप्रवृत्त्यवस्थायां प्रहेयस्तत्तत्प्रतिपक्षावस्थाप्रतिपादनेन व्यतिरेकमुखेन प्रतिपादित इति। तथा चोक्तम्।

भवशान्तिप्रपातित्वान्न्यूनत्वेऽधिगमस्य च।
परिग्रहस्याभावे च वैकल्ये प्रतिपद्गते ॥ १० ॥
परप्रत्ययगामित्वे समुद्देशनिवर्तने।
प्रादेशिकत्वे नानात्वे स्थानप्रस्थानमोहयोः ॥ ११ ॥
पृष्ठतो गमने चेति विकल्पोऽयं नवात्मकः।
निवृत्तिपक्षाधिष्ठानः श्रावकादिमनोभवः ॥१२॥ इति

कथं द्रव्यसत्पृथग्जनपुरुषाधिष्ठानः प्रथमो ग्राहकविकल्पो नवधेति। प्रथमविकल्पार्थमाह। नापि भगवन् कश्चिदित्यादि। ग्रहणमोक्षणविकल्पाभावादिति भावः। एतदेव स्पष्टयन्नाह। तत्कस्य हेतोरित्यादि। द्वितीयविकल्पार्थमाह। अपि नु खलु पुनरित्यादि। एवं चरति चरति प्रज्ञापारमितायामिति। सर्वधर्मानुपलम्भदेशनायामेवमनवसादादिना यश्चरति मनसिकारविकल्पा-

भावात् सम्यक् चरति जिनजनन्यामित्यर्थः। तृतीयविकल्पार्थमाह। एवं चरन्तं बोधिसत्त्वमित्यादि। एवं चरन्तं नमस्यन्तीति। त्रैधातुकश्लेषविकल्पविरहानुभवत्वप्राप्त्या नमस्कुर्वन्ति। चतुर्थविकल्पार्थमाह। येऽपि ते सुभूतेऽप्रमेयेष्वित्यादि (p. 447, 8)। बुद्धचक्षुषा पश्यन्तीति स्थानविकल्पविवेकाद्विशिष्टार्थोत्पादनाभिप्रायेण निरूपयन्ति, कार्यनिष्पादनादनुगृह्णन्ति, भव्यतारूपेणावधारणात् समन्वाहरन्ति। तथागतानुग्रहादेव प्रश्नयन्नाह। ये च खलु पुनरित्यादि। पूर्ववत्तत्कस्य हेतोरित्याशङ्क्याह। ये सुभूत इत्यादि। एतदेव विस्तारयन्नाह। तिष्ठन्त्वित्यादि (p. 448, 9)। पञ्चमविकल्पार्थमाह। द्वाभ्यामित्यादि। अपरित्यक्ता भवन्तीत्यनेनाभावाभिनिवेशविकल्पो निषिद्धः। सर्वधर्माश्चानेन शून्यतातो व्यवलोकिता भवन्तीत्यनेन भावाभिनिवेशविकल्पश्च प्रतिक्षिप्तः। षष्ठविकल्पार्थमाह। अपराभ्यां सुभूत इत्यादि। धर्मवस्तुप्रज्ञप्तिविकल्पो मया प्रहतव्य इत्युक्तार्थस्य निष्पादनाद्यथावादी तथावादी तथाकारी च भवति। अत एव च समन्वाह्रियते। सप्तमविकल्पार्थाह। एवञ्चरतः सुभूत इत्यादि। यदुत प्रज्ञापारमिताविहारेणेति। सक्तिविकल्पप्रहाणकारित्वादस्य विहारस्येति भावः। एतदेव स्पष्टयन्नाह। तत्कस्य हेतोरित्यादि (p. 449, 3)। समाहितासमाहितभेदाद्विहरन्निति बोधव्यम्। प्रमुदितां भूमिमारभ्य यावत् समन्तप्रभाबुद्धभूम्यधिगमलाभाद्यथाक्रमं नाथो

भविष्यसीत्याद्येकादशपदानि वाच्यानि। उपसंहरन्नाह। एवं ते देवपुत्रा इत्यादि। तथैव तत्कस्य हेतोरित्याशङ्क्याह। एतेन हि सुभूत इत्यादि। यस्माद्यथोक्तविहारेण विहरतो बोधिसत्त्वस्य बुद्धा भगवन्तो नामादिकीर्तनधर्मदेशनापूर्वक-मुदानमुदीरयन्ति, तस्मादुत्साहं वर्धयिष्यन्तीत्यर्थः। एत-देव दृष्टान्तेन स्पष्टयन्नाह। तद्यथापि नामेत्यादि। सर्व-बोधिसत्त्वानामानन्त्यान्नामग्रहणाशक्यत्वादतिदिशन्नाह। अपरेषामित्यादि (p. 450, 2)। शाक्यमुनितथागतबुद्धक्षेत्र-प्रशंसनार्हा बोधिसत्त्वा न विद्यन्त इति चेदाह। एवमेव सुभूत इत्यादि। एतदुक्तम्। यथाहं स्वबुद्धक्षेत्रावस्थित-बोधिसत्त्वोत्साहनायापरतथागतक्षेत्रावस्थितबोधिसत्त्वानां नामादिकीर्तनपरो धर्मं देशयाम्येवमेव तेऽक्षोभ्यादयोऽपि तथागता मद्बुद्धक्षेत्रावस्थितबोधिसत्त्वानां नामादिकीर्तन-परा धर्मं देशयन्तीति। अष्टमविकल्पार्थमाह। किं सर्वेषा-मेवेत्यादि। नो हीदमिति। परिहारवचनं विवृण्वन्नाह। न सुभूत इत्यादि। किन्तर्हि येऽविनिवर्तनीया इति। प्रतिपक्षविकल्पविगमाद्येऽष्टम्यादिभूमावविनिवर्तनीयतां प्राप्ता इत्यर्थः। नवमविकल्पार्थञ्चाह। सन्ति भगवन्न-विनिवर्तनीयानित्यादि। विद्यन्त इत्याह। सन्ति सुभूत इत्यादि। एतदेव ते पुनः कतम इत्याशङ्क्य प्रतिपादय-न्नाह। य एतर्हीत्यादि (p. 451, 4)। अक्षोभ्यस्येति वचनं बाहुल्येन तद्बुद्धक्षेत्रे परिशुद्धसन्ततीनामुत्पादात् अन्या-नप्यतिदिशन्नाह। येऽपि ते सुभूत इत्यादि। रत्न-

केतुबोधिसत्त्वग्रहणं तत्समानजातीयबोधिसत्त्वोपलक्षणपरं ज्ञेयम्। प्रतिविशिष्टकल्याणमित्रादिपरिग्रहबलेनाचलायां भूमेरपि प्राक्कथञ्चिद्यथेच्छगमनव्याघातविकल्पविरहाद्दृद्धि-वशितां प्राप्ता येऽक्षोभ्यादिबुद्धक्षेत्रे बोधिसत्त्वा विहरन्ति तेऽविनिवर्तनीयान् स्थापयित्वा नामादिकीर्तनविषया विद्यन्त इत्यर्थः। एतदुक्तम्। यथावत् संवृत्या ग्रहणमोक्षणे तत्त्वतोऽमनस्कारेण मनस्करणे धर्मतया त्रैधातुकोपश्लेषणे शून्यताऽनवस्थानेनावस्थानेऽनभिनिवेशेन सर्वाभिनिवेशे द्रव्यसद्भावेन सर्वधर्मप्रज्ञप्तौ तत्त्वज्ञानासक्त्यानभिनिवेश-पूर्वकसक्तौ समताभावनाऽप्रतिपक्षतया प्रतिपक्षे सम्यग-विज्ञातप्रज्ञापारमितत्वेन यथेच्छगमनव्याघाते च पार-मार्थिकभावाभिनिवेशेन द्रव्यसन्नेवात्मा ग्राहकः प्रवर्तत इत्येवं पृथग्जनसम्बन्धी प्रथमो ग्राहकविकल्पो नवप्रकारो बोधिसत्त्वानां दर्शनमार्गप्रयोगावस्थायां प्रहेयः, तत्प्रति-पक्षावस्थाप्रतिपादनेन व्यतिरेकमुखेन प्रतिपादित इति। तथा चोक्तम्—

ग्राहकः प्रथमो ज्ञेयो ग्रहणप्रतिमोक्षणे।
मनस्क्रियायां धातूनामुपश्लेषे त्रयस्य च ॥ १३ ॥
स्थाने चाभिनिवेशे च प्रज्ञप्तौ धर्मवस्तुनः।
सक्तौ च प्रतिपक्षे च यथेच्छं च गतिक्षतौ ॥१४॥ इति

कथं प्रज्ञप्तिसत्पुरुषाधिष्ठानो द्वितीयग्रहणविकल्पो नव-धेति। प्रथमविकल्पार्थमाह। पुनरपरं सुभूत इत्यादि। अधिमुञ्चन्तीति। सर्वसत्त्वाग्रताद्युद्देशगमनाभिप्रायेणानु-त्पत्तिकाः। शान्ता इति वा सर्वधर्मान् मनसिकुर्वन्ति। न

च तावत् प्रकर्षवतीमनुत्पत्तिकधर्मक्षान्तिमविनिवर्तनीयवशिताप्राप्तिं चाधिगता भवन्तीत्येवमुद्देशानिर्याणविकल्पाभावो दर्शितः। द्वितीयविकल्पार्थमाह। येषां खलु पुनरित्यादि (p. 452, 1)। प्रहीणा तेषां श्रावकभूमिः प्रत्येकबुद्धभूमिश्चेत्यनेन मार्गावधारणविकल्पाभावमाह। बुद्धभूमिरेव तेषां प्रतिकांक्षितव्येत्यनेनापि स्वमार्गावधारणविकल्पविरहो दर्शितोऽन्यथा विपर्याससद्भावेन बुद्धभूमेरसम्भवात्। तृतीयविकल्पार्थमाह। तेऽपि व्याकरिष्यन्तेऽनुत्तरायामित्यादि। पूर्ववत्तत्कस्य हेतोरित्याशङ्क्याह। येषां हि सुभूत इत्यादि। एवं प्रज्ञापारमितायाञ्चरतामिति। उत्पादनिरोधविकल्पविवेकेनानुतिष्ठतामित्यर्थः। चतुर्थविकल्पार्थमाह। पुनरपरं सुभूत इत्यादि। अविनिवर्तनीयतायां स्थास्यन्तीति। ये बोधिसत्त्वाः कांक्षादिकमकृत्वा विस्तरेण श्रवणादिकं करिष्यन्तीति तेषाञ्चान्तिके ब्रह्मचर्यचरणादिकमनुष्ठास्यन्ति तेऽपि संयोगवियोगविकल्पविरहादविनिवर्तनीयत्वे स्थास्यन्तीत्यर्थः। पञ्चमविकल्पार्थमाह। कः पुनर्वादो य एनामित्यादि (p. 453, 2)। रूपादिस्थानविकल्पानुपलम्भेन ये त्वधिमुच्य प्रज्ञापारमितां तथत्वाय च स्थित्वा बुद्धत्वनिमित्तं सत्त्वेभ्यो धर्मं देशयिष्यन्ति, ते नितरामविनिवर्तनीयत्वे स्थास्यन्तीति पूर्वेण सम्बन्धः। षष्ठविकल्पार्थमाह। यदा भगवंस्तथतेत्यादि। यत्सुभूत इत्यादिना तद्वचनमनूद्य परिहरन्नाह। न सुभूते तथताविनिर्मुक्तोऽन्य इत्यादि। धर्मधातुस्वभावत्वात् सर्वधर्माणां

तथताव्यतिरिक्तान्यधर्मानुपलम्भे सति नैव कश्चित्परमार्थतस्तथतायां स्थास्यति, संवृत्या पुनर्गोत्रविप्रणाशविकल्पविरहात्स्थास्यन्तीति भावः। परमार्थमेवाधिकृत्य स्पष्टयन्नाह। तथतैव तावदित्यादि। सप्तमविकल्पार्थमाह। न सुभूते तथताऽनुत्तरामित्यादि। तत्त्वतो न तथता नान्यो वा धर्मो बोधिमभिसम्बुध्यते किन्तु संवृत्या प्रार्थनाऽभावविकल्पविरहात् प्रार्थयितव्यवस्तूपलम्भेनाभिसम्बुध्यत इति मतिः। अष्टमविकल्पार्थमाह। न सुभूते तथता धर्मं देशयतीति। तत्त्वतो न तथता धर्मं देशयत्यपि तु संवृत्या हेत्वभावविकल्पविरहाद्धेतुसद्भावेन देशयतीत्यभिप्रायः। नवमविकल्पार्थमाह। सोऽपि सुभूते नोपलभ्यते यो धर्मो देश्येतेति। प्रत्यर्थिकधर्मोपलम्भविकल्पाभावेन देश्यमानधर्मानुपलम्भ इत्यर्थः। एतदुक्तम्। श्रावकादिनिर्याणत्वेन यथोक्तोद्देशानिर्याणे हिताहितप्राप्तिपरिहारत्वेन मार्गामार्गावधारणे संवृतिकार्यकारणभावेनोत्पादनिरोधे निरन्तरेतरप्रतिभासत्वेन समस्तवस्तुसंयोगवियोगे व्योमावस्थितशकुनिसदृशरूपादिस्थाने, बोधिचित्तोत्पादादिद्वारेण श्रावकादिगोत्रविनाशे तथताप्रतिविशिष्टधर्माभावेनाभिलाषाभावे परमार्थसत्याश्रयेण हेत्वभावेऽत्यन्तमात्सर्यधर्मतया प्रत्यर्थिकमारादिवस्तूपलम्भे च तात्त्विकभावाभिनिवेशेन प्रज्ञप्तिसन्नेवात्मा ग्राहकः प्रवर्तत इत्येवमार्याणां सम्बन्धी द्वितीयो ग्राहकविकल्पो नवप्रकारो दर्शनमार्गचित्तचैत्तप्रवृत्त्यवस्थायां बोधिसत्त्वानां प्रहेयस्तत्प्रतिपक्षावस्थाप्रतिपादनेन व्यतिरेकमुखेनोक्तो भवति।

तथा चोक्तम् ।

यथोद्देशमनिर्याणे मार्गामार्गावधारणे ।
सनिरोधे समुत्पादे वस्तुयोगवियोगयोः ॥ १५ ॥
स्थाने गोत्रस्य नाशे च प्रार्थनाहेत्वभावयोः ।
प्रत्यर्थिकोपलम्भे च विकल्पो ग्राहकोऽपरः ॥१६॥ इति

स्याद्ग्राह्यविकल्पो न ग्राहकविकल्प इति । चतुष्कोटिकम् । तत्र प्रथमा कोटिः यद्विषयप्रतिभासा ग्राह्याकारविज्ञप्तिः । द्वितीया त्वेकक्षणिकी ग्राहकाकारा । तृतीया सैव क्षणान्तरे । चतुर्थी तदाकारविनिर्मुक्ता प्रज्ञापारमितेति । स्यात् गोत्रमेव न गोत्रविकल्प इति पश्चात्पादकः । यस्तावद्गोत्रविकल्पो गोत्रमपि तत् तद्यथा प्रतिपक्षसमुदागमकाले गोत्रम् । स्याद्गोत्रमेव न गोत्रविकल्पः तद्यथा समुदागच्छद्गोत्रमिति । स्यात् समुदागमविकल्पो नालम्बनविकल्प इति पूर्वपादकः । यस्तावत् समुदागमविकल्पः आलम्बनविकल्पोऽपि सः तद्यथा समुदागच्छतः सम्यगालम्बने प्रयोगः । स्यादालम्बनविकल्प एव न समुदागमविकल्पस्तद्यथाऽपरिनिष्पन्नमालम्बनमिति । अनया दिशा शेषोऽभ्यूह्यः । दर्शनमार्गे विपक्षं सप्रतिपक्षमेव निर्दिश्य यन्महाबोधिपरिनिष्पत्तये दर्शनमार्गो येन त्रिविधकारणेन सहित इष्यते । तदिदानीं वक्तव्यमिति । महाबोधौ दर्शनादिमार्गसन्दर्शनेनान्येषां प्रतिष्ठापनं प्रथमं कारणं कथयन्नाह । गम्भीरा भगवन्नित्यादि (p. 454, 1) । पूर्ववत्तत्कस्य हेतोरित्याशङ्क्याह । न च नाम भगवन्नित्यादि । सर्वधर्मानुत्पादेऽप्यवलयना-

दिकमकृत्वाऽनुत्तरां बोधिं संवृत्या बोद्धुकामास्ते दुष्कर-कारका इत्युत्साहप्रवेदनाद्बोधौ दर्शनादिमार्गसंदर्श-नान्येषां प्रतिपादिता स्यात् । परमार्थसमाश्रयणेन किञ्चिद्दुष्करमित्याह । यत्कौशिकैवमित्यादि । सुभाषित-त्वेन प्रशंसयन्नाह । यद्यदेवार्यसुभूतिरित्यादि । न क्वचि-त्सज्जतीति । न क्वचिदभिनिवेशते । स्वोक्तार्थं द्रढय-न्नाह । कच्चिदहमित्यादि । धर्मस्य चानुधर्ममिति यथा प्रणिहितस्य शून्यताधर्मस्य प्रतिपत्तिः । साधूक्तमित्याह । यत्खलु त्वमित्यादि । तथैव तत्कस्य हेतोरित्याशङ्क्याह । यद्यदेव हीत्यादि । एतदेव कुत इति । तत्कस्य हेतो-रित्याशङ्क्याह । (p 455, 2) सुभूतिर्हि कौशिकेत्यादि । कामादिधातुत्रये प्रत्येकं मृदुमध्याधिमात्रक्लेशप्रहाण-कारिणः दर्शनमार्गस्य शून्यतारूपेण दर्शितत्वाद्यथाक्रमं प्रज्ञापारमितामपि तावन्नोपलभ्यत इत्यारभ्य यावद्धर्ममेव तावन्नोपलभ्यत इति नवपदानि वाच्यानि । सामान्येन सर्वधर्माणां कार्यकारणयोरनुपलम्भाद्यथासंख्यं सर्वधर्म-विविक्तविहारः, सर्वधर्मानुपलम्भविहारश्च ग्राह्यः । यद्येवं बोधिसत्त्वैः समान एव श्रावकाणां विहार इति चेदाह । यः खलु पुनरित्यादि (p. 455, 3) । तेषामिति तथागत-विहारव्यतिरिक्तानामन्येषामनेन विहारेण विहर्तव्य-मिति । बोधिसत्त्वविहारानुशंसकथनेनैव महाबोधौ दर्श-नादिमार्गसन्दर्शनाऽन्येषां निगदिता स्यात् ।

अभिसमयालङ्कारालोकायां प्रज्ञापारमिताव्याख्यायां
सारपरिवर्तो नाम सप्तविंशतितमः ॥

---

अतोऽपकर्ष एव काले यथोक्तान्तरकल्पप्रमाणेन कालस्य परिच्छेदाद्विंशतिकल्पसहस्राणीत्युच्यते । बोधिनिमित्तार्थमेवान्येषां सम्यग्ग्रन्थार्थादिद्वारेण प्रज्ञापारमिताप्रत्यर्पणं द्वितीयं कारणं वक्तुमुपोद्घातयन्नाह । येऽहि केचिदानन्देत्यादि (p. 459, 3) । तथैव तत्कस्य हेतोरित्याशङ्क्याह । तथा हि मनुष्येष्वित्यादि । न प्रतिक्रोशयन्तीत्यादि (p. 460, 6) सप्तपदानि यथाक्रमं सर्वाकारज्ञतादिसप्ताभिसमयविलोमनादिति वाच्यानि । न विसंवादयिष्यति प्रणिधानमिति । अनुत्तरबोधिविषये प्रवृत्तप्रणिधानम् । यद्यन्यथाप्रणिधिकरणान्न विसंवादयिष्यत्येवं तत्कुशलमूलं श्रावकप्रत्येकबुद्धत्वाय न दास्यति विपाकमित्यर्थः । उपोद्घातं कृत्वेदानीं तथागतसम्बन्धेन मृदुपरीन्दनार्थमाह । तस्मात्तर्हीत्यादि । परीन्दामि प्रत्यर्पयामि । अनुपरीन्दामि पुनरपि प्रत्यर्पयामि । उद्ग्रहणाद्यर्थं प्रत्यर्पणादेवार्यानन्दोऽस्या मातुः सङ्गीतिकार इति केचित् । धारणाद्यर्थमेव प्रत्यर्पणान्महावज्रधर एव सङ्गीतिकार इत्यपरे । तत्र विप्रणाशनमन्यथाकरणमुत्सर्जनं सर्वथा प्रत्याख्यानम् । विस्मरणममनसिकरणम् । पदसामन्तकः पदैकदेशः । कायत्रयप्रापणाद्यथाक्रमं माता जननी जनयित्री । तस्मादेव सर्वज्ञतायाः समुत्पादनादाहारिका । मध्यपरीन्दनार्थमाह । उद्ग्रहीतव्येयमित्यादि (p. 461, 13) । अधिमात्रपरीन्दनार्थमाह । यथा तदित्यादि । तत्तदितिकर्तव्यश्चेत्यादिना सम्बन्धः । तया हितैषितयेति (p. 462, 9) । तथागतहितैषितया बोधिसत्त्वसम्बन्धेनापि मृदुपरीन्द-

नार्थमाह। येऽपि त इत्यादि (p. 463, 11)। मध्यपरीन्दनार्थमाह। ये हि केचिदित्यादि (p. 464, 3)। अधिमात्रपरीन्दनार्थमाह। एषा ह्यानन्देत्यादि। बोधिप्राप्तये चाव्यवहितं स्वतः प्रचुरतरप्रज्ञापारमिताभावनादिपुण्यलक्षणं तृतीयं कारणं कथयन्नाह। सचेत्त्वमानन्द श्रावकयानिकानामित्यादि। एकक्षणलवमुहूर्तमपीति क्षणादिग्रहणं यथाक्रमं तीक्ष्णमध्यमृद्विन्द्रियपुद्गलज्ञापनार्थम्।

तत्राध्वपर्यन्तः क्षणः विंशत्क्षणशतं पुनस्तत्क्षणास्ते पुनः षष्टिर्लवः। त्रिंशल्लवा मुहूर्तः।

सर्वान्त्योऽपि हि वर्णात्मा निमेषतुलितस्थितिः।

इति न्यायात्कथं क्षणेनैकेन धर्मं देशयतीति चेदुच्यते। देशकबोधिसत्त्वाधिपत्याच्छ्रोतुः क्षणेनैकेन देशनाधर्मनिर्भासवतः प्रत्ययस्योत्पादात्, तेन तस्य धर्मो देशित इति व्यपदिश्यते। यथोक्तान्येव त्रीणि सम्यक्सम्बोधिप्राप्तिकारणान्यवगन्तव्यानि। तथा चोक्तम्

बोधौ सन्दर्शनान्येषां तद्धेतोश्च परीन्दना।

तत्प्राप्त्यनन्तरो हेतुः पुण्यबाहुल्यलक्षणः॥ १७॥ इति

यथानिर्दिष्टकारणसहितस्यैव दर्शनमार्गस्य विकल्पाप्रतिभासने सामर्थ्यमिति प्रतिपादयितुमक्षोभ्यतथागतसन्दर्शनानाभासगमनोदाहरणं कथयन्नाह। अथ खलु भगवानित्यादि। तत्र सर्वगुणरत्नाकरत्वात् सागरोपमा, गम्भीरधर्मावबोधात् गम्भीरा, सर्वमारविषयातिक्रान्तत्वादक्षोभ्या। दार्ष्टान्तिकमर्थं वक्तुमाह। एवमानन्द सर्वधर्मा इति। चतुर्विधग्राह्यग्राहकविकल्पानां दर्शनमार्गेऽनभास-

तस्मिन् प्रहीणे तन्मूला ग्राह्यविकल्पादयः कथमवस्थानं लभेरन्निति । अस्मिंश्च दर्शनमार्गे समुत्पन्ने कामरूपारूप्यधातुभेदेन प्रत्येकं चतुर्विकल्पनवप्रकारतयाऽष्टोत्तरशतग्राह्यग्राहकविकल्पप्रहाणेन तत्संगृहीतविकल्पजनकवासनाक्लेशाष्टोत्तरशतप्रहाणं प्रतीत्यसमुत्पादधर्मतयोपलभ्य तत्र वशित्वार्थं तामेव पुनःपुनर्भावयतीत्याह । सर्वाणि चोपायकौशल्यानि इत्यादि । दर्शनमार्गप्राप्तो योगी क्लेशज्ञेयावरणभयाभावात् सिंहविजृम्भितं नाम समाधिं समापद्योत्तरकालमविद्याप्रत्ययाः संस्कारा इत्याद्यनुलोमं जरामरणनिरोधो जातिनिरोधादित्यादि प्रतिलोमं प्रतीत्यसमुत्पादं निरूपयति । इदमत्रोपायकौशलं प्रतिपत्तव्यम् ॥

तथा चोक्तम् ।

स समाधिं समापद्य ततः सिंहविजृम्भितम् ।
अनुलोमं विलोमञ्च प्रतीत्योत्पादमीक्षते ॥२३॥ इति

दर्शनमार्गमेवमभिधाय विपक्षप्रहाणादिकमाधारप्रतिपत्तिपूर्वकं सुबोधमित्याधारं भावनामार्गं वक्तुमाह । सर्वोपायकौशल्यानि सुभूत इत्यादि । सर्वोपायकौशल्यमत्र भावनामार्गः । स पुनर्नवानुपूर्वसमापत्तिसङ्गृहीतस्ताः पुनरवस्कन्दसमापत्तिसङ्गृहीता इत्यवगन्तव्यम् । तस्मादेतदुक्तं भवति । प्रथमध्यानमारभ्य यावन्निरोधं गत्वा ततो निरोधमारभ्य यावत्प्रथमध्यानमागम्यैवमनुलोमप्रतिलोमक्रमद्वयेन चतुर्ध्यानचतुरारूप्यनिरोधलक्षणा नवसमापत्तीर्गत्वाऽऽगम्य पुनः प्रथमं ध्यानं समापद्य ततो व्युत्थाय

प्रमाणम्। अनुमानेन विविक्ततावबोधः क्षयः। आगमेनोभाभ्यां वा इयत्तावधारणं पर्यन्तः। अयमभिप्रायः यथाकाशस्य द्रव्याभावमात्रस्वभावत्वात्प्रमाणादि ग्रहीतुं न शक्यते तथा मातुरपीति। एतदेव स्पष्टयन्नाह। तत्कस्य हेतोरित्यादि। ग्रन्थप्रमाणकथनेन प्रमाणादिकमाख्यातमिति चेदाह। न मयानन्देत्यादि। प्रज्ञापारमितायास्तत्त्वरूपाया इति भावः। कस्यास्तर्हि प्रमाणादिकं स्यादित्याह। नामकायेत्यादि। तत्र धर्माणां स्वभावाधिवचनं नामकायास्तेषामेव विशेषाधिवचनं पदकायाः तदुभयाश्रयाक्षराणि व्यञ्जनकायाः। नामादिस्वभावा प्रज्ञापारमिता प्रमाणबद्धा सापि न मुख्यतः प्रज्ञापारमितेत्यर्थः। तदेव स्पष्टयितुमाह। तत्कस्य हेतोरित्यादि। एतदुक्तं परमार्थतस्ताथागतं ज्ञानं प्रज्ञापारमिता तत्प्रतिपादनादुपचारवृत्त्या ग्रन्थात्मिका प्रज्ञापारमिता तत्त्वत इति। अत एव तत्त्वमधिकृत्याह। न हि प्रमाणवतीयमित्यादि। तत्त्वरूपायाः प्रमाणाकथने कारणं पृच्छन्नाह। केन पुनरित्यादि। परिहारार्थमाह। अक्षयत्वादित्यादि। विविक्तत्वादिति। उत्पादाभावेनानुत्पादज्ञानस्वभावत्वादित्यर्थः। विविक्तस्येति। अनुत्पन्नस्य भावस्य शून्यता नोपलभ्यते धर्मिणोऽसत्त्वादिति भावः। अप्रमेयत्वादिति। क्षयोत्पादाभावेन प्रमातुमशक्यत्वात्। त्रैयध्विकतथागतानां क्षयानुत्पादज्ञानप्रभावितत्वमित्याह। येऽपि ते आनन्द इत्यादि। तत्क्षणिकानित्यतया क्षीणा प्रबन्धानित्यतया परिक्षीणा। उपसंहरन्नाह। तस्मात्तर्हीत्यादि

(p. 468, 12)। एतदुक्तम्। क्लेशज्ञेयावरणमलानामुत्पन्नानुत्पन्नत्वेन कल्पितानां,

धर्मधातुविनिर्मुक्तो यस्माद्धर्मो न विद्यते।

इति धर्मधातुस्वभावानामाकाशस्येव निरोधोत्पादाभावादेकानेकस्वभावकार्यकारणविचारकप्रमाणाद्युपपन्नभाववैधुर्याद्गगनकमलवद्वा यथाक्रमं मलानां क्षयोत्पादाभावादक्षयानुत्पादज्ञानात्मिका सर्वधर्माविपरीताधिगतिलक्षणा महाबोधिर्यथावत्प्रज्ञापारमिता धर्मकायोऽभिधीयत इति। तथा चोक्तम्

क्षयानुत्पादयोर्ज्ञाने मलानां बोधिरुच्यते।

क्षयाभावादनुत्पादात्ते हि ज्ञेये यथाक्रममिति ॥२८॥

एवञ्च तत्त्वे निर्दिष्टे केचिद्बहुलतरोपलम्भाभिनिवेशेन भावविनाशाभिसन्धिना क्षीणे क्षीणमिति ज्ञानं क्षयज्ञानमनागतभावानुत्पादाभिसन्धिना चानुत्पादज्ञानं वर्णयन्तीति महाबोधिस्वरूपं विप्रतिपत्तिस्थानत्वेनाहत्य प्रतिपादयितुमाह। गम्भीरमिदमित्यादि। तथैवानुवदन्नाह। अक्षयेत्यादि। आकाशाक्षयत्वात्सर्वधर्मानुत्पादत इति। आकाशस्येव क्षयाभावाद्धर्माणाञ्चोत्पादाभावेन क्षयानुत्पादज्ञानात्मिका महाबोधिरक्षयेत्यर्थः। आदिकर्मिकावस्थायामुपलम्भाभिनिवेशेन भावनायां कस्मादीदृशी प्रज्ञापारमिताऽधिगम्यत इत्याह। कथं भगवन्नित्यादि। नैष दोषो यस्मात्प्रयोगकालमेवारभ्य विनाशोत्पादविगतान्मायोपमान् सर्वधर्मान् भावयतीत्याह। रूपाक्षयत्वेनेत्यादि। प्रकारान्तरेणापि स्पष्टयन्नाह। एवं

खलु सुभूत इत्यादि। तत्र पूर्वजन्मनि क्लेशावस्थेहाविद्या तथा पुण्यादिकर्मावस्था संस्काराः तथेह जन्मनि प्रतिसन्धिक्षणे पञ्चस्कन्धविज्ञानम्। सन्धिचित्तात् परेण षडायतनोत्पादात्पूर्वं नामरूपम्। ततो यावदिन्द्रियविषयविज्ञानत्रिकसन्निपातो न भवति, तावत्षडायतनम्। यावद्वेदनात्रयकारणपरिच्छेदसमर्थो न भवति, तावत् त्रिकसन्निपातात्स्पर्शः। मैथुनरागात्प्राक्सुखाद्यनुभवावस्था वेदना। विषयपर्येषणावस्थातः प्राक् कामगुणमैथुनरागसमुदाचारावस्था तृष्णा। विषयपर्येषणावस्थोपादानम्। विषयप्राप्तिहेतुपरिधावनोपार्जितपौनर्भविकं कर्म भवः। तेन कर्मणाऽयत्यां पुनः प्रतिसन्धिर्जातिः। ततः परेण यावद्वेदनावस्था सा जरामरणमित्याद्यन्तयोर्द्वे द्वे मध्यस्थाविति त्रिकाण्डो द्वादशाङ्गः प्रतीत्यसमुत्पादोऽस्य क्षयाभावादक्षयत्वेनेति पूर्ववत्। शाश्वतोच्छेदरहितत्वेनान्तद्वयवर्जिता प्रतीत्यसमुत्पादव्यवलोकना। अनाद्यन्तमध्यं तमिति। मायोपमत्वेन जन्मनाशस्थितिविरहितं प्रतीत्यसमुत्पादं व्यवलोकयति। इत्थंभूत एव प्रतीत्यसमुत्पादो ग्राह्य इत्याह। एवं व्यवलोकयत इत्यादि (p. 469, 11)। तत्र मनसिकारोऽक्षयाभिनिर्हारः। उपायकौशलं प्रतीत्यसमुत्पादविचारणा। तदेव कथयन्नाह। कथं प्रज्ञापारमितायामित्यादि। संहतेस्तर्ह्युच्छेद इति चेदाह। एवं खलु पुनरित्यादि (p. 470, 10)। अहेतुकमिति संहत्या हेतोर्विद्यमानत्वात्। नित्यमित्यादि। तत्रोत्पादहेतोरसत्वान्नित्यः। उत्पन्नस्य विनाशाभावाद्ध्रुवः। आविर्भाव-

तिरोभावरूपेण विवर्तनाच्छाश्वतः। अवस्थान्तरप्राप्ति-विरहादविपरिणामधर्मकः। कथं पुनरुपलभ्यमानरूपादी-नक्षयाकारेणाभिमुखीकुर्यादित्याह। यस्मिन् समये सुभूत इत्यादि। रूपादिसर्वधर्मानुपलम्भेन सर्वात्मधर्मग्राह-प्रहाणाद्दर्शनमार्गव्यापारे द्योतितः स्यात्। यस्मादेवं सर्व-धर्मादर्शनमतो ये भावविनाशाभिसन्धिना क्षीणे क्षीणमिति ज्ञानं क्षयज्ञानं भावानुत्पादाभिसन्धिना चानुत्पन्नेऽनुत्पन्न-मिति ज्ञानमनुत्पादज्ञानं वर्णयन्ति, तेषां क्षयानुत्पाद-वैकल्यादेतज्ज्ञानं न घटते। तथा ह्युत्पन्नानुत्पन्नयो-र्यथाक्रमं क्षयोत्पत्तिविघातलक्षणनिरोधेनानिरुद्धायां पर-मार्थतस्तथतारूपायां प्रकृतौ सत्यां कतरद्विकल्पादि-रूपमुत्पन्नं क्षीणं कतरच्चानुत्पन्नमनुत्पत्तिधर्मकं जातं दर्शन-मार्गबलेन वितथभावाभिनिवेशिनां वादिनां। यावता नैव किञ्चित्। तस्माद्यथोक्तमेव क्षयानुत्पादज्ञानं प्रतिपत्तव्यम्।

तथा चोक्तं—

प्रकृतावनिरुद्धायां दर्शनाख्येन वर्त्मना।

विकल्पजातं किं क्षीणं किञ्चानुत्पत्तिमागतम्॥ १९॥ इति

अन्यथा तात्त्विकधर्मसत्त्वोपगमे भगवतः सर्वथा विकल्पक्लेशज्ञेयावरणप्रहाणं दुरुपपादं स्यात्। तथा ह्युदयव्ययशून्यत्वान्नास्त्यात्मेति विभावयन्नात्माभिनिवेशं परित्यज्य तद्विविक्तस्वभावं स्कन्धादिकं प्रतीत्यसमुत्पन्न-मुदयव्ययधर्मकं समुपलभ्य नीलतद्धियोः सहोपलम्भ-नियमाच्चित्तमात्रमेवेदं न बाह्यार्थोऽस्तीति मनसिकुर्व-न्नपरित्यक्तग्राहकाकारचित्ताभिनिवेशो बाह्यार्थाभिनिवेशं तिरस्कृत्य ग्राह्याभावे ग्राहकाभाव इति निध्यायंस्तामपि

ग्राहकाकारलक्षणां विज्ञप्तिमात्रतामवधूयाद्वयज्ञानमेव केवलं भावतो भावरूपमिति निश्चित्य तदपि प्रतीत्यसमुत्पन्नत्वान्मायावन्निःस्वभावं तत्त्वतोऽपगतैकान्तभावाभावादिपरामर्शरूपमिति भावयन् भावनाबलनिष्पत्तौ केषाञ्चिन्मणिरूप्यादिज्ञानवदुत्सारितसकलभ्रान्तिनिमित्ताया मायोपमात्मप्रतिभासधियो निर्विकल्पायाः कथञ्चित् प्रत्यात्मवेद्यायाः समुत्पादे ज्ञेयावरणं सम्यग्योगी प्रजह्यात्। अन्यथा परैः सर्वदा आकाशस्य द्रव्याभावमात्ररूपधारणवदनाधेयानपनेयस्वरूपधारणाद्धर्माणां क्षणिकानां ज्ञानमात्ररूपाणां ज्ञेयलक्षणानाञ्च यदि परमार्थतो विद्यमानता स्यात्तदा प्रतिपक्षभावनया आकाशस्यैव तेषां न किञ्चित् क्रियते। अतो भावाभिनिवेशविपर्यासाविनिवृत्त्या यद्भगवतः सर्वथा ज्ञेयावरणप्रहाणं धर्माणाञ्च यत्सत्तोपगम्यते तत्परस्परविरुद्धार्थाभ्युपगमे विस्मयस्थानीयं भवेत्। तथा चोक्तम्।

सत्ता च नाम धर्माणां ज्ञेये वावरणक्षयः।

कथ्यते यत्परैः शास्तुरत्र विस्मीयते मया ॥२०॥ इति

यस्मादेवं भावाभिनिवेशेन मुक्तेरनुपपत्तिरतोऽपवादसमारोपरूपमपनयनप्रक्षेपं कस्यचिद्धर्मस्याकृत्वेदमेव प्रतीत्यसमुत्पन्नं संवृत्या तथ्यरूपं रूपादिनिःस्वभावादिरूपतो निरूपणीयमेवञ्च मायागजेनापरमायागजपराजयवद्विपर्यासनिवृत्त्या तत्त्वदर्शी विमुच्यत इति प्रतिपत्तव्यम्।

तथा चोक्तम्।

नापनेयमतः किञ्चित्प्रक्षेप्तव्यं न किञ्चन।

द्रष्टव्यं भूततो भूतं भूतदर्शी विमुच्यते ॥ २१ ॥ इति

यथोक्ताविपर्यस्ततत्त्वभावनया सकलविपक्षधर्मातिक्रम इति। माराणां वैमनस्यप्रतिपादनेनाह। यस्मिन् समये सुभूत इत्यादि (p. 471, 16)। पूर्ववत् तत्कस्य हेतोरित्याशङ्क्याह। प्रज्ञापारमिताविहारेण हीत्यादि (p. 472, 1)। उपसंहरन्नाह। तस्मात्तर्हीत्यादि। ननु मुख्यतो दर्शनमार्गस्य महाबोधिकारणत्वात्कथं प्रज्ञापारमितायां चरितव्यमित्युक्तमिति। तत्कस्य हेतोरित्याशङ्क्य। प्रकृतमेव दर्शनमार्गं विस्तरेण वक्तुमाह। प्रज्ञापारमितायां हीत्यादि। प्रत्येकमेवं निर्दिश्य समुदायत्वेन वक्तुं पुनरप्याह। प्रज्ञापारमितायामित्यादि। षट्पारमितापूर्णाधिवचनमेतद्यदुत प्रज्ञापारमितेति। प्राग्वचनात् प्रज्ञापारमिताचर्ययैव षट्पारमिता भावनापरिपूरिं गच्छन्तीत्यर्थः। इह तु ग्रन्थसंक्षेपस्याभिप्रेतत्वादुपलक्षणत्वेन प्रत्येकं दानादिपारमिताचर्ययापि षडेव पारमिता भावनानिष्पत्तिं प्रतिपद्यन्त इत्यवगन्तव्यम्। तथाचोक्तं पञ्चविंशतिसाहस्रिकायाम्। "इह सुभूते बोधिसत्त्वस्य दानं ददतः सत्त्वेषु मैत्रं कायवाङ्मनस्कर्म प्रत्युपस्थितं भवत्येवं शीलपारमिता। तस्यैव प्रतिग्राहकाणामाक्रोशपरिभाषादिक्षमणेन क्षान्तिपारमिता। तस्यैव याचकाक्रोशपरिभाषादिभिर्दानोत्साहापरित्यागाद्वीर्यपारमिता। तस्यैव च तद्दानं सर्वाकारज्ञतायां परिणामयतः श्रावकप्रत्येकबुद्धभूमिविक्षेपचित्ताभावेन ध्यानपारमिता। तस्यैव दानं ददतो मायाबुद्धिप्रत्युपस्थापनेन कस्यचिदुपकारापकारादर्शनात्प्रज्ञापारमिते"ति। एवं शीलं रक्षतो यावत्प्रज्ञां भावयतः प्रत्येकं

षट्पारमितापरिपूरिसंग्रहो यथा सूत्रं वाच्यः। तस्मादेतदुक्तं भवति। दानादिषट्पारमितानां प्रत्येकमेकैकभावे दानादौ यः परस्परं सर्वपारमितासंग्रहः, सोऽत्रैकक्षणिको मूर्धाभिसमये दुःखधर्मज्ञानक्षान्तिसंगृहीतस्त्रिमण्डलविशुद्धिप्रभावितः षट्त्रिंशदाकारनिर्जातो दर्शनमार्गोऽवसातव्य इति।

तथा चोक्तम्।

एकैकस्यैव दानादौ तेषां यः सङ्ग्रहो मिथः।

स एकक्षणिकः क्षान्तिसङ्गृहीतोऽत्र दृक्पथ ॥ २२ ॥ इति

एवंविधविकल्पानां प्रागेव प्रहाणसम्भवात् कथमस्यां प्रकर्षपर्यन्ताधिगमावस्थायां प्रहाणं निर्दिश्यत इति चेत्। नायं दोषो यस्मात्सूक्ष्मगुह्यानुप्रवेशमहाभिज्ञाविबन्धकसम्मोहौ तद्बीजं च दशम्यां भूमौ प्रहीयत इत्यार्यसन्धिनिर्मोचनादिसूत्रे पठ्यते। तस्माद्यथोक्तसवासनसंमोहनिदानसमुच्छेदेन निदानिनामेवंविधग्राह्यग्राहकचतुर्विकल्पानां प्रकर्षपर्यन्ताधिगमस्वभावत्वेन दशम्यां भूमौ प्रतिविद्धे मूर्धाभिसमये नियमात् प्रहाणं प्रतिपद्यते। अन्यत्र कादाचित्कं प्रहाणमिति पूर्वाचार्याः। मन्दबुद्धीनां व्युत्पादनादनुग्रहाभिप्रायेण यथानिर्दिष्टविकल्पानां विषयभेदात् प्रत्येकं नवधा भेदः कृतः। तीक्ष्णबुद्धीनामवज्ञानिराकरणाय नातिप्रभेदस्तथा प्रतिपक्षाणामित्यवगन्तव्यम्। अयं पुनरिह समासार्थः। यथोदिता ग्राह्यग्राहकविकल्पाः सर्व एव विपर्याससमुत्थाः। स च विपर्यासोऽनादिकालीनभावाद्यभिनिवेशलक्षणस्तस्माद्विपरीतालम्बनाकारतया तद्विरोधिनैःस्वाभाव्यज्ञानात्प्रहीयत एव।

यस्मादित्थंभूतोपायकौशलवतां बोधिसत्त्वानामसंख्येयकल्पकोटिनियुतशतसहस्रप्रस्थानापरिमितबुद्धपर्युपासनेन हेतुमहत्त्वेन भावनामार्गस्य प्रतिविशिष्टता स्यादित्यदोषः। तथागतानुस्मरणपूर्वकं भावनामार्गालोचनं विधेयमित्याह। यस्मिन् समये सुभूते इत्यादि। दिवसस्यात्ययेनेति। दिवसपर्यवसानेनाप्यन्तशोऽच्छटासङ्घातमात्रकमित्यर्थः। भावनामार्गाभ्यासस्य प्रचुरविचित्रानुशंसपरिदीपनार्थमाह। यश्च सुभूते औपलम्भिक इत्यादि (p. 473, 32)। प्रज्ञापारमितामभिनिर्हरेदिति भावनामार्गमुत्पादयेत्। गतिप्रश्नपरिहारभेदेन पुनरप्यनुशंसं कथयन्नाह। तथागतसमन्वाहृतस्य हीत्यादि। का गतिरिति। कीदृशी सभागता नान्या गतिरित्यपि तु सम्यक्सम्बोधिगतिः। इमेऽपि सुभूते गुणा इति। इमेप्यनुशंसा इति बहुपुण्यप्रसवनादिगुणास्तथागतसमन्वाहारादयोऽनुशंसाः॥

अभिसमयालंकारालोकायां प्रज्ञापारमिताव्याख्यायामवकीर्णकुसुमपरिवर्तो नामाष्टाविंशतितमः॥

---

निरोधमेवं यावन्नैवसंज्ञानासंज्ञायतनानिरोधं समापद्य ततो व्युत्थायानन्तरसमापत्तिमालम्ब्य कामावचरं विज्ञानं मर्यादारूपेणावस्थाप्योपायकौशल्यबलेन व्युत्थाय तदेव विज्ञानमसमाहितमामुखीकृत्य ततो निरोधं ततोऽसमाहितं ततो निरोधमेकं परित्यज्य नैवसंज्ञानासंज्ञायतनं ततोऽसमाहितं ततो द्वयं परित्यज्याकिञ्चन्यायतनं ततोऽसमाहितमेवं यावदष्टौ परित्यज्य प्रथमं ध्यानं समापद्य ततोऽसमाहितमित्येकादिपरित्यागेनानिरोधं यावद्विसहृशद्वारेण गच्छतीत्यतुल्यगामवस्कन्दसमापत्तिं वशित्वलक्षणां भावनामार्गस्वभावां सर्वोपायकौशल्यात्मिकां परिग्रहीतुकामेन प्रज्ञापारमितायां चरितव्यमिति ।

तथा चोक्तम्—

कामाप्तमवधीकृत्य विज्ञानमसमाहितम् ।
सनिरोधाः समापत्तीर्गत्वाऽऽगम्य नव द्विधा ॥ २४ ॥
एकद्वित्रिचतुःपञ्चषट्सप्ताष्टव्यतिक्रमात् ।
अवस्कन्धसमापत्तिरनिरोधमतुल्यता ॥ २५ ॥ इति

पञ्चविंशतिसाहस्रिकायाममुमेवार्थमधिकृत्य विस्तरेण पुनरिह सुभूते बोधिसत्त्वो महासत्त्वो विविक्तं कामैर्विविक्तं पापकैरकुशलैर्धर्मैः सवितर्कसविचारं विवेकजं प्रीतिसुखं प्रथमध्यानमुपसम्पद्य विहरतीत्याद्यभिधानान्न सन्देहः कार्यः । यस्त्वाह ।

गत्वाऽऽगम्य द्विधा भूमिरष्टौ श्लिष्टैकलंघिताः ।
व्युत्क्रान्तकसमापत्तिर्विसभागतृतीयगा ॥ इति

वचनात्कथमेवमवस्कन्दसमापत्तिरिति । किं खलु वायसस्य पायसेन सालक्षण्यमन्यदेवेदं प्रस्थानम् ।

विकल्पो नवप्रकारो भावनामार्गचित्तचैत्तप्रवृत्त्यवस्थायां बोधिसत्त्वानां प्रत्येयस्तत्तत्प्रतिपक्षावस्थाप्रतिपादनेन व्यतिरेकमुखेनोक्त इति । तथा चोक्तम् ।

सत्त्वप्रज्ञप्तितद्धेतुविषयो नवधाऽपरः ।
भावनामार्गसम्बद्धो विपक्षस्तद्विघाततः ॥ ३२ ॥
सर्वज्ञतानां तिसृणां यथास्वं त्रिविधावृतौ ।
शान्तिमार्गतथतादिसंप्रयोगवियोगयोः ॥ ३३ ॥
असमत्वे च दुःखादौ क्लेशानां प्रकृतावपि ।
द्वयाभावे च संमोहे विकल्पः पश्चिमो मतः ॥३४॥ इति

यथोक्तभावनामार्गे विपक्षमेवं सप्रतिपक्षं निर्दिश्य तदधिगमेनैव चतुर्विकल्पप्रहाणात् सर्वगुणसम्पदो भवन्तीत्याह । सर्वबुद्धधर्मसमुदागमापर्यन्ततयेति । एतदुक्तं भावनामार्गाभ्यासादासाञ्चतुर्विकल्पजातीनामुपद्रवत्वेनेतीनां क्षये सति संरोधवैकल्येन संहर्षोच्छ्वासप्राप्ता इव सर्वास्त्रियानसंगृहीता गुणसम्पदः कृपापारतन्त्र्यात्सर्वप्रकारजगत्सौख्योत्पादनदक्षाः सर्वथाभिमुख्या गमनप्रकारेण प्रकर्षपर्यन्ताधिगमफलैः प्राप्तशोभं भावनामार्गस्थं बोधिसत्त्वमाश्रयन्ते महासमुद्रमिव नद्य इत्येवं सर्वबुद्धधर्माणां समुदागमापर्यन्तत्वेन महानुशंसास्वभावेन भावनामार्गोऽवसातव्य इति । तथा चोक्तम् ।

आसां क्षये सतीतीनां चिरायोच्छ्वसिता इव ।
सर्वाकारजगत्सौख्यसाधाना गुणसम्पदः ॥ ३५ ॥
सर्वाः सर्वाभिसारेण निकामफलशालिनम् ।
भजन्ते तं माहसत्त्वं महोदधिमिवापगाः ॥३६॥ इति

भावनामार्गानन्तरमानन्तर्यमार्ग इत्यानन्तर्यसमाध्यर्थ-

भावनामार्गमेवमभिधाय तत्र प्रहेयश्चतुर्विधो ग्राह्यग्राहकविकल्पः विपक्षप्रतिपक्षप्रतिपादनपरत्वेन वक्तव्य इत्युपोद्घातयन्नाह। पुनरपरमित्यादि (p. 475, 2)। तत्र च प्रथमो ग्राह्यविकल्पो विषयभेदान्नवधेति। प्रथमविकल्पार्थमाह। सर्वधर्मासङ्गतः प्रज्ञापारमितानुगन्तव्येति। सर्वधर्मसंक्षेपविकल्पप्रहाणार्थं सर्वधर्मानभिनिवेशाद्भावनामार्गो भावयितव्यः। एवमुत्तरत्र विकल्पाधिकारे प्रज्ञापारमितार्थो भावनामार्गार्थ इत्यवगन्तव्यम्। द्वितीयविकल्पार्थमाह। सर्वधर्मासम्भेदत इति। धर्मविस्तरविकल्पप्रहाणार्थं सर्वधर्माणां धर्मधातुरूपेणासम्भेदादेकरूपत्वात्। तृतीयविकल्पार्थमाह। सर्वधर्मासम्भवत इति तथागतसानाथ्याभावविकल्पप्रहाणार्थं सर्वधर्माणां तत्त्वेनानुत्पादात्। चतुर्थविकल्पार्थमाह। सर्वधर्मानिर्विकारसमा इति। प्रयोगमार्गगुणाभावविकल्पप्रहाणार्थं सर्वधर्माणां धर्मधातुनानिर्विकारेण तुल्यत्वात्। पञ्चमविकल्पार्थमाह। सर्वधर्माणामनात्माविज्ञप्तितः प्रज्ञानुबोधनत इति। दर्शनमार्गगुणाभावविकल्पप्रहाणार्थं सर्वधर्माणामनात्मरूपेणाविज्ञानरूपमिति प्रज्ञयाऽवबोधात्। षष्ठविकल्पार्थमाह। सर्वधर्माश्च नाममात्रेण व्यवहारमात्रेणाभिलप्यन्त इति। भावनामार्गगुणाभावविकल्पप्रहाणार्थमन्तर्जल्पबहिर्जल्पमात्रेण सर्वधर्माणां संवृत्याभिलपनात्, बहिर्जल्पे तु कस्यचिदभिनिवेश इत्याह। व्यवहारश्चेत्यादि। सप्तमविकल्पार्थमाह।

सर्वधर्मा अव्यवहारा इत्यादि। प्रयोगमार्गविकल्पप्रहाणार्थं सर्वधर्माणां मायोपमत्वेन श्रुतचिन्तालौकिकलोकोत्तरज्ञानैर्यथाक्रममभिलपयितुमशक्यत्वादव्यवहाराऽव्याहारा-व्यवहृताव्याहृतत्वेन। अष्टमविकल्पार्थमाह। सर्वधर्मा-प्रमाणत इति। दर्शनमार्गविकल्पप्रहाणार्थं धर्मधातुरूपेण सर्वधर्माणामप्रमाणत्वात्। तदेव स्पष्टयन्नाह। रूपा-प्रमाणत इत्यादि। नवमविकल्पार्थमाह। सर्वधर्मानिमित्तत इति। भावनामार्गविकल्पप्रहाणार्थं सर्वधर्माणां शून्यत्वेनानिमित्तत्वात्। एतदुक्तं स्यात्। संक्षिप्तरुचि-सत्त्वानुग्रहेण धर्मसंक्षेपे विस्तररुचिसत्त्वानुकम्पया धर्म-विस्तरे यथाविहितार्थानानुष्ठानेन बुद्धसानाथ्यापरिग्रहे समुत्पन्ननिरुद्धत्वेन प्रयोगमार्गगुणाभावे सम्यगुत्पत्ति-वैधुर्याद्दर्शनमार्गगुणाभावे अनागतासत्त्वेन भावनामार्ग-गुणाभावे शान्तत्वादिना निर्वाणप्रयोगमार्गे शून्यताभि-निर्हारत्वेन दर्शनमार्गे नैःस्वाभाव्यभावकत्वेन भावनामार्गे च मायोपमतया प्रवृत्तिर्मया कार्येत्येवं प्रवृत्तिपक्षाधि-ष्ठानः प्रथमो ग्राह्यविकल्पो नवप्रकारो भावनामार्ग-प्रयोगावस्थायां बोधिसत्त्वानां प्रहेयस्तत्तत् प्रतिपक्षावस्था-प्रतिपादनेन व्यतिरेकमुखेनोक्त इति। तथा चोक्तम्,—

संक्षेपे विस्तरे बुद्धैः सानाथ्येनापरिग्रहे।
त्रैकालिके गुणाभावे श्रेयसस्त्रिविधे पथि ॥ २६ ॥
एको ग्राह्यविकल्पोऽयं प्रयोगाकारगोचरः। इति

प्रथममेवं निर्दिश्य द्वितीयो ग्राह्यविकल्पो नवप्रकारो वक्तव्य इति। प्रथमविकल्पार्थमाह। सर्वधर्मनिर्वेधत इति।

बोधिचित्तानुत्पादविकल्पापनोदार्थं सर्वधर्माणां धर्मधातुरूपेणाधिगमात्। द्वितीयविकल्पार्थमाह। सर्वधर्मप्रकृतिपरिशुद्धित इति (p. 476, 1)। बोधिमण्डामनसिकारविकल्पापनोदार्थं सर्वधर्माणां स्वभावविशुद्धिपरिज्ञानात्। तृतीयविकल्पार्थमाह। सर्वधर्मावचनत इति। श्रावकयानमनसिकारविकल्पापनोदनार्थं सर्वधर्माणां वाक्यथातिक्रान्तत्वात्। चतुर्थविकल्पार्थमाह। सर्वधर्माणामनिरोधतः प्रहाणसमतयेति। प्रत्येकबुद्धयानमनसिकारविकल्पापनोदार्थं सर्वधर्माणामुत्पादाभावेनानिरोधात् प्रहाणतुल्यत्वेन। पञ्चमविकल्पार्थमाह। सर्वधर्माणां निर्वाणप्राप्तित इति। सम्यक्सम्बोधेरमनसिकारविकल्पापनोदार्थं तथतासमतया सर्वधर्माणां निर्वाणाधिगमात्। षष्ठविकल्पार्थमाह। सर्वधर्मा इत्यादि। भावनाविकल्पापनोदार्थमतीतानागताध्वनोरसत्त्वाद्यथाक्रमं नागच्छन्ति न गच्छन्तिऽतस्मादजानानाः सन्तो धर्मा वर्तमाने नोत्पन्ना धर्मधातुरिवात्यन्तानुत्पादात्। सप्तमविकल्पार्थमाह। आत्मपरादर्शनत इति। अभावनाविकल्पापनोदार्थं स्वपरानुपलम्भात्। अष्टमविकल्पार्थमाह। सर्वधर्मा इत्यादि। नैवभावनानाभावनाविकल्पापनोदार्थमुत्पादादिदोषाभावादार्या भावनार्हादर्हन्तो यस्मान्मायोपमत्वेन स्वभावविशुद्धत्वात्। नवमविकल्पार्थमाह। अपहृतभारा इति। अयथार्थविकल्पापनोदार्थं क्लेशज्ञेयावरणभाराभावादपहृतभारत्वेन। एतदुक्तं भवति। कल्याणमित्रादिवैकल्याद्बोधिचित्तानुत्पादे विशिष्टबुद्धा-

लम्बनपुण्याभावाद्बोधिमण्डामनस्कारे श्रावकगोचत्वात्तद्यानमनस्करणे प्रत्येकबुद्धगोचत्वात्तद्यानामुखीकरणे प्रज्ञापारमिताप्रतिपत्तिवैधुर्यात्सम्यक्सम्बोध्यमनस्करणे सोपलम्भत्वेन भावनायां निरूपलम्भवत्त्वेनाभावनायामनुपलम्भाननुपलम्भत्वान्नभावनानाभावने विपरीताभिनिवेशादयथार्थत्वे च भावाद्यभिनिवेशाद्दुष्टत्वेन निवृत्तिर्मया कार्येत्येवं निवृत्तिपक्षाधिष्ठानो द्वितीयो ग्राह्यविकल्पो नवप्रकारो भावनामार्गे चित्तचैत्तप्रवृत्त्यवस्थायां बोधिसत्त्वानां प्रहेयस्तत्तत्प्रतिपक्षावस्थाप्रतिपादनेन व्यतिरेकमुखेनोक्त इति । तथा चोक्तम् ।

द्वितीयश्चित्तचैत्तानां प्रवृत्तिविषयो मतः ॥ २७ ॥
अनुत्पादस्तु चित्तस्य बोधिमण्डामनस्क्रिया ।
हीनयानमनस्कारौ सम्बोधेरमनस्कृतिः ॥ २८ ॥
भावनेऽभावने चैव तद्विपर्यय एव च ।
अयथार्थश्च विज्ञेयो विकल्पो भावनापथे ॥ २९ ॥ इति

द्वितीयमेवं ग्राह्यविकल्पं निर्दिश्य प्रथमग्राहकविकल्पो नवप्रकारो वक्तव्य इति । प्रथमविकल्पार्थमाह । सर्वधर्मादेशाप्रदेशत इति । सत्त्वप्रज्ञप्तिविकल्पनिरासार्थं सर्वधर्माणां प्रकृत्या धर्मधातुस्वभावत्वेन सामान्यविशिष्टदेशविविक्तत्वात् । तदेव स्पष्टयन्तत्कस्य हेतोरित्याशङ्क्याह । रूपं हीत्यादि । प्रकृतिस्वभावत इति । शून्यताप्रकृतित्वेन सामान्यविशेषदेशविविक्तस्वभावत्वात् । द्वितीयविकल्पार्थमाह । सर्वधर्मनिरोधप्रह्लादनत्वादिति । धर्मप्रज्ञप्तिविकल्पनिरासार्थं सर्वधर्माणां निरोधस्य शून्यतोरकरणा-

द्यप्रमाणगुणगर्भत्वेन हर्षकरणात्। तृतीयविकल्पार्थमाह। अरत्यविरतित इति। अशून्यत्वविकल्पनिरासार्थं सर्वधर्मेषु मायोपमत्वेनाभिनिवेशानभिनिवेशवियोगात्। चतुर्थविकल्पार्थमाह। अरक्ताविरक्ततयेति। सक्तिविकल्पनिरासार्थं सर्वधर्माणां धर्मधातुस्वभावेन रागारागविविक्तत्वात्। तदेव कथयितुं तत्कस्य हेतोरित्याशङ्क्याह। रूपं हीत्यादि। सतत्त्वेनेति। तत्त्वपर्याय एव सतत्त्वशब्दो द्रष्टव्यः। पञ्चमविकल्पार्थमाह। प्रकृतिपरिशुद्धत्वादिति। सर्वधर्मप्रविचयविकल्पनिरासार्थं सर्वधर्माणां स्वभावानुत्पन्नत्वेन परिशुद्धत्वात्। षष्ठविकल्पार्थमाह। सर्वधर्मा इत्यादि। वस्तूद्देशविकल्पनिरासार्थं मायोपमत्वेन सङ्गासङ्गविगमादसक्तत्वेन सर्वधर्माणाम्। सप्तविकल्पार्थमाह। बोधिरित्यादि (p. 477, 1)। यानत्रितयनिर्याणविकल्पनिरासार्थम्।

धर्मधातुविनिर्मुक्तो यस्माद्धर्मो न विद्यते।

इति बुद्धज्ञानावबोधनतया सर्वधर्माणां बोधिस्वभावत्वेन। अष्टमविकल्पार्थमाह। सर्वधर्मशून्यानिमित्त इत्यादि। दक्षिणाऽशुद्धिविकल्पनिरासार्थम्। सर्वधर्माणां त्रिविमोक्षस्वभावत्वेन। नवमविकल्पार्थमाह। सर्वधर्मा भैषज्यमित्यादि। चर्याविकोपनविकल्पनिरासार्थम्। मैत्रीस्वरूपतया द्वेषादिदोषप्रशमनेन सर्वधर्माणां भैषज्यस्वाभाव्यात्। एतदुक्तम्। द्रव्यसदनुपपत्त्या सत्त्वप्रज्ञप्तौ प्रतिभासमात्रत्वात् सर्वधर्मप्रज्ञप्तौ सर्वत्रगत्वात् सर्वाकारज्ञतादिधर्मशून्यत्वे सर्वथाभिनिवेशप्रहाणाद्धर्मसक्तौ

निःस्वभावावबोधेन धर्मप्रविचये समुद्देशाकरणेन वस्तू-द्देशकरणे रूपाद्युपलम्भत्वाद्यानचयनिर्याणे सम्यगप्रति-पन्नत्वेन दक्षिणाऽशुद्धौ दानाद्युपलम्भप्रपिपत्त्या चर्या-विकोपने च द्रव्यसन्नेवात्मा ग्राहक इत्येवं द्रव्यसत्पुरुषाधि-ष्ठानः प्रथमो ग्राहकविकल्पो नवप्रकारो बोधिसत्त्वानां भावनामार्गप्रयोगावस्थायां प्रहेयस्तत्प्रतिपक्षावस्थाप्रति-पादनेन व्यतिरेकमुखेनोक्त इति । तथा चोक्तम् ।

ग्राहकः प्रथमो ज्ञेयः सत्त्वप्रज्ञप्तिगोचरः ।
धर्मप्रज्ञप्त्यशून्यत्वसक्तिप्रविचयात्मकः ॥ ३० ॥
कृते च वस्तुनो यानचितये च स कीर्त्तितः ।
दक्षिणाया अशुद्धौ वा चर्यायाश्च विकोपने ॥३१॥ इति

प्रथममेवं ग्राहकविकल्पं निर्दिश्य द्वितीयो ग्राहक-विकल्पो नवप्रकारो वक्तव्य इति प्रथमविकल्पार्थमाह । सर्वधर्मा मैत्रीविहारिण इत्यादि । सर्वाकारज्ञतावरण-सम्मोहविकल्पापनयनार्थं सर्वधर्माणाञ्चतुर्ब्रह्मविहार-स्वाभाव्यात् । द्वितीयविकल्पार्थमाह । सर्वधर्मा ब्रह्मभूता इत्यादि । मार्गज्ञतावरणसंमोहविकल्पापनयनार्थं सर्व-दोषाणामहेतुत्वेनानुत्पादकत्वात् सर्वधर्माणां निर्वाण-रूपत्वेन । तृतीयविकल्पार्थमाह । सर्वधर्माणामित्यादि । सर्वज्ञतावरणसंमोहविकल्पापनयनार्थं सर्वभावानां प्रार्थ-नाप्रतिघविविक्तत्वेन । चतुर्थविकल्पार्थमाह । समुद्रा-पर्यन्ततयेति । सर्वशान्तमार्गसंमोहविकल्पापनयनार्थं सर्व-धर्माणां दशबलादिगुणरत्नहेतुत्वेन समुद्रसमत्वात्, समुद्रापर्यन्तत्वेन । पञ्चमविकल्पार्थमाह । गगनापर्यन्त-

तयेति । तथागतादिसंयोगवियोगसंमोहविकल्पापनयनार्थं सर्वधर्माणां शून्यत्वेन गगनसमत्वाद् गगनापर्यन्ततया । षष्ठविकल्पार्थमाह । मेरुविचित्रतयेति । असमत्वसंमोहविकल्पापनयनार्थं सर्वानिष्टोपनिपाताक्षोभ्यत्वेन मेरुसमत्वात्, सर्वधर्माणां मेरुविचित्रत्वात् । सप्तमविकल्पार्थमाह । रूपापर्यन्ततयेति । दुःखादिसंमोहविकल्पापनयनार्थं धर्मधातुस्वरूपत्वात् प्रज्ञादीनामपर्यन्तत्वेन । अष्टमविकल्पार्थमाह । सूर्यरश्मीत्यादि । क्लेशप्रकृतिसंमोहविकल्पापनयनार्थं प्रकृतिप्रभास्वरत्वेन सूर्यमण्डलरश्म्युत्पादसमत्वात् सर्वधर्माणां सूर्यरश्मिमण्डलापर्यन्तावभासनतया । नवमविकल्पार्थमाह । सर्वशब्दापर्यन्ततयेति । अद्वयसंमोहविकल्पापनयनार्थं नाममात्रस्वभावेन सर्वशब्दापर्यन्तसमत्वात्सर्वधर्माणां सर्वशब्दापर्यन्ततया प्रज्ञापारमिताऽनुगन्तव्या । एतदुक्तम् । सर्वाकारापरिज्ञानेन सर्वाकारज्ञतावरणसंमोहे सर्वमार्गापरिज्ञानेन मार्गज्ञतावरणसंमोहे सर्ववस्त्वपरिज्ञानेन सर्वज्ञतावरणसंमोहे प्रज्ञापारमिताऽपरिज्ञानेन सर्वशान्तमार्गसंमोहे तथताज्ञेयरूपाद्यपरिज्ञानेन तथतादिसंयोगवियोगसंमोहे मारादिस्वरूपापरिज्ञानेनासमत्वसंमोहे यथारुतार्थग्राहित्वेन दुःखादिसत्यसंमोहे रागादिस्वभावापरिज्ञानेन क्लेशप्रकृतिसंमोहे ग्राह्यग्राहकलक्षणापरिज्ञानेनाद्वयसंमोहे च । सत्त्वप्रज्ञप्तितद्व्यवस्थापनप्रतिभासमानहेतुविषयः प्रज्ञप्तिसन्नेव आत्मा ग्राहक इति प्रज्ञप्तिसत्पुरुषाधिष्ठानो द्वितीयो ग्राहक-

गतक्लेशरणप्रबन्धोन्मूलनात् समाधिरित्यरणा सम्यगपगतसर्वनिमित्तसङ्गव्याघातं संशयापनयनकारिप्रणिधानसमृद्ध्याऽऽसंसारमासमाहितावस्थायां प्रवर्तत इति प्रणिधिज्ञानं षडभिज्ञाश्चतस्रः प्रतिसंविदः पूर्वोक्ता आश्रयालम्बनचित्तज्ञानपरिशुद्धय इति चतस्रः शुद्धयः। आयुश्चित्तपरिष्कारकर्मोपपत्त्यधिमुक्तिप्रणिधानविज्ञानधर्मवशिता इति दशवशिताः। बलानि दश चत्वारि वैशारद्यानि पूर्वमुक्तानि। परिशुद्धकायवाङ्मनःसमुदाचारस्तथागतो नास्त्यस्य विपरीतसमुदाचारता यां परपरिज्ञानभयात् प्रच्छादयितव्यां मन्येतेत्यरक्षणं त्रिविधम्। धर्मदेशनायां श्रोतुकामाश्रोतुकामोभयकामेषु यथाक्रममनुनयप्रतिघोभयविविक्त एवोपेक्षकः। स्मृतिमान् विहरतीति स्मृत्युपस्थानं त्रिधा सत्त्वार्थक्रियाकालानतिक्रमलक्षणेत्यसंमोषधर्मता। क्लेशज्ञेयावरणानुशयरूपबीजप्रहाणाद्वासनायाः समुद्घतः सकलजनहिताशयता महती करुणा जनेऽष्टादशावेणिका धर्माः सर्वाकारज्ञता च। तथा मार्गज्ञतादयोऽपि प्रागुक्ताः। सर्वे चाश्रयपरावृत्त्या परावृत्ता बोधिपक्षादयो निष्प्रपञ्चज्ञानात्मका धर्मकायो द्वितीयोऽभिधीयत इति केचित्। तथा चोक्तम्।

बोधिपक्षाप्रमाणानि विमोक्षा अनुपूर्वशः।
नवात्मिका समापत्तिः कृत्स्नं दशविधात्मिकम् ॥२॥
अभिभ्वायतनान्यष्टप्रकाराणि प्रभेदतः।
अरणा प्रणिधिज्ञानमभिज्ञाः प्रतिसंविदः ॥३॥
सर्वाकारश्चतस्रोऽथ शुद्धयो वशिता दश।
बलानि दश चत्वारि वैशारद्यान्यरक्षणम् ॥४॥

माह । सर्वसत्त्वधात्वित्यादि । एतदुक्तं श्रावकप्रत्येकबुद्ध-भूमौ बोधिसत्त्वन्यामावक्रान्तौ त्रिसाहस्रमहासाहस्र-लोकधातवीयसत्त्वान् प्रतिष्ठाप्य कश्चिद्यत्पुण्यं प्रसवति तदुपमीकृत्य तद्विशिष्टपुण्यबहुत्वेन या सर्वाकारज्ञता बुद्धत्वमिति बुद्धत्वप्राप्तेरव्यवहितो यः पूर्वसमनन्तरः समाधिः सोऽत्रानन्तर्यसमाधिस्तस्यैवं सर्वसत्त्वधातुपुण्य-ज्ञानसंभारात्प्रतिविशिष्टत्वेनापर्यन्ततया प्रज्ञापारमिता भावनीयेति । तथा चोक्तम् ।

त्रिसाहस्रजनं शिष्यखङ्गाधिगमसंपदि ।
बोधिसत्त्वस्य च न्यामे प्रतिष्ठाप्य शुभोपमाः ॥ ३७ ॥
कृत्वा पुण्यबहुत्वेन बुद्धत्वाप्तेरनन्तरः ।
आनन्तर्यसमाधिः स सर्वाकारज्ञता च तत् ॥३८॥ इति

अस्य चानन्तर्यसमाधेः सर्वधर्माभाव आलम्बनप्रत्ययः स्मरणञ्चाधिपतिप्रत्ययः प्रकृतिशान्तता चाकारोऽर्थादा-क्षिप्तो वेदितव्योऽन्यथानन्तर्यसमाधेरधिगन्तुमशक्यत्वात् । तथा चोक्तम् ।

आलम्बनमभावोऽस्य स्मृतिश्चाधिपतिर्मतः ।
अकारः शान्तता चात्र इति

अत्र च स्थाने दुरवगाहत्वादविदितोपायकौशलानां प्रवादिनां नानाचोद्यमुखपरम्परा प्रसर्पिणी विप्रति-पत्तिरिदानीं निराकर्तव्येति । प्रथमविप्रतिपत्त्यर्थमाह । पृथिवीधात्वपर्यन्ततयेति । संस्कृतासंस्कृतधात्वोरभावत्वेना-लम्बनोपपत्तौ विप्रतिपत्तेर्निराकरणाय मायोपमतया सर्व-गुणप्रतिष्ठाभावात् पृथिवीसमत्वेन संवृत्या सर्वधर्माणामा-लम्बनस्वाभाव्यात्पृथिवीधात्वपर्यन्ततयाऽऽनन्तर्यसमाधि-

रनुगन्तव्य इत्यर्थः । एवमुत्तरत्राप्यानन्तर्यसमाधिः प्रज्ञापारमितार्थोऽस्मिन्नधिकारे प्रतिपत्तव्यः । सर्वथा निरूपत्वादालम्बनस्वभावधारणे द्वितीयविप्रतिपत्तिं निराकर्तुं प्रकृतिविशुद्धत्वादसमत्वेन सर्वधर्माणां तथैवालम्बनस्वभावव्यवस्थापनादब्धात्वपर्यन्ततया । भावाभावानुपलम्भेन सर्वाकारज्ञताज्ञाने तृतीयविप्रतिपत्तिनिराचिकीर्षया प्रकृतिप्रभास्वरत्वात्तेजःसमत्वेन सर्वधर्माणां पूर्ववत्सर्वाकारज्ञताज्ञानरूपत्वात्तेजोधात्वर्थपर्यन्ततया । तथतास्वभावत्वेन संवृतिपरमार्थसत्यद्वये चतुर्थविप्रतिपत्तेर्निराकरणायानवस्थितवृत्तित्वाद्वायुसमत्वेन सर्वधर्माणां संवृत्या निश्चितसत्यद्वयरूपत्वाद्वायुधात्वपर्यन्ततया । दानाद्यनुपलम्भेन प्रयोगे पञ्चमविप्रतिपत्तिं निराकर्तुं प्रज्ञप्तिसत्त्वादाकाशसमत्वेन सर्वधर्माणां पूर्ववत्प्रयोगस्वभावनिश्चयादाकाशधात्वपर्यन्ततया । बोधव्याभावाद्बुद्धरत्ने षष्ठविप्रतिपत्तिनिराचिकीर्षया विज्ञप्तिमात्रात्मकत्वाद्विज्ञानसमत्वेन सर्वधर्माणां तथैव तथागतरूपत्वाद्विज्ञानधात्वपर्यन्ततया प्रज्ञापारमितानुगन्तव्येत्याह । एवमब्धातुतेजोधात्वित्यादि । सप्तमविप्रतिपत्त्यर्थमाह । कुशलाकुशलेत्यादि । नामधेयमात्रत्वाद्धर्मरत्ने विप्रतिपत्तेर्निराकरणाय तत्त्वतोऽनुत्पन्नत्वात्कुशलाकुशलधर्मसञ्चयविगतत्वेन सर्वधर्माणां संवृत्या व्यवस्थापितधर्मरूपत्वात् कुशलाकुशलधर्मसञ्चयाप्रमाणतया । अष्टमविप्रतिपत्त्यर्थमाह । सर्वधर्मेत्यादि (p. 478, 2) । रूपाद्यालम्बनप्रतिषेधात्संघरत्ने विप्रतिपत्तिं निराकर्तुं मायोपमत्वात्सर्वधर्मसञ्चयविगतत्वेन सर्वधर्माणां पूर्ववत् सङ्घरूपत्वात्, सर्वधर्मसञ्चयाप्रमाणतया । नवमविप्रति-

पत्त्यर्थमाह । सर्वधर्मसमाधिरित्यादि । दानाद्युपलम्भेनोपायकौशले विप्रतिपत्तेर्निराचिकीर्षया धर्मधातुरूपत्वात्सर्वधर्मसमाध्यपर्यन्ततासमत्वेन सर्वधर्माणां तथैवोपायकौशलसद्भावात् सर्वधर्मसमाध्यपर्यन्तताप्रतिलम्भितया । दशमविप्रतिपत्त्यर्थमाह । सर्वबुद्धेत्यादि । भावाभावोभयरूपाधिगमप्रतिषेधात्तथागताभिसमये विप्रतिपत्तेर्निराकरणाय तथतारूपेण बुद्धधर्मस्वभावत्वात्सर्वधर्माणां योगिसंवृत्या तथागताभिसमयावस्थानात्सर्वबुद्धधर्मापर्यन्ततया । एकादशविप्रतिपत्त्यर्थमाह । सर्वधर्मापर्यन्ततयेति । प्रपञ्चव्यवस्थापितानित्यादित्वेन नित्यादिविपर्यासे विप्रतिपत्तेर्निराचिकीर्षया धर्मतारूपेणापर्यन्तधर्मतात्मकत्वात्सर्वधर्माणां पूर्ववद्व्यवस्थापितमित्यादिविपर्याससद्भावात्सर्वधर्मापर्यन्ततया । द्वादशविप्रतिपत्त्यर्थमाह । शून्यतापर्यन्ततयेति । विभावितमार्गफलासाक्षात्करणेन मार्गे विप्रतिपत्तेर्निराकरणाय मायोपमत्वेन शून्यतापर्यन्तधर्मत्वात्सर्वधर्माणां सत्त्वेनाधिगमाभावाच्छून्यतापर्यन्ततया । त्रयोदशचतुर्दशविप्रतिपत्तिद्वयार्थमाह । चित्तचैतसिकापर्यन्ततयेति । हानोपादानाभावेन विपक्षे प्रतिपक्षे च विप्रतिपत्तिं निराकर्तुमविद्योद्भूतप्रतिभासचित्तचैतसिकापर्यन्तत्वेन सर्वधर्माणां संवृत्यावस्थापितविपक्षप्रतिपक्षभावाच्चित्तचैतसिकापर्यन्ततया । पञ्चदशविप्रतिपत्त्यर्थमाह । चित्तचरितापर्यन्ततयेति । धर्म्यभावाद्धर्मलक्षणे विप्रतिपत्तेर्निराचिकीर्षया प्रतिभासनिबन्धमात्रपदार्थावस्थानाच्चित्तचरितोत्पत्तिलक्षणत्वेन सर्व-

धर्माणां तथैव स्थितिलक्षणभावाच्चित्तचरितापर्यन्ततयेति । षोडशविप्रतिपत्त्यर्थमाह । कुशलाकुशलधर्मापरिमाण-तयेति । स्वसामान्यलक्षणानुपपत्त्या भावनायाञ्च विप्रति-पत्तेर्निराकरणाय भूतकोटिरूपेण कुशलाकुशलानुपलब्धि-स्वभावत्वात्सर्वधर्माणां पूर्ववद्भावनासद्भावात्कुशलाकुशल-धर्मापरिमाणतया प्रज्ञापारमिताऽपरिमाणतानुगन्तव्या विषयभेदेन भेदानन्त्येऽपि विप्रतिपत्तीनां सन्निहित-विनेयजनविप्रतिपत्तिनिराचिकीर्षया यथोक्ता एव पर-स्परविरुद्धा भाषार्थानुस्थानेनायुज्यमानतया संशयरूपाः षोडशविप्रतिपत्तीर्यथानिर्दिष्टविषयत्वेन सर्वाकारज्ञता-धिष्ठानाः । सर्वेषामेव विदितबोधिसत्त्वोपायकौशलजन-प्रवादिनां यथासंभवमुभयसत्याश्रितोपायकौशलेन निरा-कृत्य सम्यक्सर्वथा निश्चयमुत्पाद्य कल्याणकामैर्बोधिसत्त्वै-रानन्तर्यसमाधिरधिगम्यत इति प्रतिपत्तव्यम् ।

तथा चोक्तम् ।

जल्पाजल्पिप्रवादिनाम् ॥ ३९ ॥
आलम्बनोपपत्तौ च तत्स्वभावावधारणे ।
सर्वाकारज्ञताज्ञाने परमार्थे ससंवृत्तौ ॥ ४० ॥
प्रयोगे त्रिषु रत्नेषु सोपाये समये मुनेः ।
विपर्यासे समार्गे च प्रतिपक्षविपक्षयोः ॥ ४१ ॥
लक्षणे भावनायाञ्च मता विप्रतिपत्तयः ।
सर्वाकारज्ञताधारा षोडा दश च वादिनाम् ॥४२॥

इति मूर्द्धाभिसमयसमाधिकारः पञ्चमः ।

प्राप्तमूर्द्धाभिसमयो व्यस्तसमस्तत्वेनाधिगतानर्थाननु-पूर्वीकृत्य स्थिरीकरणाय विभावयतीत्यनुपूर्वाभिसमयार्थ-

माह । सिंहनादनदनतयेति । एतदुक्तं त्रिमण्डलविशुद्धि-प्रभावितदानादिषट्पारमितासर्वाकारपारिपूरणेन प्रज्ञा-पारमितान्तर्गतपारमिताचतुष्टयत्वात्, सम्यक् दशभूमि-निष्पादकेन स्मृत्युपस्थानादिना सप्तबोध्यङ्गाकारेणा-र्याष्टाङ्गमार्गतया च परमार्थतोऽस्मरणलक्षणेन त्रिविध-बुद्धानुस्मरणेन यथाक्रमं निर्वेधभागीयदर्शनभावनामार्ग-द्योतकेन तथैव कुशलाकुशलाव्याकृतधर्मानुस्मरणेन पूर्व-वदार्यावैवर्तिकबोधिसत्त्वसङ्घस्मरणेन तथैव शीलत्याग-देवतानामनुस्मरणेन रूपादिसर्वधर्माभावे स्वभावेनाव-बुद्धेन च योऽधिगमः सानुपूर्वक्रिया ममेत्येवमविपरीतार्थ-प्रतिपादनेन सिंहनादसमत्वात्सर्वधर्माणां सिंहनादनदन-तयाऽनुपूर्वाभिसमयोऽनुगन्तव्य इति । तथा चोक्तम् ।

दानेन प्रज्ञया यावद्बुद्धादौ स्मृतिभिश्च सा ।
धर्माभावस्वभावेनेत्यनुपूर्वक्रिया मता ॥ १ ॥

इति अनुपूर्वाधिकारः षष्ठः ।

विभावितानुपूर्वाभिसमयस्य स्वभ्यस्तीकरणाय तेषामेव क्षणेनैकेनाधिगम इत्येकक्षणाभिसम्बोधार्थमाह । सर्वधर्मा कोप्यतयेति । एकक्षणाभिसम्बोधं प्रत्यन्यथाकर्तुमशक्य-त्वेनाकोप्यत्वाद्रूपादीनां सर्वधर्माकोप्यतया प्रज्ञापार-मितानुगन्तव्येत्यवयवार्थः । समुदायार्थः सूच्यते । लक्षणे-नैकक्षणाभिसम्बोधश्चतुर्विध इति । प्रथमं तावदेको भावः सर्वभावस्वभावः सर्वे भावा एकस्वभावाः । एको भाव-स्तत्त्वतो येन दृष्टः सर्वे भावास्तत्त्वतस्तेन दृष्टा इति न्यायान्न केवलं बहुभिरेकस्य संग्रहः, अपि त्वेकक्षण-दानादिज्ञानेनालभ्यमानेनापगतप्रतिनियतवस्तुग्रहणवि-

पर्ययरूपेणानास्रवदानाद्यशीत्यनुव्यञ्जनलक्षणानां धर्माणां संग्रहेण बोधिसत्त्वस्यावबोधाद्विपाकानास्रवसर्वधर्मैकक्षण-लक्षणो भवत्येकक्षणाभिसम्बोधः प्रथमः । तथा चोक्तम् ।

अनास्रवाणां सर्वेषामेकैकेनापि संग्रहात् ।

एकक्षणावबोधोऽयं ज्ञेयो दानादिना मुनेः ॥१॥ इति

किमिव पुनरेकानास्रवज्ञानालम्बने सर्वानास्रवसंग्रह इति चेत् । उच्यते । यथैकापि पदिका पुरुषप्रेरिता सकृदेकवारं सर्वमरघट्टं सच्छिल्पिपूर्वपरिकर्मसामर्थ्याच्चलयति, तथा पूर्वप्रणिधानावेधधर्मधातुसामर्थ्यादेकस्मिन्नेव क्षणे ज्ञानमेकमनास्रवमालम्ब्यमानं कार्यकारणसम्बन्ध-बलात्सर्वं सजातीयमभिमुखीकारयतीति ।

तथा चोक्तम् ।

अरघट्टं यथैकापि पदिका पुरुषेरिता ।

सकृत्सर्वं चलयति ज्ञानमेकक्षणे तथा ॥ २॥ इति

तदनु यदा बोधिसत्त्वस्य प्रतिपक्षभावनया सर्व-विपक्षापगमेन सकलव्यवदानपक्षविपाकधर्मताऽवस्था सर्व-कलङ्कापगमेन शरदिन्दुज्योत्स्नावत् शुक्लस्वभावा जाता तदैकस्मिन्नेव क्षणे विपाकावस्थाप्राप्तानामनास्रवसर्व-धर्माणां बोधाज्ज्ञानं प्रज्ञापारमितेत्येवं विपाकधर्मताऽव-स्थाऽनास्रवसर्वधर्मैकक्षणलक्षणो भवत्येकक्षणाभिसम्बोधो द्वितीयः । तथा चोक्तम् ।

विपाकधर्मतावस्था सर्वशुक्लमयी यदा ।

प्रज्ञापारमिता ज्ञाता ज्ञानमेकक्षणे तदा ॥३॥ इति

तदनुपूर्वं स्वप्नोपमसर्वधर्माभ्यासेन सम्भारद्वयमनु-भूयाधिगमावस्थायां स्वप्नस्वभावेषु सर्वधर्मेषूपादान-

स्कन्धादिषु स्थित्वा दानादिषट्पारमिताप्रतिपत्त्या दानादिरूपनिरूपणाकारेणालक्षणाः सर्वधर्मा इति। संक्लेशव्यवदानरूपाणां धर्माणामेकेनैव क्षणेनालक्षणत्वं जानातीत्येवमलक्षणसर्वधर्मैकक्षणलक्षणो भवत्येकक्षणाभिसम्बोधस्तृतीयः। तथा चोक्तम्।

स्वप्नोपमेषु धर्मेषु स्थित्वा दानादिचर्यया।
अलक्षणत्वं धर्माणां क्षणेनैकेन विन्दति ॥४॥ इति

तदनु निरन्तरदीर्घकालद्वयप्रतिभासप्रहाणाभ्यास-सात्मीभावादुन्मूलितद्वयप्रतिभासवासनो यदा बोधिसत्त्वो ग्राह्यग्राहकयोगेन स्वप्नं ग्राह्यं स्वप्नदर्शिनं ग्राहकं नेक्षते तदा सर्वेऽप्येवं धर्माणो धर्मा इति धर्माणामद्वयं तत्त्व-मेकेनैवक्षणेन पश्यतीत्येवमद्वयलक्षणसर्वधर्मैकक्षणलक्षणो भवत्येकक्षणाभिसम्बोधश्चतुर्थः। तथा चोक्तम्।

स्वप्नं तद्दर्शिनञ्चैव द्वययोगेन नेक्षते।
धर्माणामद्वयं तत्त्वं क्षणेनैकेन पश्यति॥ ५ ॥ इति

एकक्षणाभिसम्बोधं प्रति हेतुफलभेदेन यथाक्रमम-विपाकविपाकधर्मतावस्थाऽनास्रवसर्वधर्मैकक्षणाभिसम्बोध-द्वयं निर्दिश्यैवं विशिष्टाधिगमावस्थायां धर्मतैकरसत्वेनासं-भेदात् स्वप्नस्वभावीभूतसर्वधर्मावगमार्थं तृतीयमलक्षण-सर्वधर्मैकक्षणाभिसमयं प्रतिपाद्य स्वप्नावस्थायामपि ग्राह्य-ग्राहकयोस्तत्त्वेनानुपलम्भाद्द्वयप्रतिपत्त्यर्थमद्वयलक्षणसर्व-धर्मैकक्षणाधिगमो निर्दिष्ट इत्येवं लक्षणेनैकक्षणाभिसमय-श्चतुःप्रकारोऽपि योगिभिरधिगन्तव्य इत्येके। अन्ये तु यदि नाम चतुःप्रकारः सन्निहितविनेयजनानुरोधेन व्यावृत्ति-

भेदात्कथञ्चिदुपात्तस्तथाप्यन्यतम एवैकः प्रकारो योगिना केनचित्साक्षात्कर्तव्य इति मन्यन्त इति ।

एकक्षणाभि समयाधिकारः सप्तमः ।

कस्मात्समुद्रापर्यन्ततया प्रज्ञापारमितापर्यन्तताऽनुगन्तव्येत्युच्यते इति। तत्कस्य हेतोरित्याशङ्क्याह। रूपं हि सुभूते समुद्रसममित्यादि। येन साधर्म्येण रूपादीनां समुद्रादिभिस्तुल्यत्वं तथा समुद्रापर्यन्तयेत्यादि पदव्याख्याने प्रागेव व्याख्यातमिति न पुनरुच्यते। उपसंहरन्नाह। एवं हि सुभूत इत्यादि। विभावितैकक्षणाभिसम्बोधस्य द्वितीये क्षणे धर्मकायाभिसम्बोध इति। तदर्थमाह। यदायं सुभूते बोधिसत्त्व इत्यादि (p. 479, 22)। यदा सर्वमायाविवर्जितैर्मनसिकारैर्यथोक्तक्रमेण प्रज्ञापारमितामेनां सर्वधर्ममायोपमतां सर्वाकारज्ञतयाऽनुगमिष्यति मार्गज्ञतया व्यवचारयिष्यति सर्वज्ञतयाऽवतरिष्यति सर्वाकाराभिसम्बोधेनावभास्यते मूर्धाभिसमयेन चिन्तयिष्यति अनुपूर्वाभिसमयेन तुलयिष्यति एकक्षणाभिसमयेनोपपरीक्षिष्यते धर्मकायाभिसम्बोधेन च भावयिष्यति, तदा नास्य बोधिसत्त्वस्य दुर्लभा सर्वगुणानां धर्मकायस्वभावानां बुद्धक्षेत्रस्य साम्भोगिककायलक्षणस्यानुत्तराणाञ्च बुद्धधर्माणां सकर्मकनिर्माणकायस्वरूपाणां परिपूरिरित्यवयवार्थः। समुदायार्थः त्वच्यते। स च धर्मकायाभिसम्बोधः स्वाभाविककायादिभेदेन चतुर्विध इति। तत्र प्रथमो ये स्मृत्युपस्थानादयो ज्ञानात्मका लोकोत्तरा धर्मधातुरूपत्वादनास्रवामलानामागन्तुकत्वेन

सर्वप्रकारां विशुद्धिं प्रकृतिविविक्तलक्षणां प्राप्तास्तेषां या प्रकृतिःस्वभावोऽनुत्पादरूपोऽयं मुनेर्बुद्धस्य भगवतो लोकोत्तरेण मार्गेण प्राप्यते न क्रियते इत्यकृत्रिमार्थेन मायोपमविज्ञानसर्वधर्मप्रतिपत्त्याऽधिगतः स्वाभाविकः कायः परिशिष्टकायत्रयं तथ्यसंवृत्या प्रतिभासमानं परमार्थतो धर्मतारूपं यथाधिमोक्षप्रभवितं बुद्धबोधिसत्त्वश्रावकादिगोचरत्वेन व्यवस्थापितमिति कथनाय ;

विविक्ताव्यतिरेकित्वं विवेकस्य यतो मतम् ।

इति न्यायात्तद्व्यतिरेकेऽपि पृथग्व्यवस्थाप्यत इत्यवसातव्यम् । तथा चोक्तम् ।

सर्वाकारां विशुद्धिं ये धर्माः प्राप्ता निरास्रवाः ।
स्वाभाविको मुनेः कायस्तेषां प्रकृतिलक्षणः ॥१॥ इति

तदनु स्मृत्युपस्थानाद्यार्याष्टांगमार्गबोधिपक्षाः पूर्ववदप्रमाणानि मैत्र्यादिचतुर्ब्रह्मविहाराः । अध्यात्मं रूप्यरूपी बहिर्धा रूपाणि पश्यतीति द्वौ । शुभं विमोक्षं कायेन साक्षात्कृत्वोपसम्पद्य विहरतीत्येकः । आकाशविज्ञानाकिञ्चन्यनैवसंज्ञानासंज्ञायतनानीति चत्वारः । संज्ञावेदितनिरोध इत्येक इत्यष्टौ विमोक्षाः । रूपधातुचतुर्ध्यानानि चतुरारूप्यसमापत्तयो निरोधसमापत्तिरिति नवसमापत्तयः । पृथिव्यप्तेजोवायुनीलपीतलोहितावदातविज्ञानाकाशमिति कृत्स्नं दशविधम् । अध्यात्मरूपारूपसंज्ञिनौ प्रत्येकं परीत्ताधिमात्राकाराभ्यां बहिर्धा रूपाणि पश्यतस्तानभिभूय जानीत इति चतुष्टयम् । अध्यात्मरूपसंज्ञो एव नीलपीतलोहितावदातानभिभूय पश्यतीति चतुष्टयमित्यष्टविधमभिभ्वायतनम् । परसन्तान-

इति कारिकायां स्वाभाविकशब्दानन्तरं धर्मकायशब्दस्यापाठात् कायत्रयमेवेति । अन्ये तूपदर्शितप्रयोजनसामर्थ्यात्कारिकाबन्धानुरोधेन ज्ञानस्यैव कारित्रेण सम्बन्धार्थश्चैवमुक्तमतोऽविरुद्धं सर्वं प्रदेशान्तराभिहितं कायचतुष्टयं भवतीति। स्यादेतच्छ्रावकाद्यरणासमाधेस्तथागतस्य को विशेषोऽरणासमाधेरिति । माऽस्माद्दर्शनात्कस्यचित् क्लेशोत्पत्तिः स्यादितिमनुष्यक्लेशोत्पत्तिपरिहारिता श्रावकाद्यरणासमाधिः। तथागतानां तु सकलजनक्लेशप्रबन्धोन्मूलनं स्यादिति ग्रामादिष्वरणासमाधिविशेषः । तथा चोक्तम् ।

श्रावकस्यारणादृष्टेर्नृक्लेशपरिहारिता ।
तत् क्लेशस्रोत उच्छित्त्यैग्रामादिषु जिनारणा ॥ ७ ॥

इति श्रावकादिप्रणिधिज्ञानात्तथागतप्रणिधिज्ञानस्य को विशेष इति चेत् उच्यते । निर्निमित्तत्वेन स्वरसप्रवृत्तं वस्त्वनभिनिवेशाद्रूपादिसङ्गविगतं सवासनक्लेशज्ञेयावरणप्रहाणात्सर्वज्ञेयाव्याघातमासंसारमवस्थानात्सदा स्थितम्, सम्यक् प्रतिसंविल्लाभात्प्रश्नविसर्जनकारि ताथागतं प्रणिधिज्ञानमिति श्रावकादिप्रणिधिज्ञानाद्विशिष्टमिष्टम् । तथा चोक्तम् ।

अनाभोगमनासङ्गमव्याघातं सदा स्थितम् ।
सर्वप्रश्नापनुद्बौद्धं प्रणिधिज्ञानमिष्यते ॥ ८ ॥

इति सवासनसुसूक्ष्मक्लेशज्ञेयावरणसंमोहद्वयप्रहाणप्रतिविशिष्टत्वेन सर्वेषामेव तथागतसन्तानवर्तिबोधिपक्षादिधर्माणां निरतिशयविशेषसद्भावादेतद्विशेषद्वयमन्तरोदितमुपलक्षणत्वेन ग्राह्यम् । स्यादेवं नित्यं महाकरुणामयधर्मकायावस्थाने कथं सकलप्राणभृतां सदा नार्थक्रियेति ।

त्रिविधं स्मृत्युपस्थानं त्रिधाऽसंमोषधर्मता।
वासनायाः समुद्घातो महती करुणा जने ॥५॥
आवेणिका मुनेरेव धर्मा येऽष्टादशेरिताः।
सर्वाकारज्ञता चेति धर्मकायोऽभिधीयते ॥६॥ इति

अन्ये तु—

सर्वाकारां विशुद्धिं ये धर्माः प्राप्ता निरास्रवाः।
स्वाभाविको मुनेः कायस्तेषां प्रकृतिलक्षणः ॥ इति।

यथारुतत्त्वेन लोकोत्तरानेवानास्रवान् धर्मानभ्युपगम्य तेषां या प्रकृतिरनुत्पादस्तल्लक्षणः स्वाभाविकः कायः स एव च धर्मताकायो धर्मकाय इति भावप्रत्ययलोपाद्व्यपदिश्यत इति व्याख्याय। के पुनस्तेऽनास्रवा धर्मा येषां प्रकृतिलक्षणो धर्मकाय इत्याशङ्क्य बोधिपक्षेत्यादिकारिकामवतारयन्ति। तेषां योगिसंवृत्या विशिष्टार्थप्रतिभासजननद्वारेणाश्रयपरावृत्त्या परावृत्ता धर्मदेशनाद्यर्थक्रियाकारिणोऽवश्यमद्वयाश्रितचैत्ताः कथमभ्युपगन्तव्याः। सङ्गृहीता इत्यपरः।

यः प्रतीत्यसमुत्पादः शून्यता सैव ते मता।

इति न्यायाद्धर्मतात्मककायप्रतिपादनादेवाद्वयज्ञानात्मको धर्मकायः प्रतिपादित इति चेदेवं तर्हि न्यायस्य तुल्यत्वात्साम्भोगिकनैर्माणिककायद्वयमपि प्रतिपादितमिति पृथङ्निर्देशो न कर्तव्यः स्यात्। अथ प्रवचने पठितत्वाद्योगिसंवृत्या तन्निर्देश इति मतममुनैव न्यायेनाद्वयज्ञानात्मकोऽपि धर्मकायस्तथैव पृथङ्निर्दिश्यतामिति प्राप्तम्। केचित्कायचतुष्टयव्याख्याने।

स्वाभाविकः ससाम्भोगो नैर्माणिकोऽपरस्तथा
धर्मकायः सकारित्रश्चतुर्धा समुदीरितः ॥

त्वेन नात्यायतवचनता ॥ ४७ ॥ प्रतिबिम्बवत्विदितसर्व-लोकत्वेन बिम्बप्रतिबिम्बौष्ठता ॥ ४८ ॥ मृदुवचनविनयत्वेन मृदुजिह्वता ॥४९॥ प्रभूतगुणोपपन्नत्वेन तनुजिह्वता ॥५०॥ रक्तबालजनदुरवगाहधर्मविनयत्वेन रक्तजिह्वता ॥ ५१ ॥ सर्वत्राशापगतत्वेन मेघगर्जितघोषता ॥ ५२ ॥ मधुराद्याला-पत्वेन मधुरचारुमञ्जुस्वरता ॥ ५३ ॥ निवृत्तभवसंयोजन-त्वेन वृत्तदंष्ट्रता ॥५४॥ दुर्दान्तजनदमकत्वेन तीक्ष्णदंष्ट्रता ॥ ५५ ॥ परमशुक्लधर्मविनयत्वेन शुक्लदंष्ट्रता ॥ ५६ ॥ सम-भूमिप्रतिष्ठितत्वेन समदंष्ट्रता ॥५७॥ सम्यगनुपूर्वाभिसमय-प्रकाशकत्वेनानुपूर्वदंष्ट्रता ॥ ५८ ॥ प्रज्ञाप्रकर्षस्थापकत्वेन तुङ्गनासता ॥ ५९ ॥ शुचिजनसम्पन्नत्वेन शुचिनासता ॥ ६० ॥ परमोदारधर्मत्वेन विशालनयनता ॥ ६१ ॥ समुपचितसत्त्वराशित्वेन चितपक्ष्मता ॥ ६२ ॥ सर्वयुवति-जनाभिनन्दित्वेन सितासितकमलदलनयनता ॥ ६३ ॥ नित्यमायतिदर्शित्वेनायतभ्रूकता ॥ ६४ ॥ श्लक्ष्णधर्मविनय-कुशलत्वेन श्लक्ष्णभ्रूकता ॥ ६५ ॥ कुशलस्निग्धसन्तानत्वेन सुस्निग्धभ्रूकता ॥६६॥ समन्तदोषदर्शित्वेन समरोमभ्रूकता ॥ ६७ ॥ परमपीडानिवर्तकत्वेन पीनायतभुजता ॥ ६८ ॥ विजितरागादिसमरत्वेन समकर्णता ॥ ६९ ॥ सर्वसत्त्वानुप-हतसन्तानत्वेनानुपहतकर्णेन्द्रियता ॥ ७० ॥ सर्वदृष्टिकृता-न्यथाविपरिणामत्वेनापरिम्लानललाटता ॥ ७१ ॥ सर्व-वादिप्रमथनत्वेन पृथुललाटता ॥ ७२ ॥ परिपूर्णोत्तम-प्रणिधानत्वेन पूर्णोत्तमाङ्गता ॥ ७३ ॥ विषयरतिव्यावर्त-कत्वेन भ्रमरसदृशकेशता ॥ ७४ ॥ प्रहीणदर्शनभावना-प्रहातव्यानुशयत्वेन चितकेशता ॥७५॥ श्लक्ष्णबुद्धिपरिज्ञात-

कल्याणमित्रादिसमवधानाद्बुद्धाद्यालम्बने परिपोषं गते हेतौ पूर्वावरोपितकुशलमूलबीजे सति, यस्य सत्त्वस्य यस्मिन् काले धर्मदेशनादिकं क्रियमाणमायतिपथ्यं भवति, तदा तस्यार्थकरणाय पूर्वप्रणिधानसम्पद्धा तत्प्रतिभासानुरूपेणार्थक्रियाकारी भगवानिति। महाकरुणास्वभावधर्मकायावस्थानेन सर्वदा चिन्तामणिरिवोपस्थितोऽपि स्वकर्मापराधजनितहेतुवैधुर्यान्न फलदायकः प्रतिभासते। अतो यथा देवराजे वर्षत्यपि सति पूतीभावादिनाऽबीजीभूतं बीजं तिलादि न प्रादुर्भवति, तद्वद्बुद्धानां सकलमनोरथपरिपूरणदक्षाणां समुत्पादेऽप्यभव्यो न भद्रं सद्धर्मश्रवणादिकं प्राप्नोतीत्यवसातव्यम्। तथा चोक्तम्।

परिपाकं गते हेतौ यस्य यस्य यदा यदा।
हितं भवति कर्तव्यं प्रथते तस्य तस्य सः ॥ ९ ॥
वर्षत्यपि हि पर्जन्ये नैव बीजं प्ररोहति।
समुत्पादेऽपि बुद्धानां नाभव्यो भद्रमश्नुते ॥१०॥ इति

यथोक्तन्यायेनैवं सर्वत्र प्रतिभासद्वारेणार्थक्रियाकरणवैपुल्यात्। प्रबन्धतयाऽऽसंसारमवस्थानेन च भगवतः क्षयाभावाद्यथाक्रमं बुद्धोऽव्ययो नित्य इत्यभिधीयते। तस्मात् कथं ज्ञानात्मको धर्मकायः प्रतिनियतयोगिसन्तानाधारवर्ती प्रतिक्षणमुत्पद्यमानो व्यापी नित्य इत्यपि कथ्यत इति न मन्तव्यम्। तथा चोक्तम्।

इति कारित्रवैपुल्याद्बुद्धो व्यापी निरुच्यते।
अक्षयत्वाच्च तस्यैव नित्य इत्यपि कथ्यते ॥११॥ इति

तदनु दशभूमिप्रविष्टमहाबोधिसत्त्वैः सह परमानवद्यमहायानधर्मसंभोगप्रीतिसुखोपभोगात्साम्भोगिकोऽयं कायो

द्वात्रिंशल्लक्षणाशीत्यनुव्यञ्जनविराजितगात्रो रूपकायस्व-
भावस्तृतीयो बुद्धस्य भगवतो ग्राह्यः । तथा चोक्तम् ।

द्वात्रिंशल्लक्षणाशीतिव्यञ्जनात्मा मुनेरयम् ।

साम्भोगिको मतः कायो महायानोपभोगतः ॥१२॥ इति

तानि पुनर्द्वात्रिंशल्लक्षणानि ॥ यदुत गुरूणामनुगमन-
प्रत्युद्गमनादिना चक्राङ्कहस्तपादता ॥ १ ॥ दृढसंवरसमा-
दानत्वात्कूर्मवत्सुप्रतिष्ठितपादता ॥ २ ॥ चतुःसंग्रहवस्तु-
सेवनाद्राजहंसवज्जालबद्धाङ्गुलिपादता ॥ ३ ॥ प्रणीत-
खाद्यभोज्यादिना मृदुतरुणहस्तपादता ॥ ४ ॥ प्रणीत-
तरलेह्यादिदानेन समुच्छ्रितहस्तपादस्कन्धग्रीवाप्रदेशत्वा-
त्सप्तोच्छ्रयता ॥ ५ ॥ वध्यमोक्षणत्वाद्दीर्घाङ्गुलिता ॥ ६ ॥
जीवितानुग्रहकरणादायतपार्ष्णिता ॥ ७ ॥ प्राणातिपात-
विरत्या बृहदृजुगात्रता ॥ ८ ॥ कुशलधर्मसमादानादुच्छङ्ख-
पादता ॥ ९ ॥ गृहीतकुशलसमादानवर्धनादूर्ध्वगरोमता
॥ १० ॥ सत्कृत्यविद्याशिल्पादिदानादैणेयजङ्घता ॥ ११ ॥
संविद्यमानार्थयाचनकजनाप्रत्याख्यानात्प्रलम्बबाहुता ॥१२॥
सर्वजनब्रह्मचर्यसमादापनगुह्यमन्त्ररक्षणात् कोशगतवस्ति-
गुह्यता ॥ १३ ॥ प्रणीतोपास्तरणदानात्सुवर्णवर्णता ॥ १४ ॥
प्रासादावरणदानाच्छ्लक्ष्णच्छविता ॥ १५ ॥ सङ्गणिकादि-
परिवर्जनात्प्रदक्षिणावर्तैकैकरोमता ॥ १६ ॥ सर्वगुरुजन-
यथास्थाननिवेशनादूर्णाङ्कितमुखता ॥ १७ ॥ सर्वथा
मुखरवचनादनवसादनात् सिंहपूर्वार्धकायता ॥ १८ ॥
प्रियवादित्वसुभाषितानुलोमत्वात्सुसंवृतस्कन्धता ॥ १९ ॥
भैषज्यादिदानाच्चितान्तरांसता ॥ २० ॥ ग्लानजनोप-
स्थानाद्रसरसाग्रता ॥२१॥ वनारामादिकरणसमादापना-

न्यग्रोधपरिमण्डलता ॥ २२ ॥ विहाराद्यभ्यधिकप्रदाना-दुष्णीषशिरस्कता ॥ २३ ॥ श्लक्ष्णादिवचनात्प्रभूतजिह्वता ॥ २४ ॥ सर्वलोकधातुसत्त्वसद्धर्मविज्ञपनाद्ब्रह्मस्वरता ॥ २५ ॥ सम्भिन्नप्रलापविरत्या सिंहहनुता ॥ २६ ॥ सर्वजनसम्मा-नादिना शुक्लदन्तता ॥ २७ ॥ विशुद्धाजीवत्वात्समदन्तता ॥ २८ ॥ सत्यवचनसमुदाचारादविरलदन्तता ॥ २९ ॥ पिशुनवचनानभ्यासात्समचत्वारिंशद्दन्तता ॥ ३० ॥ सर्व-सत्त्वैकपुत्रदर्शनादभिनीलनेत्रता ॥ ३१ ॥ प्रतिघातादि-विवेकदर्शनाद्गोपक्ष्मनेत्रता चेति ॥ ३२ ॥ तथा चोक्तम् ।

चक्राङ्कहस्तः क्रमकूर्मपादो
जलावनद्धाङ्गुलिपाणिपादः ।
करौ सपादौ तरुणौ मृदू च
समुत्सदैः सप्तभिराश्रयोऽस्य ॥ १३ ॥
दीर्घाङ्गुलिर्व्यायतपार्ष्णिगात्रं
प्राज्यं त्वृजूच्छङ्खपदोर्ध्वरोमा ।
एणेयजङ्घश्च पटूरुबाहुः
कोशावधानोत्तमवस्तिगुह्यः ॥ १४ ॥
सुवर्णवर्णः प्रतनुच्छविश्च
प्रदक्षिणैकैकसुजातरोमा ।
ऊर्णाङ्कितास्यो हरिपूर्वकायः
स्कन्धौ वृत्तावस्य चितान्तरांसः ॥ १५ ॥
हीनो रसः ख्यातिरसोत्तमोऽस्य
न्यग्रोधवन्मण्डलतुल्यमूर्तिः ।
उष्णीषमूर्धा पृथुचारुजिह्वो
ब्रह्मस्वरः सिंहहनुः सुशुक्लाः ॥ १६ ॥

तुल्याः प्रमाणेऽविरलाश्च दन्ता
ऽन्यूनसंख्या दशिकाश्चतस्रः ।
नीलेक्षणो गोवृषपक्ष्मनेत्रो
द्वात्रिंशदेतानि हि लक्षणानि ॥ १७ ॥
यस्य यस्याच यो हेतुर्लक्षणस्य प्रसाधकः ।
तस्य तस्य प्रपूर्यायं समुदागमलक्षणः ॥ १८ ॥
गुरूणामनुयानादिर्दृढता संवरं प्रति ।
सङ्ग्रहासेवनं दानं प्रणीतस्य च वस्तुनः ॥ १९ ॥
वध्यमोक्षसमादानं विवृद्धिः कुशलस्य च ।
इत्यादिको यथासूत्रं हेतुर्लक्षणसाधकः ॥ २० ॥ इति

अशीत्यनुव्यञ्जनानि पुनर्यदुत सर्वसंस्कारविविक्तत्वेन ताम्रनखता ॥ १ ॥ सर्वसत्त्वहिताध्याशयत्वेन स्निग्धनखता ॥ २ ॥ श्रेष्ठवंशप्रभवत्वेन तुङ्गनखता ॥ ३ ॥ वृत्तानवद्यत्वेन वृत्ताङ्गुलिता ॥ ४ ॥ समुपचितकुशलमूलत्वेन चिताङ्गुलिता ॥ ५ ॥ सम्यगनुपूर्वप्रवृत्तत्वेनानुपूर्वाङ्गुलिता ॥ ६ ॥ सुनिगूढकायादिकर्मान्ताजीवित्वेन गूढशिरता ॥ ७ ॥ क्लेशग्रन्थिभेदकत्वेन निर्ग्रन्थिशिरता ॥ ८ ॥ सुनिगूढधर्ममतित्वेन गूढगुल्फता ॥ ९ ॥ सर्वदुर्गस्थानजनोत्तारकत्वेनाविषमपादता ॥ १० ॥ नराभिभवनकुशलतया सिंहविक्रान्तगामिता ॥ ११ ॥ नागाभिभवनकुशलतया नागविक्रान्तगामिता ॥ १२ ॥ वैहायसङ्गमकुशलतया हंसविक्रान्तगामिता ॥ १३ ॥ पुरुषवृषभकुशलतया वृषभविक्रान्तगामिता ॥ १४ ॥ प्रदक्षिणमार्गानुयाततया प्रदक्षिणगामिता ॥ १५ ॥ प्रासादिककुशलतया चारुगामिता ॥ १६ ॥ नित्यमवक्रचित्ततयाऽवक्रगामिता ॥ १७ ॥ विशुद्धगुणाख्यापकतया

वृत्तगात्रता॥ १८॥ प्रमृष्टपापधर्मतया मृष्टगात्रता॥ १९॥ विनेयानुरूपधर्मदेशकतयाऽनुपूर्वगात्रता॥ २०॥ कायादिशुचिसमुदाचारत्वाच्छुचिगात्रता॥ २१॥ करुणाचित्तत्वान्मृदुगात्रता॥ २२॥ विशुद्धचित्तत्वाद्विशुद्धगात्रता॥ २३॥ परिपूर्णधर्मविनयत्वात्परिपूर्णव्यञ्जनता॥ २४॥ पृथुचारुगुणाख्यानात्पृथुचारुमण्डलगात्रता॥ २५॥ सर्वत्र समचित्तत्वात्समक्रमता॥ २६॥ सुविशुद्धधर्मदेशनाद्विशुद्धनेत्रता॥ २७॥ सुगमधर्मदेशनात् सुकुमारगात्रता॥ २८॥ नित्यमदीनचित्तत्वाददीनगात्रता॥ २९॥ समुन्नतकुशलत्वादुत्सदगात्रता॥ ३०॥ क्षीणपुनर्भवत्वेन सुसंहतगात्रता॥ ३१॥ सुविभक्तप्रतीत्यसमुत्पाददेशकत्वेन सुविभक्ताङ्गप्रत्यङ्गता॥ ३२॥ सुविशुद्धपदार्थदर्शनाद्वितिमिरशुद्धालोकता॥ ३३॥ वृत्तसम्पन्नशिष्यसंवर्तनीयत्वेन वृत्तकुक्षिता॥ ३४॥ प्रमृष्टसंसारदोषत्वेन मृष्टकुक्षिता॥ ३५॥ भग्नमानशृङ्गत्वेनाभग्नकुक्षिता॥ ३६॥ धर्मक्षयविनिवर्तकत्वेनाक्षामकुक्षिता॥ ३७॥ प्रतिविद्धधर्मगम्भीरत्वेन गम्भीरनाभिता॥ ३८॥ प्रदक्षिणग्राहिशिष्यसंवर्तनीयत्वेन प्रदक्षिणावर्तनाभिता॥ ३९॥ समन्तप्रासादिकपरिवारसंवर्तनीयत्वेन समन्तप्रासादिकता॥ ४०॥ शुचिचित्तत्वेन शुचिसमुदाचारता॥ ४१॥ व्यपगताकालधर्मविनयत्वेन व्यपगततिलकालगात्रता॥ ४२॥ कायादिलाघवप्रापकधर्मदेशत्वेन तूलसदृशसुकुमारपाणिता॥ ४३॥ प्रतिलब्धस्निग्धमहाश्रमणत्वेन स्निग्धपाणिलेखता॥ ४४॥ गम्भीरधर्मस्थानत्वेन गम्भीरपाणिलेखता॥ ४५॥ सम्यगायतिपरिशुद्धधर्मदेशकत्वेनायतपाणिलेखता॥ ४६॥ प्रचुरतरशिक्षादेशक-

तस्मात्तदालम्बनं ज्ञानं भ्रान्तं निर्विषयत्वादित्यर्थः। पूर्ववत् तत्कस्य हेतोरित्याशंक्याह । न हि तथागतो रूपकायतो द्रष्टव्य इति कल्पितस्यैकान्तशून्यत्वान्न रूपस्कन्धात्मकस्तथागतः। परतन्त्राभिनिवेशनिषेधार्थमाह । तद्यथापि नाम कुलपुत्र मायेत्यादि । ग्राह्यग्राहकाकारस्यालीकत्वेन निर्मितस्य नास्त्यागमनादिकमित्यर्थः। एवमेव कुलपुत्र नास्ति तथागतानामिति। परतन्त्रात्मकानाम्। परिनिष्पन्नाभिनिवेशनिराकरणार्थमाह । तद्यथापि नाम कुलपुत्र पुरुषः सुप्त इत्यादि। मृषावादो हि स्वप्न इति।

सर्वत्रालम्बनं बाह्यं देशकालान्यथात्मकम् ।
जन्मन्यन्यत्र तस्मिन् वा तदा कालान्तरेऽपि वा ॥

तद्देशोऽन्यदेशो वा स्वप्नज्ञानस्य गोचरो न भवत्यन्याकारज्ञानस्यान्यालम्बनेऽतिप्रसङ्गात्। न चान्यद्बाह्यं रूपमुपपद्यते। अल्पीयस्यपि वेश्मनि बहुयोजनपरिमाणानां गिरितरुसागरादीनां सप्रतिघानामुपलम्भात्, तस्माद्भ्रान्तमेव तथाविधं ज्ञानमुपजायत इत्यलीकः स्वप्नः। एवमेव कुलपुत्र सर्वधर्मा (p. 514, 11) इति। प्रमाणोपपन्नोत्पत्तिरहितत्वेन परिनिष्पन्नस्वभावाः सर्वधर्माः स्वप्नोपमाः। धर्मतामप्रजानन्त इत्यनुत्पादरूपतामनवगच्छन्तः। षड्गतिकमिति। देवादिपञ्चगतिभ्योऽसुरगतेः पृथग्व्यवस्थापनात्। ते च भगवतः श्रावका इति।

शीलादपि वरं भ्रंशो न तु दृष्टेः कदाचन ।
शीलेन गम्यते स्वर्गो दृष्ट्या याति परं पदम् ॥

इति न्यायेन त एव मायोपमधर्मताधिमुक्ता भगवतः

शासनत्वेन श्लक्ष्णकेशता ॥ ७६ ॥ रागाद्यसंलुठितचेतनत्वेना-
संलुठितकेशता ॥ ७७ ॥ नित्यमपरुषवचनत्वेनापरुषकेशता
॥ ७८ ॥ बोध्यङ्गकुसुमावकीर्णत्वेन सुरभिकेशता ॥ ७९ ॥
सर्वथा शोभासंवर्तनीयत्वेन श्रीवत्सस्वस्तिकनन्द्यावर्त-
ललितपाणिपादतलता चेति ॥ ८० ॥ तथा चोक्तम् ।

ताम्राः स्निग्धाश्च तुङ्गाश्च नखाङ्गुलयो मुनेः ।
वृत्तश्चितानुपूर्वाश्च गूढा निर्ग्रन्थयः शिराः ॥ २१ ॥
गूढौ गुल्फौ समौ पादौ सिंहेभद्विजगोपतेः ।
विक्रान्तं दक्षिणञ्चारुगमनमृजुवृत्तते ॥ २२ ॥
मृष्टानुपूर्वते मेध्यमृदुत्वे शुद्धगात्रता ।
पूर्णव्यञ्जनता चारुपृथुमण्डलगात्रता ॥ २३ ॥
समक्रमत्वं शुद्धत्वं नेत्रयोः सुकुमारता ।
अदीनोत्सदगात्रत्वे सुसंहतनगात्रता ॥ २४ ॥
सुविभक्ताङ्गता ध्वान्तप्रध्वस्तालोकशुद्धता ।
वृत्तमृष्टाक्षताक्षामकुक्षिताश्च गभीरता ॥ २५ ॥
दक्षिणावर्तता नाभेः समन्ताद्दर्शनीयता ।
समाचारः शुचिः कालतिलकापगता तनुः ॥ २६ ॥
करौ तूलमृदू स्निग्धगम्भीरायतलेखता ।
नात्यायतं वचो बिम्बप्रतिबिम्बोपमौष्ठता ॥ २७ ॥
मृद्वी तन्वी च रक्ता च जिह्वा जीमूतघोषता ।
चारुमञ्जुस्वरो दंष्ट्रा वृत्तास्तीक्ष्णाः सिताः समाः ॥ २८ ॥
अनुपूर्वी गतास्तुङ्गा नासिका परमं शुचिः ।
विशाले नयने पक्ष्मचितं पद्मदलाक्षिता ॥ २९ ॥
आयतश्लक्ष्णसुस्निग्धसमरोम्णौ भ्रुवौ भुजौ ।
पीनायतौ समौ कर्णावुपघातविवर्जितौ ॥ ३० ॥

ललाटमपरिम्लानं पृथुपूर्णोत्तमाङ्गता ।
भ्रमराभाश्चिता श्लक्ष्णा असंलुडितमूर्तयः ॥ ३१ ॥
केशा अपरुषाः पुंसां सौरभ्यादपहारिणः ।
श्रीवत्सः स्वस्तिकश्चेति बुद्धानुव्यञ्जनं मतम् ॥ ३२ ॥
इति ।

तदनु येन शाक्यमुनितथागतादिरूपेणासंसारं सर्वलोकधातुषु सत्त्वानां समीहितमर्थं समङ्करोत्यसौ कायःप्रबन्धतयाऽनुपरतो नैर्माणिको बुद्धस्य भगवतः सर्वबालजनसाधारणश्चतुर्थोऽवसातव्यः । तथा चोक्तम् ।

करोति येन चित्राणि हितानि जगतः समम् ।
आभवात्सोऽनुपच्छिन्नः कायो नैर्माणिको मुनेः ॥३३॥
इति ।

तत्र प्रथमं प्रशस्ताप्रशस्तगत्यनभिनिवेशानवस्थानलक्षणं गतिप्रशमनं कर्म कृत्वा, दानादिचतुःसङ्ग्रहवस्तुनि प्रतिष्ठाप्य श्रुतमयादिज्ञानेन विपक्षप्रतिपक्षं हेयोपादेयद्वारेण बोधयित्वा मायाकार इवानुनयादिविविक्ततया मैत्र्यादिलक्षणे परार्थे सत्त्वार्थयाथात्म्ये प्रतिस्थाप्य, तदनु स्वार्थे त्रिमण्डलविशुद्धिप्रभावितषट्पारमिताऽभ्यासे, तदनन्तरं स्वपरार्थलक्षणे दशकुशलकर्मपथे बुद्धमार्गे, ततः सर्वधर्मप्रकृतिशून्यताऽभ्यासे, तदनु दानपारमिताधिष्ठानेन प्रथमायां भूमौ सर्वत्रगधर्मधातुप्रतिवेधलक्षणेऽद्वयधर्मे, ततो द्वितीयादिभूमौ सम्भारपरिपूरिहेतुभूते शीलादिपारमितासर्वधर्मसाङ्केतिकज्ञाने निवेशयति, एवमनुक्रमेण प्रज्ञापारमिताऽधिष्ठानेन षष्ठ्यां भूमौ ज्ञानज्ञेयभावनाभिनिवेशलक्षणे सर्वधर्मानुपलम्भे, तदनन्तरं

सप्तम्यामुपायपारमितावलेन सत्त्वपरिपाके, ततो बल-पारमिताबलेनाष्टम्यां श्रावकाद्यसाधारणे बोधिसत्त्वमार्गे पुनस्तत्रैव सर्वभावाभिनिवेशप्रहाणे, तदनु नवम्यां प्रणिधानपारमितासामर्थ्याद्बोधिप्राप्तौ, तदनन्तरं ज्ञान-पारमिताबलाद्दशम्यां द्विविधबुद्धक्षेत्रविशुद्धौ प्रतिष्ठाप्य पुनस्तत्रैव जातिप्रतिबद्धस्वरूपे सम्यक्सम्बोधिप्रतिनियमे दशदिग्लोकधातवीर्यसत्त्वार्थे सर्वलोकधातुबुद्धोपसङ्क्रम-णादिगुणे च निवेशयत्येवमनुक्रमेण पुनस्तत्रैव विशेष-मार्गस्वरूपे समस्तबोध्यावाहकधर्मलक्षणे बोध्यङ्गे कर्मफल-सम्बन्धाविप्रणाशे, यथाभूतपदार्थाधिगमे सर्वविपर्यास-प्रहाणे निर्वस्तुकविपर्यासप्रहाणज्ञाने प्रकृतिपरिशुद्धिलक्षणे बोधिसत्त्वव्यवदाने, सर्वकलङ्कापगतव्यवदानहेतौ सम्भारे, शून्यतास्वभावेन संस्कृतासंस्कृताव्यतिभेदपरिज्ञाने च प्रतिष्ठाप्य ताथागत्यां भूमौ निर्वाणे निवेशयतीत्येवं धर्मकायवदस्यासंसारं सप्तविंशतिप्रकारं कर्मविनेयजन-प्रतिभासभाक् तदाधिपत्याश्रयेणायातं संवृत्या ज्ञानमेव साम्भोगिककायादिप्रतिभासोत्पादद्वारेणार्थक्रियाकारीति धर्मकायस्येष्यत इति कारित्रमवसातव्यम्।

तथा चोक्तम्।

तथा कर्माप्यनुच्छिन्नमस्यासंसारमिष्यते।
गतीनां शमनं कर्म सङ्ग्रहे च चतुर्विधे॥ ३४॥
निवेशनं ससंक्लेशे व्यवदानावबोधने।
सत्त्वानामर्थयाथात्म्ये षट्सु पारमितासु च॥ ३५॥
बुद्धमार्गे प्रकृत्यैव शून्यतायां द्वयक्षये।
सङ्केतेऽनुपलम्भे च परिपाके च देहिनाम्॥ ३६॥

बोधिसत्त्वस्य मार्गेऽभिनिवेशस्य निवारणे ।
बोधिप्राप्तौ जिनक्षेत्रविशुद्धौ नियतिं प्रति ॥ ३७ ॥
अप्रमेये च सत्त्वार्थे बुद्धसेवादिके गुणे ।
बोधेरङ्गेष्वनाशे च कर्मणां सत्यदर्शने ॥ ३८ ॥
विपर्यासप्रहाणे च तदवस्तुकतानये ।
व्यवदाने ससम्भारे संस्कृतासंस्कृते प्रति ॥ ३९ ॥
व्यतिभेदापरिज्ञाने निर्वाणे च निवेशनम् ।
धर्मकायस्य कर्मेदं सप्तविंशतिधा मतम् ॥ ४० ॥ इति

एवमेव कारिकाशास्त्रप्रामाण्याद्भावाध्याहारपदादिभिरभिसमयक्रमानुरूपो ग्रन्थार्थो वाच्यः। ततश्च केनचिदभिसमयालङ्कारकारिकापाठं बाहुल्येन नान्यथा कृत्वा प्रतिभातु ते सुभूत इत्यादि वाक्यमारभ्यास्या मातुर्यदसम्बद्धं सम्यक्समुदायावयवार्थानभिधानाद्व्याख्यातम्। तत्सन्त एव ज्ञातुमर्हन्तीति नोपन्यस्य निराकृतम्।

अभिसमयालङ्कारालोकायां प्रज्ञापारमिताव्याख्याया-
मनुगमपरिवर्तो नामैकोनत्रिंशत्तमः ॥

---

यथोक्ताष्टाभिसमयस्वभावप्रज्ञापारमिताधिगमं प्रति पूर्वयोगकथामुखेनादिकर्मिकावस्थामारभ्य पर्येषमाणक्रममावेदयन्नाह। पुनरपरमित्यादि (p. 482, 2)। सदाप्ररुदितस्तु बोधिचित्तसमादानदानादिशुभसञ्चयवान्। घोषानुगत्वादुपलम्भप्रहाणार्थिकत्वाच्च सम्भारभूमौ स्थितिस्तदुत्तरोत्तरनिर्वेधांगाद्यववादपर्येषणपरस्तदेति लक्ष्यते। अधुना तु दशभूमीश्वर एव। कायेऽनर्थिकेनेति। अस्थिमज्जादिदानाशयात्। जीविते निरपेक्षेणेति। हृदयदानं प्रत्युत्साहितत्वात्। लाभसत्कारश्लोकेष्विति। तत्र लाभो द्रव्यसम्पत्। सत्कारो बहुमानता। श्लोको दिगन्तरव्यापिनी कीर्तिः। प्रथमं संभारभूमौ "धर्मस्रोतसि बुद्धेभ्योऽववादं लभते तदे" इति वचनात्, अप्राप्तधर्मस्रोतःसमाधित्वेनान्तरीक्षान्निर्घोषः श्रुतोऽभूत्। मा वामेनेति वामपार्श्वेन। मा दक्षिणेनेति दक्षिणपार्श्वेनावलोकयन्मागमिष्यसीत्यर्थः। मा पूर्वेणेत्यादि। मा पूर्वादिदिग्भागेन न यथा नात्मतो न सत्कायतश्चलसीत्यादि। आत्मादीनामप्रतिभासमानानां विद्यमानत्वेनानवगमात्। रूपादीनां दर्शनपथारूढानां निरात्मकानामविद्यमानत्वेनावबोधाद्यथा तेभ्यो न चलसि तथा गच्छेत्यर्थः। वितिष्ठत इति निवर्तते (p. 482, 2)। एतदुक्तं भवति। सर्वेणैतेन समाधिविबन्धककायक्लमथाद्युत्पादनिषेधेनोपलक्षणतया सर्वस्यैव समाधेः। कौसीद्यमालम्बनसम्प्रमोषो लयौद्धत्ये तथानाभोगः। पुनराभोग इति। षड्दोषाणां प्रतिपक्षेणाष्टाभिः प्रहाणसंस्कारैः समन्वागतेन समाधिना प्रज्ञापार-

मितां मनसि कुर्वन् पूर्वां दिशं गच्छैवं श्रोष्यसीत्यववादो दत्तः स्यात् । तथाहि समाधिगुणेष्वभिसम्प्रत्ययलक्षणया योगिन श्रद्धया छन्दः समुत्पद्यते । ततः छन्दबलाद्वीर्यमारभते । ततो वीर्यबलेन कायचित्तप्रस्रब्धिमासादयति । ततः प्रस्रब्धकायचेतसः कौसीद्यं व्यावर्तते । तस्माच्छ्रद्धादयश्चत्वारः कौसीद्यप्रहाणाय भवन्ति । स्मृतिरालम्बनसम्प्रमोषस्य प्रतिपक्षः, तया सम्यगालम्बनोपस्थापनात् । सम्प्रजन्यं लयौद्धत्ययोः प्रतिपक्षः । तेन प्रामोद्यवस्तुबुद्धादिगुणमनसिकाराल्लयस्य, संवेगवस्त्वनित्यतादिमनसिकारादौद्धत्यस्य प्रहाणाल्लयौद्धत्यप्रशमनकाले त्वनाभोगदोषः । तत्प्रतिपक्षेण चेतनाऽभ्यसनीया । लयौद्धत्यप्रशमे सति यदा चित्तमालम्बने निष्प्रकम्प्यमनभिसंस्कारवाहि प्रवृत्तं भवति, तदा पुनराभोगदोषस्तेन चित्तविक्षेपात् अतस्तत्प्रतिपक्षेणोपेक्षा भावनीयेति । सम्यगववादलाभादभ्युपगमार्थमाह । एवं वै करिष्यामीति । निर्युक्तिक एवायमभ्युपगम इति तत्कस्य हेतोरित्याशङ्क्याह । अहं हि सर्वसत्त्वानामालोकं कर्तुकाम इत्यादि । सुगमः । पुद्गलनैरात्म्यमुखेनानुशास्य धर्मनैरात्म्यद्वारेणानुशासयन्नाह । पुनरपि शब्दमश्रौषीदित्यादि ।

परिज्ञायै प्रहाणाय पुनः साक्षात् क्रियां प्रति ।
शून्यतादिसमाधीनं त्रिधार्थः परिकीर्तितः ॥

इति वचनाद्येनाकारेण प्रतिभासते स घटाद्याकारः कल्पितस्वभावस्तस्य परिज्ञानार्थं शून्यतासमाधिरुक्तः । कल्पितो हि स्वभावः परिज्ञेयो भ्रान्तिमात्रेण सत्त्वात् ।

सर्वधर्माभिनिवेशविविक्तमायोपमज्ञानस्य साक्षात् क्रियार्थमानिमित्तःसमाधिः योगिसंवृत्या तथ्यारूपस्य परिनिष्पन्नस्याधिगन्तव्यस्वभावत्वात्पुद्गलधर्माभिनिवेशस्य परतन्त्रस्य प्रहाणार्थमप्रणिहितः समाधिः। ग्राह्यग्राहकाभिनिवेशस्य विपर्यासप्रभवत्वेन प्रहेयत्वात्। श्रुतचिन्ताभावनामयज्ञानोत्पादकालेषु मायापुरुषेणेवाचरितव्यमिति प्रतिपादनार्थं निमित्तपरिवर्जितेनेत्यादि पदत्रयमित्येके। शून्यतादिसमाधौ प्रयोगमौलपृष्ठावस्थास्वित्यपरे। कल्याणमित्रलक्षणार्थमाह। यानि शून्यतेत्यादि। तत्र सम्भारभूमौ पुण्यसम्भारोपार्जनार्थं शून्यतानिमित्ताप्रणिहितानधिमुक्तिचर्याभूमौ तु ज्ञानसम्भारात्मकनिर्वेधभागीयोत्पादनार्थं यथाक्रममनुत्पादाजातानिरुद्धाभावान् सर्वधर्मान् देशयन्तीत्यर्थः। परितुलयमानेनेति (p. 483, 6) परिगणयता। धर्मार्थिकेनेति। अनागतधर्मप्रयोजनदर्शनात्। धर्मगौरवेणेति। प्रत्युत्पन्नानुशंसोपलम्भात्। अष्टषष्ट्यां स्त्रीसहस्रैः सार्धं पञ्चभिः कामगुणैः समन्वितमार्यं धर्मोद्गतं बोधिसत्त्वं दृष्ट्वा न चित्तस्यान्यथात्वं कार्यमित्यादि। मारकर्माणि च त्वयावबोद्धव्यानीत्यादि। तांश्चाभिभूयेति। तदायत्तत्वाभावेनाभिभूय। उपायकौशल्यमेव कथयन्नाह। एष सत्त्वविनयेनेत्यादि। संवृतिसत्याश्रयेणोपायं निर्दिश्य परमार्थसत्याश्रयेणाह। तत्क्षणञ्च त्वयेत्यादि। तत्क्षणमिति। पञ्चकामगुणक्रीडकदर्शनानन्तरम्। तथैव तत्कस्य हेतोरित्याशङ्क्याह। सर्वधर्मा हीत्यादि। स्वभावेन शून्या इति। तत्त्वेनानुत्पन्नाः। रूपादिपञ्चस्कन्धानां निरा-

त्मकत्वप्रतिपादनार्थं निःस्वभावा इत्यादि (p. 484, 1) पञ्च-पदोपादानम् । मायोपमा इत्यादि । पुनरुक्तदेशनायाः प्रागुक्तं प्रयोजनं सप्तवर्षाण्येकसमाधिसमापन्नमार्यं धर्मोद्गतं बोधिसत्त्वमुपलभ्य न शिथिलवीर्येण भाव्यमित्याह । अपरमपि त्वमित्यादि । प्रतिवाणिरिति प्रतिकूलता कियद्दूरं मया गन्तव्यमिति सम्भारभूमौ ।

ध्यानाभिज्ञाभिनिर्हाराल्लोकधातून् स गच्छति ।
पूजार्थमप्रमेयाणां बुद्धानां श्रवणाय च ॥
अप्रमेयानुपास्यासौ बुद्धान् कल्पैरमेयगैः ।
कर्मण्यतां परामेति चेतसस्तदुपासनात् ॥

इति वचनादभिज्ञासद्भावेऽपि आर्यधर्मोद्गतविमोक्षदर्शन-शक्तिवैकल्यादार्यधर्मोद्गतस्यैवाधिष्ठानात्तत्परिपाचनोपाय-कौशलातिशयाददर्शनेनार्यधर्मोद्गतविमोक्षप्रभावितगन्ध-वत्या नगर्याः कियद्दूरं मया गन्तव्यमिति निर्घोषो मया न पृष्ट इत्यर्थः । तत्र रुदितमुच्चैःस्वरेण क्रन्दितं तद्विपर्यया-दित्येके । रुदितमश्रुविमोक्षणं क्रन्दितं तदेव सशब्दमित्य-परे । शोकश्चित्तवैरस्यं परिदेवो हाकष्टं वञ्चित इत्यादि-वचनम् । पूर्वोक्तधर्मपुद्गलनैरात्म्याववादादभ्यारब्धप्रज्ञा-पारमितामनस्कारत्वाच्च सम्भारभूमावेव चित्तकर्मण्यतायां सत्यां धर्मस्रोतो नाम समाधिं प्रतिलभते, यस्य प्रति-लम्भाद्ग्रन्थार्थग्रहणसमर्थो भवति । तस्मिंश्च समाधौ प्रति-लब्धे बुद्धेभ्योऽववादं समाधिप्रज्ञयोरभिवृद्ध्यर्थं प्राप्नोती-त्याह । अथ खलु सुभूते सदाप्ररुदितस्य बोधिसत्त्वस्येत्यादि (p. 485, 6) । तथोत्कण्ठितस्येति । तथा संजाताभिलाषस्य

सन्नाहकुशलसत्त्वार्थवीर्यभेदादेतेनैव वीर्येणेत्यादिपदत्रयम्। छन्दिकता तु प्राप्तीच्छाऽनुबध्येति। अन्तरापरित्यागाभावादनुबन्धं कृत्वा तत्रान्तर्धानसद्भावाद्विधा तद्विपर्ययात्स्फीता। परचक्रोपद्रवादिविरहात्क्षेमा। अन्नादिप्राचुर्यात्सुभिक्षा। हस्त्यश्वादिमनुष्यबाहुल्यादाकीर्णबहुजनमनुष्या। अन्तरापणवीथी त्वापणकवीथी। एकान्तमारभ्यापरान्तगमनान्निर्विद्धा। समसमैरिति। तुल्यप्रमाणैरिति केचित्। वीप्सया द्विरभिधानमित्यन्ये। अनुत्पीडजनयुग्ययानसंक्रमणस्थापितैरिति। तत्र जनयानस्थानं हस्त्यश्वादियानस्थानं, युग्ययानस्थानं, शिबिकादियानस्थानं, पद्भ्यां गमनस्थानं सङ्क्रमणस्थानम्। अनुत्पीडानि जनयुग्ययानसङ्क्रमणस्थानस्थापितानि येष्वन्तरापणवीथीशतेषु तानि। तथोक्तान्यतस्तैः सुसमापिता निष्पादितेत्यर्थः। निष्ठान्तत्वेन स्थापितशब्दस्य न पूर्वनिपातो लक्षणस्य व्यभिचारात्। खडकशीर्षाणीति (p. 486, 1) क्रमशीर्षाणि। किंकिणीजालेनेति घण्टिकासमूहेन। तत्र शोभनत्वाद्दर्शहृदयं गमत्वान्मनोज्ञः। हर्षकरत्वाद्रञ्जनीयः। पञ्चाङ्गिकस्य तूर्यस्येति। वीणावंशादियुक्तवाद्यविशेषस्य। अनुसारिवारिवाहिण्य इति। प्रदक्षिणावर्तजलवाहिन्यः। वारिण इति कृत्प्रत्यये कर्तरि सम्बन्धविवक्षायां षष्ठी। पुण्डरीकं पद्मं। अन्यैरिति। सौगन्धिकदन्धोत्पलादिभिः। शकटचक्रप्रमाणपरिणाहानीति। परिणाहो माण्डल्यम्। नीलानीत्यादि (p. 487, 5)। तत्र नीलानीत्युद्देशः सहजनीलत्वान्नीलवर्णवर्णानि।

सांयोगिकनीलत्वान्निदर्शनानि । उभयोः प्रभानिर्मोक्ष-भास्वरत्वान्नीलनिर्भासानि । एवं पीतानीत्यादिज्ञेयम् । बुद्धनेत्रीत्यादि । बुद्धनेत्री प्रज्ञापारमिता । तस्यां चित्री-कारः प्रसादस्तेनानुगतं युक्तं सुष्ठु गतमवबुद्धं श्रुतं चित्तं श्रुतमयं ज्ञानं येषां ते यथोक्तास्तेषां पूर्वकर्मविपाकेनेति पूर्वेण सम्बन्धः । गन्धवत्यां मध्य इति । गन्धवत्यां नगर्या-मभिलक्ष्यभूतस्थानस्य शृङ्गाटकस्य मध्य इति सम्बन्धः । मृदुमध्याधिमात्रोपभोगभेदाद्गृहपरिभोगेत्यादिपदत्रयम्, कर्कोतनमयीति (p. 488, 1) । कर्कोतनमिन्द्रनीलम् । समर्पित इत्युत्पादितकायसुखः । समन्वंगीभूत इति सञ्जातचित्त-सौमनस्यः । आत्मनि सति परसञ्ज्ञा स्वपरविभागात्परि-ग्रहद्वेषौ । अनयोः सम्प्रतिबद्धाः सर्वक्लेशाः प्रजायन्त । इति न्यायेनात्मात्मीयग्रहाभिनिवेशपूर्वकत्वेन सर्व एव रागादयः क्लेशा दुःखविपाकहेतवो भवन्ति । मायोपम-सर्वधर्मभावनया पुनः सत्त्वविनयनमुपादाय क्लेशवशित्व-लाभेनाशयविशेषान्मायापुरुषस्येव कामपरिभोगो जिनात्म-जानां न दोषकृत्तथा ॥

बोधिसत्त्वा हि सततं भवन्तश्चक्रवर्तिनः ।
प्रकुर्वन्ति हि सत्त्वार्थं गृहिणः सर्वजन्मसु ॥
क्लेशो बोध्यङ्गतां यातः संसारश्च शमात्मताम् ।
महोपायवतां तस्मादचिन्त्या हि जिनात्मजाः ॥

इति वचनात् कामपरिभोगो बोधिसत्त्वानां न दोषकृत् । गृहीतनियमानामेव कामपरिभोगस्य दुष्टत्वात् । तूलिका-स्तीर्णेति । तूलिका ज्ञायत एव । गोणिका तु विशिष्ट-

कम्बलजातिः। गर्भौलिको मस्तरकः। चैलवितानमिति वस्त्रवितानं। अस्तित्वगुणवच्छक्यत्वेषु संप्रत्ययप्रसादाभिलाषाकारश्रद्धाप्रतिपादनार्थं धर्माणां सन्निश्रयतयेत्यादि पदत्रयोपादानम्। अधिष्ठितमिति (p. 489, 17)। अविच्छिन्नं चिरकालप्रार्थितप्राप्त्युपायश्रवणेन मृदुमध्याधिमात्रसुखसौमनस्य लाभाद्यथाक्रमं तुष्ट इत्यादि षट्पदानि। तथागताववादेनाशयविशुद्धिलाभात्प्रज्ञापारमिताश्रवणं जातमित्याह। अथ खलु सदाप्ररुदित इत्यादि (p. 499, 8)। सम्पन्नहेतुकानां धर्मश्रवणं नाफलवदित्याह। शृणुवंश्चेत्यादि। अनिश्रितसंज्ञामिति। मायोपमसंज्ञाम्। धर्मनैरात्म्यप्रभावितश्च सर्वोऽधिगम इत्याह। तस्यानेकानीत्यादि। यस्मिन् समाधौ व्यवस्थितः सर्वधर्माणां स्वभावं मायोपमत्वादिना व्यवलोकयति, स सर्वधर्मस्वभावव्यवलोकनो नाम समाधिः। एवं सर्वधर्मस्वभावानुपलब्धिर्नाम समाधिरित्यादयो व्याख्येयाः। तत्र मृदुमध्याधिमात्रनिर्वेधभागीयाधिगमभेदात्सर्वधर्मस्वभावव्यवलोकनादिद्वादशसमाधयस्तन्निर्जातास्त्वधिमुक्तिचर्याभूमावेव मायावर्जित इत्यादयः पञ्चाशत्समाधयश्चावगन्तव्याः। आर्यरत्नमेघसूत्रे चास्यामेवाधिमुक्तिचर्याभूमौ वर्तमानो बोधिसत्त्वः पृथग्जनोऽपि सर्वबालविपत्तिसमतिक्रान्तोऽसंख्येयसमाधिधारणीविमोक्षाभिज्ञादिगुणान्वितः कथ्यत इति। आशयपरिशुद्धिबलादेव प्रथमभूम्यधिगमार्थं समाहितावस्थायां तथागतप्रतिभासपूर्वको विस्तरेणाववादो जात इत्याह। स एषु समाधिषु स्थित इत्यादि (p. 492, 6)। प्रमुदितादि-

भूमौ बुद्धशतादिकं पश्यतीति प्रदेशान्तरे यद्वचनं तदवश्यंभावित्वेनेति प्रतिपत्तव्यम्। अन्यच्च विधिप्रतिषेधयोरनियमात्। अतोऽधिमुक्तिर्याभूमावसंख्येयतथागतोपलम्भो भवति। ननु द्वयोस्तथागतयोरेकस्मिन् लोकधातौ सम्भवविरोधात् कथमेवमिति चेत्। लोकधात्वन्तरे स्थितानप्रमेयान् बुद्धान् भगवतः पश्यति स्मेत्येके। यत्त्वस्विदमपूर्वाचरमौ द्वौ तथागतौ लोके नोत्पद्येयातामिति जन्मनिषेधनं तच्छासनप्रवृत्तिमभिप्रायीकृत्योक्तमतो न द्वयोस्तथागतयोर्युगपल्लोके शासनं प्रवर्तत इत्ययमेवार्थस्तत्र सन्तिष्ठते। यस्मात्परमार्थपरतन्त्रोत्पत्तित्वेनेयमेव तयोरुत्पत्तिर्यदुत शासनप्रवृत्तिरेवञ्च सतीह लोकधातुस्थानेव समानाभिप्रायत्वेन विहितैकशासनक्रमानविकलकारणत्वाद्युगपदुत्पन्नानेकतथागतान् पश्यति स्मेत्यपरे। नापूर्वाचरमाविति वचनात् क्रमेण तेषामुत्पत्तिरनुज्ञातैव। ते तूत्पन्नाः परिनिर्वाणाभावात्, धर्मसम्भोगकायाभ्यां विद्यन्त एव। केवलमपुण्यवतां नाभासीभवन्ति। पुण्यवद्भिः पुनर्यथा पुण्यमल्पीयांसो भूयांसो वा समुपलभ्यन्त इत्यन्ये। तदानीं तत्रत्यैकतथागताधिष्ठानेनार्यधर्मोद्गतसामर्थ्येन वा प्रातिहार्यकरणकाले पृथग्जनानामिवामेयनिर्मिततथागतदर्शनमिति केचित्। अचिन्त्यविमोक्षमुखभावनाबलादादिकर्मिकाणामिव स्वचित्तस्यामेयतथागतप्रतिभासानुगतत्वेनोत्पादादप्रमाणतथागतदर्शनमित्यपरे। चैलोण्डूकमिवेति (p. 493, 17)। वस्त्रगुलकमिव शिरसा परिकर्षधारयेस्त्वमित्यर्थः। तथैव तत्कस्य हेतोरित्याशंक्याह। तस्य हीत्यादि (p. 494, 2)। परितसन-

मिति वैमनस्यं। तेन मूल्येनेति (p. 495, 6)। यावज्जीवमात्मभावविक्रये परप्रतिबद्धतया तत्र गमनासम्भवान्नितरां पूजावैकल्यमिति। तावत्कालविक्रीतात्मभावमूल्येन सम्भारभूमावप्यभिज्ञाबलाद्दिव्यपूजासम्भवेऽपि तन्मूल्यग्रहणं धर्मगौरवार्थमित्येके। धर्मश्रवणार्थिकत्वाद्दध्यभिज्ञाभोगस्मृतिवैकल्यादित्येके। मन्दवीर्याणां धर्मपर्येष्टिं प्रत्युत्साहसन्दर्शनार्थमित्यपरे। श्रेष्ठिदारिकाप्रभृतीनाममेन क्रमेणार्थकरणमिति केचन। स्वपरोभयोपद्रवविनाशाद्यथाक्रमं भग्नानीत्यादिपदत्रयम्। कामहेतोः कामनिदानमिति। अनुभूताननुभूतकामार्थमित्यर्थः। मृदुमध्याधिमात्रहर्षलाभात्तुष्टचित्त इत्यादि पदत्रयम्। अभिज्ञाबलाद्धृदयादिदानेऽपि धर्मश्रवणान्तरायादर्शनाद्दास्यामीत्यभ्युपगतवानिति केचित्। धर्मपूजार्थिकतयाऽन्तरायोऽपि न गणित इति कश्चन। परित्यक्तमिति (p. 497, 22)। आशयमहत्त्वादेव महती पूजा न तु द्रव्यमहत्त्वेनेत्यभिप्रायाद्यद्विकल्पितं तद्देहीत्युक्तवान्। कारणामिति पीडाम्। गुणजातिरिति गुणसामान्यम्। गुणविशेष इति गुणस्वलक्षणम्। तत्र मनोऽनुकूलत्वाद्रोचन्ते। दोषानुत्पादत्वात् क्षमन्ते। विषयितेति (p. 500, 17) वशिताप्रभुत्वं सामर्थ्यमिति यावत्। तीक्ष्णमध्यमृद्विन्द्रियजनप्रतिभासापेक्षया क्षणादिपदत्रयम्। उत्पन्नरोगाभावादरोगः। अनागतव्याधिं प्रत्ययोग्यत्वान्निरुपद्रवः। एवं ह्यीत्यादि (p. 501, 8)। निवेशनमिति गृहम्। उत्सृजतेति त्यजत। पूर्ववत्तत्कस्य हेतोरित्याशङ्क्याह। न ममान्यत् किञ्चिद्धनमित्यादि

(p. 503, 9) । प्रभूता विपुला इति । अनेकप्रकारद्रव्यभेदात्प्रभूताः । एकैकप्रकारस्यानन्त्याद्विपुलाः । अनुजानीतेति (p. 504, 8) । अनुज्ञां प्रयच्छत । अद्राक्षीद्दूराद्देवेति (p. 505, 10) विशिष्टाधिगमलाभेनार्यधर्मोर्ज्जितविमोक्षदर्शनसामर्थ्याज्ज्ञन्धवतीं नगरीं दूरादेव दृष्टवान् । क्वासौ कौशिकेति (p. 507, 13) । धर्मार्थित्वाद्देवाभिज्ञाभोगवैकल्यात्पृष्टवान् । सप्तभिर्मुद्राभिरिति । दुर्लभमहार्थतयाऽचादरोत्पादनार्थं दृढतरं सप्तभिर्बन्धनैर्बद्धा सप्तसु ग्रन्थिस्थानेषु सप्तभिः स्वनाममुद्राभिर्मुद्रयित्वा स्थापितेत्येके । भव्यतां ज्ञात्वा नितरामावर्जनार्थमृद्धिप्रातिहार्यकृतमित्याह । अथ खलु तानि पुष्पाणीत्यादि (p. 508, 10) । तथागतानामागमनगमनपरिज्ञानप्रश्नार्थम् । पूर्ववृत्तान्तमावेदयन्नाह । इहाहं कुलपुत्रेत्यादि (p. 509, 19) ॥

अभिसमयालङ्कारालोकायां प्रज्ञापारमिताव्याख्यायां सदाप्ररुदितपरिवर्तो नाम त्रिंशत्तमः ॥

---

तथागतानामागमनगमननिषेधेन दर्शनमार्गोत्पादनार्थं सर्वधर्मनैरात्म्यमावेदयन्नाह। एवमुक्ते धर्मोद्गत (p. 512, 2) इत्यादि। तथताऽनुत्पादभूतकोटिशून्यतायथावत्ताविरागनिरोधाकाशधातुस्वभावत्वप्रतिपादनेन यथाक्रमं बुद्धानां भगवतां मायोपमसर्वाकारज्ञताद्यष्टाभिसमयप्रभावितत्वमावेदितमित्येके। अत एवाह। न हि कुलपुत्रेत्यादि। एभ्यो धर्मेभ्य इति। सर्वाकारज्ञतादिधर्मेभ्यो नान्यत्र तथागतः। किन्त्वेषामेव या तथता सा तथागत इत्यर्थः। अन्ये तु हेतूदाहरणाधिक्यादाधिक्यं निग्रहस्थानं क्षुद्रनैयायिकैरप्युच्यते। तत्कथं न्यायपरमेश्वरो भगवानुदाहरणाधिक्यमुक्तवानिति चोद्यं कृत्वा। यत्र नामैकः प्रतिपाद्यस्तत्र तत्प्रसिद्धस्यैकस्यैवाभिधानं युक्तम्। तत्र तु पर्षन्मण्डले बहवो भिन्नमतयः सन्निषण्णा इति। तदधिकारेण युक्तमनेकोदाहरणवचनम्। विकल्पेन वाऽमी दृष्टान्ता न समुच्चयेनेत्येवं सर्वत्राधिकवचने परिहारं वर्णयन्ति। तथा दृष्टान्तस्यैव कथनात्प्रतीत्यसमुत्पन्नत्वादिको हेतुः प्राज्ञैरभ्यूहनान्नोक्त इति। तथागतानां स्वरूपमेवं निर्दिश्य कल्पिताभिनिवेशनिषेधार्थमाह। तद्यथापि नाम कुलपुत्र पुरुष इत्यादि। मरीचिकामिति (p. 513, 1) विशिष्टादित्यरश्मिम्। पदार्थस्वरूपापरिज्ञानाद्बालजातीयः। विपरीतप्रतिपत्त्या दुष्प्रज्ञजातीयः। न पुनस्तत्रोदकं स्वभावतः संविद्यत इति। मृगतोयस्य विज्ञाने रश्मितप्तोषरमालम्बनं न भवत्यन्याकारज्ञानस्यान्यालम्बनेऽतिप्रसङ्गात्, परस्परव्यावृत्तरूपत्वात्सर्वभावानामुदकं मरीचिकायां तत्त्वतो न संविद्यते।

तस्मात्तदालम्बनं ज्ञानं भ्रान्तं निर्विषयत्वादित्यर्थः। पूर्ववत् तत्कस्य हेतोरित्याशंक्याह। न हि तथागतो रूपकायतो द्रष्टव्य इति कल्पितस्यैकान्तशून्यत्वान्न रूपस्कन्धात्मकस्तथागतः। परतन्त्राभिनिवेशनिषेधार्थमाह। तद्यथापि नाम कुलपुत्र मायेत्यादि। ग्राह्यग्राहकाकारस्यालीकत्वेन निर्मितस्य नास्त्यागमनादिकमित्यर्थः। एवमेव कुलपुत्र नास्ति तथागतानामिति। परतन्त्रात्मकानम्। परिनिष्पन्नाभिनिवेशनिराकरणार्थमाह। तद्यथापि नाम कुलपुत्र पुरुषः सुप्त इत्यादि। मृषावादो हि स्वप्न इति।

सर्वत्रालम्बनं बाह्यं देशकालान्यथात्मकम्।
जन्मन्यन्यत्र तस्मिन् वा तदा कालान्तरेऽपि वा॥

तद्देशोऽन्यदेशो वा स्वप्नज्ञानस्य गोचरो न भवत्यन्याकारज्ञानस्यान्यालम्बनेऽतिप्रसङ्गात्। न चान्यद्बाह्यं रूपमुपपद्यते। अल्पीयस्यपि वेश्मनि बहुयोजनपरिमाणानां गिरितरुसागरादीनां सप्रतिघानामुपलम्भात्, तस्माद्भ्रान्तमेव तथाविधं ज्ञानमुपजायत इत्यलीकः स्वप्नः। एवमेव कुलपुत्र सर्वधर्मा (p. 514, 11) इति। प्रमाणोपपन्नोत्पत्तिरहितत्वेन परिनिष्पन्नस्वभावाः सर्वधर्माः स्वप्नोपमाः। धर्मतामप्रजानन्त इत्यनुत्पादरूपतामनवगच्छन्तः। षड्गतिकमिति। देवादिपञ्चगतिभ्योऽसुरगतेः पृथग्व्यवस्थापनात्। ते च भगवतः श्रावका इति।

शीलादपि वरं भ्रंशो न तु दृष्टेः कदाचन।
शीलेन गम्यते स्वर्गो दृष्ट्या याति परं पदम्॥

इति न्यायेन त एव मायोपमधर्मताधिमुक्ता भगवतः

शिष्याः। कल्पितादिपदार्थत्रयतत्त्वरूपनिषेधे सति नास्त्येव तथागत इति मन्दधीजनाशङ्कामपाकुर्वन् प्रतीत्य-समुत्पन्नस्तथागतोऽस्तीत्याह। तद्यथापि नाम कुलपुत्र महासमुद्र (p. 515. 1) इत्यादि। सत्त्वानां कुशलमूला-न्युपादायेति। "कर्मजं लोकवैचित्र्यमि"ति वचनात् साधारणं सत्त्वानां शुभं कर्म प्रतीत्य संवृत्या कुशल-मूलहेतुकत्वान्न च तान्यहेतुकानि, येषां प्रत्ययानां सतामिति सामर्थ्येनेति शेषः। न चाहेतुको बुद्धानां भगवतां काय इति बुद्धविनेयानामेव सत्त्वानां कुशल-मूलवशेन निष्पत्तिगमनान्नाहेतुकः कायः। साधारणकर्म-निर्जातत्वं निर्दिश्येदानीं भगवतामसाधारणकर्मनिर्जात-त्वप्रतिपादनार्थमाह। पूर्वचर्यापरिनिष्पन्न इत्यादि। तत्राधिमुक्तिचर्याभूमिप्रभावितत्वात् पूर्वचर्यापरिनिष्पन्नः प्रमुदितादिसप्तप्रयोगभूम्युपादानहेतुनिर्जातत्वाद्धेत्वधीनः। अचलादित्रिविधफलभूमिसहकारिकारणोद्गतत्वात्प्रत्यया-धीनः। समन्तप्रभाभूमिसङ्गृहीतत्वात् पूर्वकर्मविपाकादु-त्पन्न इत्येवमेषामर्थभेद इति केचित्। तस्मान्न स्वाभाविक-स्तथागत इत्याह। न क्वचिद्दशदिशीत्यादि।

यदर्थक्रियासमर्थं तदत्र परमार्थसत्।

इति वचनात्, प्रमाणोपपन्नकार्यकारणसम्बन्धबला-त्प्रतीत्यसमुत्पन्न एव तात्त्विकस्तथागत इत्यौपलम्भिक-जनाभिनिवेशनिषेधार्थमाह। तद्यथापि नाम कुलपुत्र वीणाया इत्यादि। तत्रोपधानी तन्त्रीवेष्टनिका दण्डाग्र-विन्यस्ता काष्ठादिवक्रलिका, उपवाणी पार्श्वस्थितास्तन्त्री-

विशेषाः। स च शब्दो न द्रोण्या निश्चरतीत्यादिना (p. 516, 1)। न ह्येकं जनकमिति कथयति। सर्वेषां समायोगाच्छब्दः प्रज्ञप्यत इत्यनेनापि प्राज्ञप्तिकशब्दनिर्देशेन सामग्र्यास्तात्त्विकं जनकस्वभावं निरस्यति। एतदुक्तं। अनेकं कारणमेकं कार्यं करोत्यनेकं वा तथैकमपि कारणमनेकमेकं वा कार्यं कुर्यादिति चत्वारो विकल्पाः। तत्र यद्यनेकं कारणमेककार्यकृदिति पक्षस्तदा चक्षूरूपालोकमनस्कारादिभ्यश्चक्षुर्विज्ञानस्यैकस्योत्पत्तावभ्युपगम्यमानायां कारणभेदेऽपि कार्यस्य भेदाभावान्न कारणभेदो भेदकः कार्यस्य स्यात्। तथा च कारणाभेदाभावेऽपि कार्यस्याभेदान्न कारणाभेदः कार्यस्याभेदको भवेत्। ततश्च कारणभेदाभेदावन्वयव्यतिरेकाभ्यामनपेक्षमाणौ कार्यभेदाभेदावहेतुकौ स्याताम्। एवञ्च सति भेदाभेदाव्यतिरेकाद्विश्वस्य नित्यं सत्त्वमसत्त्वं वा स्यादहेतोरन्यानपेक्षणात्। ननु सामग्री जनयित्री कार्यस्य तस्याश्च भेदाभेदानुविधानचतुराविमावन्वयव्यतिरेकानुविधायितया कार्यस्य भेदाभेदावतः कथं तावद्धेतुकौ भविष्यत इति चेत्। नैतत्सारम्। तथा हि न सामग्री नामान्या काचन समग्रेभ्यः किन्तर्हि समग्रा एव भावाः सामग्रीशब्दवाच्याः ते च परस्परव्यावृत्तस्वभावाश्चक्षुरादयो भिन्नाः सन्तो यद्येकमेवाभिन्नं चक्षुर्विज्ञानं कार्यमुपजनयितुं शक्तास्तदा सामग्र्यन्तरान्तःपातिनोऽपि भावाः समग्राः किमिति चक्षुर्विज्ञानस्योपजननं न कुर्युः। भिन्नत्वेन चक्षुरादिभ्यः क्षित्यादयो नोपजनयन्तीति चेत्। चक्षुरादयोऽपि परस्परं भिन्नस्वभावाः कथं जनयन्तीति वक्तव्यम्। जनक-

स्वाभाव्यादिति चेत्, नैवं यस्माज्जनकान्यत्वमेवाजनकत्वं व्यवस्थापितम् । तस्मादेकस्य यो जनकः स्वभावस्ततोऽपरे व्यावर्तमाना जनकाः न प्राप्नुवन्ति । जनकादन्यत्वाद्भावान्तरवत् । स्यादेतत् । न हि ब्रूमोऽन्यस्य तज्जनकरूपं नास्तीति । किन्तु यदेकस्य तज्जनकं रूपं तदन्यस्य नास्त्यन्योऽपि स्वरूपेणैव जनको न पररूपेणातद्रूपत्वात् । अतः स्वरूपाज्जनकाद्व्यावृत्त्यसिद्धेर्यथास्वं भिन्नाश्च जनकाश्च स्वभावेनेति कोऽत्र विरोधः । तथा ह्येकस्माज्जनकाद्व्यावर्तमानस्तद्रूपो न स्यान्न त्वतत्कार्यस्तेनैव च तत्कार्यं कर्तव्यं नान्येनेति कोऽत्र न्याय इति यद्येवमेकेनैव तत्कार्यं कृतमिति किमपरेषां तत्कार्यकरणे प्रयोजनम् । स्यादेतत् । न वै भावानां काचित् प्रेक्षापूर्वकारिता यतोऽयमेकोऽपि समर्थः किमत्रास्माभिरित्यपरे निवर्तेरन् । ते हि निरभिप्रायव्यापाराः स्वहेतुपरिणामोपधिधर्माणस्तत्प्रकृतेस्तथा भवन्तो नोपालम्भमर्हन्तीति । एवं तर्ह्येकेन हेतुना यः कार्यस्य स्वभावो जन्यते स एवापरेणेति प्राप्तम् । तथा च सति कारणवैलक्षण्ये कार्यवैलक्ष्यण्यादर्शनात्, कारणभेदो विसदृशस्याभिन्नस्य कार्यस्योत्पादकत्वेन भेदको न स्यात् । अथ मन्यसे परस्परविभिन्नमूर्तयोऽपि चक्षुरादय एव केनचित्स्वभावातिशयेन चक्षुर्विज्ञानजनने नियता नापरे क्षित्यादयः । तथा हि तेषामेव चक्षुरादीनां स स्वभावातिशयो नापरेषाम् । एतावत्तु स्यात् । कुतोऽयं स्वभावातिशयस्तेषामिति । निर्हेतुकत्वेऽनपेक्षिणो नियमाभावेनातिप्रसङ्गभयात् स स्वभावातिशयस्तेषां स्वहेतोरित्युच्यते । तस्यापि तज्जननात्मता

तदन्यस्मात्स्वहेतोरित्यनादिर्हेतुपरम्परा। तस्मादेवंविध-हेतुपरम्परायाश्चेष्टत्वेनानवस्थापि न क्षतिमावहति। एवं विलक्षणकारणकलापाद्विलक्षणमविलक्षणाच्चाविलक्षणं कार्यं जायत इत्येतावतैवांशेन हेतुभेदाभेदाभ्यां फलस्य भेदाभेदावुक्ताविति। नैतत्सारं। यस्माद्य एवोभयनिश्चित-वाची हेतुः स एव साधनं दूषणञ्चेति न्यायादभेदा-विशेषेऽपि हेतुधर्मसामर्थ्याद्यथा न सर्वं सर्वसाधकं तद्वद्भेदाविशेषेऽपि न सर्वं सर्वसाधकमित्येवमभ्युपगत-हेतुफलसम्बन्धं सांख्यादिकं प्रत्युच्यमानं शोभामाधत्ते। वस्तुतत्त्वतो हेतुफलभावापवादी माध्यमिकस्तं प्रति स्वभावातिशयस्तेषां स्वहेतोरिति हेतुधर्मसामर्थ्यलक्षणो हेतुरसिद्धः स्वपक्षसिद्धये सिद्धवत् कथमुपादीयते। अथ मतम्। हेतुधर्मसामर्थ्यानभ्युपगमे प्रत्यक्षादिविरोधो दुर्निवार इति। तदसत्। तत्त्वत इति विशेषणेन यथादर्शन-मनिषेधात्। अयथादर्शनं तर्हि निषेध इति व्यक्तमिदं कूर्मरोमोत्पाटनम्। अयथादर्शनं कार्यकारणभावानभ्युप-गमादिति चेत्। न। तत्त्वतः प्रमाणसहायत्वेनाप्रमाण-सहायस्य कार्यकारणभावस्याभ्युपगमात्कथं नायथादर्शन-मभ्युपगमः। तथा ह्येतावन्मात्रमेकमेव प्रत्यक्षे प्रतिभासते, यदुतास्मिन् सतीदं भवतीति। तच्चास्माभिरनिषिद्धमेव। यस्तु प्रमाणोपपन्नस्वरूपः कार्यकारणभावो वर्ण्यते स प्रत्यक्षसमाधिगम्यो न भवति निर्विकल्पकत्वेन प्रत्यक्षस्य प्रमाणोपपन्नस्वरूपावधारणासामर्थ्यवैकल्यात्। न च वस्तुप्रतिभासनादेव तदव्यतिरिक्ततथाविधस्वरूपस्य प्रति-भासनमिति युक्तं वक्तुमतथाविधस्वरूपस्यापि केशोण्डूकादेः

प्रतिभासनात्। भ्रान्तोऽयं प्रतिभास इत्यपि मिथ्या, सत्यत्वाभिमतप्रतिभासस्यापि सत्यत्वनिबन्धनाभावात्। अर्थक्रियाकारित्वं सत्यत्वनिबन्धनमिति चेत्। नैवं, यस्मात् कार्यक्रियाकारित्वमेवार्थक्रियाकारित्वं यथोदितविधिना परमार्थतोऽनुपपद्यमानस्वरूपं संवृत्याभ्युपगतमित्यज्ञापकमेतत्। सर्वस्यैवालौकत्वे देशकालादिप्रतिनियमो न स्यादिति चेत्। स्यादेष दोषो यदि निर्हेतुकत्वमभ्युपगम्यते। यावता विचारविमर्दासहिष्णुत्वेनाविचारैकरम्यं पूर्वपूर्वस्वकारणं समाश्रित्योत्तरोत्तरमीदृशं प्रतिनियतदेशकालादिमत्कार्यं प्रवर्तते। अत एव च संवृत्यापि कारणवैकल्याच्छशविषाणादीनामनुत्पत्तिः। न्यायस्य तुल्यत्वे यथादर्शनमपि किं निषेधश्चेत्, प्रत्यक्षादिविरोधोपनिपातात्। न तर्ह्ययं न्यायो बाधासम्भवादिति चेत्। नैतदेवंयथा न्यायस्तत्त्वतस्तथा बाधाऽनभ्युपगमात्। यथा च बाधा यथादर्शनं तथा न्यायाभावात्। अथ मतमनेकमेव कारणमनेकं कार्यं कुर्यादिति द्वितीयः पक्षोऽभ्युपगम्यते। कारणस्वभावविशेषस्य कार्यस्वभावविशेषे व्याप्रियमाणत्वेन कार्ये कारणव्यापारविरचितानां स्वभावविशेषाणामसंकीर्णत्वात्। तथा हि समनन्तरप्रत्ययाद्विज्ञानाच्चक्षुर्विज्ञानस्योपलम्भात्मता। तस्यैव चोपलम्भात्मनश्चक्षुरिन्द्रियाद्रूपग्रहणयोग्यताप्रतिनियमः विषयात्तत्तुल्यरूपतेत्यभिन्नत्वेऽपि वस्तुतः कार्यस्य निर्विभक्तरूपस्य कारणानां भिन्नेभ्यः स्वभावेभ्यो भिन्ना एव विशेषा भवन्तीति न कारणभेदेऽप्यभेदस्तत्कार्यस्येति। तदयुक्तं, यस्मादुपलम्भात्मतादीनां परस्परतो भेदेऽभ्युपगम्यमाने तद्विज्ञान-

मेकमनेकं स्यादुपलम्भात्मतादिभ्योऽभेदादुपलम्भात्मादिस्वात्मवत्। अथा भेदस्तेभ्यो न सिद्धस्तथा च नानेकत्वं विज्ञानस्य भविष्यतीति चेत्। भेदे तेभ्योऽभ्युपगम्यमाने तद्विज्ञानं निर्हेतुकमेव स्यात्कारणव्यापारस्य विज्ञानादन्यत्रोपलम्भात्मतादिषूपयोगादेवं च नित्यं सत्त्वमसत्त्वं वा भवेदिति दोषः। अथ यथोक्तदोषभयाद्भेदो नाभ्युपगम्यते। तथा च सत्युपलम्भात्मतादीनां परस्परतो भेदो न स्यादेकविज्ञानस्वरूपत्वाद्विज्ञानस्वात्मवत्। अतः कारणव्यापारविषयभेदकल्पनावैयर्थ्याद्भिन्नस्वभावेभ्यश्चक्षुरादिभ्य इत्यादिना प्रागुक्तो दोषः समापतति। अथ मतम्। कार्यस्वभावस्यानेकस्मादनुपलम्भात्मतादेर्व्यावृत्तिमतः समुत्पत्तिदर्शनाद्धर्मभेदकल्पनामास्थाय बोधात्मकान्मनस्काराद्बोधरूपतेत्यादिना कारणानुरूप्येणोपलम्भात्मतादिर्धर्मभेदः कारणव्यापारविषयभेदेन कल्पनासमारोपितः, तस्य चासत्त्वात्तेभ्योऽभेदाज्ज्ञानस्यानेकत्वमेकस्माज्ज्ञानादनन्यत्वात्तेषामभेद इति प्रयोगद्वयेऽसिद्धो हेतुरिति। यद्येवं ते विशेषाः कल्पनोपरचितत्वेन व्योमोत्पलादय इव न हेतुव्यापारमपेक्षन्त इति कारणानां भिन्नेभ्यः स्वभावेभ्यो भिन्ना एव विशेषा भवन्तीति न युक्तमभिधातुम्। अथापेक्षन्त इति निर्बन्धस्तथा सति कल्पनाशिल्पिघटितेष्वेवोपलम्भात्मतादिषु कारणव्यापारो व्यवस्थाप्यमानः काल्पनिक एव भूतार्थो न स्यादेवञ्च कार्यमहेतुकं कारणव्यापारस्य कल्पितस्वभावेषूपयोगात्। अथोक्तदोषभयादभिन्नमेकं कार्यं विशेषाश्च भिन्ना न च कार्यात्मव्यतिरिक्ता इति मतिः। एवन्तर्हि भिन्नाभिन्नस्वभावाध्यासितत्वाद्धर्मधर्मिणो-

वस्तुतः चन्द्रतारकादिवद्भेदान्न केवलं व्यतिरिक्तमेव सामान्यं बलादापतति, नानेकत्वयोः परस्पराहतिलक्षणोऽपि दोषः। किन्तर्हि बोधरूपादनन्यत्वेऽभ्युपगम्यमाने रूपादिज्ञानकार्यस्य न सम्भवो बोधरूपादन्यत्वाद्बोधरूपस्वात्मवत्। विषयाकारादनन्यत्वाद्रूपतोऽपि तस्य सम्भवो विषयाकारस्वात्मवदित्येक एव कार्ये सम्भवासम्भवौ कारणे चैकत्र जनकाजनकौ युगपत्तत्त्वतो विरुध्यते। स्यादेतत्। तथा हि कार्यमुत्पद्यमानं दृष्टमिति। तदयुक्तम्। नहि सर्वं दर्शनं बाध्यमानमपि प्रमाणेन प्रमाणं, माभूद्द्विचन्द्रादिदर्शनस्यापि प्रामाण्यमिति। अथैकमेव कारणमनेकं कार्यं कुर्यादिति तृतीयः पक्षोऽभ्युपगम्यते। तदयुक्तम्। एकस्मादनेककार्योत्पत्तौ न कारणाभेदः कार्यस्याभेदक इति भेदोऽपि भेदस्य न हेतुरिति भेदाभेदौ विश्वस्याहेतुकौ स्याताम्। अभिन्नस्यापि स तादृश आत्मातिशयो येनैकोऽपि हेतुरनेकं कार्यं करोतीति चेत्। स हेतुर्येनात्मातिशयेनैकं कार्यञ्जनयति किन्तेनैवापरम्। तेनैव चेत्, कथं भेदः फलस्य। अथान्येनैवं तर्हि कारणाभेदो न युक्तिमान् न ह्यात्मातिशयादन्यो भावः। स्यादेतत्, यदि कार्यस्वभावापत्त्या कारणं कार्यं जनयति, यथा सांख्यस्य तदा भवेदेकस्यानेकरूपापत्तिविरोधादनेकजननमयुक्तिमत्। यावता भेदाभेदजनननियतस्वभावकारणसन्निधिमात्रेण भेदाभेदकार्योत्पत्तौ नेदञ्चोद्यमास्कन्दति। अयमेव हि कारणभेदाभेदाभ्यां कार्यस्य भेदोऽभेदो वा यद्भेदाभेदजनननियतस्वभावात्कारणाद्भिन्नाभिन्नकार्योत्पत्तिरिति। एतदपि मिथ्या।

यतोऽत्रैवेयं विचारणा क्रियते। चक्षुर्येन स्वभावेन चक्षुःक्षणं जनयति किन्तेनैव चक्षुर्विज्ञानमपि। तेनैव चेत्तदपि विज्ञानं चक्षुरेव स्याच्चक्षुर्जननस्वभावकारणजन्यत्वाच्चक्षुर्वत्। एवं येन वा स्वभावेन चक्षुर्विज्ञानं जनयति तेनैव चक्षुरपि। एवं चक्षुर्विज्ञानजननस्वभावकारणजन्यत्वाच्चक्षुरपि चक्षुर्विज्ञानं स्याच्चक्षुर्विज्ञानवत्। यदि वा प्रत्येकं चक्षुरचक्षुर्जननस्वभावकारणजन्यत्वाच्चक्षुरचक्षुःस्वभावं चक्षुः स्यात्, एवं विज्ञानाविज्ञानजननस्वभावकारणजन्यत्वाद्विज्ञानं विज्ञानाविज्ञानस्वभावं स्यात्। एवमेतदित्यभ्युपगमे च सुतरां प्रत्यक्षाद्युपहतिर्गाढं भवन्तमाश्लिष्यति। अथान्येन स्वाभावेन चक्षुश्चक्षुःक्षणं जनयत्यन्येन चक्षुर्विज्ञानमितिमतम्। तौ स्वभावौ किञ्चक्षुषो व्यतिरिक्तावथाव्यतिरिक्तौ। यदि व्यतिरिक्तौ तदा तावेवार्थक्रियालक्षणत्वाद्वस्तुनो जनकौ वस्तुनी स्यातां चक्षुस्त्ववस्तु स्यादकिञ्चित्करत्वात्। अथाव्यतिरिक्तौ तदा चक्षुषोऽप्येकाभिमतस्य भेदः स्यात्परस्परभिन्नस्वभावाव्यतिरेकात्, स्वभावद्वयवत्। तथा चैकत्वं हीयते। स्वभावयोर्वा पुनरैक्यं स्यादेकस्माच्चक्षुषोऽभिन्नत्वाच्चक्षुर्वत्तच चक्षुर्येन स्वभावेनेत्यादिनोक्तो दोषः। अथ मतं स्वहेतोरेकजननस्वभावमुत्पन्नं कारणं यथा कार्यमेकं जनयति तथा स्वहेतोरेवोत्पन्नमनेकं जनयतीति। एवं तु ब्रुवाणैः प्रकरणमेव विस्मृतम्। तथा हि यथैकस्यानेकजनकत्वं निराचिकीर्षितं तथैकजनकत्वमपीति किं माध्यमिकं प्रत्येवमुच्यते। अमाध्यमिकं प्रत्यपि निष्फलमिष्टत्वादेकानेकजनकत्वस्य तेन। स्यादेतत्, यदि भेदजननियतस्वभावादभेदोत्पत्तिः न तर्हि कारणस्वभावानु-

विधायि कार्यं स्यादित्यहेतुकत्वप्रसङ्गः यावता चक्षुषः सकाशाद्भेदजननियतस्वभावाच्चक्षुषो विज्ञानस्य वा चक्षुःस्वभावस्योदयात्कथं न भेदोत्पत्तिः। तथाहि न कारणं प्रति कार्यं परस्परविलक्षणाभिः शक्तिभिरनुगतमिति भिन्नं कार्यं करोतीत्यपितु स्वभावादिति। तमेव तत्स्वभावं पर्यनुयुञ्ज्महे कोऽयं स्वभावो नाम विश्वरूपो येन प्रागुक्तानेकप्रकारविरोधेऽपि तत्तिरस्क्रियया स्वपक्षरक्षामाचरन्नपास्तान्यप्रतिसमाधानचिन्ताभारो भवान् सुखमासीत्। हेतुधर्मसामर्थ्यमिति चेत्, नैवं प्रागेव निराकृतत्वात्। परिदृश्यमानरूपतेत्यपि न वक्तव्यं, यस्माद्रूपादिनिर्भासवति प्रत्ययेऽप्रतिभासमानस्य शास्त्राद्याश्रयेण परिकल्पितरूपस्य तत्त्वोत्पत्त्याद्याकारस्य निषेधाद्यया बुद्ध्या तत्त्वं सन्ध्रियते, यस्यां वा बुद्धौ सा तादृशी लोकप्रतीतिः संवृतिरिष्टा तया सर्वमिदं प्रतीयमानस्वरूपं विश्वं सत्यं, अन्यथाऽलीकम्। अतो यथादर्शनं कार्यकारणभावो दुर्निवारस्तथा च सति यत् कैश्चिदेवं दूषणमुच्यतेऽभावः संवृतिरुत्पादो भाव इति युगपदर्थक्रियायां योग्यमयोग्यं वस्त्वभ्युपगतम्। अथोत्पादः संवृतिस्तदा संवृत्योत्पाद इत्यस्य वाक्यस्योत्पत्त्योत्पाद इत्यभ्युपगमान्न किञ्चिदनिष्टमापतितम्। तथानुत्पादः परमार्थ इत्येवं परमार्थेन नोत्पाद इत्यस्यानुत्पादेन नोत्पाद इत्यर्थः। तथा च सिद्धसाध्यतेत्यादि। तत्संवृतिलक्षणानभिज्ञतया प्रकृतानुपयोगिकेवलमभिमानादसङ्गतमुक्तम्। अथैकमेव कारणमेकं कार्यं कुर्यादिति चतुर्थः पक्षोऽभ्युपगम्यते सोऽयं नितरामेव न राजते। तथा हि चक्षुरादीनां सजातीय-

क्षणजनकत्वेन स्वविज्ञानजनकत्वाभावेऽन्धबधिरादित्व-प्रसङ्गः स्पष्टः प्रसज्यते । स्वविज्ञानजनकत्वे चाऽभ्युप-गम्यमाने चक्षुरादिजात्युच्छेदेनैकस्माज्ज्ञानक्षणादूर्ध्वं न चक्षुरादयो नापि ज्ञानमिति तदेवान्धत्वादिकमनायासेन जगतः प्राप्तम् । अतो ये प्रतीत्यसमुत्पन्नास्ते परमार्थतोऽविचारैकरमणीयास्तद्यथा मायाकारनिर्मिताः करभादयः । तथा चामी सर्वे रूपादयो भावा इति स्वभावहेतुः । यथादर्शनं प्रतीत्योत्पाददर्शनान्नासिद्धो हेतुः सपक्षे भावान्न विरुद्धः पूर्वप्रबन्धेन विपक्षे बाधकप्रमाणोपदर्शनादनैकान्तिकश्च न भवतीत्यमुना न्यायेन प्रत्ययाधीनवृत्तित्वाद्यथाशब्दः प्राज्ञप्तिकस्तथा भगवतां कायो व्यवस्थापित इति। तच्चोपादानकारणाधीनत्वेन हेत्वधीना सहकारिकारणजन्यत्वात्प्रत्ययाधीना विनेयानां कुशलमूलबलेन प्रतिभासगमनादनेककुशलमूलप्रयोगनिष्पन्ना। यथोक्तधर्मप्रत्यवेक्षायाः प्रयोजनार्थमाह । यतः कुलपुत्रेत्यादि (p. 516, 12) । यस्मादेवमनन्तरोक्तक्रमेण यदा सर्वधर्माननुत्पन्नाननिरुद्धान्दर्शनमार्गाधिगमेन त्वं सम्यक् प्रज्ञास्यसि, तस्माद्भावाद्यभिनिवेशलक्षणं विपर्यासं तद्विरोधिनैःस्वाभाव्यज्ञानात्प्रहाय तन्मूलं सकलं क्लेशज्ञेयावरणं क्रमेणापाकुर्वाणः प्रथमादिभूमौ नियतो भविष्यस्यनुत्तरबोधावित्यर्थः । विनेयानामविपरीतधर्मदेशनाबलादधिगमो जात इति प्रतिपादयन्नाह। अस्मिन् खलु पुनरित्यादि। न च मे भूयो विचिकित्सा प्रवर्तत इति (p. 518, 1) । एकयोगक्षेमानां मध्येऽन्यतरस्यैकस्य प्रहाण-

भावाद्विचिकित्साप्रहाणे दर्शनप्रहातव्यक्लेशगणप्रहाणं धर्मनैरात्म्यदेशनाबलादधिगतदर्शनमार्गसामर्थ्येन परिदीपयत्यतोऽनुत्तरबोधिं प्रति न पुनर्विचिकित्सा प्रवर्तते। कुशलमूलपरिपूरिमुपादायेति (p. 520. 6) प्रथमभूम्यधिकारेण दानपारमिताऽतिरिक्ततामुपादायेत्यर्थः। सप्तवर्षाणीति॥

न कृपा मन्दतेदानीं न च मे धर्ममत्सरः।
नाचार्यमुष्टिर्नाशक्तिर्न च मे दुःखशीलता॥
न च मे निश्चितं शास्त्रं तर्कयामि न चान्तिकात्।
आज्ञातुं न च मे शक्ताः विनेया न च सादराः॥
न देशयामि येनेति ज्ञापयन् परितर्पयन्।
द्वौ मासौ प्रतिसंलीनो भगवानर्धमेव च॥

इति न्यायादार्यसदाप्ररुदितस्य परिशुद्धाशयताजिज्ञासार्थं सप्तवर्षाणि समापन्न एव स्थित इत्येके। दर्शनमार्गाधिगमबलेनाधिगतसप्तसम्बोध्यङ्गानां सर्वाकारपरिशोधनार्थमित्यपरे। आशयपरिशुद्धा भावनाबलादविपरीतनिमित्तप्रतिभासो जायत इत्याह। अथ खलु सदाप्ररुदित इत्यादि। प्रतिसंख्यायेति। एवं विचिन्त्य, ऋद्धाभिज्ञासम्भवेऽपि न तया पूजा कृतेति। शरीरविक्रयमूल्यग्रहणवद्व्याख्येयम्। कीदृशीं प्रज्ञापारमितां देशयामासेत्यादि। तत्रेयं धर्मोद्गतस्येत्यादि (p. 523. 20)। यद्यपि सर्व एव सर्वधर्मसमतादयो देशनाप्रकारा धर्मनैरात्म्यद्योतकत्वेन तुल्यास्तथापि पौरुषेयत्वाद्वक्तुरभिप्रायं कार्यतया सूचयेयुरमी शब्दाः, तस्मादविच्छिन्नपारम्पर्यसम्प्रदायत्वेनाभिप्रायद्योतनादेषामर्थभेदोऽवगन्तव्य इत्येके। अथ तन्मतमेव

लिख्यते । तत्रादौ सर्वाकारज्ञताद्यनुपूर्वाभिसमयपर्यन्तस्य षट्प्रकाराभिसमयक्रमस्य प्रत्येकं प्रयोगदर्शनभावनामार्गस्वभावप्रतिपादनाय सर्वधर्मसमतयेत्याद्यष्टादशपदानि । तदनु चतुर्विधैकक्षणाभिसमयार्थकथनाय पृथिवीधात्वपर्यन्ततयेत्यादि पदचतुष्टयं, तदनन्तरं तु कायत्रयस्य शून्यतैकरसत्वज्ञापनार्थमाकाशधात्वपर्यन्ततयेत्येकं पदम् । अतोऽनन्तरन्तु धर्मसम्भोगनिर्माणकायत्रयस्वरूपनिवेदनार्थं विज्ञानधात्वपर्यन्ततयेत्यादि पदत्रयम् । तदनन्तरं च सम्भाराष्टाधिमुक्तिबोधिसत्त्वतथागतभूमिषु धर्मकायस्य यथाभव्यं विनेयजनप्रतिष्ठापनकर्मपरिदीपनार्थं सर्वधर्मानुपलब्धितयेत्यादि पदचतुष्टयं वेदितव्यमित्ययं समुदायार्थः । पदार्थस्तु विभक्तप्राय एवेति न पुनर्विभज्यते । आर्यधर्मोद्गताधिष्ठानेन स्वप्रणिधिपुण्यज्ञानबलाच्च श्रुतचिन्तामयज्ञानोत्पादक्रमेण यथोक्ताष्टाभिसमयस्वभावप्रज्ञापारमितादेशनाकाराः समाधयः । स्वप्नावस्थायामिव तावत्कालप्रतिभासाः सदाप्ररुदितबोधिसत्त्वस्योत्पन्ना इत्याह । अथ खलु सदाप्ररुदितस्येत्यादि (p. 526, 3) । यस्मिन् समाधौ व्यवस्थितः सर्वधर्मसमतां प्रतिपद्यते स सर्वधर्मसमता नामः समाधिरेवं सर्वधर्मविविक्तश्च नाम समाधिरित्यादि वाच्यम् । सर्वथा तु यथानिर्दिष्टप्रज्ञापारमितालम्बनसमाधीनामधिगमरूपेण दृढप्रतिभासित्वे न कश्चिद्विरोधः । तथा हि प्रथमेन कल्पासंख्येयेन सम्भारभूमिमारभ्य यावत्प्रथमा भूमिर्निष्पद्यते द्वितीयेन तु विमलाभूमिमुपादाय यावत्सप्तमी भूमिः, तृतीयेन पुनः

कल्पासंख्येयेनाचलाभूमिमारभ्य यावद्बुद्धभूमिरित्येवं त्रिभिः कल्पासंख्येयैर्बुद्धत्वमधिगम्यत इति यथारुतमेव सूत्रं विरुध्यते। त्रिकसामान्यात् त्रिभिः कल्पासंख्येयैरित्युक्तं न पुनः परमार्थत इत्येवं नेयार्थसूत्रव्याख्याने नितरामेव विरोधः। तथा हि सम्भारभूमिमापूरयन्नेकं कल्पासंख्येयमतिक्रामति, तदनन्तरमधिमुक्तिचर्याभूमिं निष्पादयन् कल्पासंख्येयद्वयमतिनामयति। तदनु प्रमुदिताभूमिमुपादाय यावद्धर्ममेघां बोधिसत्त्वभूमिं प्रत्येकं त्रिभिस्त्रिभिः कल्पासंख्येयैर्बोधिसत्त्वो निष्पाद्य समन्तप्रभां बुद्धभूमिमासादयतीत्येवं त्रयस्त्रिंशता कल्पासंख्येयैर्बुद्धत्वं प्राप्यत इत्याचार्यवसुबन्धुपादाः। यथोक्ताष्टाभिसमयात्मकप्रज्ञापारमितादेशनालम्बनसमाधिबलाद्बहूनि समाधिमुखानि प्रथमायामेव भूमावधिगतानीत्यादि। एवं प्रमुखानीत्यादि। अत्र समाध्यभिनिर्हारोपाया एव समाधिमुखानि न तु समाधयः "प्रमुदितायां भूमौ समाधिशतं लभत" इति दशभूमकेऽभिहितत्वात्। समाधिस्वभावान्येव वा समाधिमुखानि। तत्र शतग्रहणस्योपलक्षणत्वादिति प्रतिपत्तव्यम्॥

अभिसमयालङ्कारालोकायां प्रज्ञापारमिताव्याख्यायां
धर्मोद्गतपरिवर्तो नामैकत्रिंशत्तमः॥

---

सम्यगधिगतानामेव समाधीनां व्यापारकथनार्थमाह । सह प्रतिलब्धानां च सुभूत इत्यादि (p. 527, 2)। पुनरप्यादरोत्पादनाय परीन्दनार्थमुपोद्घातयन्नाह । तत्र खलु पुनर्भगवानित्यादि । तदनेनापीति । यस्मादार्यसदाप्ररुदितस्यैवमर्थकारिका । तस्मादनेनापि न केवलं प्रागुक्तपर्यायेणेत्यर्थः, तथागताधिष्ठानेनेति महानुशंसत्वेन बह्वन्तरायत्वात्सहसापि लिखितुमशक्या । तस्मात्तथागतानुभावेनोपोद्घातं कृत्वैवं परीन्दनामावेदयन्नाह । तस्मात्तर्ह्यानन्देत्यादि । किं निबन्धनेयं विस्तरेण परीन्दनेति । तत्कस्य हेतोरित्याशङ्क्याह । अत्र हि प्रज्ञापारमितायामित्यादि (p. 528, 8)। तदेव स्पष्टयन्नाह । तत् किं मन्यस इत्यादि । एवं संक्षिप्तविस्तररुचिसत्त्वानुग्रहेण सर्वाकारज्ञतादयः सकारित्रधर्मकायावसानाः सर्व एवाष्टौ पदार्थाः समुपजाता भवन्ति । अथवा प्रथमं सर्वाकारज्ञतादित्रिसर्वज्ञताभिलक्ष्यस्थानीयत्वेन लक्षणम् । ततो वशित्वार्थं त्रिसर्वज्ञताभावनां प्रति प्रयुज्यतेऽनेनेति त्रिसर्वज्ञताप्रयोगः सर्वाकाराभिसंबोधः । ततोऽप्यभ्यासात्प्रकर्षागमनमिति त्रिसर्वज्ञताप्रकर्षावस्थो मूर्धाभिसमयः । ततोऽधिगतवस्तुनिश्चयाय व्यस्तसमस्तविभावितार्थप्रगुणीकरणमिति त्रिसर्वज्ञतानुक्रमावस्थोऽनुपूर्वाभिसमयः । ततो विशेषगमनभावात्त्रिसर्वज्ञतानिष्ठावस्थः सम्यगेकक्षणाभिसम्बोधः । ततस्तस्य फलमिति त्रिसर्वज्ञताविपाको धर्मकायः सकारित्र इत्यमुना षट्प्रकारेणार्थसङ्ग्रहेण संक्षिप्तमध्यरुचिसत्त्वानुकम्पया पूर्ववदियं जिनजननी व्याख्येया । तथा चोक्तम् ।

लक्षणं तत्प्रयोगस्तत्प्रकर्षस्तदनुक्रमः।

तन्निष्ठा तद्विपाकश्चेत्यन्यः षोडार्थसङ्ग्रहः ॥१॥ इति।

अथवाऽऽदौ सर्वाकारज्ञतादित्रिसर्वज्ञतास्वभावः प्रवृत्तिगोचरत्वाद्विषयः। स कथं प्रयुज्यत इति। तदनन्तरं सर्वाकाराभिसम्बोधादिश्चतुर्विधोऽभिसमयो हेतुस्वभावः प्रयोगः। तस्यैवं प्रयोगवतो विषयस्य किं फलमिति। तदनु धर्मकायः सकर्मफलमित्येवं त्रिविधेनार्थसङ्ग्रहेण संक्षिप्तसंक्षेपरुचिसत्त्वानुरोधेन तथैवेयं भगवती व्याख्येया। तथा चोक्तम्।

विषयस्त्रितयो हेतुः प्रयोगश्चतुरात्मकः।

धर्मकायः फलं कर्मेत्यन्यस्त्रेधार्थसङ्ग्रहः ॥ २ ॥ इति

इदमवोचद्भगवानित्यादि (p. 529, 9)। सान्निध्यमात्रतस्तस्य पुंसश्चिन्तामणेरिव निःसरन्ति यथाकामं कुड्यादिभ्यो देशना इति न्यायेन भव्यविनेयजनदैशिकत्वाध्यवसायादिमनन्तरोदितमखिलं प्रज्ञापारमितासूत्ररत्नतत्त्वमवोचदुक्तवान् भगवानात्तमना हृष्टचित्तः। यद्यपि चान्यैरार्यसुभूतिप्रभृतिभिरपि किञ्चिदुक्तम्, तत्तु भगवदाधिपत्यादेवेत्यदोषः। ते चार्यमैत्रेयप्रमुखा महाबोधिसत्त्वा विभक्तिविपरिणामेन सम्बन्धादात्तमनसो भाषितमभ्यनन्दन्निति सम्बन्धः। चकारः सर्वोत्तरापेक्षया समुच्चयार्थः। तथार्यसुभूतिरप्यात्तमना वचनविपरिणामेन सम्बन्धाद्भाषितमभ्यनन्ददिति सम्बन्धः। एवमार्यशारिपुत्राद्यपेक्षया प्रत्येकं योज्यम्। देवमानुषासुरगन्धर्वैः सह वर्तत इति सदेवमानुषासुरगन्धर्वो लोकः। ननु च कोऽपरस्तद्व्यतिरिक्तो

लोकोऽस्ति यस्तैः सह वर्तत इत्युच्यते । समुदायसमुदायिनोर्भेदापेक्षया तथावचनाददोषोऽयम् । अपि च सन्त्यन्येऽपि बहवः किन्नरमहोरगगरुडादय इत्यचोद्यमेतत् । एते सर्वेऽपि सद्धर्मश्रवणान्नान्यत् स्वहितं परहितं च गुरुतरमुपलब्धवन्तः, अतः प्रमोदकारणसद्भावात् संजातप्रमोदातिशयाः सन्तो भगवता भाषितं साधु भगवन् परमेश्वर करुणामयमूर्ते सुभाषितमिदं युष्माकं वचनमित्यादिनाऽभ्यनन्दन्नित्यभिनन्दितवन्त इत्यर्थः ॥

अभिसमयालङ्कारालोकायां प्रज्ञापारमिताव्याख्यायां
परीन्दनापरिवर्तो नाम द्वात्रिंशत्तमः ॥

---

सर्वैवाधिगमार्थतत्त्वपदवी सम्यक्समुद्योतिता
संक्षिप्तादिपदाभिधानकुशलैरेवं यतो नायकैः ।
सर्वस्मिन् विहितश्रमैः प्रवचने ज्ञेयो विशेषस्ततः
प्रज्ञापारमितानये पुनरयं ग्रन्थात्मकः केवलः ॥

आर्यासङ्गमतानुसारिसुधियां निर्मत्सराणां सतां
भद्रस्यापि गुरोर्बहुश्रुतवतो वैरोचनज्ञानिनः ।
सामर्थ्यादुपजातपाटवलवो भद्रोऽकरोद्दन्तितः
स्पष्टार्थां हरिसंज्ञको भगवतीमार्यामिमां सर्वशः ॥

तथ्यातथ्यविभागयुक्तिविकलज्ञानोदयात्संसृतौ
संसारार्णवपङ्कनिमग्नमनसो जाताः सदा देहिनः ।
सर्वेऽमी जननीनिबन्धनकृताद्बीजान् मयाऽस्माच्छुभात्
सर्वाकारवरा भवन्तु नियतं कायत्रयप्रापिणः ॥

संबुद्धैः ससुतैरियं सुविवृता माता क्व वा संस्थिता
क्वाहं धीधनसम्पदामविषयो वाचां तथाऽगोचरः ।
भूयासं जड एवमेति सततं जन्मान्तरेष्वप्यह-
मभ्युह्यैव मिदं कृतं न विदुषां युक्तं समुल्लङ्घितुम् ॥

ईर्ष्याशल्यवितुद्यमानहृदयाः शक्ता न कर्तुं क्षतिं
मिथ्यामानबलार्जितश्रुततया प्रज्ञावतामग्रतः ।
पातालादिव खं विदूरमसतां पुंसां सताञ्चान्तरं
तस्मादेव तथाविधान् प्रति न नः स्वल्पापि काचिद्व्यथा ॥

ख्यातो यो भुवि पुण्यकीर्त्तिनिचयो विद्वज्जनालङ्कृत-
स्तस्मिन् सर्वगुणाकरे त्रिकुटुकश्रीमद्विहारे शुभे ।
दानाल्लब्धमहोदयस्य करुणादेवस्य धर्मात्मनः
सानाथ्येन सुखोपधाननिलये स्थित्वा विवेकास्पदे ॥

क्रुध्यत्कुञ्जरकुम्भपीठदलनव्यासक्तयत्यात्मनः
पुण्याभ्यासकृताभियोगजबलात्सम्यक्समादायिनः ।
राज्ये राज्यभटादिवंशपतितश्रीधर्मपालस्य वै
तत्त्वालोकविधायिनी विरचिता सत्पञ्जिकेयं मया ॥

योऽलङ्कारोऽभिसमये तदालोकप्रकाशिका
प्रज्ञापारमिताव्याख्या समाप्तेयं शुभोदया ।
न्यूनातिरेकशङ्कायां विज्ञातव्योऽधुना बुधैः
ग्रन्थस्यास्य परिच्छेदो मातुरस्याः प्रमाणतः ॥

कृतिरियमाचार्य-हरिभद्रपादानाम् ॥

---

ये धर्मा हेतुप्रभवा हेतुं तेषां तथागतो ह्यवदत् ।
तेषां च यो निरोध एवंवादी महाश्रमणः ॥

p. 1, l. 12, *prāptādaḥ* གནས་ཐོབ་གྱུར།

p. 1, l. 13, *padācca.*

p. 1, l. 14, *jātasyāvi....sudheyo°* སྐྱེས་གྱུར་བློ་བཟང་འཕགས་པ་རྣམ་སྒྲོལ་སྐྱེ་ཡི་འགྲེལ་པ་ལ་ནི་ཆེར་འབད་ལ།

p. 1, l. 15, *ekāntosthavikṣasamanaṃ* མཐར་ཅིག་སྐྱེས་གྱུར་མི་མཐུན་ཕྱོགས་ལྷ་ཞི་བྱེད་པ།

p. 1, l. 17, *kṣatradhi.* བློ་ཉམས།

p. 1, l. 18, *saṃkṣuṇṇe hi vudhautumairaharakośauna-vastukṣamaḥ* མཁས་མཆོག་རྣམས་ཀྱིས་ཉིན་དང་ཉིན་ལ་མ་དཔྱད་དངོས་པོ་འདི་ཚུལ་དེ་གང་ཞིག་ཡོད།

Cp. the second stanza of the introductory stanzas of the Pañjikā of Kamalaśīla to Tattvasaṁgraha.

p. 2, l. 2, *samatvamvatāh.* མངོན་པར་སློ་བར་གྱུར།

p. 2, l. 4, but Tib. དང་དགོས་དང་དགོས་པའི་དགོས།

p. 2, l. 5, *yāṃcyāni.* བརྗོད་པར་བྱ་བ་ཡིན་ནོ།

p. 2, l. 15 fll., this stanza is quoted also by Kamala-śīla, p. 2, l. 13, where the reading seems to be corrupt.

*parīkṣā'vikṛtam vākya ato na vikṛtam paraṃ* | but Tib.

ཡོངས་བརྟགས་དབང་དུ་བྱས་བ་སྟེ་
དེ་ལ་གཞན་པའི་དབང་བྱས་མིན།

p. 2, l. 18, cp. Kamalaśīla, p. 2, l. 11. For all this long discussion upon the *abhidhāna*, *abhidheya*, and *prayojana* one must see *Pañjikā* which offers a very literal correspondence with our text. Cp. p. 2, l. 5 fll.

p. 3, l. 6, A. *tasya ca kriyāphalam pra°.*

p. 3, l. 7, A. *°vṛttyasavāt.*

p. 3, l. 13, A. *granthena deest.*

p. 3, l. 17, A. *parīkṛtam.*

p. 3, l. 21, cp. Kamalaśīla, p. 9, l. 20 fll.

p. 4, l. 3, B. *tathā hi sā prajñāpāramitā kradarś.*

p. 4, l. 12, A. *nirdiśya.*

p. 4, l. 16, B. *samastavastu* དངོས་པོ་མ་ལུས།

p. 5, l. 22, B. *bhāvanābalani°* གསྒོམས་པ་ཡོངས་སུ་རྫོགས་པ་ན།

p. 4, l. 24, sic. B., A. *sampatsampaddhamāhitaṃ* but: ༠དོན་ཕུན་སུམ་ཚོགས་པ་བསྒྲུབ་པའི་བློ་བསྐྱེད་བ་རྣམས།

p. 6, l. 4, A. (and C.) *vīkṣasīraṃstaṃ.*

p. 6, l. 13, but the *mūla* has *loke.*

p. 7, l. 10, B. *prakṣaptavyam°.*

p. 7, l. 14, B. *yuktāntara* རིགས་པ་གཞན།

p. 7, l. 18, B. *brūhi tvaṃ hi.*

p. 7, l. 19, B , A. *dharmacakrakṛtasū.* Tib. ཆོས་ཀྱི་འཁོར་ལོ་བསྐོར་བའི་མདོ།

p. 8, l. 4, B. *kadā deest* ; but Tib. གང་གི་ཚེ།

p. 8, l. 6, B. *parṣadaiśikasāmagṛhīdeśanāyāḥ* ཡུལ་དང་དུས་དང་སྟོན་པ་པོ་དང་འཁོར་སུམ་ཚོགས་པ།

p. 9, l. 2, ཁྱད་པར་དུ་འཕགས་བསྙལ་པ་ཉིད་མ་ཚད་པས།

p. 9, l. 7, so B. A is not clear. Tib.: དེ་ནས་ (corr. གནས?) སྙེམ་པ་བསྐྱེད་ཕྱིར།

p. 11, l. 6, B. *bandhanāvimuktyasaṃ°* སྲིད་པའི་འཆིང་བ་ལས་རྣམ་པར་གྲོལ་བའི་ཕྱིར་ཡང་དག་པའི་སྤྱོད་ལམ།

p. 11, l. 7, A. *lokasya* twice.

p. 11, l. 8, B. *svātantrādevasino.*

p. 11, l. 17, B. *paripanthabhū°.*

p. 11, l. 18, B. *dharmajñāna°* མི་ཤེས་པ།

p. 11, l. 22, B. *anusaṃjñika° svacchā* ཞར་ལ་བྱ་བ་རང་གི་འདོད་པ།

p. 12, l. 2, B. *śokārtho.* རང་གི་དོན།

p. 12, l. 6, B. *samyagvipa.* ཡང་དག་ཅིང་ཕྱིན་ཅི་མ་ལོག་པར།

p. 12, l. 20, B. *samartha.*

p. 13, l. 5, A. *cetovarapāra°.*

p. 13, l. 7, མཐར་ཐུགས་པ་བརྗོད་པ་ལ་ཁྲུད་པར་བརྗོད་པར་མི་ནུས་ཏེ།

p. 13, l. 12, A. *nirukta.*

p. 13, l. 20, A. *rāgādhighaṭṭitaḥ*, B. *rāgādighaṭṭataḥ.*

ཉེས་དམིགས་ལྔ་དང་མ་འབྱོར་དང་།

མི་དགའ་ཆགས་དང་ཡིད་མི་བདེ།

p. 13, l. 21, A., B. འཐབ་དང་རྩོད་སོགས་སྲིད་དང་འཛིའ།

p. 14, l. 2, l. mss. so, but Tib. reads *svayam.*

རང་གི་ཡིན་པའི་ཕྱིར་རང་གི་པའི་ཉན་ཐོས།

p. 14, l. 6, A. *tenaivamāvamasutreṣu*, B. *tenaiva cātra sū°.*

དེས་ན་མདོ་སྡེའི་ལུང་རྣམས་སུ་རྒྱལ་བའི་སྲས་རྣམས་མ་བརྗོད་དོ།

p. 14, l. 12, B. *rucibhirbhi°.*

p. 15, l. 15, B. and A. do not have न: but Tib. བསྟན་པར་མི་བྱའོ།

p. 16, l. 5, B. *prabhāvava*: here *va* is added in margin སྔ་མ་བཞིན་དུ་འོད་དང་སྐུ་མདོག་དང་གཟི་བརྗིད།

p. 16, l. 5, A. °*sthānabhasaṇayanavilocana*, B. *sthāna bhāṣanatapanavirocana* གོ་རིམ་བཞིན་དུ་མཛེས་ཞིང་ལྷམ་མེ་ལྷན་ནེ་ལྷང་ངེ་སྟེ།

p. 16, l. 10, A. *tatojapra.* དེ་ལྟ་བུའི་བདག་ཉིད་ཀྱི་ཆོས་རྟོགས།

p. 16, l. 14, A. *prabhuṣṭakāyāditapra*, B. *praśuca°*, ལུས་ལ་སོགས་པ་ཤིན་ཏུ་སྦྱངས་བས། but the exact reading of N. is *praśuddha.*

p. 17, l. 18, B. **भगवन्त** which is better.

p. 17, l. 25, B. *dvividhamavamāsa.*

p. 18, l. 12, A. *śrutam deest.*

p. 18, l. 13, A. inserts here after anuvartanāt: *svasthānabhāvaṃ dvividham utpādya saṅkīrttita.*

p. 19, l. 10, B. °*sādhyastasamasta.* A. *vyamamasta bhe°* སོ་སོ་པ་དང་བསྡུས་པའི་དབྱེ་བས།

p. 19, l. 18, A. *pūrvaka.*

p. 20, l. 5, A. *svabhavinā* ཆོས་ཀྱི་དབྱིངས་ཀྱི་རང་བཞིན་ཅན།

p. 20, l. 7, A. *parivṛtta.*

p. 20, l. 20, སྐྱབ་པ་ཡིན་ནི་རྟེན་གྱུར་པ་ཆོས་ཀྱི་དབྱིངས་ཀྱི་རང་བཞིན་དང་།

p. 20, l. 24, B. *vinā na.*

p. 21, l. 1, དེ་བཞིན་གཤེགས་པའི་རང་བཞིན་གྱི་འོད་དག་གིས།

p. 21, l. 3, A. *nihita.*

p. 21, l. 4, B. *āntaram svaviṣaya°* རྫས་གྲོགས་ལ་ཡུལ་སོ་སོར།

p. 22, l. 2, all mss. give *dhyāmī* and therefore I prefer it to the *śyamī* accepted by TSCHERBATSKY; the same is to be said as regards *śaṃsitā* for *śastitāḥ* of Tscherbatsky.

p. 23, l. 6, B. *ākārāvi°.*

p. 25, l. 4, p. 478, l. 10.

p. 25, l. 13, this verse is quoted by TRIRATNADĀSA in his comm. on Piṇḍārtha of Dinnāga.

p. 26, l. 8-9, cp. MSA. IX, 60 (p. 45). Tscherbatsky reads *sa saṃbhoge* but cp. the reading of C. My mss. give all this form which can quite well be supported.

p. 26, l. 22, cp. Daśabhūmaka (Rahder), p. 4, Nanjiō 174, 182, 183.

p. 26, 19, A. *°hariṇādhyo.*

p. 26, l. 22, B. *deśanā* deest, after *sūtrasya.*

p. 27, l. 22, A. *vādānmī°.*

p. 28. l. 1, A. *vicārayet tad anu* left out p. 28, l. 6 intead of *°paryantam etīti vigṛhya. . .pāramis tadbhāvaḥ pāramitā* Tib. has ཕ་རོལ་ཏེ་རབ་ཀྱི་མཐར་འགྲོ་བ་ཡིན་པས་ན་པ་རོལ་དུ་ཕྱིན་པའོ། =*paryantametī-tipāramitā.*

p. 28, l. 13,

ཤེས་རབ་ཕ་རོལ་ཕྱིན་གཉིས་མེད།
ཡེ་ཤེས་དེ་ནི་དེ་བཞིན་གཤེགས།
བསྒྲུབ་བྱ་དོན་དེ་དང་ལྡན་པས།
གཞུང་ལམ་དག་ལ་དེ་སྒྲ་ཡིན།།

p. 28, l. 22, For this passage of Gaṇḍavyūha see *Śikṣāsamuccaya*, 5, and *Bodhicaryāvatāraṭīkā*, 23.

p. 30, l. 13, B. *yathāmatāmekocadartha°.*

p. 30, l. 14, A. *sūtrānte samyak* མདོ་ཛེ་ལྟ་བུ་བཞིན་དུ་བརྗོད་པར་བྱ་སྟེ། དེ་ལ་

p. 31, l. 8 fll. For these examples cp. MSA. IV (p. 16).

p. 31, l. 11, A., B. *vikārābhaja°* ཡང་དག་པར་རྫོགས་པའི་བྱང་ཆུབ་ཀྱི་བར་དུ་འགྱུར་བ་ཡོང་བའི་ཕྱིར་རོ།

p. 33, l. 1, A. *°kāryakri ayam.*

p. 33, l. 3, B. *vāsādisarvasattvasanda°*. སྐྱོལ་པའི་སྐྱུས་དགའ་ལྡན་གྱི་གནས་ན་བཞུགས་པ་ལ་སོགས་པ་ཀུན་དུ་སྟོན་པ་སེམས་ཅན་གྱི་དོན་བྱ་ཐམས་ཅད་དེ་ལ་རག་ལུས་པའི་ཕྱིར་རོ།

p. 33, l. 23. B. and N. *mahā* རྟག་ཏུ་ MSA., p. 14.

p. 34, l. 6. But....སྟོན་པའི་གཞུང་ནི་སྟོང་ཕྲག་ཉི་ཤུ་ལྔ་པ་ལས་བསྟན་པ་ཡིན་པས་འདིར་ནི་གཞུང་མངས་ཀྱིས་དོགས་ནས་ཤེས་པར་བྱེད་པ་ཉིད་དུ་མ་བྲིས་སོ།

p. 35, l. 8, but T. only ཇི་སྐད་དུ་བཤད་པའི་དོན་གྱི་དབྱེ་བ་ནི།

p. 35, l. 5, A. *na cāraṇām agratvena viṣeśa sadbhāṣata ityapi.*

p. 35, l. 6, A. *vaktumāmāpi.*

p. 35, l. 11, A. and B. *paracittājñā°* གཞན་གྱི་སེམས་ཤེས།

p. 36, l. 8, A. *vanaryāpatha°*.

p. 36, l. 14 fll. But T. has before the sentence: *tasmāt....yat sutrādi te śrāvakā....tathāprakṛtavāt* and then the sentence: *tathāgatadharma....phalam.*

p. 37, l. 10-11, A. *samartha.* Tib. དེ་ཚེ་ཆོས་ཀྱི་རྒྱན་ལ་ནི། སངས་རྒྱས་རྣམས་ལ་ཞི་གནས་དང་༎ ཡེ་ཤེས་ཡངས་གྲོལ་བྱའི་ཕྱིར། གདམས་ངག་རྒྱ་ཆེན་སྟེད་པར་འགྱུར།

p. 38, l. 7, A. *pratyāsattinivanābhāvanni°*.

p. 38, l. 13, A. *aprāpta—upādāya* deest.

p. 38, l. 20, A. *samudayati*, B. *samuhaye* ཀུན་འབྱུང་བ་ལ།

p. 38, l. 21, A. *rupādi* deest གཟུགས་ལ་སོགས་པ་ནི།

p. 38, l. 25, B. *mārgo.*

p. 39, l. 4, A. *rupādi* deest.

p. 39, l. 4, B. *°mbakamanājñā.*

